मातरिश्वान७ सूर्यमग्निमा दधे इति ॥५०॥ समापयति यजुः ॥५१॥ उपनिवपत्युपयमनीः[1] ॥५२॥ सादयत्यग्निम् ॥५३॥ भूर्भुवः सुवः इति सर्वैं पञ्चभिराहवनीयम् ॥५४॥ अमीषां त्वा देवानां व्रतपते व्रतेना दधे इति यद्देवत्यो भवति ॥५५॥ गायत्रेण छन्दसा इति ब्राह्मणः ॥५६॥ त्रैष्टुभेन छन्दसा इति राजन्यः[2] ॥५७॥ [3]जागतेन छन्दसा इति वैश्यः ॥५८॥ मयि धातः श्रियं धेहि इत्येवास्मै दक्षिणत आसीनोऽध्वर्युरुत्तरतो हिरण्यशल्कमुपास्यति ॥५९॥ वाचयति श्रियै=संभव इति ॥६०॥ यदिदं दिवः इति सन्नमुपतिष्ठते। °यददः पृथिव्याः संविदाने पयसि संबभूवतुः। तयोः पृष्ठे निहिते जातवेदाः शंभू प्रजाभ्यस्तनुवे स्योनः इति ॥६१॥ आज्यमाहर इत्याह ॥६२॥ द्वयमाज्यमाहरन्ति[3] पर्युदक्के[4] चाज्यस्थाल्यां[5] च ॥६३॥ [ ३ ]

समिध्यमानः प्रथमो[6] नु धर्मः इति त्रिष्टुग्भिः[7] समिधोऽभ्यादधाति पर्युदक्केनाभ्यज्याहवनीये। °सम्क्तुभिः[8]=देवान् स्वाहा; यास्ते विश्वा=शर्म स्वाहा; सप्त ते अग्ने=घृतेन स्वाहा इति ॥१॥ चतुर्गृहीतेन[9] सप्तहोतारमाहवनीये जुहोति ॥२॥ त्वामिद्धि हवामहे[9] इति बृहतोपतिष्ठते। °साता वाजस्य[10] कारवः। त्वां[11] वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्ववंतः[12] ॥ स त्वं नश्चित्र वज्रहस्त धृष्णुया मह स्तवानो अद्रिवः। गामश्व७ रथ्यमिन्द्र सं

---

instead of putting it after त्रैष्टुभेन छन्देसेति राजन्यः (S.57); H¹ आहुत्यं for आवर्त्यं, cf Baudh ŚS II.17:62. 19; H¹ °स्येर्मुस्य for °स्येमंस्य; H¹ हुत्या for इत्यावर्त्यं; H broken between वाच° [H वाच] and मातरि°; H ऋतेत्यधिश्रित्यमादध, P ऋतेधित्र्यत्यमादध सत्ये एधि. १. MHP °निवपयमनी. २. MHP राजन्ये. ३-३. MHP om जागतेन छन्दसेति मयिं=स्यो° (S. 58-61); H¹ broken between राजन्यः and मयि; H¹ यदिददन्दिव for यदिदं दिवः; H¹ स न मुप° for सन्नमुप°; cf रोदसी (TB I.2.1.61) for पयसि and सीदतु for निहिते [H निहते]; H¹ broken between प्रजाभ्यस्तनु and °माहरन्ति; M यद्वयमा°, HP यद्दयमा॰ for द्वयमाम्. ४. MHP पर्यंदत्तं; H पर्युदत्तञ्चा°. ५. Mss °स्थाल्या. ६. M प्रथमोऽनु. ७. H¹ त्रिष्टुभिः. ८. MH समिक्तुभि. ९-९. H¹ broken between °होता° [H¹ होतु] and हवामहे [H¹ ह इ व, H हवाहव; MP हवाइव]. १०. MH वाज्यस्य. ११. MH त्वात्; P त्वात्. १२. H' wrongly repeats त्वां काष्ठास्ववंतः. १२. MHP wrongly repeat मह स्तवानो अद्रिवः.

किर सत्रा[1] [2]वाजं न[2] जिग्युषे इति ॥३॥ त्वामग्ने [3]समिधानं यविष्ठ इत्यपरेण गार्हपत्यं[3] परीत्य जगतोभिः समिधोऽभ्यादधाति पर्युदक्तेनैवाभ्यज्यान्वाहार्यपचने[4]। °देवा द्व[5]=यन्वति[6] स्वाहा; त्वामग्ने प्रदिव आहुतं घृतेन[7] सु=ष्ठसे स्वाहा; घृतप्रतीको घृतयोनिः[8]=घृतं पिबन् यजसि देव देवान् स्वाहा इति ॥४॥ चतुर्गृहीतेन [9]षड्ढोतारमन्वाहार्यपचने जुहोति ॥५॥ अश्वं न त्वा वारवन्तम् इति वारवन्तीयेनोपतिष्ठते[9]। °वन्दध्या अग्निं नमोभिः। सम्राजन्तमध्वराणाम्[10]; स घा नः सूनुः शवसा पृथु प्रगामा [11]सुशेवः। मीढ्वाँ[11] अस्माकं बभूयात्; स नो दूराच्चासाच्च[12] नि मर्त्यादघायोः। पाहि सदमिद्विश्वायुः[13] इति ॥६॥ पञ्चहोतारमामात्ये जुहोति ॥७॥ चतुर्होतारꣳ सभाया(-म् ॥८॥ अभि प्र वः सुराधसम् इति श्यैतेनोपतिष्ठते। °इ-)न्द्रमर्चं यथाविदे। यो जरितृभ्यो मघवा पुरोवसुः सहस्रेणेव शिक्षति; शतानीकेव[14] प्र जिगाति [15]धृष्णुया हन्ति वृत्राणि दाशुषे[15]। गिरेरिव प्र रसा अस्य पिन्विरे[16] दत्राणि पुरुभोजसः इति ॥९॥ (घर्मशिरः इति)[17] सशीर्षण्केन[18] गार्हपत्यमुपतिष्ठते। °तदयम्=यच्छ इति ॥१०॥ वातः प्राणः[19] इत्यन्वाहार्यपचनम्। °तदय=पच इति ॥११॥ अर्कश्चक्षुः इत्याहवनीयम्। °तदसौ=भिभुवत् इति ॥१२॥ यत्ते शुक्रं वर्चः इत्याहवनीयमेव। °शुक्रा=युर्व्यानिशे इति ॥१३॥[20] ये ते अग्ने शिवे तनुवौ इति[20] विराजाऽभ्यादधाति[21] पर्युदक्तेनैवा-(भ्यज्य गार्हपत्ये। °विराट्=) त्वाऽऽदधे[22] स्वाहा इति ॥१४॥ ये ते अग्ने शिवे तनुवौ इति द्वे [23]अन्वाहार्यपचने। °सम्राट् चा=त्वा[23]ऽऽदधे स्वाहा इति ॥१५॥ (ये ते अग्ने शिवे तनुवौ इत्याहवनीये। °विभूश्च=त्वाऽऽदधे

१. H यत्रा. २-२. Mss वाजिन्न. ३-३. H¹ broken. ४. P पर्यंदत्ते°. ५. H¹ देवाद; P देवा ६. P यन्वती. ७. MP, घृतैनत्सु; H घृतैत्तसु; H¹ घृतैस्सु. ८. H¹adds रोधि after °योनिः. ९-९. MHP broken between वारवन्ती°, H¹ °न्वाहार्यं° and °नोप° १०. Mss सभ्राज°. ११-११. M मीड्वां; HP मीड्वा; H¹ °शेवामींवां. १२. Mss दूराचासाच्य, [ MH¹ °साच्च ]. १३. MHP समिद°. १४. H °नीके वि. १५-१५. MHP. धिष्णुया; Mss wrongly repeat हन्ति वृत्राणि दाशुषे. १६. MHP चिन्विरे. १७. Mss om. 18. HP सशीर्ण्णः. क; H¹ सशीर्ण्णः. १९. MHP वा तत्प्राण. २०-२०. Mss om. २१. H. विरोज्योम्या°; H¹ विराजोम्या°; MP. विरोज्याम्या°. २२. HH¹ त्वां. २३-२३. H¹ broken between अन्वाहार्य° and दधे [Ms घ].

स्वाहा इति)[1] ॥१६॥ ये ते अग्ने शिवे तनुवौ[2] इति द्वे आहवनीय एव। [3]प्रम्वी च[3]=ताभ्यां त्वाऽऽदधे स्वाहा इति ॥१७॥ या ते [4]अग्ने पवमाना तनूः इत्येकां[5] गार्हपत्ये। °पृथिवीमन्वाविवेश या गायत्रे छन्दसि या रथन्तरे सामन् तया त्वाऽऽदधे तस्यास्ते स्वाहा इति ॥१८॥ या ते अग्ने पावका तनूः इत्येकामन्वाहार्यपचने। °अन्तरिक्षमन्वाविवेश या त्रैष्टुभे[6] छन्दसि या वामदेव्ये [7]सामन् तया[7] त्वाऽऽदधे तस्यास्ते स्वाहा इति ॥१९॥ या ते अग्ने शुचिस्तनूः[8] (इत्याहवनीये)[9]। °दिवमन्वा विवेश या जागते छन्दसि[10] या [11]बृहति सामन् तया[11] त्वाऽऽदधे तस्यास्ते स्वाहा इति ॥२०॥ उदपात्रमादायोत्परेत इमां दिशं प्राचीमुदीचीम् ॥२१॥ अरण्ये [12]शुच्यादिभिस्तनूभिरुपस्थाय यं[13] द्वेष्टि यजमानस्तं[14] ध्यायति ॥२२॥ अपः परिषिच्याप्रतीक्षमाव्रजते[15] ॥२३॥ आगत्य विराजक्रमैरुपतिष्ठते ॥२४॥ नर्य प्रजां मे गोपाय इति गार्हपत्यम् ॥२५॥ [16]अथर्व पितुं मे गोपाय इत्यन्वाहार्यपचनम्[16] ॥२६॥ शꣳस्य पशून् मे गोपाय इत्याहवनीयम् ॥२७॥ सप्रथ सभां मे गोपाय इति सभ्यम् ॥२८॥ अहे बुध्निय मन्त्रं मे गोपाय इत्यावसथीयम्[17] ॥२९॥ पूर्णाहुतिमेवातो जुहोति ॥३०॥ परिश्रित्याहवनीयं चतुर्गृहीतं गृह्णीते ॥३१॥ अभिपूर्य सप्तहोतारं व्याचष्टे ॥३२॥ सप्त ते इत्येतामृचमभ्यतो दधाति ॥३३॥ समिधमाधाय[18] होतुराहुत्या[19] जुहोति ॥३४॥ वरमस्मै ददाति ॥३५॥ सन्तिष्ठते पूर्णाहुतिः ॥३६॥ अग्निहोत्रमेवातो जुहोति ॥३७॥ [ ४ ] [ इति प्रथमोऽनुवाकः ]

## [ अग्न्युपस्थानम् ]

अग्निहोत्रमेवातो जुहोति ॥१॥ उन्नीते दशहोतारं व्याचष्टे ॥२॥ स्वाहा इति पूर्वामाहुतिं जुहोति ॥३॥ होतुराहुत्योत्तराम् ॥४॥ अग्नीनेवात उपतिष्ठते ॥५॥ उपप्रयन्तो अध्वरम् इत्याहवनीयम्। °मन्त्रं=शृण्वते

---

१. Mss om. २. MHP om. ३-३. H प्रम्वीय. ४. MHP °तिपव°. ५. H[1] °त्येतां. ६. MHP त्रैष्टुभेन. ७-७. M सामन्त्वत्या; H सामन्त्य. ८. MHP पावका तनू. ९. MHP broken between °तनू, H[1] स्वाहेति and दिवम°. १०. H[1] छन्दसा. ११-११. Mss वृहती; M सामन्त्यत्वा; H सामन्त्या. १२. MHP रुच्यादि°; H[1] ऽनूच्यादि°. १३. MHP तं. १४. H[1] यजमानं तं. १५. MHP °षिच्य प्रतीक्ष°. १६-१६. HP अथ चतुर्मे; M अथ···चतुर्मे for अथर्व पितुं मे; H[1] broken between अथ° and °न्वाहार्यपचनम्. १७. Mss °त्यावसथम्; cf TB III. 7.4.6. १८. H[1] समिधमादाय समाधाय. १९. MHP होतुमे-

इति ॥६॥ अस्य प्रत्नामनुद्युतम्[१] इति गार्हपत्यम् । °शुक्रं=सामृषिम् इति ॥७॥ अग्निर्मूर्धा इत्याहवनीयम् । °दि=न्वति इति ॥८॥ अयमिह प्रथमो धायि धातृभिः इति गार्हपत्यम् । °होता=विशे इति ॥९॥ उभा वामिन्द्राग्नी आ हुवध्यै इत्युभौ सहोपतिष्ठते । °उभा=हुवे[२] वाम् इति ॥१०॥ [३]अयं ते[३] योनिरृत्वियः[४] इत्याहवनीयम् । °यतो[५]=रयिम् इति ॥११॥ अग्न आयूँषि पवसे इति द्वाभ्यामाग्निपावमानीभ्यां[६] गार्हपत्यमुपतिष्ठते । °आ सुवो[७]=रयिं मयि इति ॥१२॥ अग्ने पावक रोचिषा इति[८] द्वाभ्यामन्वाहार्यपचनम् । °मन्द्रया[९]=श्र नः इति ॥१३॥ अग्निः शुचिव्रततमः इत्याहवनीयम् । °शुचि=ष्यचंयः इति ॥१४॥ आयुर्दा अग्नेऽस्यायुर्मे देहि इत्याहवनीयमेव । °वर्चोदा अग्नेऽसि वर्चो मे देहि । तनूपा अ=आपृण[१०] इति ॥१५॥ चित्रावसो स्वस्ति ते पारमशीय इति रात्रिं मनसा ध्यायति ॥१६॥ इन्धानास्त्वा शतँ हिमाः इति समिधमादधाति । °द्युमन्तः समिधीमहि=के स्वाहा इति ॥१७॥ सं त्वामग्ने सूर्यस्य वर्चसाऽगथाः[११] इत्युपतिष्ठते[१२] । °समृ[१३]=सृज इति ॥१८॥ सं त आकुर्वन्तु स्वं[१४] यजमान इत्याह । यदन्यत्र मनसा [१५]तद् ध्याय इति[१५] ॥ १९ ॥ तत्समाकृतमभिमन्त्रयते सं पश्यामि ॥२०॥ [ ५ ]

सं पश्यामि प्र=यास्त इति ॥१॥ सँहिताऽसि विश्वरूपीः[१६] इत्यग्निहोत्रियै वत्समभिमृशति । °आ मोर्जा=यन्ताम् इति ॥२॥ उप त्वाऽग्ने दिवेदिवे इति [१७]तिसृभिर्गायत्रीभिराहवनीयमुपतिष्ठते । °दोषावस्त=स्वस्तये इति ॥३॥ अग्ने त्वं नो अन्तमः इति तिसृभिर्गायत्रीभिर्गार्हपत्यमुपतिष्ठते[१७] । °उत त्राता=रयिं दाः[१८] इति ॥४॥ ऊर्जा वः पश्याम्यूर्जा[१९] मा पश्यत

---

राहुत्य; H[1] आहुतिराहुत्या. १. MH प्रणामनु°; P प्राणमनु°. २. P हवे. ३-३. MHP अन्ते. ४. P रुक्तिय. ५. H यत्रे. ६. HP °पावनीभ्यां. ७. MHP रवो. ८. Mss wrongly ins. आहवनीय between इति and द्वाभ्या°. ९. MHP मन्द्राय. १०. Mss वृण. ११. M गाथां; H गाथा गाथा; P गाथा गाथां. १२. Mss °तिष्ठसे. १३. Mss मृ for समृ. १४. HP स्वयं. १५-१५. MHP om तद्; MH[1]P ध्यायेदिति; Caland gives the Ms text as ध्याययति; however, he accepts ध्यायेति, cf Ao II. 160.7. १६. Mss विश्वरूपीत्य०. १७. H[1] broken between तिसृभि and °त त्राता. १८. P शयीन्द्रा. १९. MH पेश्या°.

[1]इति गृहान् परेक्षते॥५॥रायस्पोषेण वः पश्यामि रायस्पोषेण मा पश्यत[1] इति गाः ॥६॥ इडाः स्थ मधुकृतः इति ता एव । °स्योना = श्रयन्ताम् इति ॥७॥ तत्सवितुर्वरेण्यम् इत्याहवनीयम् । °भर्गो देवस्य धीमहि । धि = दयात् इति ॥८॥ सोमानंꣳ (स्वरणं कृणुहि इति गार्हपत्यम् । °ब्रह्मणस्पते = ) य औशिजम् इति ॥९॥ कदा चन स्तरीरसि इत्याहवनीयम् । [2]नेन्द्र = पृच्यते[2] इति ॥१०॥ परि त्वाऽग्ने पुरं वयम् इत्यनुष्टुभा गार्हपत्यमभ्येति । °विप्रं = रावतः इति ॥११॥ अग्ने गृहपते इत्युपतिष्ठते । °सुगृह = ना भूयाः इति ॥१२॥ आशिष[3] आशास्ते शतं = ष्मैं ज्योतिष्मतीम् इति ॥१३॥ आत्मनोऽग्रे नाम गृह्णाति ॥१४॥ अमुष्मा अमुष्मैं इत्य(-नुपूर्वं पुत्राणां, तन्तुर्मे भूयात् इत्यन्ततः) ॥१५॥ [ ६ ] [इति द्वितीयोऽनुवाकः]

## [आग्नेयीष्टिः ]

(हविःक्लृप्ति-)रेवातः ॥१॥ यज्ञायुधानि सꣳ साद्यापः प्रणीयाग्नेयमष्टाकपालं निर्वपति ॥२॥ तं तनूभिरभियजति[4]॥३॥ निरुप्ते प्राणग्रहाꣳश्च पृश्नीꣳश्च व्याचष्टे ॥४॥ समासन्ने [5]ऽपानग्रहाꣳश्च पृश्नीꣳश्च व्याचष्टे ॥५॥ ध्रुवा असदन्; यन्मे[5] अग्ने इति समभिमृश्य दशहोतारं व्याचष्टे[6] ॥६॥ (निर्मन्थ्येन चरति ॥७॥ अग्नये समिध्यमानायानु) वाच[7] आह ॥८॥ सप्तदश सामिधेनीरन्वाह ॥९॥ आवाहयन् तनूरप्यावाहयत्यग्निं [8]पवमानमथाग्निं पावकमथाग्निꣳ[8] शुचिम् ॥१०॥ अनूक्तासु सामिधेनीषु स्रुवेणाघारमाघार्याह अग्नीदग्निं त्रिस्त्रिः[9] समृड्ढि इति ॥११॥ स्रुग्भ्यामुत्तरम् ॥१२॥ असꣳस्पर्शयन्नत्याक्रम्य ध्रुवाꣳ[10] समज्य (सादयित्वा प्रवरं प्रवृणीते ॥१३॥ सीदति होता ॥१४॥ प्रसूतः स्रुचा-)वादत्ते ॥१५॥ प्रयाजान् यजति ॥१६॥ प्रयाजानिष्ट्वाऽत्याक्रम्य द्विर्ध्रुवामभिघारयति,

---

१-१. P oms इति गृहान् = मा पश्यत; H[1] oms परेक्षते; MH वां for वः. २-२. MHP तेन्द्र पृच्छयत. ३. P आशिष्ट. ४. H[1] परियज°. ५-५. P broken between समासन्ने and अग्ने; H[1] प्राणग्रहाꣳ च for ऽपानग्रहाꣳश्च. ६. MHP wrongly repeat ध्रुवा अस° and H[1] ध्रुवा after व्याचष्टे and give the sign of broken text thereafter. ७. MHP वोच. ८-८. Mss °मथाग्निमथाग्निं वावकृदथाग्निं [H[1] °ग्निं पावकृम]. ९. MHP त्रिः once. १०. P ins द्विः before and H[1] broken after ध्रुवा.

सकृद्धविः ॥१७॥ द्विरेव ध्रुवाम् ॥१८॥ उपभृतमन्ततः ॥१९॥ आज्यभागौ यजति ॥२०॥ वार्त्रघ्नावाज्यभागौ[1] ॥२१॥ अग्नये पवमानायानुब्रूहि इत्याहाज्यस्य[2] गृह्णानश्चतु ॥२२॥ अग्न आयूंषि पवसे [3]इत्य-(न्वाह) ॥२३॥ [4]अग्ने पवस्व स्वपा इति[4] यजति ॥२४॥ वषट्कृते जुहोति ॥२५॥ अग्नये पावकायानुब्रूहि [5]इत्याहाज्यस्यैव गृह्णानश्चतुः[5] ॥२६॥ [6]अग्ने पावक रोचिषा इत्यन्वाह ॥२७॥स नः पावक दीदिवः इति यजति ॥२८॥ वषट्कृते जुहोति ॥२९॥ अग्नये शुचयेऽनुब्रूहि इत्याहाज्यस्यैव गृह्णानश्चतुः[6] ॥३०॥ अग्निः शुचिव्रततमः[7] इत्यन्वाह[8] ॥३१॥ उदग्ने शुचयस्तव इति यजति ॥३२॥ वषट्कृते जुहोति ॥३३॥ अग्नये स्विष्टकृतेऽनुब्रूहि इत्याहोपस्तृणानो-ऽवद्यन्[9] ॥३४॥ द्विरुपस्तृणानः सकृदुत्तरार्धात् पुरोडाशस्यावद्यति ॥३५॥ चतुरभिघारयति ॥३६॥ सप्तावत्तः[10] स्विष्टकृत् ॥३७॥ गायत्रियौ संया-ज्ये ॥३८॥ अग्निं स्तोमेन बोधय इत्यन्वाह॥३९॥ स हव्यवाट् इति यजति ॥४०॥वषट्कृते जुहोति ॥४१॥ अत्याक्रम्य [11]यथायतनं स्रुवेण[11](पुरोडाशस्य), द्विरवद्यति ॥४२॥ पञ्चकृत्वोऽभिघारयति ॥४३॥ दशावत्तेडा ॥४४॥ उपहूतायामिडायामग्नीध[12] आदधाति ॥४५॥ प्राश्नन्ति[13] ॥४६॥ मार्ज-यन्ते ॥४७॥ परिहरन्ति ब्रह्मणे ॥४८॥ प्राशिते प्राशित्रेऽग्नीदुदपात्रेणोत्कर[14] उपसीदति ॥४९॥ अत्राग्न्याधेयदक्षिणा ददाति ॥५०॥ सन्ततिमनु होतुरा-हुतिं जुहोति ॥५१॥ प्रसिध्यति कर्म ॥५२॥ सन्तिष्ठत एषेष्टिः[15] ॥५३॥ [16]ऐन्द्राग्नं चैकादशकपालं[16] निर्वपति ॥५४॥ [ ७ ]

## [ ऐन्द्राग्नेयोष्टिः ]

ऐन्द्राग्नं चैकादशकपालं निर्वपति ॥१॥ आदित्यं चरुम् ॥२॥ निरुप्ते

---

१. H वार्त्रघ्नीवा°. २. Mss इत्याज्यस्य. ३. H¹ इत्य....MH, इत्यम P इत्यय ... ४-४. Mss अग्ने पुष्करादधीति [M °दधीती]. ५-५. MHP इत्याज्यस्यैवाप गृ°. ६-६. H oms; MP असौ for स नः (S. 28); M शुचयानु; MH¹ इत्याज्य°. ७. MPH व्रततमं स्रुचौ. ८. H¹ इत्यन्वाहार्य for इत्याह. ९. H¹ oms उपस्तृणानोऽवद्यन्; MHP °त्याहोवस्तृणानो-ऽवद्यन्. १०. MHP सन्तावतं. ११-११. MHP यथायतनेषु त[MP न] एत. १२. HH¹ om °मिडाया°. १३. P प्राश्नीति. १४. P °णोत्करोप°. १५. MHP om. १६-१६. H¹ broken.

प्राणग्रहाᳪश्च पृश्नीᳪश्च[1] व्याचष्टे ॥३॥ समासन्नेऽपानग्रहाᳪश्च पृश्नीᳪश्च व्याचष्टे ॥४॥ (ध्रुवा असदन्; यत्मे अग्ने इति समभिमृश्य)[2] दशहोतारं व्याचष्टे ॥५॥ तस्यै वृधन्वन्तावाज्यभागौ ॥६॥ इन्द्राग्निभ्यामनु-ब्रूहि[3] इत्याहोपस्तृणानोऽवद्यन्[4] ॥७॥ इन्द्रा(-ग्नी आगतᳪ सुतम् इत्यन्वाह ॥८॥ गीर्भिर्विप्रः इति) यजति ॥९॥ वषट्कृते जुहोति ॥१०॥ अदित्या अनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥११॥ अदितिर्नं उरुष्यतु इत्यन्वाह ॥१२॥ महीमू षु मातरम् इति यजति ॥१३॥ वषट्कृते जुहोति ॥१४॥ त्रिष्टुभौ संयाज्ये ॥१५॥ सन्ततिमनु होतुराहुतिं जुहोति ॥१६॥ प्रसिध्यति कर्म ॥१७॥ सन्तिष्ठत एषेष्टिः[5] ॥१८॥ एतन्नु द्विर्बर्हिः[6] ॥१९॥

अथ यदि त्रिर्बर्हिः कुर्यात् ॥२०॥ यज्ञायुधानि ( सᳪ साद्यापः प्रणी-याग्ने-)यमष्टाकपालं निर्वपति ॥२१॥ अग्नये च पवमानाय पुरोडाशमष्टा-कपालम् ॥२२॥ तदेतत्सर्वगायत्रं प्रथमᳪ हविः ॥२३॥ यज्ञायुधानि सᳪसाद्यापः प्रणीयाग्नये च पावकाय पुरोडाशमष्टाकपालं निर्वपति ॥२४॥ अग्नये च शुचये पुरोडाशमष्टाकपालम् ॥२५॥ तस्यै[7] रयिमन्तावाज्य-भागौ[8] ॥२६॥ यथादेवतᳪ हविषोः ॥२७॥ विराजौ संयाज्ये ॥२८॥ सन्ततिमनु होतुराहुतिं जुहोति ॥२९॥ प्रसिध्यति कर्म ॥३०॥ सन्तिष्ठत एषेष्टिः[9] ॥३१॥ यज्ञायुधानि सᳪसाद्यापः प्रणीयैन्द्राग्नं चैवैकादशकपालं[10] निर्वपति ॥३२॥ आदित्यं चरुम् ॥३३॥ सो एषा[11] तथा क्लृप्तैवेष्टिः॥३४॥ एतदु त्रिर्बर्हिः ॥३५॥ द्विर्बर्हिस्त्वेव स्थितम्[12] ॥३६॥

## [ द्वादशाहव्रतम् ]

तस्यैते[13] द्वादशाहᳪ समिद्धा अग्नयो भवन्ति ॥३७॥ तस्यैतद् व्रतम् ॥३८॥ नानृतं वदति ॥३९॥ न माᳪसमश्नाति ॥४०॥ न स्त्रियमुपैति॥४१॥ नास्य [14]पल्पूलनेन वासः पल्पूलयन्ति[14] ॥४२॥ [15]अधःशाय्यमृन्मयपाय्यशूद्रो-

१. M पृश्निगूंश्र, H पृश्नगूंश्च, P पृथिवीᳪश्च. २. MHP om. ३. H¹ broken after इन्द्राग्निभ्यां° (S. 7) ४. H °वद्यन्ति. ५. H षष्ठि, MP एते षष्ठि [M षष्टि]; ६. H द्विबंर्हिः; MP द्विबंर्हि. ७. HP तस्मै. ८. MHP भागा. ९. H ये षष्ठिः; MP ये षष्टिः. १०. HH¹P चैकादश°. ११. P एवा. १२. Mss स्त्वावस्थि°. १३. MHP तस्यै तं; H¹ तस्यै त. १४-१४. MHP मल्पलनेनासपेत्पूल°. १५. MHP °शय्यामृन्द्रय° [ H °दय° ]; H¹ °मृन्मयपायं शूद्रो°.

च्छिष्टी ॥४३॥ स्वयं पादौ प्रक्षालयते ॥४४॥ भक्ताशी[1] स्यादिति तदेकम् ॥४५॥ अग्निहोत्रोच्छिष्टव्रतः[2] स्यादिति तदेकम् ॥४६॥ [3]यदेव चरुणाꣳ स्रु्वाणामुन्नीतानामुच्छिष्येत तद्व्रतः स्यादिति तदेकम्[3] ॥४७॥ यदेवैनं[4] किञ्चागच्छेत् तद्व्रतः[5] स्यादिति तदेकम् ॥४८॥ एतेषां यतमत् कामयेत[6] तत्कुर्यादिति ॥४९॥ तस्यैतत् सर्वंदोपस्थानमग्नीनाम्[7] ॥५०॥ ज्योतिष्मन्तं त्वाऽग्ने ॥५१॥ [८] ॥

## [ सर्वंदोपस्थानम् ]

ज्योतिष्मन्तं[8] त्वाऽग्ने ज्योतिष्मान् समिन्धे इत्याहवनीयꣳ समिन्धे ॥१॥ मनसे त्वा सुवर्गाय लोकाय इत्युपतिष्ठते ॥२॥ आयुष्मन्तं त्वाऽग्न आयुष्मान् समिन्धे इति गार्हपत्यꣳ समिन्धे ॥३॥ आयुषे त्वा प्रजननाय इत्युपतिष्ठते ॥४॥ [9]अन्नादं त्वाऽग्नेऽन्नादः[9] समिन्धे इत्यन्वाहार्यपचनꣳ[10] समिन्धे ॥५॥ प्राणाय त्वाऽन्नाद्याय इत्युपतिष्ठते ॥६॥ कामाय वो व्याप्त्यै ज्योतिष्मतः शकेयम् इति सर्वान् सहोपतिष्ठते । वित्तं च मे गोपायताशां च इति ॥७॥ अवन्तु मामृषयो देवजाताः इति सप्तर्षिभ्यो नमस्करोति । °(त्रातार)[12]उत नस्तनूनां तनूधाः । अमर्त्या मर्त्यंमभि मा सचन्तामा मा विशन्तु पितरो दविष्ठाः इति ॥८॥ अथ आपो व्रतभृतो व्रतं मे धारयताप्सु[13] श्रद्धा इत्याह॥९॥ नाचामति ॥ १० ॥ चक्षुरसि श्रोत्रमसि इत्यधिवदत्यमृतं[14] ब्राह्मणम् ॥११॥ पञ्चप्रक्रमं[15] वेदिमभिप्रक्रामति ॥ १२ ॥ आपो हि ष्ठा मयोभुवः इति तृचेनान्तर्वेदि[16] मार्जयन्ते[17] ॥ १३ ॥ इडायै वास्त्वसि इतीमामभिमृशति । ( °वास्तुमद्वास्तुमान् ) भूयासम् । प्रतिष्ठाऽसि प्रतिष्ठेषम् इति ॥ १४ ॥ ब्रध्नस्य विष्टपेऽहं माꣳ सादयामि इति दक्षिणत[18] आहवनीयस्योपविशति ॥ १५ ॥ कामस्य कामेन वोऽनुवीक्षे इत्यग्नीननुवीक्षते ॥ १६ ॥ असौ मे कामः समृध्यताम् इति यं कामं कामयते तमाशास्ते ॥ १७ ॥ सꣳ[19] हैवास्मै स कामः प्रपद्यते ॥ १८ ॥ [ ९ ]

---

१. HP भकाशी; H¹ ऽभंकाशी. २. MHP° व्रतं. ३-३. H om. ४. MHP यदैवैनं. ५. H व्रतं. ६. कामये. ७. P °ग्निना. ८. M ज्योतिष्मतः. ९-९. MHP °अग्नादत्धाने. १०. MH °वचनः; P °पचनः. ११. MHP हमस्फुरोति. १२. MHP om. १३. M धारयतोप्सु; H तेप्सु. १४. H °धिपदत्यमृतं, P °धिपदन्यमृते. १५. MPH प्रक्रममिति. १६. MHP अन्तर्वेदितृचैना. १७. MHP मार्जन्त. १८. P दक्षिण. १९. MHP तं.

## [ उपवसथहोम आरम्भणीयेष्टिश्च ]

आरम्भ एवातो (ऽग्याधेयस्यो-)पवसथ[1] इत्यग्नीनां भस्मोद्धरन्ति ॥१॥ परिस्तृणन्त्यग्नीन् ॥२॥ उपवसथरूपं कुर्वन्ति ॥३॥ सायꣳ हुत्वाऽग्निहोत्रं[2] गार्हपत्य आज्यं विलाप्योत्पूय स्रुवं च स्रुचश्च[3] संमृज्य प्राङेत्याहवनीयस्यार्धं चतुर्गृहीतं गृह्णीते ॥ ४ ॥ तज्जुहोति पूर्णा पश्चात् इत्याहवनीये ॥ ५ ॥ अप(-रं चतुर्गृहीतं) गृह्णीते ॥ ६ ॥ (तज्जुहोति यत्ते देवा अदधुः इत्याहवनीय) एव ॥ ७ ॥ प्रत्यङ् परेत्य गार्हपत्यस्यार्धं चतुर्गृहीतं गृह्णीते ॥ ८ ॥ (तज्जुहोति यत्ते देवा अदधुः इति गार्हपत्ये ॥ ९ ॥ अपरं चतुर्गृहीतं गृह्णीते ॥१०॥ तज्जुहोति पूर्णा पश्चात् इति गार्हपत्य एव ॥११॥ गत्वाऽन्वाहार्यपचनस्यार्धं चतुर्गृहीतं गृह्णीते ॥१२॥ (तज्जुहोति यत्ते देवा अदधुः इत्यन्वाहार्यपचने ॥१३॥ अपरं चतुर्गृहीतं गृह्णीते ॥१४॥ तज्जुहोति पूर्णा पश्चात् इत्यन्वाहार्यपचन एव ॥१५॥ सायꣳ हुत्वाऽग्निहोत्रं गार्हपत्य आज्यं विलाप्योत्पूय स्रुवं च स्रुचश्च[3] संमृज्यात्रैव[4] चतुर्गृहीतं गृह्णीते ॥१६॥ तज्जुहोति पूर्णा पश्चात् इति गार्हपत्ये ॥१७॥ [5]अपरं चतुर्गृहीतं गृह्णीते ॥१८॥ तज्जुहोति यत्ते देवा अदधुः इति गार्हपत्य[5] एव ॥१९॥ गत्वाऽन्वाहार्यपचनस्यार्धं चतुर्गृहीतं गृह्णीते ॥२०॥ तज्जुहोति यत्ते देवा अदधुः इत्यन्वाहार्यपचने ॥२१॥ अपरं चतुर्गृहीतं गृह्णीते ॥२२॥ तज्जुहोति पूर्णा पश्चात् इत्यन्वाहार्यपचन एव ) ॥२३॥ प्राजापत्यामपरेण गार्हपत्यं परीत्य प्राङेत्याहवनीयस्यार्धं चतुर्गृहीतं गृह्णीते ॥२४॥ तज्जुहोति पूर्णा पश्चात् इत्याहवनीये ॥२५॥ अपरं चतुर्गृहीतं गृह्णीते ॥२६॥ तज्जुहोति यत्ते देवा अदधुः इत्याहवनीय एव ॥२७॥

यज्ञायुधानि सꣳसाद्यापः प्रणीयारम्भणीयामिष्टिं[6] निर्वपति ॥२८॥ आग्नावैष्णव(-मेकादशकपालꣳ सरस्वत्यै चरुꣳ सरस्वते द्वादशकपा-)लम् ॥२९॥ निरुप्ते प्राणग्रहाꣳश्च पृश्नीꣳश्च व्याचष्टे ॥३०॥ तस्य हविष्कृता वाचं विसृज्य चतुर्गृहीतेन चतुर्होतारमाहवनीये जुहोति ॥३१॥ तमेव समासन्ने व्याचष्टे ॥३२॥ तस्यै वार्त्रघ्नावाज्यभागौ ॥३३॥ अग्नाविष्णू; अग्नाविष्णू; प्र णो देवी; आ नो दिवः[7];

---

१. HP आवसथ; cf I.11.3. २. MH सायमहुत्वा. ३. MH स्रुचं च. ४. P अत्रेव संमृज्य. ५-५. MH om. ६. MH मिष्टं. ७. MHP दिवं.

पीपिवाꣳसꣳ सरस्वतः स्तनम्; यस्य व्रतं पशवो यन्ति (सर्वे) इति हविषः ॥३४॥ (त्रिष्टुभौ) संयाज्ये ॥३५॥ दक्षिणामुखे मिथुनौ गावौ दत्वा यथाश्रद्धं ददाति ॥३६॥ सन्ततिमनु होतुराहुतिं जुहोति ॥३७॥ प्रसिध्यति कर्म ॥३८॥ सन्तिष्ठत आरम्भणीयेष्टिः ॥३९॥ यज्ञायुधानि सꣳसाद्याप: प्रणीय प्रसिद्धं पौर्णमासेन हविषा यजते ॥४०॥ [ १० ]

[ इति तृतीयोऽनुवाकः ]

## [ पुनराधेयम् ]

प्रसिद्धा आग्न्याधेयिका:[१] संभाराः ॥१॥ अथेतरे[२] पुनर्निष्कृतो रथ:[३], पुनरुत्स्यूतं वासः, पुनरुत्सृष्टोऽनड्वान्, दर्भः शतकाण्ड:[४], षड्ढिरण्यशल्कास्तेषां त्रयोऽष्टापृडका:[५], द्वे तृणकलाप्यौ ॥२॥ अर्द्धद्विपुनराधेयस्योपवसथ इत्यग्नीनां भस्मोद्धरन्ति ॥३॥ शल्कैरग्निमिन्धे गार्हपत्यम् ॥४॥ अधिवृक्षसूर्ये ब्रह्मौदनं[६] निर्वपति ॥५॥ तस्मिन् श्रप्यमान[७] एवाध्वर्युरग्निहोत्रं जुहोति ॥६॥ तꣳ श्रृतमाह्वारयत्येव[८] स्थाल्यै बिलम् ॥७॥ नाङ्गारेभ्य उच्छनत्ति ॥८॥ आज्यं च हिरण्यशल्कं च पात्रियामुपस्तृणीतेऽ[९]नष्टापृडकम्[१०] ॥९॥ तिस्रो दर्वीरुपस्तीर्णाभिघारिता[११] उद्धरति ॥१०॥ काममूर्ध्वम् ॥११॥ तत उद्धृत्य व्यूह्य हिरण्यशल्कं प्रास्यानष्टापृडकं[१२] बहूपसिञ्चति ॥१२॥ तं चत्वार आर्षेया:[१३] प्राश्नन्ति ॥१३॥ तान् यजमान एव स्वयमवनेजयेत् इतीदम् ॥१४॥ तानध्वर्युः सꣳशास्ति [१४]सक्तत्प्राश्योत्पिचत इति[१४] ॥१५॥ ते सकृत्प्राश्योत्पिचन्ति ॥१६॥ नात्र समिधोऽभ्यादधाति ॥१७॥ आण्डीवलं ब्रह्मौदने ददाति ॥१८॥ यथाश्रद्धं स्थालीप्राशा:[१५] (प्राश्नन्ति)[१६] ॥१९॥ व्यूहन्त्येते अङ्गारपुरीषे[१७] आहवनीयस्यान्वाहार्यपचनस्य सते[१८] ॥२०॥ ते यदा सꣳशाम्यतोऽथैनयोर्भस्मोद्धरन्ति ॥२१॥ सꣳशाधि यजमान इत्याह । यत्ते सꣳशिष्यम् इति ॥२२॥ सꣳशास्ति यदस्य सꣳशिष्यं भवति ॥२३॥ पुत्रे वा भ्रातरि वर्णमुप-

---

१. MH आग्न्यधे° २. MP अन्येतरे. ३. MHP रथं. ४. MHP शतकान्. ५. MHP °ष्टावृडका. ६. P ब्रघ्नौदनं. ७. H जप्यमान; P ज्ञप्यमान; M ज्ञप्यमाण. ८. M श्रृतमन्वाहार°; H श्रृतमन्वाहयत्येव, P श्रुतमन्वाहारयत्येव. ९. MHP repeat पात्रियामुपस्तृणीते. १०. MHP °तेनाष्टावुद्धृत. ११. MP उपस्तीर्णाभिदारिता. १२. MHP °पृथकं. १३. HP आर्षेयां. १४-१४. MHP. °प्राश्योत्पिचन्ति. १५. MHP °प्राशाय°. १६. MHP om. १७. MHP ins. च after °पुरीषे. १८. M ins. च after. °पचनस्य; HP om सते.

नयति[१] ॥२४॥ ऋत्वियवती[२] स्थः इत्यस्मै निपदः कालेऽरणी आदधाति ॥२५॥ तदनु वाचं यच्छति ॥२६॥ स वाचंयमोऽनुरात्रꣳ शल्कैरग्निमिन्धे ॥२७॥ जागृयाद्धैव[३], न सुषुप्सेद्वशश्चास्य[४] स्यात् ॥२८॥ [५]औषसमेवाध्वर्युरग्निहोत्रमधिश्रयति ॥२९॥ आश्वत्थीमेव[६] समिधं कुरुते ॥३०॥ अरणी एव धारयन् वाचंयम आस्ते यजमानायतने ॥३१॥ आदीपयन्ति तृणकलाप्यौ गार्हपत्य[७] एवाहवनीयायामात्येऽन्वाहार्यपचनाय ॥३२॥ प्रतरन्ति तृणकलाप्यौ सते[८] ॥३३॥ अध्वर्युरुन्नीतेनाग्निहोत्रेणानुद्रवति ॥३४॥ सादयन्ति तृणकलाप्यौ ॥३५॥ समिधमाधायाप्तुमिव[९] पूर्वामाहुतिꣳ हुत्वा ज्यायसीमुत्तरामाहुतिꣳ सते[१०] ॥३६॥ ते[११] यदा सꣳशाम्यतोऽथैनयोर्भस्म निमृजन्ति ॥३७॥ सिकताभिराखरौ व्यूहन्ति ॥३८॥ जातवेदो भुवनस्य रेतः इत्युपव्युषे[१२]ऽरणी निष्टपति ॥३९॥ अयं ते योनिर्ऋत्वियः इत्यरण्योरग्निꣳ समारोहयते ॥४०॥ संवपन्त्येतमग्निꣳ सते[१३] ॥४१॥ अत्रानुवित्तिं जुहोति ॥४२॥ प्रसिध्यति कर्मा[१४] यदेनमङ्गलावाधानात् ॥४३॥ [ ११ ]

प्रसिध्यति कर्मा[१५] यदेनमङ्गलावाधानात् ॥१॥ तं भुवो (भू-)र् इति त्रिभिरक्षरै[१६](-रङ्गला-)वाधत्ते ॥२॥ अमीषां त्वा देवानां व्रतपते व्र[१७]=वैश्यः ॥३॥ मयि धातः श्रियं धेहि इत्यस्मै दक्षिणत आसीनोऽध्वर्युरुत्तरतो हिरण्यशल्कमुपास्यत्यष्टापृडकम्[१८] ॥४॥ वाचयति श्रियै=सं भव इति ॥५॥ अहं त्वदस्मि इति सन्नमुपतिष्ठते ॥६॥ आऽयं गौः पृश्निरक्रमीत् इति तिसृभिः सर्पराज्ञीभिरुपतिष्ठते ॥७॥ अत्र समिधोऽभ्यादधाति ॥८॥ ( आहुतिषाहे गार्हपत्ये) चतुर्गृहीतेन दशहोतुराहुतिं जुहोति ॥९॥ अभि त्वा शूर नोनुमः इति रथन्तरेणोपतिष्ठते ॥१०॥ दर्भꣳ शतकाण्डमिध्ममुपनह्यति ॥११॥ इध्ममादीपयन्ति ॥१२॥ उपयमनीरुपकल्पयन्ति[१९] ॥१३॥ अनड्वाहं पल्पूलितमानयन्ति[२०] ॥१४॥ आदित्यमुद्यन्तं प्रतीक्षत आहवनीयेन ॥१५॥

---

१. MHP नयतु. २. MHP ऋत्वियपति. ३. MHP जानीयाद्धैव. ४. P वशाशश्चास्य. ५. P ऐषस°. ६. MHP अश्वीमिव. ७. P गार्हपत्याय. ८. MHP ते for सते. ९. P °मादाय°. १०. MHP जत. ११. MHP om. १२. P °व्युषोरणी. १३. MHP सत्रे. १४. HP कर्म. १५. MHP कर्म. १६. MHP त्रिरक्षरैः. १७. MHP abr; see I. 3.55–58. १८. MHP °पृथन्तं. १९.MHP °कल्वय°. २०.MHP पत्पूतमा°.

उदिन आदित्ये ओजसे बलाय त्वोद्यच्छे इति तिसृभिरिध्ममुद्यच्छते ॥१६॥ प्रा(-चीमनु प्रदिशं प्रेहि विद्वान् इत्यनुडुत्प्रथमाः प्रयन्ति ॥१७॥ भूमिर्भूम्ना इत्येनमभिमन्त्रयते ॥१८॥ प्र-)त्यागच्छन्ति[1] ॥१९॥ तत्र तिष्ठन्नाह नि[2]=भूमिर्भूम्ना इत्यनुमन्त्रयते ॥२०॥ मयि [3]धातः श्रियं[3] धेहि इत्येवास्मै दक्षिणत आसीनोऽध्वर्युरुत्तरतो हिरण्यशल्कमुपास्यत्यष्टापृडकम्[4] ॥२१॥ वाचयति श्रियैं=सं भव इति ॥२२॥ [5]इमा उ मामुपतिष्ठन्तु[5] रायः इति विषुवति हिरण्यशल्कꣳ सन्नमुपतिष्ठतेऽनष्टापृडकम्[6] ॥२३॥ कया नश्चित्र आ भुवत् इति विषुवदति प्र( यन्ति वामदेव्येन ॥२४॥ प्राञ्चमनड्वाहमाक्रमयत्युत्तरत आ(व-)र्त्य दक्षिणस्येर्मस्य[7] पदा ॥२५॥ पुनः प्रत्यञ्चं[8] तेनैव ॥२६॥ तमुदञ्चमुत्सृजति ॥२७॥ ऋतꣳ स्तृणामि पुरीषं पृथिव्याम् इत्यावर्त्य[9]=सादयत्यग्निम् ॥२८॥ सुवर्भुवो भूः इति सर्वैः पञ्चभिराहवनीयम् ॥२९॥ उपास्यत्यष्टापृडकम् ॥३०॥ वाचयति श्रियैं=संभव इति ॥३१॥ यदिदं दिवः इति सन्नमुपतिष्ठते ॥३२॥ प्रसिध्यति (कर्म ॥३३॥ यज्ञायुधानि सꣳसा-)द्यापः[10] प्रणीयाग्नेयमष्टाकपालं निर्वपति ॥३४॥ अन्तस्तनूरेष पुरोडाशः ॥३५॥ तं पुनरासन्नमेतेन [11]यजुषाऽभिमृशति या ते अग्ने पवमाना तनूस्तया त्वा समर्धयामि; या ते अग्ने पावका तनूस्तया त्वा समर्धयामि; या ते अग्ने शुचिस्तनूस्तया त्वा समर्धयामि (इति ॥३६॥ प्र वो वा-)जा इत्युत्सृजत्येताम्[12], अनिरुक्तैषा ॥३७॥ वाजयन्निव नू[13] रथान् इत्येतामत्र निदधाति । °यो गामग्नेरुपस्तुहि । यशस्तमस्य[14] मीढ्‌ढुषः इति॥३८॥ तं त्वा समिद्भिरङ्गिरः [15] इत्युत्सृजत्येताम्[16], [17]अनिरुक्तैषा ॥३९॥ अथा ते अङ्गिरस्तमः इत्येतामत्र[17] निदधाति °अग्ने वेधस्तम [18]प्रि(-यम् । वोचेम ब्रह्मसानसि इति ॥४०॥ प्रसि-)ध्यति कर्म[19] प्रयाजेभ्यः ॥४१॥ विभक्तीरुक्त्वा प्रयाजानां वषट्करोति[20]

---

१. MHP °दागच्छ°; cf I.3.33–35. २. MHP abr; see I.3.36–41. ३–३. MHP धातं त्रियं. ४. MHP °पृथकं. ५–५. MHP इमामुपति°. ६. MHP पृथकं. ७. MHP °स्येध्मस्य. ८. MHP प्रेत्यञ्च. ९. MHP abr; see I.3.49–53. १०. MHP पात्र. ११. P. ins. यजति after यजुषा. १२. MHP °सृजत्येषा ताम°. १३. HP om. १४. H प्रशस्त°. १५. MHP समिद्भिरित्यङ्गिरः. १६. MH °सृजमित्ये°. १७–१७. MHP °रुक्तैता धाते अङ्गिरस्तमेत्ये°. १८. MHP प्र. १९. MHP कर्मं. २०. MHP वर्षाक°.

॥४२॥ आश्रावय इत्याह ॥४३॥ समिधो यज इति ॥४४॥ ये यजामहे ॥४५॥ अग्ने इति विभक्तिमाह ॥४६॥ [१२]

समिधो[1] अग्न आज्यस्य वियन्तु इति वषट्करोति ॥१॥ आ याहि वीतये इत्यनुमन्त्रयते । °गृणानो = बर्हिषि इति ॥२॥ [2]आश्रावय इत्याह[2] ॥३॥ यज इति ॥४॥(ये यजामहे ॥५॥ अग्निम् इति विभक्तिमाह ॥६॥ तनूनपादग्न आज्यस्य वेतु इति)[3] वषट्करोति[4] ॥७॥ दूतं वृणीमहे इत्यनुमन्त्रयते । °होतारं = क्रतुम् इति ॥८॥ आश्रावय इत्याह ॥९॥ यज इति॥१०॥ ये यजामहे ॥११॥ अग्निना इति विभक्तिमाह ॥१२॥ इडो[5] अग्न आज्यस्य वियन्तु इति वषट्करोति ॥१३॥ अग्निः समिध्यते इत्यनुमन्त्रयते । °कवि[6] = जुह्वास्यः इति ॥१४॥ आश्रावय इत्याह ॥१५॥ यज इति ॥१६॥ ये यजामहे ॥१७॥ अग्निः इति वि-(-भक्तिमाह ॥१८॥ बर्हिरग्न आज्यस्य वेतु इति वषट्करोति ॥१९॥ वृत्राणि) जङ्घनत् इत्यनुमन्त्रयते । °द्रविण = हुतः[7] इति॥२०॥ स्वयꣳसम्पन्न[8] उत्तमः[8] प्रयाजः ॥२१॥ आज्यभागौ यजति ॥२२॥ बुधन्वन्तावाज्यभागौ ॥२३॥ अग्नयेऽनुब्रूहि इत्याहाज्यस्य गृह्णानश्चतुः ॥२४॥ उद्बुध्यस्वाग्ने इत्यन्वाह[9] ॥२५॥ जुषाणेन यजति ॥२६॥ वषट्कृते जुहोति ॥२७॥ अग्नये पवमानायानुब्रूहि इत्याहा (-ज्यस्य गृह्णानश्चतुः ॥२८॥ अग्निर्ऋषिः इत्य-) न्वाह । °पवमान = महागयम्[10] इति ॥२९॥ [11]एह्यू षु ब्रवाणि ते[11] इत्युपशयी । °अग्न इत्येतरा गिरः । एभिर्वर्धास इन्दुभिः इति ॥३०॥ जुषाणेनैव यजति॥३१॥ वषट्कृते जुहोति ॥३२॥ अग्नयेऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥३३॥ पङ्क्त्यो[12] याज्यानुवाक्या भवन्ति ॥ ३४ ॥ अग्ने तमद्य [13]इत्यन्वाह ॥३५॥ अधा[13] ह्यग्ने इति यजति ॥३६॥ वषट्कृते जुहोति ॥३७॥ पुनरूर्जा निवर्तस्व इति पुरस्तात् पुरोडाशस्य स्रुवाहुतिं जुहोति ॥३८॥ सह रय्या निवर्तस्व इत्युपरिष्टात्[14] ॥३९॥ अग्नये स्विष्टकृतेऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन्॥४०॥ आमिष्टे अद्य गीर्भिः इत्यन्वाह ॥४१॥ एभिर्नो अर्कैः इति यजति ॥४२॥ वषट्कृते जुहोति ॥४३॥ अत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा प्राशित्र-

---

१. MH repeat. २--२. MH आश्रावयेद्याह; P आश्रवयेद्याह. ३. MHP om. ४. MHP वषट्....करोति. ५. MHP भो. ६. MHP कपि. ७. HP हुम्. ८–८. P सम्पन्नोत्तमं. ९. MHP न्वाहं. १०. MHP महात्रयम् ११–११. H उह्येषु ब्रुवाणिस्त; MP एह्येषु ब्रुवाणिस्त. १२. MHP पच्यो. १३.–१३. H °त्यन्वाधा; MP °त्वान्वाह°. १४. H oms उपरिष्टात्.

मवद्याप[1] उपस्पृश्येडामवद्यति[2] ॥४४॥ उपहूतायामिडायामग्नीध आदधाति ॥४५॥ प्राश्नन्ति ॥४६॥ मार्जयन्ते ॥४७॥ परिहरन्ति ब्रह्मणे॥४८॥ प्राशिते[3] प्राशित्रेऽग्नीदुदपात्रेणोत्कर उपमोदति ॥४९॥ अत्र पुनराधेयदक्षिणा ददाति पुनर्निष्कृतꣳ रथं, पुनरुत्स्यूतं वासः[4], पुनरुत्सृष्टमनड्वाहम्[5]॥५०॥ सन्ततिमनु होतुराहुतिं[6] जुहोति ॥५१॥ प्रसिध्यति कर्माऽनूयाजेभ्यः ॥५२॥ [ १३ ]

प्रसिध्यति कर्माऽनूयाजेभ्यः ॥१॥ विभक्तीरुक्त्वाऽनूयाजयोर्वषट्करोति ॥२॥ आश्रावय इत्याह ॥३॥ देवान् [7]यज इति[7] ॥४॥ (ये यजामहे)[8] ॥५॥ अग्ने इति विभक्तिमाह ॥६॥ देवं बर्हिर्वसुवने[9] वसुधेयस्य[10] वेतु इति वषट्करोति॥७॥ स्तोमं मनामहे इत्यनुमन्त्रयते । °सिध्रमद्य दिविस्पृश[11] देवस्य द्रविणस्यवः[12] इति॥८॥आश्रावय इत्याह॥९॥(देवान्)[13] [14]यज इति[14] ॥१०॥ये यजामहे ॥११॥ अग्नौ इति विभक्तिमाह ॥१२॥ देवो नाराशꣳसो वसुवने वसुधेयस्य[10] वेतु इति वषट्करोति॥१३॥ यो मर्त्यो[15] दुवः इत्यनुमन्त्रयते । °धियं जुजोष धीतिभिः । [16]मसन्नु ष प्रपूर्व्यं इषं वुरीतावसे[16] इति॥१४॥स्वयंꣳसम्पन्न उत्तमोऽनूयाजः ॥१५॥ प्रसिध्यति कर्म[17] पत्नीसंयाजेभ्यः ॥१६॥ अग्निन्यक्ताः पत्नीसंयाजानामृचः कुर्यात् ॥१७॥ अग्ने इत्येवोक्त्वाऽनुब्रूयाद्, यजेद्वा ॥१८॥ प्रसिध्यति कर्म ॥१९॥ सन्तिष्ठत एषेष्टिः ॥२०॥ यज्ञायुधानि सꣳसाद्यापः प्रणीयैन्द्राग्नं चैकादशकपालं निर्वपति ॥२१॥ आदित्यं चरुम् ॥२२॥ सो एषा तथा क्लृप्तेवेष्टिः ॥२३॥ [18]एतदु द्विर्बर्हिर्दृद्धिपुनराधेयम्[18] ॥२४॥ अथ परोप्तपुनराधेयस्य ॥२५॥ एत एवोभये संभारा अन्यत्र तृणकलापोभ्याम्[19] ॥२६॥ काले समिश्रोऽभ्यादधाति ॥२७॥ प्रसिध्यति कर्म[19] सर्पराज्ञीभ्यः ॥२८॥ सर्पराज्ञोभिरुपस्थाय तिसृभिरुत्तराभिरुपतिष्ठते यत्त्वा क्रुद्धः परो वप; यत्ते मन्युपरोप्तस्य; मनो ज्योतिर्जुषताम् इति ॥२९॥ प्रसिध्यति कर्मा-

१. MH °वद्यप. २. MP °वद्युप°; H °डायामवद्युप°. ३. H प्राशित्रे. ४. MHP वा for वासः. ५. M ins जुहोति after °नड्वाहम्. ६. M °राहुतञ्जु°. ७--७. MHP यजति. ८. MHP om. ९. H °सुवते. १०. MH वसुधे अस्य. ११. MHP °स्पृशं. १२. MHP द्रविणस्येरिति. १३. MHP om. १४--१४. MHP यजति. १५. MHP मर्तो. १६--१६. MP °पूर्वीषमुमिता° [P °त्पपूर्वीष°] H पूर्वीमिषमुमिता. १७. MHP कर्म. १८-१८. P एतदद्वब ह्°. १९. MHP कलावीभ्यां. १९. MHP कर्म.

ऽग्निहोत्रात् ॥३०॥ सप्त ते अग्ने समिधः सप्तजिह्वाः इत्यग्निहोत्रं जुहोति॥३१॥ प्रसिध्यति कर्म[१] प्रथमस्या इष्टेः सन्तत्यै ॥३२॥ सन्ततिमनु तिस्रः स्रुवाहुतीर्जुहोति लेकः सलेकः सुलेकः; केतः सकेतः सुकेतः; विवस्वाँ अदितिर्देवजूति[२]: इति ॥३३॥ प्रसिध्यति कर्म ॥३४॥ सन्तिष्ठत एषेष्टिः ॥३५॥ यज्ञायुधानि सꣳसाद्यापः प्रणीयाग्निवारुणमेकादशकपालमनु[३] निर्वपति ॥३६॥ तस्यै रयिमन्तावाज्यभागौ ॥३७॥ यथा(-यतनꣳ श्रपयित्वा सादयति) ॥३८॥ विराजौ संयाज्ये[४] ॥३९॥ सन्ततिमनु होतुराहुतिं जुहोति ॥४०॥ प्रसिध्यति कर्म ॥४१॥ सन्तिष्ठत एषेष्टिः ॥४२॥ यज्ञायुधानि सꣳसाद्यापः प्रणीयैन्द्राग्नं चैवैकादशकपालं निर्वपति ॥४३॥ आदित्यं चरुम् ॥४४॥ सो एषा तथा क्लृप्तैवेष्टिः ॥४५॥ एतदु[५] त्रिर्बर्हिःपुनराधेयम् ॥४६॥ न तु हास्याशां[६] च नेयात् ॥४७॥ स ( तां दिशं नेयात् ॥४८॥ यदीयात्)[७] ततोऽन्यां दिशमियादाऽस्तमयादादित्यस्य ॥४९॥ [ १४ ] [ इति चतुर्थोऽनुवाकः ]

## [ अग्निहोत्रम् ]

उद्धृतानग्नीनुपासिष्यमाणोऽन्तरा गार्हपत्यं चान्वाहार्यपचनं च प्रपद्य दक्षिणत आहवनीयस्योपविशति ॥१॥ अथास्मा अग्निहोत्रꣳ होष्यते ॥२॥ अपः[८] परिहरति ॥३॥ ता उपस्पृशति विद्युदसि विद्य मे पाप्मानम् इति ॥४॥ अप[९] (आचामति अनृतात्सत्यमुपैमि मयि श्रद्धा इति ॥५॥ इडाऽसि व्रतभृद् इत्यग्निहोत्रीमनुमन्त्रयते । 'अहं नावुभयोर्व्रतं चरिष्यामि) । इड[१०] एहि मयि श्रयस्वेर एहि मयि श्रयस्वा(-दित एहि गौरेहि) श्रद्ध एहि सत्येन [११]त्वाऽऽह्वयामि इति ॥६॥ इयमसि इति[११] वेदिमुपदिशन् ब्रूयात् । 'तस्यास्तेऽग्निर्वत्सः सा मेऽग्निना वत्सेन श्रद्धां तपोऽमुं कामं धुक्ष्व इति यं कामं कामयते तमाशास्ते ॥७॥ सꣳ हैवास्मै स कामः पद्यते ॥८॥ वाचंय(-मो वाचं यच्छति ॥९॥ अङ्गारान्नि-)रूहति व्यन्तान् कृत्वा ॥१०॥ गृह्णाति अग्नय आदित्यं (गृह्णाम्यह्ना रात्रिम्, आदित्यायाग्निं)[१२] गृह्णामि रात्रियाऽह्नः इति ॥११॥ सुभूते श्रयस्व इत्यधिश्रयति ॥१२॥ उद्यन् सुवर्गो लोकः इत्यभिद्योतयति । 'त्रिषु

१. MHP कर्म. २. MHP त्सुदिति°. ३. M °याग्नीवरुण°; H °मेककपा°. ४. MHP संयोज्य. ५. MHP एताद्वि. ६. Ao II. 148 : 2.1 : तस्याशां. ७. MHP om; Caland supplies the omitted text (see Ao II. 148:2.2 ) ८. MHP om. ९. MHP अथो. १०. M इर. ११–११. MHP त्वान्वयामीति यमसीति. १२. MHP om.

लोकेषु रोचय इति ॥१३॥ उद्भव 'आपः स्थ इति' स्रुवेणापः प्रत्यानयति । °उदिमं यजमानं भावयत प्रजया पशुभिः इति ॥१४॥ उद्यन् सुवर्गो लोकः इत्येवाभिद्योतयति² (°त्रिषु लोकेषु रोचय) इति ॥१५॥ अन्तरितꣳ रक्षोऽन्तरिता ³अरातयः इति प्रसलैस्त्रिः³ पर्यग्निकरोति ॥१६॥ प्रच्छिद्याभिद्योतनस्य निरस्य ⁴अपहता व्यृद्धिरपहतं पापं दौःष्वप्नियमपहतं⁴ पापस्य पापकृतं पापं कर्म यो नः पापं कर्म करोति प्रत्यगेनमृच्छतु इत्यनुपहृत्याभिद्योतनमुद्रासयति ॥१७॥ विष्णोः क्रमोऽसि, विष्णोः क्रान्तमसि, विष्णोर्विक्रान्तमसि इति (विष्णुक्रमान्) वाचयित्वा चतुर्थेन प्रतिष्ठापयति ॥१८॥ आत्मानमङ्गारानभिव्रतं ⁵सुभूतकृतः स्थ इति⁵ परा प्रत्यूहति सुप्रत्यूढान् कृत्वा ॥१९॥ दक्षिणेन हस्तेन स्रुवं च समिधश्चादत्ते ॥२०॥ [ १५ ]

दक्षिणेन हस्तेन स्रुवं च समिधश्चादत्ते⁶ ॥१॥ सव्येन स्रुचं निष्टपति प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयः इति गार्हपत्ये ॥२॥ ⁷निष्टप्याह ओमुन्नयामि⁷ इति ॥३॥ देवेभ्यो ⁸हव्यमूह्याभयाय ओमुन्नय⁸ इत्युन्नयति ॥४॥ भुवदिडा इति प्रथमꣳ स्रुवम् ॥५॥ जनदिडा इति द्वितीयम् ॥६॥ वृधदिडा इति तृतीयम् ॥७॥ करदिडा इति चतुर्थम् ॥८॥ सुवदिडा⁹ इति पञ्चमं यदि पञ्च ॥९॥ उन्नीतीरुन्नीयाभिमृशति¹⁰ सजूर्देवैः सायंयावभिः¹¹ इति ॥१०॥ उन्नीते दशहोतारं व्याचष्टे ॥११॥ उपोत्थाय¹² मुखदघ्ने हरति ॥१२॥ अग्निं वैश्वानरमाप्रीणीहि इति विषुवत्युद्यच्छते ॥१३॥ कूर्चे स्रुचꣳ सादयित्वा समिधमादधाति ¹³रजतां त्वाग्निज्योतिषं¹³ वायुमतीꣳ सुवर्ग्याꣳ सुवर्गाय लोकाय रात्रिमक्षितिमिष्टकामुपदधेऽमृतं¹⁴ प्राणे दधामि । प्रजापतिस्त्वा सादयतु पृथिव्याः पृष्ठे तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद इति ॥१४॥ अथैतावन्मात्रे समिद्धे¹⁵ जुहोति अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा इति ॥१५॥ हुत्वाऽनु-

---

१–१. MHP आचस्थेत्रि. २. MHP °तयते. ३–३. MHP अरातयस्तुतिप्र°. ४–४. MHP वहताप्व्यृद्धि°; om पापं; द्यौष्वनियम°. ५–५. MP व्यसुभूतं न कर्तेति; H व्यसुभूतमकर्तेति. ६. M समिधञ्चा°. ७–७. MHP निष्टस्याहोन्नया° [ P निष्ठस्या° ]. ८–८. MP °मुह्य भयायोऽमुन्न°; H °मूह्य भयायोमुन्न. ९. HP स्रुव°. १०. MH उन्नीत्युन्नी°. ११. MHP यावद्भि° १२MHP. उपोत्थोय. १३–१३. MHP रजताग्निज्यो°. १४. MHP दधेमं. १५ MHP समिधो; thus Ao II. 154.17.

प्राणिति अमृतं प्राणं[१] मयि दधाम्या मा प्राणो[२] विशतु सहामृतेन शान्त्या अप्रदाहाय इति ॥१६॥ अथैतामाहुतिं प्रत्यवेक्षते ॥१७॥ यैषा गार्हपत्ये हूयते तां जुहोति अग्नये गृहपतये स्वाहा इति ॥१८॥ होतुराहुतिमनुद्रुत्योत्तरोत्तरामाहुतिं[३] जुहोति ॥१९॥ हुत्वाऽन्वपानिति अमृतमपानं मयि [४]दधाम्या माऽपानो[४] विशतु सहामृतेन शान्त्या अप्रदाहाय इति ॥२०॥ अतिवाल्य[५] कूर्चे स्रुचꣳ सादयित्वा प्रतीचोꣳ स्रुचमुपमार्ष्टि ॥२१॥ प्राञ्चꣳ हस्तं कूर्चे निमार्ष्टि ॥२२॥ उत्तरतो द्वितीयमुपमृज्य दक्षिणतो बहिर्वेदि[६] द्वितीयं निमार्ष्टि ॥ २३ ॥ द्विरचुक्कारं प्रश्नाति ॥ २४ ॥ अत्रैवोदगावृत्तो भक्षयति आग्नेयं ज्योतिः शुक्रं प्रजननमश्वावद्गोमद्धिरण्यवद्रयिमत्पुष्टिमत्क्षत्रवत् तस्य तेऽग्निपीतस्य[७] मधुमत उपहूतस्योपहूतो भक्षयामि इति ॥२५॥ उत्तिष्ठन्नुद्दिशति ॥ २६ ॥ द्विराचम्य द्विः संक्षाल्य स्रुचं निनयति ॥२७॥ सुनिर्णिक्ताꣳ स्रुचं कृत्वा[८] प्रदाय वाचंयमोऽग्रेणाहवनीयं परीत्याग्नीन(-नुवी-)क्षते अभयं[९] वोऽभयं मे अभयं मे अभयं वः इति ॥२८॥ आयुरसि इत्याहवनीयम् ॥२९॥ विश्वायुरसि इति गार्हपत्यम् ॥३०॥ विश्वमायुरसि इत्यन्वाहार्यपचनम् ॥३१॥ तन्नुरसि इत्याहवनीयमेव । °ततोऽसि ततस्ते अस्मि ततो मेऽस्त्यनु मा तनुहि इति ॥३२॥ प्रजया पशुभिरहमसौ भूयासम् इत्यात्मनोऽग्रे नाम गृह्णा(-ति ॥३३॥ अमुष्मा अमुष्मै इत्यनुपूर्वं)[१०] पुत्राणां, तन्तुर्मे भूयात् इत्यन्ततः ॥३४॥ ज्योतिष्मन्तं त्वाऽग्ने ॥३५॥ [१६]

ज्योतिष्मन्तं त्वाऽग्ने[११] = स कामः पद्यते ॥ [१७]

यत्ते सुसीमे[१२] हृदयम् इतीमामभिमृशति[१३] । °आदावन्तः प्रजापतौ । तस्यामृतस्य त्वं वेत्थ माऽहं पौत्रमघꣳ रुदम्[१४] ॥ वेद तदयꣳ सुसीमायै[१५] गूढमन्तः प्रजा-(-पतौ । तस्यामृतस्य त्वं वेत्थ माऽहं पौत्रमघं [१६]नि गाम् इति ॥१॥ उपास्याग्नीनेतेनैव[१६] यथैतं निष्क्रम्य गार्हपत्यमुपतिष्ठते अग्ने रक्ष ण इन्द्र त्रायस्व सोम[१७] मृडयादिते नः पाहि वैश्वानरं ज्योतिरसि तन्माऽव मैत्रावरुणं ज्योतिरसि तन्माऽव ।

१. MP प्राणि. २. M प्रणो. ३. H हेतुरा°; MP °द्रुत्योत्तोर. ४–४. M दधाम्यपानो; HP दधामि अपानो. ५. MH अतिपाल्य. ६. MP बर्हि°. ७. MHP तेनीपीत°. ८. MP कृत्वो. ९. H अयं वा. १०. Cf. I.6.15. ११. MHP abr; see supra I.9.1–18. १२. MHP स्पशीमे. १३. M °मृश्यत्यस°. १४. MHP कदं. १५. MHP सुशीमायै. १६–१६. MH निगामत्युपास्यग्नी°; P नि गमत्युपास्यग्नी°. १७. MHP सोमं.

मा नो वि व्याधिनो विदन् मो अभि व्याधिनो विदन् ॥ [1]विष्वञ्चो अस्मच्छरवः[1] (पतन्तु ये अ-)स्ता[2] ये चास्याः[2]। दैवीर्मानुषीरिषवोऽस्माकं सपत्नान्[3] वि विध्यत ॥ यो नः सपत्नो योऽसपत्नोऽरातीयति देवास्तान् धूर्वन्तु[4] ब्रह्मवर्मं ममान्तरम् इति ॥२॥ ब्रह्मवर्मणोपस्थाय[5] कामꣳ संविशति ॥३॥ इति नु सायम् ॥४॥ अथ प्रातः ॥५॥ प्रसिध्यति कर्माऽङ्गाराणां निरूहणात् ॥६॥ व्यन्त(-न् कृत्वाऽङ्गारान्निरूहति ॥७॥ प्रसिध्यति कर्माऽ-)भिमर्शात् ॥८॥ उन्नीतोरुन्नीयाभिमृशति[6] सजूर्देवैः प्रातर्यावभिः[7] इति ॥९॥ प्रसिध्यति कर्म[8] समिध आधानात् ॥१०॥ समिधमादधाति हरिणीं त्वा[9] सूर्य-ज्योतिषं[10] वायुमतीꣳ सुवर्ग्याꣳ सुवर्गाय लोकायाहरक्षितिमिष्टकामुपदधेऽमृतं प्राणे दधामि प्रजापति(-स्त्वा सादयतु पृथिव्याः पृष्ठे तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद इति ॥११॥अथैताव)न्मात्रे समिद्धे[11] जुहोति सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा इति ॥१२॥ प्रसिध्यति कर्मोपमार्जनात्[12] ॥१३॥ प्राचीꣳ स्रुच-मुपमार्ष्टि ॥१४॥ प्रत्यञ्चꣳ हस्तं कूर्चे निमार्ष्टि ॥१५॥ [13]उत्तरतो द्वितीय-मुपमृज्य दक्षिणा बहिर्वेदि द्वितीयं निमार्ष्टि[13] ॥१६॥ द्विरचुक्कारं प्राश्नाति ॥१७॥ अत्रे(-वोदगावृत्तो भक्षयति सौर्यं ज्योतिः शुक्रं प्रजननमश्वावद्)गोमद्धिरण्यवद्रयिमत्पुष्टिमत्क्षत्रवत्तस्य[14] ते सूर्यपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि इति ॥१८॥ प्रसिध्यति [15]कर्माऽग्न्युपस्थानात्॥१९॥ अग्नीननुवीक्षते[15] नमो वोऽस्तु श्रद्धा मे मा वि गात् इति ॥२०॥ [१८]

[ इति पञ्चमोऽनुवाकः ]

## [ अग्न्युपस्थानम् ]

अग्नीनुपस्थास्यमानो भवति ॥१॥ [16]तस्याग्निहोत्रियै वत्सः क्लृप्तो[16] भवति ॥२॥ (अथ यद्यमावास्यायामा-)धत्ते[17] यदस्योपनिशान्तमग्न्युपस्थानं भवति तेन प्रतिपाद्यत आपर्वणः ॥३॥ अथ यदि पर्वण्याधत्त [18]एतेनैव प्रतिपाद्यते[18] ॥४॥ प्रतिधाप्यैतं वत्सं बध्नन्ति ॥५॥ स यज्ञोपवीतं कृत्वाऽप

१–१. MHP विषूश्शरण्य [P °रव्य]. २–२. MHP स्तायाश्चास्याः [H °चास्थाः]. ३. P सपत्नं. ४ MHP पूर्वन्तु. ५. MH °वर्मोणा°. ६. MH °दुर्नीया°. ७. MHP यावद्भि°. ८. MHP कर्मं. ९. MHP त्वां. १०. MHP सूर्यं ज्यो°. ११ MHP समिधो. १२. MH कर्मोन्मा°. १३-१३. MHP repeat; MHP °मुत्मृज्य; बर्हि°. १४. HP °क्षेत्रपत्तस्यै°. १५-१५. MHP कर्मानुपस्थायाग्नी°. १६–१६. MHP °ग्निहोत्यूचक्लृप्ता. १७. MHP यत्ते. १८–१८. MHP एते तेनैव; P °पद्यते.

आचम्य यजमानायतने तिष्ठन्नाहवनीयमुपतिष्ठते ॥६॥ कवातिर्यङ्ङ्वो-(-पतिष्ठ-)ते ॥७॥ उपप्रयन्तो अध्वरम् इत्यनुच्छन्दसम्, चित्रावसो स्वस्ति ते पारमशीय इत्यातः ॥८॥ चित्रावसो स्वस्ति ते पारमशीय इति रात्रिं मनसा ध्यायति ॥९॥ इन्धानास्त्वा शतꣳ हिमाः इति समिधमादधाति । °द्युमन्त= नाके स्वाहा इति ॥१०॥ एतयैव तिस्रोऽभ्यादध्यादिति ॥११॥ [1]अथैकामे-(-वाभ्यादध्यादिति ॥१२॥ ब्राह्म-)णमु वै भवति एषा वै सूर्मी कर्णकावत्येतया ह स्म वै देवा असुराणां श=अच्छंवट्कारम्[2] इति ॥१३॥एतस्या एवैतद् ब्राह्मणम् एकामभ्यादध्यात् इति॥१४॥एकामेवाभ्यादधात्येषा स्थितिः॥१५॥ सं त्वमग्ने सूर्यस्य वर्चसाऽगथाः इत्युपतिष्ठते । °समृ० =सृज इति ॥१६॥ सं त आकुर्वन्तु स्वं यजमान इत्याह। °यदन्यत्र मनसा तद् ध्याय इति॥१७॥तत्समाकृतमभिमन्त्रयते सं पश्यामि =बह्वीर्मे[3] भूयास्त इति ॥१८॥ सꣳहितासि विश्वरूपीः इत्यग्निहोत्रियै वत्समभिमृशत्युत्तरेणाग्रेणान्वाहार्यपचनं प्राञ्चं तिष्ठन्तममावद्दक्षिणमक्षिकटम्[4] । °आ मोर्जा=[5]रायः श्रयन्ताम्[5] इति ॥१९॥ प्रत्यङ् परेत्य गार्हपत्यमुपतिष्ठते उप त्वाऽग्ने दिवेदिवे; राजन्तमध्वराणाम्; स नः पितेव सूनवे; अग्ने त्वं नो अन्तमः; तं त्वा शोचिष्ठ दीदिवः; वसुरग्निर्वसुश्रवाः इति ॥२०॥ ऊर्जा वः पश्याम्यूर्जा मा पश्यत इति गृहान् परेक्षते ॥२१॥ रायस्पोषेण वः पश्यामि रायस्पोषेण मा पश्यत इति गाः ॥२२॥ इडाः स्थ मधुकृतः इति ता एव । °स्योना=श्रयन्ताम् इति ॥२३॥ अथ प्राङेत्य चतसृभिराहवनीयमुपतिष्ठते तत्सवितुर्वरेण्यम्; सोमानꣳ स्वरणम्; कदा चन स्तरीरसि[6]; परि त्वाऽग्ने पुरं वयम् इति ॥२४॥ अथ प्रत्यङ् परेत्य गार्हपत्यमुपतिष्ठते अग्ने गृहपते सु=भूयाः इति ॥२५॥ आशिष आशास्ते शतꣳ हिमास्तामाशिषमाशासे मह्यममुष्मै ज्योतिष्मतीम् इति ॥२६॥ आत्मनोऽग्रे नाम गृह्णाति ॥२७॥ अमुष्मा अमुष्मै इत्यनुपूर्वं पुत्राणां, तन्तवे इत्यन्ततः ॥२८॥ तस्यैतद् ब्राह्मणम् प्र वा एषोऽस्माल्लोकाच्च्यवते=निह्नुते[7] इति यदेतत् ॥२९॥ अथैकꣳ समानमाषड्भ्यः ॥३०॥ [१९]

अथैकꣳ समानमाषड्भ्यः ॥१॥ षड्भिर्गार्हपत्यमुपतिष्ठते ॥२॥ ऊर्जा वः पश्याम्यूर्जा मा पश्यत इति गृहान् परेक्षते ॥३॥ (रायस्पोषेण वः पश्यामि रायस्पोषेण मा पश्यत इति गाः ॥४॥ इडाः स्थ मधुकृतः इति ता

१. MH °कर्मे. २. MH अहं वषट्कारम्. ३. बह्वीः कर्मं. ४. MHP तिष्ठन्तममावद°. ५–५. MHP राश्रयन्ताम्. ६. MHP °रसीति. ७. MHP हिहुत.

एव । ⁵स्योना=श्रयन्ताम् इति ॥५॥ अथ)[१] प्राङेत्य तिसृभिराहवनीयमुपतिष्ठते तत्सवितुर्वरेण्यम्; सोमानँ स्वरणम्; कदा चन स्तरीरसि इति ॥६॥ परि त्वाऽग्ने पुरं वयम् इत्येषा[२] परिशेते ॥७॥ अथ प्रत्यङ् परेत्य गार्हपत्यमुपतिष्ठते अग्ने गृहपते इति ॥८॥ तथैवाशिष आशास्ते ॥९॥ प्राङेत्यैकयाऽऽहवनीयमुपतिष्ठते परि त्वाऽग्ने पुरं वयम् इति ॥१०॥ तस्यैतद्[३] ब्राह्मणम् परि त्वाऽग्ने पुरं वयम् इत्याह परिधिमेवैतं परिदधात्यस्कन्दाय इति यदेतत् ॥११॥ अथैकँ समानमाषड्भ्यः[४] ॥१२॥ षड्भिर्गार्हपत्यमुपस्थाय[५]=ता एव=[५]उपतिष्ठते अग्ने गृहपते इति ॥१३॥ तथैवाशिष आशास्ते ॥१४॥ प्राङेत्य चतसृभिराहवनीयमुपतिष्ठते तत्सवितुर्वरेण्यम्; सोमानँ स्वरणम्; कदा चन स्तरीरसि;[६] परि त्वाऽग्ने पुरं वयम् इति ॥१५॥ तदेतत्प्राक्संँस्थमुपतिष्ठते ॥१६॥ एतद् ब्राह्मणमाप्नोति परि त्वाऽग्ने पुरं वयम् इति यदेतत् ॥१७॥ प्रथमा वाऽस्तु[७] द्वितीया वा तेन हैतेन सायमेवोपतिष्ठते, न प्रातः ॥१८॥ नक्तमुपतिष्ठते (न प्रातः । सँ हि नक्तं व्रतानि सृज्यन्ते सह श्रेयाँश्च पापीयाँश्चासाते, ज्योतिर्वा अग्निस्तमो रात्रिर्यन्नक्तमुपतिष्ठते ज्योतिषैव तमस्तरति इति) ॥१९॥ आग्निपावमानीभिरुद्धरति[८] ॥२०॥ अग्न आयूँषि पवसे इत्येता षड्ऋचः ॥२१॥ नाग्निपावमानिकेन संवत्सरमुपतिष्ठते ॥२२॥ संवत्सरस्य परस्तादाग्निपावमानीभिरुपतिष्ठते[९] ॥२३॥ काममुद्धरेत् ॥२४॥ तस्यैतद् ब्राह्मणम् यथा वै पु(-रुषोऽश्वो गौर्जीर्यत्येवमेवाग्निराहितो जीर्यति । संवत्सरस्य परस्तादाग्निपावमानीभिरुपतिष्ठते पुनर्नवमेवैनमजरं करोत्यथो पुनात्येव ॥२५॥ तद् वा एतदग्न्युपस्थानमायुष्यं)लोक्यं पुत्रियं पशव्यम् ॥२६॥ आयुष्मान् ह वै लोकी पुत्री पशुमान् भवति य एतेनोपतिष्ठते ॥२७॥ तस्मिन्वा एतस्मिन्नग्न्युपस्थाने सर्वाणि छन्दाँसि[१०] सर्वा आशिषः सर्वे कामाः ॥२८॥ न ह वा अस्य किञ्चिच्छन्दोऽपराद्धं भवति नाशीर्न कामो य एतेनोपतिष्ठते ॥२९॥ (तस्य) ह वा अस्याग्निहोत्रँ सर्वैश्छन्दोभिस्तायते[११] य एतेनोपतिष्ठते ॥३०॥ अथ माहाचमसम् ॥३१॥ ज्योतिष्मन्तं त्वाऽग्ने ॥३२॥ [२०]

ज्योतिष्मन्तं त्वाऽग्ने[१२]=स कामः पद्यते य एतेनोपतिष्ठते ॥ [२१]

---

१. MHP om; cf I.19.22–24. २. H °त्येषां. ३. H तस्येति तद्; MP तस्यैति तद्. ४. MH समाषट्भ्यः. ५–५. MHP abr; see I.20.3–8; MH त एव. ६. MHP स्तरीरसीति. ७. MHP वास्त्विति. ८. MP °पावमानीरु°. ९. H पुर°. १०. P चन्दांसि. ११. H. त्रायते. १२. MHP abr; see I.९.१–१८.

[प्रवसदुपसस्थानम्]

अथ प्रवसदुपस्थानम्[1] ॥१॥ प्रवत्स्यन्नग्न्युद्धरणकालमनशनेन[2] प्रतिगोपायति ॥२॥ अग्निहोत्र(-मस्य हुतं म-)न्यते ॥३॥ स यज्ञोपवीतं कृत्वाऽप आचम्य प्राङिवोदङ् तिष्ठन् जपत्यासीनो वा भूर्भुवः सुवरग्नय आह्रोष्यमाणा अग्नय आह्रूयमाना अग्नय आहूताः स्विष्टं च मे (हुतं)[3] चाहुतं[4] च गोपायत । ऋतसत्याभ्यां मा पात । अहोरात्राभ्यां[5] मा पात प्राणापानाभ्यां[6] मा पात द्विप(-दश्च) पुषेयं[7] चतुष्पदश्च, अहरशीय रात्रिरशीय इति सायम्, रात्रिरशीयाहरशीय इति प्रातः ॥४॥ अहर्वा ऋतꣳ रात्रिः सत्यम् ॥५॥ अपि ह वा अस्याहुतꣳ हुतं भवति य एतेनोपतिष्ठते ॥६॥ अथ परोक्षादुपस्थानम् भूर्भुवः सुवरिहैव[8] सन् तत्र सतो[9]=ज्योतिषा[10] वो वैश्वानरेणोपतिष्ठे इति ॥७॥ अथागत्य माहासांपदेनोपतिष्ठते[11] ॥८॥ ओऽम् इति गार्हपत्यम् ॥९॥ ओऽम् इत्यन्वाहार्यपचनम् ॥१०॥ ओऽम्[12] इत्याहवनीयम् ॥११॥ ओऽम् इति वै स्तूयते ॥१२॥ ओऽम् इति शस्यते[13] ॥१३॥ ओऽम् इत्याश्राव्यते ॥१४॥ अथ हास्य त्रिस्त्रिभिर्वेदैरेकैक उपस्थितो भवति य एतेनोपतिष्ठते ॥१५॥ अथ प्रसिद्धं तूष्णीं तृतीयꣳ समिधोऽभ्यादधाति[14] ॥१६॥ अथ समारोहणम्[15] ॥१७॥ अयं ते योनिर्ऋत्वियः इत्यरण्योरग्निꣳ समारोहयते । °यतो= रयिम् इति ॥१८॥ अथो खल्वाहुः[16] यदरण्योः समारूढो नश्येदुदस्याग्निः सीदेत् पुनराधेयः स्यादिति । या ते=तयेह्यात्मानमच्छा[17] वसूनि कृण्वन्नस्मे नर्या पुरूणि । यज्ञो भूत्वा=स्वक्षय[18] एहि इति ॥१९॥ अथ प्रत्यवरोहणम् भूर्भुवः सुवराजुह्वान=सीदत इति ॥२०॥ अथ द्वितीयम् उपावरोह जातवेदः पुनस्त्वं[19] देवेभ्यो हव्यं वह [20]नः प्रजानन्[20] । आयुः[21] प्रजाꣳ रयिमस्मासु धेह्यजस्रो दीदिहि नो दुरोणे इति उभाभ्यां वैकेन वा ॥२१॥ अथातोऽग्नी-

१. MH प्रसवदुप°. २. MH प्रसवन्नग्न्यु°मशनेन. ३. MHP om. ४. P. चाहूतं. ५. MHP भ्या. ६. MH °भ्या. ७. H पुषेषं. ८. MHP °रिहेव. ९. MHP सत्रो. १०. MHP ज्योतिषो. ११. H महास्रां°; Caland gives माहासांपयोदने(न) or °पयोदेन as alternative Vyākhyā reading ( Ao II.165.4 ). १२. P आमिति. १३. P शास्यति. १४. P समिधमभ्या°. १५. MH °रोपणम्. १६. P खल्वागुर्यं°. १७. MHP °यमाणस्त्रिरपान्यादात्मान्मानमच्छा° [ P °दात्मात्मनात्मा°]. १८. MHP सक्षय. १९. MHP पुनस्त्वा. २०. MHP नं प्रजनात्. २१. P अयुः.

नामेवोद्वातानां प्रायश्चित्तिः ॥२२॥ स यदि सर्वं एवोद्वायेयुः[१] अयं ते योनिर्ऋत्वियः इत्यायतनानि समारोह्योद्धृत्यैतद् भस्मावोक्ष्य मथित्वाऽग्नीन् विहृत्य सन्ततिँ हुत्वाऽथ सिद्धमग्निहोत्रं जुहोति ॥२३॥ अथ द्वितीयम् अयं ते योनिर्ऋत्वियः इत्येवायतनानि समारोह्योद्धृत्यैवैतद् भस्मावोक्ष्य मथित्वाऽग्नीन् विहृत्य सन्ततिँ सव्यावृतिकाँ हुत्वाऽथ सिद्धमेवाग्निहोत्रं जुहोति ॥२४॥ अथ तृतीयम् अयं[२] ते योनिर्ऋत्वियः[३]=न्विहृत्य प्रसिद्धँ होतृभिश्चरति पूर्णाहुत्यन्तैः ॥२५॥ अथ सिद्धमेवाग्निहोत्रं जुहोति ॥२६॥ अथ चतुर्थम् अयं ते[४]=मथित्वा गार्हपत्यमष्टाभिरुपतिष्ठते उदु त्वा विश्वे देवाः; उद्बुध्यस्वाग्ने; उदेनमुत्तरां नय; उद्वयं तमसस्परि; उदुत्तमं वरुण [५]पाशमस्मत्; मनो[५] ज्योतिर्जुषताम्; तन्तुं तन्वन्; त्वमग्ने सप्रथा असि = वि तन्वते इति ॥२७॥ एताभिरुपस्थाय चत्वारि चतुर्गृहीतानि जुहोत्युप वा तिष्ठते अग्नेऽङ्गिरः; अग्नेऽभ्यावर्तिन्; पुनरूर्जा; सह रय्या इति ॥२८॥ अथैनमुद्धरति भूर्भुवः सुवर्वाचा त्वा ॥२९॥ [२२]

वाचा त्वा होत्रा प्राणेनोद्गात्रा चक्षुषाऽध्वर्युणा मनसा[६] ब्रह्मणा श्रोत्रेणाग्नीधैतैस्त्वा दैव्यैः पञ्चभिर्ऋत्विग्भिरुद्धरामि इति[७] ॥१॥ उद्ध्रियमाणे उद्धर पाप्मनो मा[८] यदविद्वान् यच्च विद्वाँश्चकार। अह्ना यदेनः[९] कृतमस्ति[१०] पापँ सर्वस्मान्मोद्धृतो मुञ्च तस्माद् इति (सायम्, रात्र्या यदेनः कृतमस्ति पापँ सर्वस्मान्मोद्धृतो मुञ्च तस्माद् इति)[११] प्रातः ॥२॥ सूर्यस्याग्ने प्रियया तनुवा सङ्गच्छस्व; अषाढ उग्र पृतनाषाढ मृध्रस्योना योनिस्योना पृथिवी मा त्वा तितीर्षँस्तारीत्; ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि = यशः श्रीरसि वृत्रहा; यो नः सनाभिर्यो विनाभिरभिदासति [१२]तमग्नेऽहं त्वया[१२] द्विषन्तं भ्रातृव्यं ब्रह्मणो [१३]गिरिणाभिनिदधामि[१३]; अमृताहुतिममृता(-यां जुहोम्यग्निं पृथिव्या-)ममृतस्य जित्यै। तेनामुं काममनन्तं जयानि प्रजापतिर्यं[१४] प्रथमो जिगाय। अग्निमग्नौ स्वाहा इति सायम्, सूर्यमग्नौ स्वाहा इति प्रातः ॥३॥ अथ सिद्धमग्निहोत्रं जुहोति ॥४॥ अथ कौषीतकम् भूर्भुवः सुवर्वागायुर्वा विश्वायुर्विश्वमायुः इति ॥५॥

१. HP वाययेयुः; thus Ao II. 153.32. २. MHP om. ३. MHP abr; see I.22.23. ४. MHP abr.; see I.22.23. ५–५. MHP पाशमस्मनो. ६. MH महसा; P मंहसा. ७. MHP om इति. ८. MHP om. ९ MHP यदेनं. १०. MHP कृतमस्मि. ११. MHP om. १२–१२. MHP तमनेहन्त्वया. १३–१३. H गिरिणागिरिणा निदधामि. १४. P oms प्रजापति.

सर्वꣳ हैवा(-स्यायुर्भवति य एतेनोपतिष्ठते ॥६॥ भूर्भुवः सुवः प्र) वो देवायाग्नये यच्छानि गुह्यानि नामानि रूपाणि भूतान्याकूतिर्मे समृध्यतां[1] [2]मनसस्पतिर्मे समृध्यताꣳ[2] श्रद्धा मे मा वि गात्[3] इति सायम्, प्र वो देवाय सूर्याय इति प्रातः ॥७॥ एतावद्वा अस्ति यावदेतद्यच्छानि गुह्यानि नामानि रूपाणि भूतानि ॥८॥ आकूतिर्हैवास्मै मन(-सस्पतिर्हैवास्मै श्रद्धा हैवास्मै भवति य एतेनोप-)तिष्ठते ॥९॥ अथ पैङ्गम्[4] भूर्भुवः सुवः प्रजाः प्रजया भूयासꣳ सुवीरो वीरैः सुवर्चा वर्चसा सुपोषः पोषैः इति ॥१०॥ सुप्रजा हैवास्य प्रजया भवति सुवीरो वीरैः सुवर्चा वर्चसा सुपोषः पोषैर्य एते(-नोपतिष्ठते ॥११॥ अथैकम् हविर्देवानामसि मृत्योर्मेऽभयꣳ स्वस्ति मे-)ऽस्त्वभयं मे अस्तु महः इति ॥१२॥ अभयꣳ हैवास्मै महो भवति य एतेनोपतिष्ठते ॥१३॥ अथ वस्यस्योपस्थानम्[5] भद्रमस्तु वः सुभद्रमस्तु [6]वो भद्रं वस्यो[6] अस्तु मे इति ॥१४॥ [7]भद्रꣳ हैवास्मै[7] वस्यो[8] भवति य एतेनोपतिष्ठते, य(-स्य चैवैतदुपस्थानम् ॥१५॥ अथैकम्) देवानाꣳ रसाः इति ॥१६॥ [9]अथैकम् भर्तुं वः शकेयम् इति ॥१७॥ अथैकम् श्रद्धा मे मा वि गमात् इति[9] ॥१८॥ अथैकम् यस्मै कामाय प्रजापतिरग्निहोत्रस्याशीः सा म आशीरिदमहमाभ्यामाहुतिभ्यां गायत्रेण छन्दसा त्रिवृता[10] स्तोमेन (द्विषन्तं भ्रातृव्यं पाप्मना) मृत्युमतितराणि[11] इति ॥१९॥ द्विषन्तꣳ हैवास्य भ्रातृव्यं पाप्मना मृत्युमतितरति[11] य एतेनोपतिष्ठते ॥२०॥ अथैकं तूष्णीमहरहः संवत्सरमुपतिष्ठते, संवत्सरस्य परस्ताद् यं कामं कामयते तमाशास्ते ॥२१॥ सꣳ हैवास्मै स कामः[12] पद्यते य एतेनोपतिष्ठते ॥२२॥ तस्यैतद् ब्राह्मण(-म् उपस्थेयोऽग्नी३-र्नोपस्थेया३ इत्याहुः। मनुष्यायेन्न्वै योऽहरहराहृत्याथैनं याचति। स इ-)न्न्वैतमुपाच्छंति[13]। अथ को देवानहरहर्याचिष्यतीति। (तस्मान्नोपस्थेयः। अथ खल्वाहुराशिषे वै कं यजमानो यजत इत्येषा खलु वा आहिताग्नेराशीर्यदग्निमुपतिष्ठते। तस्मादुपस्थेयः)[14] ॥२३॥ [२३] [इति षष्ठोऽनुवाकः]

[ इत्यग्न्याधेयाख्यः प्रथमः प्रपाठकः ]

---

१. P समिध्यतां. २–२. P oms. ३. MHP गाम्. ४. MHP पेङ्गं°. ५. H यस्य उपस्थानं; MP वैश्यस्योप°. ६–६. MHP वोऽभूद्रन्त्वस्यो. ७–७. MH भद्राहनैवा°. ८. P तस्यो. ९–९. H oms; P गमात् for गात्. १०.P त्रिवृत्रा; M. तिवृत्रा. ११. मृदुमति°. १२. MH कामं. १३. MH मन्वै°. १४. MHP om.

# अथ द्वितीय प्रपाठकः

## [ अथ दर्शपूर्णमासौ ]

### [ वत्सापाकरणं बर्हिराहरणञ्च ]

अद्योपवसथ इत्येकविꣳशतिदारुमिध्मं प्रपूतशकलꣳ हुत्वाऽग्निहोत्रमाहवनीयेऽभ्यादधाति ॥१॥ एकं दारु गार्हपत्ये ॥२॥ एकमन्वाहार्यपचने[1] ॥३॥ एकमाहवनीये ॥४॥ काममूर्ध्वम् ॥५॥ ततोऽभ्यादध्यादमावास्यायै ॥६॥ उपवसथेऽग्निहोत्रोच्छिष्ट(-मातच्य निदधाति हविरातञ्चनाय ॥७॥ उत्परे-)त्य[2] शाखामाच्छिनत्ति या प्राची वोदीची वाऽप्रतिशुष्काग्रा भवति इषे त्वा इति[3] ॥८॥ ऊर्जे त्वा इत्येनामनुमार्ष्टि[4] ॥९॥ तयाऽऽगत्य वत्सानपाकरोति वायवः स्थ इति पुꣳसः, उपायवः स्थ इति स्त्रीः ॥१०॥ देवो वः सविता प्रेरयतु ( इति गा अनु-)मन्त्रयते। [5]श्रेष्ठतमाय कर्मण आप्यायध्वमघ्निया इन्द्राय देवेभ्यो = वो [5]वृणक्तु इति[5] ॥११॥ ध्रुवा अस्मिन् गोपतौ स्यात[6] बह्वीः इति यजमानं वर्षभं वा गोष्ठं वाऽभिमन्त्रयते ॥१२॥ यजमानस्य पशून् पाहि इत्युत्तरार्धेऽन्यगारस्य पलाशशाखामुपगूहत्यग्निष्ठस्य वाऽनसः[8] ॥१३॥ देवस्य त्वा सवितुः प्रसवे इत्यपरेण गार्हपत्यम्(असिदं) निधायादत्ते। [9]अश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे (इति)[9] ॥१४॥ यज्ञस्य घोषदसि इति (अभिमन्त्रयते) [10]॥१५॥ प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयः इति गार्हपत्ये निष्टपति ॥१६॥ उर्वन्तरिक्षमन्विहि इति बर्हिषोऽर्धमन्तरा[11] [12]वेदिं चोत्करं च प्रेत्य प्रेयमगाव् = रासदे इति[12] वेदिं प्रत्यवेक्षते ॥१७॥ देवानां परिषूतमसि[13] इति यत्र बर्हिर्लोष्यन् भवति तत्परिदिशति। [9]वर्षवृद्धमसि इति ॥१८॥ देवेभ्यस्त्वोर्ध्वबर्हिभ्यः इत्यूर्ध्वं तृणस्तम्बमुन्मार्ष्टि ॥१९॥ देवबर्हिर्मा त्वाऽन्वङ् मा तिर्यक् इत्यभिपद्यते ॥२०॥ पर्व ते राध्यासम् इत्यसिदेनाधिनिदधाति ॥२१॥ आच्छेत्ता ते मा रिषम् इत्याच्छिनत्ति ॥२२॥ देवबर्हिः शतवल्शं[14] विरोह इत्याच्छेदनान्यभिमृशति ॥२३॥ सव्ये हस्ते[15]ऽसिदं समस्य[16] सहस्रवल्शा वि वयꣳ

---

१. P °पचनम्. २. Cf IV.1.3–4. ३. P oms. ४. MH °माच्छि; P°माच्छि. ५–५. MHP वृणुत्विति. ६. MHP स्यातां. ७. MHP वानसग्. ८. MHP om. ९. MHP om. १०. MHP om. ११. MHP बर्हिषोर्ध्वमन्तरा. १२–१२. H oms; P oms प्रेत्य. १३. MHP °षूदमसि १४. MP °वलिशं. १५. MHP हन्ते. १६. MHP repeat देवबर्हिः = मृशति after समस्य.

रुहेम इत्यात्मानं प्रत्यभिमृशते ॥२४॥ (अप)[१] उपस्पृश्य पृथिव्याः संपृचः पाहि इति प्रथममुष्टिं निदधाति ॥२५॥ तं प्रस्तराय संचष्टे ॥२६॥ अयुजो मुष्टीन्[२] लुनाति, सप्त वा नव वैकादश वा त्रयोदश वा यथाप्तं मन्यते ॥२७॥ अथ अदित्यै रास्नासि इति त्रिरन्वाहितं प्रसलैः सन्नहनं प्रवेष्टयति ॥२८॥ तदुदीचीनाग्रं वितत्य सुसंभृता त्वा संभरामि इत्यस्मिन् संभरति ॥२९॥ इन्द्राण्यै सन्नहनमसि इति समुत्पारयति ॥३०॥ पूषा[३] ते ग्रन्थिं ग्रथ्नातु इति व्यत्ययमावेष्टयति[४] ॥३१॥ स ते माऽस्थात् इत्यनुलोममुपगूहति ॥३२॥ इन्द्रस्य त्वा बाहुभ्यामुद्यच्छे इत्युद्यच्छते ॥३३॥ बृहस्पतेर्मूर्ध्ना हरामि इति शीर्षन्नधि निधत्ते ॥३४॥ उर्वन्तरिक्षमन्विहि इत्यन्तरा वेदिं चोत्करं च हृत्वोत्तरत आहवनीयस्य सादयति देवंगममसि इति ॥३५॥ यत्र गुप्तं मन्यते तन्निदधात्यनधः ॥३६॥ [१]

## [ पितृयज्ञः ]

त्रिवृच्छाखापवित्रं करोति ॥१॥ वेदं करोति ॥२॥ वेदिं करोति ॥३॥ द्वे मेक्षणे करोति ॥४॥ तयोरन्यतरेणाधिवृक्षसूर्ये[५] पितृभ्यो निदधाति ॥५॥ निधत्त [६]अन्यतर उदकुम्भम्[६] ॥६॥ आहरन्त्युलूखलमुसलꣳ शूर्पꣳ स्फ्यꣳ स्थालीमिति ॥७॥ एकैकं[७] तानि दक्षिणेनान्वाहार्यपचनꣳ[८] सꣳसादयति ॥८॥ अर्धपात्रं[९] व्रीहीणामनसो[१०] निरूप्य दक्षिणेनान्वाहार्यपचनमविवेकमवघ्नन्ति[११] ॥९॥ तान् सकृत् फलीकृतान् कृत्वा न्यूनाꣳ स्थालीमधिश्रित्यावपति ॥१०॥ दक्षिणावृत्तः[१२] श्रपयति ॥११॥ न[१३] पुराऽऽज्यस्यानयनात् प्रतिष्ठापयति ॥१२॥ यदाऽस्मिन्नाज्यमानयत्यथ प्रतिष्ठापयति ॥१३॥ ये पितॄणां प्रतिरूपा भवन्तः इति दक्षिणेनान्वाहार्यपचनꣳ स्फ्येनोद्धन्ति । °असुरा उपासते यज्ञमेतम् । परापुरो निपुरो ये [१४]हरत्यग्निस्तानस्मात् प्रणुनोतु[१४] यज्ञात् इति ॥१४॥ उल्मुकमादाय[१५] प्राङभितपति ॥१५॥ [१६]उदीरतामवर उत्परासः[१६] इत्युदपात्रेणावोक्षति । °उन्मध्यमाः पितरः=हवेषु

---

१. MHP om. २. MHP मृष्टिं. ३. MH सूषा ४. MH व्यत्यावे°. ५. MHP °वृक्षस्सूर्ये. ६–६. M °तरदकुंभ° ७. MHP °त्येकैकः. ८. °पचनमु. ९. P अधिपात्रं. १०. MHP व्रीहीणां मनसां ११. MHP °मनप्रवेकमपघ्नन्ति. १२. MP °वृत्त. १३. P oms. १४–१४. MH °स्मान्द्रणुनोत्तु. १५. M °त्यमुत्मक°; H °त्यमुत्मुक°. १६-१६. MHP °तामुत्परास.

इति ॥१६॥ यज्ञोपवीतं कृत्वा मेक्षणेन तिस्र आहुतीर्जुहोति सोमाय पितृमते स्वधा नमः; यमायाङ्गिरस्वते पितृमते स्वधा नमः ; अग्नये कव्यवाहनाय स्वधा नमः इति ॥१७॥ तूष्णीं मेक्षणमनुप्रहरति ॥१८॥ प्र(-सव्यम-)न्वाहार्यपचनं दक्षिणाग्रꣳ सꣳस्तीर्य मार्जयन्तां पितरः इति त्रीण्युदपात्राणि निनयति । °मार्जयन्तां पितामहाः; मार्जयन्तां प्रपितामहाः इति ॥१९॥ [1]एतत्ते तत[1] इति [2]तिस्रो दर्वीर्ददाति[2] । °याꣳश्च त्वमन्वसि ये च त्वामभितो ये च त्वया सह[3] स्वधा(-क्षितिः; एतत्ते पितामह याꣳश्च त्वमन्वसि ये च त्वामनु=क्षितिः; ए-)तत्ते प्रपितामह याꣳश्च त्वमन्वसि ये च त्वामनु=क्षितिः; इति ॥२०॥ एतद्वः पितामहाः इति हैव जीवपिता दद्यात् ॥२१॥ अत्र पितरो यथाभागं मन्दध्वम् इत्युक्त्वोदगावर्तते ॥२२॥ आतमितोरास्ते ॥२३॥ सुसंदृशं त्वा वयम् इत्याहवनीयमभिव्यनिति । °मघवन् मन्दिषीमहि[4] । (प्र नून° पूर्णबन्धुर स्तुतो यासि व-)शाँ अनु । योजा न्विन्द्र ते हरी ॥२४॥ अक्षन्नमीमदन्त हि इति गार्हपत्यम् । °अव=हरी इति ॥२५॥ स घा तं वृषणꣳ[5] रथम् इत्यन्वाहार्यपचनम्[6] । °अधि=हरी इति ॥२६॥ अमीमदन्त पितरः सोम्याः इत्यभिपर्यावर्तते ॥२७॥ यः [7]स्थाल्यामतिशिष्यते तं त्रिरवजिघ्रति ये सजाताः[7] समनसो[8]=शतꣳ समाः इति ॥२८॥ नमो वः पितरो रसाय इति नमस्कारैरुपतिष्ठते । °नमो वः पितरः शुष्माय=वसिष्ठो भूयासम् इति ॥२९॥मार्जयन्तां पितरः इति त्रीण्युदपात्राणि निनयति । °मार्जयन्तां पितामहाः; मार्जयन्तां प्रपितामहाः इति ॥३०॥ दशाम्छिनत्ति एतद्वः पितरो वासो वीरं मह्यं दत्त इति ॥३१॥ उत्तर आयुषि लोम छिन्नीत इति ब्राह्मणम्[9] ॥३२॥ दशामेव छिनत्ति ॥३३॥ अक्षन्पितरः इत्युपतिष्ठते । °अमीमदन्त पितरोऽतीतृपन्त[10] पितरोऽमीमृजन्त पितरः इति ॥३४॥ परेत पितरः सोम्याः इति सꣳसादयति[11] । °गम्भीरैः=मदन्ति इति ॥३५॥मनो न्वा हुवामहे[12] इति तिसृभिर्मन आह्वयते । °नाराशꣳसेन स्तोमेन=सचेमहि इति ॥३६॥ यदन्तरिक्षं पृथिवीमुत द्याम् इत्यात[13] एव गार्हपत्यमुपतिष्ठते । °यन्मा=नसम् इति॥३७॥ प्रजापते न त्वदेतान्यन्यः इति यज्ञोपवीतं कृत्वाऽऽहवनीयस्यार्धमेति ।

---

१–१. P एतत्तत. २–२. MHP तिस्रोर्वी°; thus Ao II. 148 : 5.1. ३. MHP स. ४. MHP add इति. ५. MHP पृषणा. ६. HP °पचन. ७–७. P oms. ८. P यमसो. ९. H ब्राह्मणान्. १०. H अमीसृजतीतितृपन्त; MP अमीमृजतीतितृपन्त. ११. MH साधयति. १२. MP हुमहः. १३. MHP इत्यत.

°विश्वा = रयीणाम् इति ॥३८॥ आगत्यैता दर्वीः[१] पात्रे समस्यति ॥३९॥ उपनिनयत्युदकुम्भम्[२] ॥४०॥ अनुप्रहरति बर्हिः ॥४१॥ सन्तिष्ठते पितृयज्ञः ॥४२॥ [ २ ]

## [ सायंदोहः ]

परिस्तृणन्त्यग्नीन् ॥१॥ उपावहरति पात्राणि ॥२॥ सायं निर्णिक्तैः पात्रैर्गा आयतीः प्रतीक्षते एता आचरन्ति = इह व इन्द्रो रमयतु गावः इति ॥३॥ यजमानं[३] वर्षभं वा गोष्ठं वाऽभिमन्त्रयते ॥४॥ हुत्वाऽग्निहोत्रꣳ सान्नाय्यं दोहयति ॥५॥ उपसृष्टां प्रब्रूताद् इत्याह ॥६॥ यथोपसृष्टां[४] प्राह ॥७॥ अथाभिमन्त्रयते अयक्ष्मा वः = घृतं च इति ॥८॥ जीवा जीवन्तीरुप वः सदेम इति गोदुहमुपसीदन्ताम् ॥९॥ मातरिश्वनो घर्मोऽसि इति गार्हपत्यादुदीचोऽङ्गारान्निरूहति ॥१०॥ द्यौरसि पृथिव्यसि इति स्थालीमादत्ते ॥११॥ विश्वधाया अस्युत्तरेण धाम्ना इत्यधिश्रयति ॥१२॥ दृꣳहस्व मा ह्वारिषीः इत्येनामङ्गारेषु दृꣳहति ॥१३॥ वसूनां पवित्रमसि इत्यस्यै बिले प्राचीनाग्रꣳ शाखापवित्रमुपदधाति । °शतधारं = सहस्रधारम् इति ॥१४॥ वाचंयमः स्थालीमन्वारभ्यास्ते ॥१५॥ आहरन्त्यस्मै दुग्धम् ॥१६॥ पृच्छति कामधुक्षः[५] इति ॥१७॥ अमूम् इति ॥१८॥ सा विश्वायुः इति ॥१९॥ आहरन्त्येवास्मै दुग्धम् ॥२०॥ आनयन्तं पृच्छति कामधुक्षः इत्येव ॥२१॥ अमूम् इति ॥२२॥ सा विश्वव्यचाः इति ॥२३॥ आहरन्त्येवास्मै दुग्ध(-म् ॥२४॥ आनयन्तं पृच्छति कामधुक्षः)[६] इत्येव ॥२५॥ अमूम् इति ॥२६॥ सा विश्वधायाः इति ॥२७॥ [७]बहु दुग्धीन्द्राय हविः[७] इति त्रिरुक्त्वा वत्सेभ्यो देहि इति वाचं विसृजते ॥२८॥ स यद्येकैव[८] दुग्धा[९] स्यात्तदेवमेव[१०] त्रिर्विगृह्णीयात्॥२९॥ यद्यु बह्व्यः स्युस्ता एवमेव दोहयेत् ॥३०॥हुतः स्तोको हुतो द्रप्सः इति विप्रुषोऽनुमन्त्रयते यत्र गोदुङ् मार्जयते । ०स्वाहाग्नये वृहते नाकाय द्यावापृथिवी अग्ने पाहि विप्रुषः इति ॥३१॥ दोहनेऽप आनीय संपृच्यध्वमृतावरीः[११] इति संक्षालनमानयति[१२] । °वृष्वतीः[१३] पयसा पय ऊर्मिणीर्मधुमत्तमाः ।

---

१. MHP दर्वि; thus Ao II.148 : 5.1. २. H °यत्युपकंभम्. ३. MHP add वै. ४. H सृष्टं. ५. MH °दुक्षु; P °दक्ष. ६. MHP om. ७–७. MHP repeat. ८. MHP यद्येकमेव. ९. MHP दुग्धागं. १०. H °देकमेव; cf Ao II. 154. 2–3. ११. P मिता°. १२. MP संक्षालम्. १३. MHP वृष्वतीं.

मन्द्रा धनस्य सातये[1] इति ॥३२॥ उद्यन् सुवर्गो लोकः इत्यभिद्योतयति । °त्रिषु लोकेषु[2] = ग्नि करोति ॥३३॥ अनुपहृत्याभिद्योतनम् इन्द्रस्त्वा श्रीणातु इत्येनान् प्रतिष्ठापयति ॥३४॥ तन्न पुरा शीतादतिसृजेत्[3] ॥३५॥ यदा शीतं मन्यतेऽथ इन्द्रस्य त्वा भागꣳ सोमेनातनच्मि इति (हविरातञ्चनेनातनक्ति)[4] ॥३६॥ [ ३ ]

## [ व्रीहिनिर्वापः ]

हविरातच्याग्निहोत्रहवणीं[5] च शू(-र्पं च स्फ्यं च कपालानि च कृष्णाजिनं च शम्यां चोलूखलं च मुस-)लं च दृषदं चोपलां चात्राहरन्ति[6] ॥१॥ अस्मै पुरोडाशीयाꣳश्च[7] ॥२॥ तानपरेण गार्हपत्यं निधाय वैष्णवी स्थः इति पवित्रे आदत्ते ॥३॥ यस्मिन् कालेऽग्निहोत्रमुद्वासयति तस्मिन् कालेऽग्निहोत्रस्थालीꣳ सादयित्वा तिरःपवित्रमस्यामप आनीय ता उपोत्थाय[8] मुखेन सम्मिता अन्तर्वेदि[9] (निदधा-)त्यनतिनता[10] इव ॥४॥ पवित्रे आहरन्नेति ॥५॥ दक्षिणमꣳसमभिनिवर्तते ॥६॥ कर्मणे वां देवेभ्यः शकेयम् इति सपवित्रौ हस्तौ मार्जयते ॥७॥ वेषाय त्वा इत्यग्निहोत्रहवणीं चरुस्थालीꣳ[11] शूर्पं चादत्ते[11] ॥८॥ प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयः इति गार्हपत्ये निष्टपति ॥९॥ उर्वन्तरिक्षमन्विहि इत्य(-न्तरा वेदिं चोत्करं च हृत्वोतरतः)[12] प्रागावृत्त उपस्थं कृत्वोपविशति ॥१०॥ धूरसि धूर्व धूर्वन्तम् इति पुरोडाशीयान्[13] मुष्टीन्[14] वाचयति पवित्रे अधिनिधाय । °धूर्वं तं = स्त्वं[15] देवानामसि स = मा ह्वारिषीर्विष्णुस्त्वा क्रमताम्, मित्रस्य = हिꣳसिषम् इति ॥११॥ उरु वाताय इति किञ्चित् पुरोडाशीयेभ्यो निरस्यति[16] ॥१२॥ (दशहोतारं व्याख्याय शूर्पे पवित्रे अधिनिधाय पुरोडाशीयान्निर्वपत्यग्निहोत्रहव-)ण्याम् ॥१३॥ देवस्य त्वा सवितुः प्रसवे इति चतुरो मुष्टीन् निर्वपति । °अश्विनो = भ्यामग्नये जुष्टं

---

१. P सातयः. २. MHP abr; see I. 15.13–16. ३. MHP °दसृजेत्.- ४. MHP om; cf IV. 1.51. ५. MH °तञ्चात्राहवनीं; P तञ्चात्राहवनीयं. ६. MH चाहर°. ७.MHP om च. ८. M उपोक्थाय. ९. H अन्तरवेदि. १०. MHP मनगत्तिनता. ११–११. MHP ins इति after शूर्पम् and om च before आदत्ते. १२. Cf II.1.35. १३. MHP °डाशीं. १४. MHP चेष्ट. १५. MHP ins धूर्वं after त्वं. १६. MHP अधिश्रयति.

निर्वपामि इति त्रियजुषा तूष्णीं चतुर्थम् ॥१४॥ [1]यच्छन्तु त्वा पञ्च[1] इति निर्वपति ॥१५॥ सपवित्रं[2] चरुस्थालीमादत्ते ॥१६॥ तस्यां देवस्य = सवे इत्येव चतुरो मुष्टीन्निर्वपति । °अश्विनो( = भ्यामिन्द्राग्निभ्यां जुष्टं निर्वपामि इत्यमावा-)स्यायामनीजानस्येन्द्रायेतीजानस्य[3] त्रिरेव यजुषा तूष्णीं चतुर्थम् ॥१७॥ [1]यच्छन्तु त्वा पञ्च[1] इत्येव निर्वपति ॥१८॥ सपवित्रमेव स्रुचमादत्ते ॥१९॥ तस्यां देवस्य त्वा सवितुः प्रसवे इत्येव चतुरो मुष्टीन् निर्वपति । अश्विनो = भ्यां पूष्णो हस्ताभ्यामग्नीषोमाभ्यां जुष्टं(निर्वपामि इति पौर्णमास्या-)-मनीजानस्येन्द्रायेतीजानस्य[4], त्रिरेव यजुषा तूष्णीं चतुर्थम् ॥२०॥ चतुर्थे भूयसो[5]ऽभ्यावपति ॥२१॥ यावतोऽत्रातिशिनष्टि [1]यच्छन्तु त्वा पञ्च[1] इत्येव निर्वपति[6] ॥२२॥ अग्नि[7]ꣳ होतारमिह तꣳहुवे[8] इति निरुप्तेषु वाचयति । °देवान्[9] यज्ञिया = अस्य इति ॥२३॥ कस्त्वा युनक्ति स त्वा युनक्ति इत्युलूखल आवपति ॥२४॥ यानि घर्मे इति कपालान्युपचिनोति । °कपालान्युपचिन्वन्ति = इन्द्रवायू युङ्क्ताम्[10] इति ॥२५॥ इदं देवानाम् इति निरुप्तानभिमृशति ॥२६॥ इदमु नः सह इति यतो निर्वपति ॥२७॥ रक्षायै त्वा नारात्यै इति स्फ्यं च पुरोडाशीयाꣳश्चादायोत्तिष्ठति ॥२८॥ सुवरभि[11] विख्येषम् इत्यनुवीक्षते ॥२९॥ वैश्वानरं ज्योतिः इत्या(-हवनीयम् ॥३०॥ अथ गृहानन्वीक्षते दृꣳहन्तां दुर्या) द्यावापृथिव्योः इति ॥३१॥ प्रक्रामति उर्वन्तरिक्षमन्विहि इति ॥३२॥ अदित्यास्त्वोपस्थे सादयामि इत्युत्तरेण गार्हपत्यं पुरोडाशीयान्[12] सादयति ॥३३॥अग्ने हव्यꣳरक्ष इति (गार्हपत्यमभिमन्त्रयते)[13] ॥३४॥[४][14]

## [ व्रीह्यवघातः ]

परिक्षाल्य स्रुचं तिरःपवित्रमस्यामप आनयति॥१॥ विष्णोर्मनसा पूते स्थः इति पवित्रे अनुमार्ष्टि ॥२॥ देवो वः सवितोत्पुनातु इत्युदीचीनाग्राभ्यां पवित्राभ्यामप उत्पुनाति । °अच्छिद्रेण पवित्रेण = रश्मिभिः इति ॥३॥ आपो

---

१–१. MHP. ताञ्छूद्धये°. २. P सावित्रश्चरु. ३. M °स्यायामिनीजानस्येन्द्रायेति जा°; H स्या यामिनी जनस्येन्द्रायेति जा°; P स्यायामिनीजानस्ये°. ४. MP °मनीजानस्येन्द्रायेति जानस्य; H मनीजानस्य इति जानस्य. ५. MHP भूयासो. ६. H निवति; M निवपति. ७. MP अग्नीं. ८. MHP भुव. ९. MHP देवन् १०. P युङ्क्तम्. ११. HP स्रुव. १२. MHP °डाशीयां. १३. MHP om. १४. Mss do not give any sign of paṭala-ending.

देवीः इति त्रिरुदिङ्गयति । °अग्रेगुवो अग्रेपुवोऽग्र इमं यज्ञं नयताग्रे यज्ञपतिं धत्त देवायुवं युष्मानिन्द्रोऽवृणीत=वृत्रतूर्ये इति ।।४।। प्रोक्षिताः स्थ इति त्रिरञ्जिरपः[२] प्रोक्षति ।।५।। अग्नये वो जुष्टान् प्रोक्षामि इति पुरोडाशीयान् प्रोक्षति ।।६।। अमुष्मै जुष्टानमुष्मे जुष्टान् इति यद्देवत्या भवन्ति ।।७।। शुद्धन्तां दैव्याय कर्मणे इत्युत्तानानि पात्राणि प्रोक्षति[३] । °देवयज्याय[४] इति ।।८।। उलूखलमुसलं प्रोक्षति ।।९।। कपालानि प्रोक्षति ।।१०।। पूर्वेण गार्हपत्यं प्रोक्षणीः सादयित्वा स्फ्यं च पुरोडाशीयाꣳश्चादायोलूखलस्यार्धमेति ।।११।। निधाय पुरोडाशीयान् अदित्यास्त्वगसि इति कृष्णाजिनमादत्ते ।।१२।। अवधूतꣳ रक्षोऽवधूता अरातयः इत्यवधुनोति ।।१३।। प्रति[५] त्वा पृथिवी वेत्तु इति प्रतीचीनग्रीवमुत्तरलोमोपस्तृणाति[६] ।।१४।। अप उपस्पृश्य अधिषवणमसि वानस्पत्यम् इत्यस्मिन्नुलूखलमुपदधाति । °प्रति[५] त्वाऽदित्यास्त्वग्वेत्तु पृथिवीं दृꣳह इति ।।१५।। अग्नेस्तनूरसि वाचो विसर्जनम् इत्यस्मिꣳश्चतुरो मुष्टीनावपति । °देव=गृह्णामि[७] इति ।।१६।। बृहद्ग्रावासि[८] (वानस्पत्यः)[९] इति मुसलमादत्ते ।।१७।। ऊर्ध्वꣳ हृत्वाऽवदधाति[१०] स इदं देवेभ्यो हव्यꣳशमिष्व सुशमि[११] शमिष्व[१२] इति।।१८।।[१३]हविष्कृदेहि इति त्रिः प्रहरति[१३]। °हविष्कृदेहि हविष्कृदेहि इति ।।१९।। हविष्कृता वाचं विसृज्य दक्षिणतः प्राचीꣳ शम्यां निधाय इषमा वदोर्जमा वद इति त्रिः स्फ्येनोद्वादयति । °द्युमद्वदत[१४]वयꣳ संघातꣳ सञ्जातं जेष्म इति ।।२०।। उत्तुषान् कृत्वा वर्षवृद्धमसि (इति)[१५]शूर्पमादत्ते ।।२१।। प्रति त्वा [१६]वर्षवृद्धं वेत्तु इति पुरोडाशीयानुद्वपति[१६] ।।२२।। उपविश्योदगावृत्तः परापुनाति[१७] परापूतꣳ[१८] रक्षः परापूता[१९] अरातयः इति ।।२३।। अवहृत्य तुषानपरेणोलूखलमधस्तात् कृष्णाजिनस्योपवपति रक्षसां भागोऽसीदं=नयामि इति ।।२४।। अप उपस्पृश्य विविनक्ति

---

१. MH om. २. H त्रिरञ्जलि°. ३. MP repeat पात्राणि after प्रोक्षति. ४. P wrongly corrected as देवयन्त्राय in red ink; MH °यज्याय. ५. M व्रति. ६. MH °मुत्तालोमो°. ७. M ष्या, HP ष्य for गृह्णामि. ८. H बृहद्मावासि. ९. MHP om. १०. MHP सूत्वेत्यव°. ११. M सुमशमि; P सुमशामि. १२. P शामि°. १३–१३. MH twice. १४. M मद्वत. १५.MHP om. १६–१६. MH वर्षवृद्धा वियन्त्विदीच उद्वपति; P वर्षवृद्धा वियन्तूदीचमुद्वपति; cf Baudhśs I.6:9:15. १७. MHP पुरापु°. १८. MHP पराप्ततं. १९. MHP पराप्ता.

वायुर्वो विविनक्तु इति ॥२५॥ देवेभ्यः शुन्धध्वम् इति विविक्तानभिमृशति ॥२६॥ आवपन्नाह त्रिःफलीकृतान् प्रब्रूताद्[1] इति ॥२७॥ [ ५ ]

[ इति प्रथमोऽनुवाकः ]

[ कपालोपधानम् ]

धृष्टिरसि[2] ब्रह्म यच्छ इत्युपवेषमादत्ते ॥१॥ अपाग्नेऽग्निमामादं जहि इति द्वावङ्गारौ निवर्तयति[3] ॥२॥ तयोरन्यतरं निष्क्रव्यादꣳ सेध इति दक्षिणा प्रतिनुदते ॥३॥ आ देवयजं वह इत्यन्यतरमावर्तयति ॥४॥ तस्मिन्नुपरि ध्रुवमसि पृथिवीं दृꣳह इ(-ति मध्यमं कपालमुपदधाति । ॰ब्रह्म दृꣳह क्षत्रं दृꣳह प्रजां दृꣳह रयिं दृꣳह रायस्पोषं दृꣳह सजातान् यजमानाय दृꣳह इति ॥५॥ तन्न पुराऽङ्गारस्योद्धानादतिसृजेत्[4] ॥६॥ तूष्णीमस्मिनङ्गारमुपदधाति ॥७॥ पृथिव्यै मूर्धानं मा निर्धाक्षीः इति वा ॥८॥ धर्त्रमस्यन्तरिक्षं दृꣳह इति [5]पुरस्तादुपदधाति ( ब्रह्म=दृꣳह इति ॥९॥ धरुणमसि दिवं दृꣳह इति प-)श्चादुपदधाति । ॰ब्रह्म=दृꣳह इति ॥१०॥धर्मासि[6] दिशो दृꣳह इति पूर्वेण पर्याहृत्य दक्षिणत उपदधाति । ॰ब्रह्म=दृꣳह इति ॥११॥ विश्वा आशा दिशो दृꣳह इत्युत्तरतः प्रधिकमुपदधाति । ब्रह्म=दृꣳह इति)[7] ॥१२॥परिचितम् इतीतरं[8] कुर्यात् । ॰ब्रह्म=दृꣳह इति ॥१३॥ चितः[9] (स्थ इति द्वे उत्तरतः सꣳस्पृष्टे उप-)दधाति[10] । ॰ब्रह्म दृꣳहतं[11]क्षत्रं दृꣳहतं प्रजां दृꣳहतं रयिं दृꣳहतं[12]रायस्पोषं [13]दृꣳहतं सजातान् [13]यजमानाय दृꣳहतं[14] इति ॥१४॥ त्रिरावृत्याङ्गारान्[15] भृगूणामङ्गिरसां तपसा तप्यध्वम् इत्यङ्गारैरभिवासयति ॥१५॥ उत्तरतोऽङ्गारान्निरूह्य चरुस्थालीमधिश्रित्य तिरःपवित्र(-मप आनयति॥१६॥एव-)मेवैकादशकपालस्य कपालान्युपदधाति॥१७॥

[ व्रीहिपेषणं पिष्टसंवनञ्च ]

विस्राव्य तण्डुलाꣳश्चरव्यानपयच्छति ॥१८॥ अदित्यास्त्वगसि इति कृष्णाजिनमादत्ते ॥१९॥ अवधूतꣳ रक्षोऽवधूता अरातयः इत्यवधुनोति

१. H ॰ब्रूतान्. २. MHP सृष्टि॰. ३. MP निर्वर्त॰, H निर्वत॰. ४. MHP ॰नादसृ. ५. MHP पश्चादु॰. ६. MHP धर्माणि. ७. MHP om. ८. MHP om इति. ९. MH पित. १०. MH दधामि. ११. MHP दृंह. १२. MH दृहत. १३–१३. MH दृंहसे जातान्; P दृंहसे जानान्;. १४.MHP दृंहते. १५. MHP ॰ङ्गारं.

॥२०॥ प्रति त्वा पृथिवी वेत्तु इति प्रतीचीनग्रीवमुत्तरलोमोपस्तृणाति । ॥२१॥ अप उपस्पृश्य धिषणाऽसि 'पर्वत्याः इत्यस्मिन्'[1] दृषदमुपदधाति । °प्रति त्वाऽदित्यास्त्वग्वेत्तु पृथिवीं दृꣳह इ(-ति ॥२२॥ दिवः स्कम्भनीर-)स्यन्तरिक्षं दृꣳह इति पश्चादुदीचं शम्यामुपोहति ॥२३॥ धिषणाऽसि पार्वतेयी प्रति त्वा पर्वतिर्वेत्तु[2] दिवं दृꣳह इति [3]दृषद्युपलामुपदधाति ॥२४॥ धान्यमसि धिनुहि देवान् इति चतुरो मुष्टीनधिवपति[4] । °धिनुहि यज्ञं धिनुहि यज्ञपतिं धिनुहि मां यज्ञन्यम् इति ॥२५॥ प्राणाय त्वा इति प्राचीं[5] प्रमृणति ॥२६॥ व्यानाय त्वा इति दक्षिणा ॥२७॥ अपानाय त्वा इत्यात्मानं प्रति ॥२८॥ उदानाय त्वा इत्युदङ् ॥२९॥ पिनष्टि[6] दीर्घामनु प्रसितिꣳ सꣳसचेथाम् इति ॥३०॥ आयुषे धाम्[7] इति बाहू अन्ववेक्षते ॥ ३१॥ देवो वः सविता हिरण्यपाणिः प्रति गृह्णातु इति [8]प्रपतिताꣳस्तण्डुलानन्ववेक्षते । °अदब्धेन[9] वश्चक्षुषाऽवेक्षे [10] सुप्रजास्त्वाय इति ॥३२॥

पिष्टानि कुर्वन्ति ॥३३॥ तानि पात्रियाꣳ संवपति ॥३४॥ पवित्रे आददान आह[11] प्रणीताभ्योऽध्याहर[12] वेदं परिवासय इति ॥३५॥ एतत् कुर्वन्ति ॥३६॥स्रुवेण प्रणीताभ्योऽध्याहरति॥३७॥उपयम्य [13] वेदं परिवास्य मार्जयति ॥३८॥ देवस्य त्वा सवितुः प्रसवे इत्यपरेण गार्हपत्यं प्रागावृत्त उपविश्योदीचीनाग्राभ्यां पवित्राभ्यां पिष्टानि संवपति [14]अश्विनो = स्यामग्नये-जुष्टानि (संवपामि)[15], अमुष्मै जुष्टान्यमुष्मै जुष्टानि इति यद्देवत्यानि भवन्ति[16] ॥३९॥ समाप ओषधीभिरग्मत[17] इति तिरःपवित्रꣳ स्रुवेणाप आनयति । °समोषधयो रसेन सꣳ रेवतीर्जगतीभिर्मधुमतीर्मधुमतीभिः सृजध्वम्[18] इति ॥४०॥ भूयसीरप [19]आनीय अद्भ्यः[19] परिप्रजाताः स्थ इति त्रिरद्भिः[20] परिप्रजनयति । °समद्भिः पृच्यध्वम् इति ॥४१॥ जनवीतये[21] (त्वा)[22] संयौमि

---

१–१. MHP पर्वतेत्य. २. MP पति°, cf VS I.19 : पर्वती. ३. MH दृषदुप°. ४. MH °वपते. ५. MHP प्राचीनं. ६. MHP विनष्टि. ७. MHP वाम्. ८. MHP प्रपिताता°. ९. MHP दण्डेन. १०. MHP °वेक्ष. ११. MHP आहर. १२. MP °ताभ्याध्याहार [M°हर]; H °ता ध्याहर. १३. MP °द्युपयत्ये [ M°त्य]; H °त्युपयन्य. १४. P स्वंवपति. १५. MHP om. १६. P भवति. १७. HP °रमते. १८. MHP सृज्यध्वम्. १९–१९. MHP आनीयाज्यं. २०–२०. MHP त्रिरजिः. २१. Cf TS I.1.8.4 : जनयत्यै. २२. MHP om.

इति संयौति। 'अग्नये जुष्टान्यमुष्मै जुष्टान्यमुष्मै जुष्टानि इति यद्देवत्यानि भवन्ति ॥४२॥ प्रम्णाय पिष्टानि[1] मखस्य शिरोऽसि इति पिण्डं करोति ॥४३॥ यथाभागं व्यावर्तेथाम् इति व्यावर्तयति ॥४४॥

## [ पुरोडाशश्रपणम् ]

इदमहꣳ सेनाया अभित्वर्यै मुखमपोहामि इति वेदेनाष्टाकपालस्य पराचोऽङ्गारानपोहति, नात्मानं प्रत्यपोहेत्[2] ॥४५॥ घर्मोऽसि विश्वायुः इत्यधिश्रयति ॥४६॥ उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम् इति सर्वाणि कपालान्यभि प्रथयति ॥४७॥ तिरःपवित्रं चरुमावपति ॥४८॥ एवमेवैकादशकपालमधिश्रयति ॥४९॥ पात्रियामप आनीय त्वचं गृह्णीष्व इति त्रिरद्भिस्त्वचं ग्राहयति 'अग्निस्ते त्वचं मा हिꣳसीत् इति॥५०॥ महीनां पयोऽसि इति तिरःपवित्रमाज्यं निर्वपति। 'अपामोषधीनाꣳ रसस्तस्य ते पयसः[3] पिबमानस्याक्षितस्याक्षीयमाणस्य निर्वपामि देवयज्यायै इति ॥५१॥ तदुत्तरतोऽङ्गारान्निरूह्याधिश्रयति ॥५२॥ उपनिदधात्यस्मै [4]दधिसान्नाय्यम्, अथ शृतम् ॥५३॥ [5]अथ दर्व्योपवेषेण[5] वाऽङ्गारमादाय अन्तरितꣳ रक्षोऽन्तरिता अरातयः इति प्रसलैस्त्रिः पर्यग्निकरोति ॥५४॥ अपिसृज्याङ्गारम् अविदहन्तः श्रपयत इति वाचं विसृजते ॥५५॥ [ ६ ]

## [ वेदिकरणम् ]

अविदहन्तः श्रपयत इति वाचं विसृजते।° मेक्षय चरुम् इति ॥१॥ देवस्त्वा सविता [6]श्रपयतु इत्यनुपूर्वꣳ[6] हवीꣳष्यभिमृशति। 'वर्षिष्ठे अधि नाके इति ॥२॥ अग्निस्ते तनुवं माऽति धाक् इति तृणैरवज्वालयति ॥३॥ अग्ने ब्रह्म गृह्णीष्व इति भस्मनाऽभिवासयति। [7]अतमेरुर्यज्ञोऽतमेरुर्यजमानोऽतमेर-)वो यजमानस्य पशवः इति ॥४॥ तूष्णीं ( पात्रीं च बर्हिश्च ) स्फ्यं च [8]संक्षालनं चादायाहवनीयस्यार्धमेति ॥५॥ अन्तर्वेद्येकां[8] लेखां लिखत्युत्तरेंऽसे, वहिर्वेदि द्वे[9] ॥६॥ एकताय स्वाहा इत्यन्तर्वेदि निनयति, द्विताय स्वाहा, त्रिताय स्वाहा इति वहिर्वेदि ॥७॥ तूष्णीमुलमुकेनाभितप्य[10] निर्णिज्य पात्रीं मार्जयित्वा प्रक्षाल्य स्फ्यं च [11]बर्हिश्चान्तर्वेदि निनयति

---

१. MHP विष्टानि. २. MHP प्रत्यवोहेत्. ३. MHP पयसं. ४. H oms दधि. ५–५. MHP अथो दर्व्यापोपवेषण. ६–६. MP श्रपयित्यनु°. ७. H °त्यत्र मेरु. ८–८. MHP संक्षालं; P °नीय धर्मेत्य°; MHP °वेंद्येका. ९. MHP °द्वं°. १०. MHP °मुन्मोकेनाभितव्य. ११. P वहिश्चा°

॥८॥ (वेद्यामग्नीच्चाध्वर्युश्चोप-)विशतः ॥९॥ पश्चात् प्रागावृत्तोऽग्नीद् दक्षिणं[१] जान्वाच्योत्कर उपसीदति ॥१०॥ देवस्य त्वा सवितुः प्रसवे इति स्फ्यमादत्ते । °अश्विनो=माददे इति ॥११॥ शतभृष्टिरसि वानस्पत्यः इत्येनं बर्हिषा संमार्ष्टि । °द्विषतो वधः । इन्द्रस्य बाहुरसि दक्षिणः स=जाः मा मा हिꣳसीः (इति)[२] ॥१२॥ देवस्य सवितुः सवे इत्य(-न्तर्वेद्युदीचीनाग्रं बर्हिर्निद-)धाति ॥१३॥ पृथिवि देवयजन्योषध्यास्ते मूलं मा हिꣳसिषम् इति स्फ्येन प्रहरति ॥१४॥ व्रजं गच्छ गोस्थानम् इत्युत्करस्यार्धꣳ हरति ॥१५॥ [३]वर्षतु ते[३] द्यौः इति वेदिं प्रत्यवेक्षते ॥१६॥ बधान[४] देव सवितः इत्युत्करे निबाधते । °परमस्यां परावति शतेन पाशैर्योऽस्मान् द्वेष्टि यं च वयं द्विष्म(-स्तमतो मा मौक् इति ॥१७॥ द्वितीयं प्रहरति) देवयजनात्पृथिव्याः पृथिवि देवयजन्योषध्यास्ते मूलं मा हिꣳसिषम् इति ॥१८॥ व्रजं गच्छ[५] गोस्थानम् इत्येवोत्करस्यार्धꣳ हरति ॥१९॥ [३]वर्षतु ते द्यौः[३] इत्येव वेदिं प्रत्यवेक्षते ॥२०॥ बधान[६] देव सवितः इत्येवोत्करे निबाधते । °परमस्यां(=मा मौक् इति॥२१॥ तृतीयं प्रहरति देवयजनाद् पृथिव्याः पृथिवि देवयजन्योषध्यास्ते मूलं मा हिꣳसिषम् इति ॥२२॥ व्रजं गच्छ गोस्थानम् इत्येवोत्करस्यार्धꣳहरति ॥२३॥ वर्षतु ते द्यौः इत्येव वेदिं प्रत्यवेक्षते ॥२४॥ बधान देव सवितः इत्येवोत्करे निबाधते । °परमस्यां=मा मौग् अररुस्ते दिवं मा स्का-)न् इति[७] ॥२५॥ तूष्णीं चतुर्थꣳ हरति सबर्हिषा ॥२६॥ वसवस्त्वा[८] परिगृह्णन्तु गायत्रेण छन्दसा इति दक्षिणतः प्राचीꣳ स्फ्येन वेदिं परिगृह्णाति ॥२७॥ रुद्रास्त्वा परिगृह्णन्तु (त्रैष्टुभेन छन्दसा इति पश्चादुदीचीम् ॥२८॥ आदित्यास्त्वा परिगृह्णन्तु)[९] जागतेन छन्दसा इत्युत्तरतः प्राचीम् ॥२९॥ इमां नराः कृणुत वेदिमेत्य इति (करणं जपति । °वसुमतीं=रिष्येत् इति ॥३०॥ अग्नीदितस्त्रिर्हर इ-)त्याहाग्नीधम्[१०] ॥३१॥ समुद्धतस्य[११] त्रिरग्नीद्धृत्वा[१२] हस्तेन संमार्ष्टि ॥३२॥ अथाह ब्रह्मन्नुत्तरं परिग्राहं परिग्रहीष्यामि इति ॥३३॥ ऋतसदसि[१३] इति दक्षिणतः प्राचीꣳ स्फ्येन वेदिं परिगृह्णाति ॥३४॥ सत्यसदसि इति पश्चादुदीचीम् ॥३५॥ घर्मसदसि[१४] इत्युत्तरतः प्राचीम्

---

१. MHP अग्नीर्दक्षिण. २. MHP om. ३–३. MHP वषट्कृते. ४. MHP स्वधान. ५. H oms. ६. MHP अन्वधान. ७. MHP क्षिरिति. ८. MP वसस्त्वा. ९. MHP om. १०. H °ग्नीध्रम्. ११. H समुद्धृतस्य. १२. MHP त्रिरग्नी वृत्वा. १३. MHP ऋतस्सद°. १४. MHP घर्मसद°.

॥३६॥ धा असि[1] स्वधा असि इति प्रतीचीँ स्फ्येन वेदिं योयुप्यते। °उर्वी चासि = अनुदृशो[2] यजन्ते इत्यन्तः ॥३७॥ समुद्धन्ति ॥३८॥ [७][3] ॥

## [ प्रोक्षणीरासादनं स्फ्यप्रक्षालनं स्रुक्संमार्गः पत्नीसन्नहनञ्च ]

(अग्नीत् प्रोक्षणीरासादयेध्माबर्हि-)रुपसादय[4] स्रुवं च स्रुचश्च संमृड्ढि पत्नीँ सन्नह्याज्येनोदेहि[5] इति ॥१॥ मार्जयित्वाऽग्नीत्[6] स्फ्यस्य वर्त्मन्नुपनिनीय[7] प्रोक्षणीः सादयति अमुष्य त्वा प्राणे सादयामि इति॥२॥ उत्तरेणोत्करँ स्फ्यं निहन्ति ॥३॥ यं देष्टि यजमानस्तं ध्यायति ॥४॥अप उपस्पृश्य मार्जयित्वा प्रक्षाल्य स्फ्यमागत्य वेदपरिवासनैः स्रुचः संमार्ष्टि ॥५॥ [8]स्रुवोऽस्य(-नाधृष्टः सपत्नसा-)हः इति स्रुवमादत्ते[9] ॥६॥ प्रत्युष्टँ रक्षः प्रत्युष्टा अरातयः इति गार्हपत्ये निष्टपति ॥७॥ आयुः प्राणं मा निर्मृक्षम् इति संमार्ष्टि। °वाजिनं[10]° त्वा सपत्नसाहँ संमार्ज्मि इति, त्रिरन्तरतः सकृदधस्तात् ॥८॥ तं निष्टप्य प्रयच्छति ॥९॥ जुहूरस्यनाधृष्टा सपत्नसाही इति जुहूमादत्ते ॥१०॥ प्रत्युष्टँ रक्षः प्रत्युष्टा अरातयः[11] इत्येव गार्हपत्ये निष्टपति ॥११॥ चक्षुः (श्रोत्रं मा निर्मृक्षम् इति संमार्ष्टि)। °वाजिनीं[12] त्वा सपत्नसाहीँ संमार्ज्मि इति, त्रिरेवान्तरतः सकृदधस्तात् ॥१२॥ तां[13] निष्टप्यैव प्रयच्छति ॥१३॥ [14]उपभृदस्यनाधृष्टा सपत्नसाही इत्युपभृतमादत्ते[15] ॥१४॥ प्रत्युष्टँ रक्षः प्रत्युष्टा अरातयः इत्येव गार्हपत्ये निष्टपति ॥१५॥ प्रजां योनिं मा निर्मृक्षम् इति संमार्ष्टि। °वाजिनीं[12] त्वा सपत्नसाहीँ संमार्ज्मि इति, त्रिरेवान्तरतः सकृदधस्तात् ॥१६॥ तां निष्टप्यैव प्रयच्छति ॥१७॥ ध्रुवाऽस्यनाधृष्टा सपत्नसाही इति ध्रुवामादत्ते ॥१८॥ प्रत्युष्ट[16] = पति ॥१९॥ गोष्ठाद्रयिं मा निर्मृक्षम्[17] इति संमार्ष्टि। °वाजिनीं[12] त्वा सपत्नसाहीँ[18] संमार्ज्मि इति, त्रिरेवान्तरतः[19]

---

१. MHP अग्नि. २. Cf VS I.28 : दिश्य; Baudhśs I.11 : 15.18:दृश्य· ३. Mss do not give any sign of paṭala-ending. Probably it might have been given in the text which is broken. ४. MH °धूपसा° ५. MHP °नोदीचीति. ६. MHP °ग्नीन्. ७. MP. वर्मन्नु°. ८. H स्रुवोस्य वेदिरिति; P स्रुवोऽस्य वेदितिरिति. ९. MHP स्रुचमा° १०. MHP वाजिनस्त्वा. ११. MHP ins इत्यनाधृष्टः सपत्नसाहः after अरातयः. १२. MH वाजिनीः १३. MH om. १४. P °भृतस्यना°. १५. MH °भृदमा°. १६. MHP abr; II.8.11. १७. P निर्मक्षम्. १८. MH साहं. १९. MHP abr; see II. 8.12–13.

=च्छति ॥२०॥ तूष्णीं प्राशित्रहरणमादाय प्रत्युष्ट[१] =ष्टपति ॥२१॥ रूपाद्वर्णं मा निर्मृक्षम् इति संमार्ष्टि। °वाजिनं[२] त्वा सपत्नसाह[३]ँ संमार्ज्मि इति[४] त्रि[५] =स्तात् ॥२२॥ तन्निष्टप्यैव[६] प्रयच्छति ॥२३॥ अद्भिर्वेदपरिवासनानि[७] सँस्पृश्य[८] सञ्चर उदस्यति ॥२४॥ हुत्वा स्रुचोऽपरेणोत्करं तृणानि सँस्तोर्योदगावृत्तान्यनुपूर्वं सँसादयति ॥२५॥ आगत्यापरेण गार्हपत्यमासीनां पत्नीँ सन्नह्यति आशासाना=सुकृताय कम् इति ॥२६॥ सुप्रजसस्त्वा वयम् इत्येनामुपनिषदं वाचयति। °सुपत्नीरुपनिषेदिम[९] =अदब्धासो अदाभ्यम्[१०] इति ॥ २७ ॥ इन्द्राणीवाविधवा भूयासम् इत्यनुनिषदम् । °अदितिरिव सुपुत्रा अस्थूरि[११] त्वाग्ने गार्हपत्यानुनिषदेयम् इति ॥२८॥ पयस्वतीरोधयः इति तिरःपवित्रमप आशयति। °पयस्वद्वीरुधां प=सृज इति ॥ २९ ॥ अग्ने व्रतपते इति मार्जयित्वा समिधमाधापयति[१२]। °व्रतं च=व्यताँ स्वाहा इति ॥ ३० ॥ आज्यमसि इत्येनामाज्ये[१३] वाचयति। °अदब्धेन[१४] त्वा चक्षुषाऽवेक्षे प्रजायै मे निकामधारणमसि सुप्रजास्त्वाय इति ॥ ३१ ॥ तेजोऽसि तेजोऽनु प्रेहि इत्यादायाज्यँ हरति ॥ ३२ ॥ वायुस्त्वाऽन्तरिक्षात्पातु सूर्यो दिवः[१५] अग्निस्ते हरो मा [१६]प्रतिधाक्षीः इत्याहवनीये[१६] ऽधिश्रयति, यदि पत्न्यन्वास्ते[१७] ॥ ३३ ॥ देवेभ्य ऊर्जे सीद इत्युत्तरेण प्रोक्षणीः सादयति ॥ ३४ ॥ अग्नेजिह्वासि इत्येनदेवान्तरावकाशेनावेक्षते। °सुभूर्देवानां धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे भव इति ॥३५॥ एहि यजमान इत्याह ॥३६॥ पूर्वेणाहवनीयं यजमानः[१८] परिक्रामति ॥३७॥ उत्तरेण प्रणीता दक्षिणेनोत्करमुत्तरेण स्रुचोऽपरेण वेदिमत्याक्रम्य दक्षिणा उदगावृत्त उपविशति ॥३८॥ आज्यमसि इत्येनमाज्ये[१९] वाचयति। °सत्यमसि=तस्य ते भक्षीय इति ॥३९॥ असवे तन्मे गोपाय इत्यात्मनश्छायामवेक्षते[२०] ॥ ४० ॥ तेजोऽसि

---

१. MHP abr; see II.8.11. २. MP वाजिस्त्वा; H वाजिनीस्त्वा. ३. H °साहीं; MP °साहि. ४-४. MHP संमार्जीति. ५. MHP abr; see II.8.12. ६. MHP निष्टव्यै. ७. MHP अजिर्वेद°. ८. M °स्पश्यं. ९. MHP °रुप सदेम. १०. MP °दाभ्याम्. ११. MHP असूर्यं. १२. MH समिधापयति; P °धावयति. १३. MHP इत्येनमा°. १४, MHP °दण्डेन. १५. MH add इति after दिवः. १६-१६ MHP °धाक्षीत्याह°. १७. MP पत्न्यात्वा°. १८. MHP °मानं. १९. P °त्येवमा°. २०. MHP °त्मनच्छाया°.

इत्येनदुदीचीनाग्राभ्यां पवित्राभ्यामाज्यं पुनाति 'शुक्रमसि ज्योतिरस्यमृतमस्य-युद्ग्धूतशूष्मꣳ सत्यौजाः इति ॥४१॥ स्रुवं च जुहूं चादत्ते ॥४२॥ तस्यां गृह्णाति तेजोऽसि धामासि प्रियं देवानामनाधृष्टं देवयजनम् इति चतुरः स्रुवान्[१] ॥४३॥ ताꣳ संमृज्य प्रयच्छति ॥४४॥ उपभृतमादत्ते ॥ ४५ ॥ तस्यां गृह्णाति 'शुक्रमसि धामासि प्रियं देवानामनाधृष्टं देवयजनम् इति चतुरः स्रुवान्[२] ॥४६॥ तूष्णीमपरꣳश्चतुरोऽर्धस्रुवान् ॥४७॥ ताꣳ[३] संमृज्यैव प्रयच्छति ॥४८॥ ध्रुवामादत्ते ॥४९॥ तस्यां गृह्णाति अमृतमसि धामासि प्रियं देवानामनाधृष्टं देवयजनम् इति चतुरः स्रुवान् ॥५०॥ चतुर्थे भूयोऽभ्यानयति ॥५१॥ [४]पत्नीसंयाजे(-भ्योऽति-)शिनष्टि[५] ॥ ५२ ॥ ताꣳ संमृज्यैव प्रयच्छति ॥ ५३ ॥ [ ८ ][६] ॥

## [इध्माबर्हिषो सन्नहनं युक्प्रोक्षणं वेद्यां हविरासादनञ्च]

अपरेण वेदिꣳ सस्रुवामाज्यस्थालीं निधाय तूष्णीं स्रुवेणावोक्षति[७] ॥१॥ उपोत्थाय कृष्णोऽस्याखरेष्ठोऽग्नये त्वा जुष्टं 'प्रोक्षामि इति[८] विस्रस्येध्मं प्रोक्षति ॥ २ ॥ वेदिरसि बर्हिषे त्वा जुष्टां प्रोक्षामि इति वेदिम् ॥३॥ बर्हिरसि स्रुग्भ्यस्त्वा जुष्टं प्रोक्षामि इति बर्हिः ॥४॥ प्रोक्षिताः ( स्थ इत्यद्भिरेवापः प्रोक्षति ॥५॥ अन्त-)र्वेदि पुरो(-ग्रन्थि बर्हिरासाद्य) दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वा इति प्रोक्षति ॥ ६ ॥ तूष्णीं पुरस्ताद् ग्रन्थिमभिषिञ्चति, तूष्णीं पश्चात् ॥७॥ शुन्धतां लोकः[९] पितृषदनः इति दक्षिणायाꣳ श्रोण्यां निनयति ॥८॥ ऊर्जा पृथिवीं गच्छत । स्वधा पितृभ्य ऊर्भव[१०] बर्हिषद्भ्यः इति सन्ततमेवोत्तरस्यै श्रोण्यै निनीयापरेणात्मानं पूर्वेणोत्कर (उदूह्य प्रोक्षणीधानं बर्हिर्विस्रस्य विष्णोः स्तूपोऽसि इति पुरस्तात् )[११] प्रस्तरं गृह्णाति ॥ ९ ॥ तं यजमानाय प्रयच्छति, ब्रह्मणे वा ॥ १० ॥ सव्ये वा हस्ते कुरुते ॥ ११ ॥ साग्रꣳ सन्नहनं कृत्वा दक्षिणायाꣳ श्रोण्यां निदधाति ॥ १२ ॥ देवबर्हिः इत्येतद् बर्हिर्मुष्टिनाऽभिच्छादयति । °ऊर्णाम्रद = देवेभ्यः इति ॥ १३ ॥ उरु यज्ञाय इति त्रीन् प्राचो मुष्टीन् प्रकिरति । °उरु यजमानायोरु

---

१. MHP स्रुवं. २-२. P oms. ३. MHP ता. ४. MH पत्नीं°. ५. M विनष्टि; HP पिनष्टि. ६. Mss do not give any sign of paṭala-ending. ७. MH धरुणे°. ८-८. MHP प्रोक्षति. ९. MP लोकं. १०. MH उर्वी भव. ११. cf. Baudhśs. I.13 : 19. 20-21.

(ते यज्ञपतिः प्रथताम् इति ॥ १४ ॥ स्तृणी-)त बर्हिः इति वाचं विसृजते ॥ १५ ॥ त्रिवृद्बर्हिः स्तृणन्त्यनतिदृश्नम् ॥ १६ ॥ प्रस्तरमादाय प्राङुत्सृप्य परिधीन् परिदधाति ॥ १७ ॥ गन्धर्वोऽसि विश्वावसुः इति मध्यमं परिधिम् । °विश्वस्मान्नेत्राद् यजमानस्य परिधिरसीड ईडितः इति ॥१८॥ इन्द्रस्य बाहुरसि दक्षिणः इति दक्षिणार्ध्यम्[1] । °विश्वस्मा = डितः इति ॥१९॥ मित्रावरुणौ त्वोत्तरतः[2] परिधत्ताम् इत्युत्तरार्ध्यम् । °ध्रुवेण[3] धर्मणा विश्वस्मा = ईडितः इति ॥ २० ॥ सूर्यस्त्वा पुरस्तात्पातु इति दक्षिणतः समिधमादधाति । °कस्याश्चिदभिशस्त्या = मध्वरे वर्षिष्ठेऽधिनाके स्वाहा इति ॥२१॥ तूष्णीमुत्तरत आदधाति ॥ २२ ॥ ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासम् इति मध्यमे परिधौ वाचयति । °धीरश्चेता वसुविद् इति ॥ २३ ॥ उग्रोऽस्युग्रोऽहꣳ स = यासम् इति दक्षिणार्ध्ये । °उग्रश्चे = विद् इति ॥ २४ ॥ अभिभू = यासम् इत्युत्तराध्यें[4] । °अभिभूश्चेता वसुविद् इति ॥२५॥ युनज्मि त्वा ब्रह्मणा दैव्येन इति मध्यमे परिधौ स्पर्शयित्वा समिधमादधाति । °हव्याया = ते अग्नये[5] स्वाहा इति ॥ २६ ॥ आगत्यापरेण वेदिं प्रागावृत्त उपविश्य विशो यन्त्रे स्थः इत्यन्तर्वेद्युदीचीनाग्रे तिरश्ची सादयति ॥ २७ ॥ तयोरुपरि वसूनाꣳ रुद्राणामादित्यानाꣳ सदोऽसि इत्युत्तरपवित्रं प्रस्तरꣳ सादयति ॥ २८ ॥ तꣳ सव्येनानुव्रजेत्[6] ॥२९॥ घृताच्यसि इति जुहूमादत्ते ॥ ३० ॥ द्यौर्जन्मना जुहूर्नाम्ना प्रिया देवानां प्रियेण नाम्ना प्रिये सदसि सीद इत्युपरि प्रस्तरे जुहूꣳ सादयति ॥३१॥ तां दक्षिणेनानुव्रजेत्[7] ॥३२॥ घृताच्यसि इत्युपभृतमादत्ते ॥ ३३ ॥ अन्तरिक्षं जन्मनोपभृन्नाम्ना प्रिया देवानां प्रियेण नाम्ना प्रिये सदसि सीद इत्युत्तरेण जुहूमुपभृतꣳ सादयति मनाक् प्रत्यूढामिव ॥ ३४ ॥ ताꣳ सव्येनैवानुव्रजेत्[8] ॥ ३५ ॥ घृताच्यसि इति [9]ध्रुवामादत्ते ॥ ३६ ॥ पृथिवी जन्मना[9] ध्रुवा[10] नाम्ना प्रिया देवानां प्रि = सीद इत्युत्तरेणोपभृतं ध्रुवाꣳ सादयति मनाक् प्रत्यूढतरामिव ॥३७॥ सस्रुवामाज्यस्थालीमादायागत्यापरेण गार्हपत्यं प्रागावृत्त उपविश्योपस्तीर्णाभिघारितान्युनुपूर्वꣳ हवीꣳष्युद्वासयति ॥३८॥ प्रत्यनक्ति कपालानि ॥३९॥ तानि संख्यायोद्वासयति ॥४०॥ समभिघार्य हवीꣳष्याहरन्ति ॥४१॥ पूर्वेण जुहूम-

---

१. H °णार्धं. २. MHP °त्तरतं. ३. MHP स्रुवेण. ४. MHP °त्तरार्धें. ५. MHP अग्ने. ६. MHP सव्येन नान्वृजेत्. ७. MHP °णेनान्वृजेत्. ८. MHP सव्येनान्वृजेत्. ९-९. MHP repeat. १०. P ध्रुवं.

ष्टाकपालमासादयति, तमुत्तरेण चरुम्, तमुत्तरेणैकादशकपालम्, दक्षिणायाँ श्रोण्यां दधिसान्नाय्यम्, उत्तरस्याँ शृतम् ॥४२॥ [1]दक्षिणतस्तिष्ठन् व्रतमुपैति[1] ॥ ४३ ॥ पयस्वतीरोषधयः इति तिरःपवित्रमप आचामति । पयस्वद्वीरुधां[2] प=सँ सृज इति ॥ ४४ ॥ अग्ने [3]व्रतपते इति[3] मार्जयित्वा समिधमादधाति । [4]व्रतं चरिष्यामि= [4]स्वाहा इति ॥४५॥ आगत्य ध्रुवा असदन् इति ध्रुवामभिमृशति[5] । ऋतस्य योनौ सुकृतस्य लोके ता विष्णो पाहि ( पाहि )[6] यज्ञं पाहि यज्ञपतिं पाहि मां यज्ञनियम् इति ॥ ४६ ॥ यन्मे अग्ने अस्य यज्ञस्य रिष्यात् इत्यनुपूर्वँ हवीँष्यभिमृशति । [7]यद्वा स्कन्दा=स्थे भूर्भुवः सुवरों वाग् इति ॥ ४७ ॥ चतुर्होतारं ध्रुवायां व्याचष्टे ॥ ४८ ॥

[ ९ ] [इति द्वितीयोऽनुवाकः]

## [ आघारः ]

अग्नये समिध्यमानायानुब्रूहि इत्याह ॥१॥प्रणवे प्रणवे तिस्रः समिधोऽभ्यादधाति[7] न्यासे चैव प्रणवे चैव ( प्रणवे चैव ॥ २ ॥ अ-)न्त[8] ऊर्ध्वं समिद्धो अग्न आहुत इत्येतामध्वर्युरिध्मौ परीप्सति[9] ॥ ३ ॥ अतिशिनष्टि समिधः[10] ॥ ४ ॥ यदा जानाति आजुहोत दुवस्यत इत्यथ वेदेन त्रिरुपवाजयति उच्छुष्मो अग्ने=दासते इति ॥ ५ ॥ स्रुवेणाघारमाघारयत्युत्तरेभ्यः समुन्मुखेभ्यो[11] दक्षिणा तिर्यञ्चम् प्रजापतये स्वाहा इति मनसा ॥ ६ ॥ अथाह (अग्नीत् परिधीँश्चाग्निं च त्रिस्त्रिः समृड्ढि इति ॥७॥ इध्मसन्नहना-)नि [12] स्फ्य उपसंगृह्य त्रिरग्नोन्मध्यमं परिधिँ संमार्ष्टि, त्रिर्दक्षिणार्ध्यम्, त्रिरुतरार्ध्यम्, त्रिरग्निम् ॥८॥ भुवनमसि विप्रथस्व इति स्रुच उपतिष्ठते । अग्ने यष्टरिदं नमः इति ॥९॥ जुह्वेह्यग्निस्त्वा[13] ह्वयति देवयज्यायै इति जूहूमादत्ते ॥१०॥ उपभृदेहि देवस्त्वा सविता ह्वयति ( देवयज्यायै इत्युपभृतमादत्ते ॥११॥ सुयमे मे अद्य घृताची भूयास्तम् इति स्रुचौ संदधाति ॥१२॥ अग्नाविष्णू मा वामवक्रमिषम् इत्याक्रामति[14] । विजिहाथां=णुतम् इति

१-१. H दक्षिणतस्तिष्ठन्तमु°. २. MH °स्वतीरुधां. ३—३. MHP व्रतपति. ४—४. MH गं् न्वाहेत्या°. ५. MH ध्रुवाभि०. ६. MHP om. ७. Ao II. 163 : 5—6 : °स्यादध्यात्. ८. Cf Ao II.163.6. ९. MHP परिप्स°. १०. MHP समिधं. ११. MHP संमुखे°. १२. Cf. Bhārśs II. 12.7. १३. MH जुह्वेत्यग्निं°; P जुह्वेद्यग्नि°. १४. P °क्रमति.

॥१३॥ आक्रम्य[1] जपति विष्णोः स्थाने तिष्ठानि यत[2] इन्द्रस्तिष्ठन् वीर्यमकृणोत्ततो वीर्यं क्रियासम्[3] इति ॥१४॥ सꣳरस्योर्ध्वो[4] अध्वरो दिविस्पृग् इति मध्यमे ( परिधौ सꣳ स्पृश्यजुंमाघारमाघारयति । °अह्रुतो यज्ञो यज्ञपतेरिन्द्रा-)वान्त्स्वाहा[5] इति ॥१५॥ सन्ततमेवोत्तरमाघारमाघारयति दक्षिणेभ्यः समुन्मुखेभ्य उदञ्च[6] तिर्यञ्चम् ॥१६॥ असꣳ स्पर्शयन् स्रुचावत्याक्रामति पाहि मा=ज इति ॥१७॥ अत्याक्रम्य संज्योतिषा ज्योतिरङ्क्ताम्[7] इति जुह्वा ध्रुवाꣳ समनक्ति । °सꣳ हविषा हविः सं यज्ञपतिराशिषा ( इति ॥१८॥ यथायतनꣳ स्रुचौ सादयित्वो-)त्तिष्ठन् प्रवरायाश्रावयति[8] ॥१९॥ स्फ्यमादायाग्नीत्पश्चादन्वारभते ॥२०॥ इध्मसन्नहनानि स्फ्य उपसंगृह्य श्रावयति॥२१॥ओश्रावयेत्याह॥२२॥ अग्निर्देवो[9] होता[10] देवान् [11]यक्षद्विद्वाꣳश्चिकित्वान्मनुष्वद्भरतवदमुवदमुवद्ब्रह्मण्वदेह वक्षद् ब्राह्मणा अस्य यज्ञस्य प्रावितार ( इत्य-)सौ मानुषः इत्याहवनीये शकलं प्रास्यति यथा होतुर्नाम भवति ॥२३॥ सीद होतरः [12] इत्याह ॥२४॥ बर्हिष्येव बर्हिरुपगूहति ॥२५॥ सीदति होता ॥२६॥ यदा जानाति घृतवतीमध्वर्यो स्रुचमास्यस्व इत्यथाञ्जलिं करोति अश्विनाध्वर्यू ब्राह्मणा प्र णः शास्त नमो वो अस्तु इति ॥२७॥ स्रुचावादायाध्वर्युरत्या(-क्रामति ॥२८॥ अत्याक्रम्याश्राव्याह समिधो यज इति ॥२९॥ वषट्कृते पश्चात् समिन्मुखे जुहोति ॥३०॥ यज यज इति ॥३१॥ पञ्च प्राचः[13] प्रयाजान् यजति ॥३२॥ चतुर्थेऽर्धꣳ समानयते ॥३३॥ उपभृतोऽधि[14] सर्वं प्रयजति ॥३४॥ प्रयाजानिष्ट्वाऽत्याक्रम्य ध्रुवामभिघारयति, अथाष्टाकपालम्,अथ चरुम्,अथैकादशकपालम्, अथ दधिसान्नाय्यम्,अथ शृतम्, उपभृतमन्ततः ॥३५॥ ( अग्न-)येऽनुब्रूहि इत्याहाज्यस्य गृह्णानश्चतुः॥३६॥ ध्रुवां[15] प्रत्यज्य प्रस्तरꣳ समज्योत्तिष्ठति ॥३७॥ अत्याक्रम्याश्राव्याह अग्नि यज इति ॥३८॥ वषट्कृत उत्तरार्धे जुहोति ॥३९॥ सोमायानुब्रूहि इत्याहाज्यस्येव[16] गृह्णानश्चतुः ॥४०॥ ध्रुवां प्रत्यज्य प्रस्तरꣳ समज्यंवोत्तिष्ठति

१. H आक्राम्य. २. MHP यतेन्द्र°. ३. P क्रियास. ४. Cf TS I. 1.12.6 : समारम्य. ५. MHP वे स्वाहा, Cf Baudhśs I. 15 : 23.16. ६. MHP उदश्व. ७. MH °रजाम्; P °राजाम्. ८. MHP प्रपारयाश्रा°. ९. P अग्नीर्दे°. १०. MHP गोता. ११-११. MHP कित्वन्मनुष्वद्भरतपदमुपदब्रह्मन्वदा च वक्षद्ब्राह्मणस्य [ M °णास्य ]. १२. MH होतु°. १३. MHP प्राचं. १४. H °भृतेधि°. १५. P ध्रुवान्. १६. MHP °त्याज्य°

॥४१॥ अत्याक्रम्याश्राव्याह सोमं[1] यज इति ॥४२॥ वषट्कृते दक्षिणार्धे जुहोति ॥४३॥ उपस्तीर्यापि उपस्पृश्यावद्यन्नाह अग्नयेऽनुब्रूहि इति ॥४४॥ पश्चाच्च पुरस्ताच्चाष्टाकपालस्यावद्यति॥४५॥ अभिघारयति ॥४६॥प्रत्यनक्ति ॥४७॥ ध्रुवां प्रत्यज्य प्रस्तरꣳ समज्य[2] =व्याह अग्निं यज इति॥४८॥ वषट्कृते मध्ये जुहोति ॥४९॥ उपस्तीर्यापि उपस्पृश्यावद्यन्नाह सोमायानुब्रूहि इत्युपाꣳशु पौर्णमास्याम्, विष्णवे इत्यमावास्यायाम् ॥५०॥ पश्चाच्च पुरस्ताच्च[3] चरोरवद्यति ॥५१॥ अभिघारयति ॥५२॥ प्रत्यनक्ति ॥५३॥ ध्रुवां प्रत्यज्य प्रस्तरꣳ समज्यै(-वोत्तिष्ठति)[4] ॥५४॥ अत्याक्र[5]=व्याह अमुं यज इति ॥५५॥ वषट्कृते पूर्वार्धे जुहोति ॥५६॥ उपस्तीर्यैवा(-प उपस्पृश्यावद्य-)[6]न्नाह अग्नीषोमाभ्यामनुब्रूहि इति पौर्णमास्याम्, इन्द्राग्निभ्याम् इत्यमावास्यायामनोजानस्य, इन्द्राय इतीजानस्य[7] ॥५७॥ पश्चाच्च पुरस्ताच्चैकादशकपालस्यावद्यति ॥५८॥ पश्चाच्च पुरस्ताच्च दध्नः स्रुवेणावद्यति ॥५९॥ पश्चाच्च पुरस्ताच्च शृतस्य स्रुवेणावद्यति ॥६०॥ दध्नोऽभिपूरयति ॥६१॥ अभिघारयति ॥६२॥ प्रत्यनक्ति[8] ॥६३॥ ध्रुवां[9]=व्याह इन्द्रं यज इति ॥६४॥ वषट्कृतेऽपरार्धे जुहोति ॥६५॥ अग्नये स्विष्टकृतेऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥६६॥ सकृदुत्तरार्धादष्टाकपालस्यावद्यति ॥६७॥ सकृदुत्तरार्धान्मेक्षणेन चरोरवद्यति ॥६८॥ तदवदायाधोऽधः स्रुचावग्नीधे प्रयच्छति ॥६९॥ सकृदुत्तरार्धादेकादशकपालस्यावद्यति ॥७०॥ सदुदुत्तरार्धाद् दध्नः स्रुवेणावद्यति ॥७१॥ [10]सकृदुत्तरार्धाच्छृतस्य स्रुवेणावद्यति[10] ॥७२॥ शृतस्याभिपूरयति ॥७३॥ अभिघारयति ॥७४॥ प्रत्यनक्ति[8] ॥७५॥ ध्रुवां प्रत्यज्य प्रस्तरꣳ समज्यैवोत्तिष्ठति ॥७६॥ अत्याक्रम्याश्राव्याह अग्निꣳ स्विष्टकृतं यज इति ॥७७॥ वषट्कृते उत्तरार्धेऽतिहाय पूर्वा[11] आहुतीर्जुहो(-ति)[12]॥७८॥ अनुप्रहरत्यग्नौ मेक्षणम् ॥७९॥ तत् सꣳ स्रावेणाभिजुहोति ॥८०॥ अत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा यतोऽष्टाकपालस्य सौविष्टकृतमवद्यति[13] ततो

---

१. MH सोमाय. २. MHP abr; see above S. 37-38. ३. MHP °स्ताच्चाप. ४. MHP om. ५. MHP abr; see S. 38. ६. MHP om. ७. MHP इन्द्रायेति जानस्य. ८. MHP प्रत्यान°. ९. MHP abr; see S. 41–42. १०-१०. MHP om. ११. P. पूर्वो. १२. MHP om ति. १३. MHP सौस्विष्ट°.

यवमात्रं प्राशित्रमवद्यति ।।८१।। तत्पूर्वेण स्रुचोऽपरेण परिधीनतिहृत्य दक्षिणतो वेद्यै सादयित्वाऽभिघारयति ।।८१।। अप उपस्पृश्य मार्जयित्वा प्रक्षाल्य स्रुवदण्डं प्रक्षाल्येडापात्रमुपस्तृणीते[1] ।।८२।। [१०]

[ इडोपाह्वानम् ]

दक्षिणार्धादष्टाकपालस्य पुरोडाशशकलमवद्यति ।।१।। तच्चमसेऽवदधाति ।।२।। अवदानानि संभिद्य पूर्वार्धादष्टाकपालस्य चतुरङ्गुलं यजमानभागमवद्यति ।।३।। [2]संभेदनान्यवदायाज्ये(-नाभ्यज्य द्वितीयमव-)द्यति[3] ।।४।। दक्षिणार्धाच्चरोरवदायावदानानि संभिद्य द्वितीयमवद्यति ।।५।। दक्षिणार्धादेकादशकपालस्यावदायावदानानि संभिद्यैव द्वितीयमवद्यति ।।६।। दक्षिणार्धाद्दध्नः स्रुवेणावदायावदानानि संक्षुभ्य द्वितीयमवद्यति ।।७।। दक्षिणार्धाच्छृतस्य स्रुवेणा(-वदायावदानानि संभिद्यैव द्वितीयमवद्यति) ।।८।। [4]दध्नो वा[4] शृतस्य वाऽभिपूरयति[5] ।।९।। उभयोर्वाऽभिघार्य होत्र इडामादधाति ।।१०।। पूर्वेण होतारमनुत्सृजन्नत्याक्रामति[6]।।११।। होतुरङ्गुलिमाज्येनाक्त्वा होतुः पाणावुपस्तृणीते ।।१२।। द्विरवद्यति ।।१३।। सकृदभिघारयति ।।१४।। चतुरवत्तावान्तरेडा ।।१५।। अन्वारभेते अध्वर्युश्च यजमानश्च ।।१६।। यदा जानाति [7]इडो(-पहूता इत्य-)थाध्वर्युर्यजमानं वाचयति सुरूपवर्षवर्णे=मघोनी; जुष्टिरसि=तेऽशीय इति ।।१७।। बर्हिषदमष्टाकपालं कृत्वा ब्रध्न पिन्वस्व इत्यध्वर्युर्यजमानं वाचयति। [8]ददतो मे मा क्षायि कुर्वतो मे[8] मोपदसत्[9]। दिशां क्लृप्तिरसि दिशो मे [10]कल्पन्तां कल्पन्तां[10] मे दिशः। आशानां त्वाशापालेभ्यश्चतुर्भ्यो अमृतेभ्यः। इदं भूतस्याध्यक्षेभ्यो[11] विधेम हविषा वयम्। अपस्पिन्व[12],ओषधीर्जिन्व, द्विपात्पाहि चतुष्पादव[13] दिवो वृष्टिमेरय इति ।।१८।। पात्रियां पुरोडाशꣳ समवदाय[14] पुरस्तात् प्रत्यगावृत्ताय द्विरुपस्तीर्णाभिघारितमग्नीध आदधाति ।।१९।। अग्निर्मा दुरिष्टात्पातु इति पूर्वस्मिन्नवदाने वाचयति। [15]सविताघशꣳसात् इति।।२०।।उत्तर(-स्मिन्)[16] यो मेऽन्ति दूरेऽरातीयति तमेतेन

---

१. HP °यात्र उप°. २. MHP °वधाया°. ३. MHP हृत्वि. ४-४. MHP दध्नोप. ५. H oms ति। उभ. ६. MHP °मननुसृजन्°. ७. MHP इडे. ८. MP om. ९. MP मोपसदत्. १०-१०. MHP कत्वन्तां कत्वन्तां. ११. MHP भूतेभ्याध्य°. १२. MH अस्मिन्व; P अपस्धिन्व. १३. MHP om अव. १४. HP °वधाय. १५. MHP ससंविता. १६. MHP om.

जेषम् इति ॥२१॥ प्राशित्रं परेक्षते ॥२२॥ प्राश्नन्ति ॥२३॥ एतस्मिन् काले त्रिरध्वर्युर्हस्तात् प्राणेन प्राश्नाति ॥२४॥ मार्जयन्ते ॥२५॥ ( मनो ज्योतिर्जुषताम् इति जपति। °आज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु)[1] बृहस्पतिस्तनुतामिमं नो यज्ञं विश्वे देवा इह मादयन्ताम् इति सन्ततमा ब्रह्मणः ॥२६॥ वेदेनाष्टाकपालस्य पुरोडाशशकलं पूर्वेणाहवनीयꣳ सहाद्भिर्ब्रह्मणे परिहरति ॥२७॥ प्राश्नाति ब्रह्मा ॥२८॥ मार्जयते ॥२९॥ अद्भिर्वेदꣳ सꣳस्पृश्यैतेनैव यथैतमेत्याध्वर्यवे प्रयच्छति ॥३०॥ चरौ यजमानभागं प्रास्यापरेणात्मानं[2] पूर्वेणोत्करमुदगावृत्तान्यनुपूर्वꣳ हवीꣳष्युद्वासयन्ति ॥३१॥ आहरन्त्यन्वाहार्यम् ॥३२॥ स यद्यन्यत्र पक्वः स्यादन्वाहार्यपचनेऽधिश्रयेत् ॥३३॥ यद्यनुपसिक्तः[3] स्यादाज्यस्योपसिञ्चेत् ॥३४॥ तस्मिन् प्रजापतेर्भागोऽसि इति पत्नीं वाचयति। °ऊर्जस्वान् पयस्वान् प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानव्यानौ मे पाह्यक्षितोऽस्यक्षित्यै त्वा मा मेक्षेष्ठा अमुत्रामुष्मिन् लोक इह च इति॥३५॥तं[4]पूर्वेणाज्यं च[4] यजमानं [5]चातिहृत्यान्तर्वेद्यासादयति ॥३६॥ तस्मिन्नेवाध्वर्युर्यजमानं वाचयति ॥३७॥ तमपरेणात्मानं पूर्वेणोत्करमुदञ्चमुद्वासयत्यग्नीधे ब्रह्मणे होत्रेऽध्वर्यव इति ॥३८॥ मनो ज्योतिर्जुषताम् इति स्रुवेण सन्ततिं जुहोति। ° आज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु। बृहस्पतिस्तनुतामिमं नो यज्ञं विश्वेदेवा इह मादयन्ताꣳ स्वाहा इति ॥३९॥ एहि यजमान इत्युक्त्वाऽन्वारब्धे यजमान होतुराहुतिं द्वितीयां जुहोति ॥४०॥ अथाह ब्रह्मन् प्रस्थास्यामः, समिधमाधाय(-ग्नीत् परिधीꣳश्चाग्निं च सकृत्सकृत्) समृड्ढि इति ॥४१॥ इध्मसन्नहनानि स्फ्य उपसंगृह्य सकृदग्नीन्मध्यमं परिधिं संमार्ष्टि, सकृद् दक्षिणार्ध्यम्, [6]सकृदुत्तरार्ध्यम्, सकृदग्निम् ॥४२॥ संमृज्यासञ्चरे[6] तृणान्युदस्यति ॥४३॥ स्रुचावादायाध्वर्युरत्याक्रामति॥४४॥ अत्याक्रम्याश्राव्याह[7] देवान् यज इति ॥४५॥ वषट्कृते मध्ये समिधो जुहोति ॥४६॥ ( यज यज इति त्रीन् प्रतीचोऽनूयाजा-)न् यजति ॥४७॥ उत्तमꣳ हुत्वा प्राचीराहुतीः सꣳस्रावेण संभिनत्ति[8] ॥४८॥ अत्याक्रम्य यथायतनꣳस्रुचौ सादयित्वा वाजस्य मा ॥४९॥ [११]

---

१. MHP om. २. MHP प्रास्याचरेणा°. ३. MHP यदनुसिक्तं. ४-४. MHP पूर्वेणञ्च. ५. P चाहृत्य. ६-६. MHP सकृदग्नीरसंमृज्या°. ७. MP आश्रावयेत्याह; H आश्रावयेत्याश्रावयेत्याह. ८. MHP °भिन्नति.

[ स्रुग्व्यूहनाद्युत्तरतन्त्रम् ]

वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीद् इति दक्षिणेनोत्तानेन प्रस्तरं च जुहूञ्चोद्गृह्णाति[1] ॥ १ ॥ अथा सपत्नाँ इ(न्द्रो मे निग्राभेणाधराँ अकः इति सव्येनो-)पभृतं नित्राधते[2] ॥ २ ॥ उद्ग्रामं च निग्राभं च=स्यताम्[3] इति प्राचीं जुहूमुदूहति प्रतीचीमुपभृतमपोहति ॥ ३ ॥ सव्ये हस्ते प्रस्तरꣳ समस्य वसुभ्यस्त्वाऽनज्मि इति स्रुचा मध्यमं परिधिमनक्ति ॥ ४ ॥ रुद्रेभ्यस्त्वाऽनज्मि इति दक्षिणार्ध्यम्[4] ॥ ५ ॥ आदित्येभ्यस्त्वाऽनज्मि इत्युत्तरार्ध्यं(-म्॥ ६ ॥ यथायतनꣳ स्रुचौ सादयित्वा) मध्यमं परिधिमन्वारभ्याश्रावयति ॥ ७ ॥ ओ श्रावय इत्याह ॥ ८ ॥ इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि इति ॥ ९ ॥ अनुप्रहृत्य शकलं निधाय जुहूमाहृत्योपभृतं प्रस्तरꣳ स्रुक्ष्वनक्ति[5] अक्तꣳ रिहाणा इत्यग्रा(-णि जुह्वाम्,)वियन्तु वयः इति मध्यान्युपभृति, प्रजां योनिं मा निमृक्षमा प्यायन्तामाप)[6] ओषधयः इति मूलानि ध्रुवायाम् ॥ १० ॥ त्रिस्त्रिरक्त्वा [7]मरुतां पृषत्यसि[7] इति प्रस्तरमनुप्रहरति ॥ ११ ॥ वशा पृश्निर्भूत्वा दिवं गच्छ इति धूममुद्यन्तमुदीक्षते। ततो नो वृष्टिमेरय इति ॥ १२ ॥ रयिं यच्छ इत्यपरेण मुष्टिं प्रस्तरात्तृणमपयच्छति ॥ १३ ॥ तज्जुह्वामवदधाति[8] ॥ १४ ॥ अथ सर्वं[9] प्रस्तरमनुप्रहरति ॥ १५ ॥ यत् प्रस्तरात्तृणमपयच्छति [10]तज्जुह्वामक्त्वा इदं[10] ब्रूहि इत्याहाग्नीधम्[11] ॥ १६ ॥ अनुप्रहर संवदस्व इत्याहाग्नीत् ॥ १७ ॥ अगानग्नीत्[12] इत्याहाध्वर्युः ॥ १८ ॥ अगन् इत्याहाग्नीत् ॥ १९ ॥ श्रावय इत्याहाध्वर्युः ॥२०॥ श्रौषट् इत्याहाग्नीत् ॥२१॥ अनुप्रहरति॥२२॥स्वगा[13] दैव्या[14] होतृभ्यः स्वस्तिर्मानुषेभ्यः [15]शंयोर्ब्रू(-हि इति ॥२३॥ स्वस्ति-)वचनो[16] भूयासम् इत्यात्मानं प्रत्यभिमृशते ॥ २४ ॥ अप[17] उपस्पृश्य आयुष्पा अग्नेऽस्यायुर्मे पाहि इति प्राणान् संमृशते। चक्षुष्पा अग्नेऽसि चक्षुर्मे पाहि श्रोत्रपा अग्नेऽसि श्रोत्रं मे पाहि इति ॥ २५ ॥ यं परिधिं पर्यधत्थाः[18] इति मध्यमं परिधिमनुप्रहरति।

१. MP जुहोदगृ°, H जुहोत्युदगृ°. २. H °बाधन्त. ३. MH स्यातात्. ४. H °णार्धम् ५. MHP स्रुक्ष्मन°. ६. Cf Baudhśs I.19 : 28.18-19. ७--७. MHP मनूतां वृषत्य°. ८. MHP give the sign of broken text between दधा and ति. ९. MH ससर्वं. १०-१०. MHP तं जुह्वामक्तेदं. ११. MHP °त्याग्नीध° [ P °त्यग्नी° ]. १२. MHP °ग्नीम्. १३. MHP स्वाहा. १४. MHP देव्या. १५. H शंयो जु. १६. HP °पचनो, १७. P उप. १८. M पर्यमदधा; HP पर्यदधा.

°अग्ने देव पणिभिः = चेतयातै इति ॥२६॥ अग्नेः (प्रियं पाथोऽपी-)तम् इत्यभितः परिधीन् प्रहरति[१] ॥ २७ ॥ यदा जानाति ऊर्ध्वं जिगातु भेषजम् इत्यपः स्रुचौ[२] संप्रगृह्णाति सꣳस्रावभागाः स्थेषा = मादयध्वम् इति ॥ २८ ॥ घृताची स्थः इति ध्रुवायाꣳ सꣳस्रावं प्रश्चोत्य[३] धुरि धुर्यौ[४] पातम् इत्यभितः स्रुग्भ्यां ध्रुवाꣳ समनक्ति ॥२९॥ अग्नेर्वामपन्नगृहस्य सदसि सादयामि इति स्फ्ये जुहूꣳ सादयति, नोपभृतꣳ सꣳस्पर्शयति ॥३०॥ सुम्नाय = धत्तम् इति स्रुवं च जुहूं चादत्ते ॥३१॥ होत्रे वेदं प्रयच्छति ॥३२॥ दक्षिणेन गार्हपत्यमध्वर्युश्च यजमानश्च प्रपद्येते[५], उत्तरेण होता [६]चाग्नीच्च ॥३३॥ आज्यस्य[६] सꣳस्पृश्याग्नीच्छाकलमिध्मं गार्हपत्येऽभ्यादधाति ॥३४॥ अपरेण गार्हपत्यं प्रागावृत्त उपविश्य पत्नीः संयाजयति[७] ॥३५॥ सोमा-यानुब्रूहि इत्याहाज्यस्य गृह्णानश्चतुः ॥३६॥ ओ श्रावय इत्याह ॥३७॥ [८]सोमं यज इति ॥३८॥ वषट्कृते मध्ये जुहोति ॥३९॥ त्वष्ट्रे ऽनुब्रूहि इत्याहाज्यस्यैव गृह्णानश्चतुः ॥४०॥ ओ श्रावय इत्याह[८] ॥४१॥ त्वष्टारं यज इति ॥४२॥ वषट्कृते जुहोति ॥ ४३ ॥ राकाया अनुब्रूहि इत्याहा-ज्यस्यैव[९] गृह्णानश्चतुः ॥४४॥ ओ श्रावय इत्याह ॥४५॥ राकां यज इति ॥४६॥ वषट्कृते जुहोति ॥४७॥ देवानां पत्नीभ्योऽनुब्रूहि इत्याहाज्य-स्यैव गृह्णानश्चतुः ॥४८॥ ओ श्रावय इत्याह ॥४९॥ देवानां पत्नीर्यज इति ॥५०॥ वषट्कृते जुहोति ॥५१॥ अग्नये गृहपतयेऽनुब्रूहि इत्याहाज्यस्यैव गृह्णा-नश्चतुः ॥५२॥ ओ श्रावय इत्याह ॥५३॥ अग्निं गृहपतिं यज इति ॥५४॥ वषट्कृत उत्तरार्धेऽतिहाय पूर्वा आहुतीर्जुहोति[१०] ॥५५॥ वेदे स्रुचꣳ[११] सादयित्वा होतुरङ्गुष्ठमाज्येनाक्त्वा होतुः पाणौ चतुरवत्तमिडामाद-धाति ॥५६॥ अन्वारभन्तेऽध्वर्युर्यजमानः[१२] [१३]पत्नी च[१३] ॥५७॥ उपहूताया-मिडायामुत्तरतः प्रागावृत्ताय द्विरग्नीध आदधाति ॥५८॥ प्राश्नन्ति ॥५९॥ मार्जयन्ते ॥६०॥ (मनो ज्योतिर्जुषताम् इति जपति ।° आज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु ।)[१४] °बृहस्पतिस्तनुतामिमम् = दयन्ताम् इति सन्ततमा पत्नियै[१५]

१. P परिहरति. २. P ऋचौ. ३. H पश्चोत्य. ४. MHP धुरा धुर्यं. ५. MHP प्रपद्यते. ६–६. MHP चाग्नीच्याजिस्. ७. MHP जयन्ति. ८–८. H oms; M इत्याज्य°. ९. HP इत्याज्य°. १०. H आहुति°. ११. P स्रुचां. १२. MHP °मानं. १३–१३. MHP पत्नीति. १४. MHP om. १५. MHP °मपत्नियै.

॥६१॥ सं पत्नी पत्या सुकृतेषु गच्छताम् इति स्रुवेण पत्नीहोमं जुहोत्यन्वारब्धायां पत्न्याम् । °यज्ञस्य युक्तौ धुर्याविभूताम् । संकामन्तौ विजहतामरातिमुत्तमं ज्योतिर्दिव्यारभेता[१] स्वाहा इति॥६२॥ वेदस्य तृणं प्रच्छिद्यते ॥६३॥ जुह्वाञ्चाज्यस्थाल्यां[२] चाक्त्वा इदं ब्रूहि इत्याहाग्नीधम् ॥६४॥ अनुप्रहर संवदस्व इत्याहाग्नीत् ॥६५॥ अगानग्नीत्[३] इत्याहाध्वर्युः ॥६६॥ [४]अगन् इत्याहाग्नीत्[४] ॥६७॥ श्रावय इत्याहाध्वर्युः ॥६८॥ श्रौषट् इत्याहाग्नीत् ॥६९॥ अनुप्रहरति ॥७०॥ स्वगा दैव्या[५] होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहि इति ॥७१॥ यदा जानाति ऊर्ध्वं जिगातु भेषजम् इत्यथ स्रुवं च स्रुचं च संप्रगृह्णाति ॥७२॥ चतुर्गृहीतं गृह्णीते ॥७३॥ फलीकरणानावपति ॥७४॥ तान्[६] जुहोति ॥७५॥ वेदेनोपय(-च्छ-)त्यन्वाहार्यपचने[७] फलीकरणहोमम् [८]अग्नेऽदब्धायोऽशीततनो[८] पाहि=योनिं स्वाहा इति ॥७६॥ स्रुवं च जुहूं चादत्ते ॥७७॥ होत्रे वेदं प्रयच्छति ॥७८॥ प्राङेत्य ध्रुवा(-माप्याययति आप्यायतां ध्रु-)वा घृतेन=यज्ञे अस्मिन् इति ॥७९॥ वेदस्य तृणानि बर्हिषोपसंगृह्य देवा गातुविदः इति स्रुचा जुहोति । °गातुं वित्त्वा=यज्ञं स्वाहा वाचि इति ॥८०॥ समङ्क्तां[९] बर्हिर्हविषा घृतेन इति ध्रुवायां बर्हिरक्त्वाऽनु[१०] प्रास्यति । °समादित्यैर्वसुभिः सं मरुद्भिः[११] । समिन्द्रो (विश्वदेवेभिरङ्क्तां दिव्यं नभो गच्छतु यत्स्वा-)हा इति ॥८१॥ स्वाहा वाते धाः इत्युपरिष्टात् सं स्रावेणाभि जुहोति ॥८२॥ निधाय स्रुचं पूर्वेणाहवनीयं प्रणीता आहृत्याधंमन्तर्वेदि यजमानस्याञ्जलावानयति ॥८३॥ अभिपूर्य पूर्णपात्रे वाचयति सदसि सन्मे भूयाः सर्वमसि=क्षेष्ठाः इति ॥८४॥ (प्राच्यां दिशि देवा ऋत्विजो मार्जयन्ताम् इति) यजमानस्याञ्जलावानयति । °दक्षिणायां दिशि मासाः पितरो=मार्जयन्ताम् इति ॥८५॥ निधाय स्थालीमुपोत्थाय दक्षिणं वेद्यन्तमनु विष्णुक्रमान् क्रमते विष्णोः क्रमोऽस्यभिमातिहा=दिशोऽनु विक्रमे निर्भक्तः स यं द्विष्मः इति ॥८६॥ अगन्म सुवः सुवरगन्म इति प्राङ् प्रक्रामति[१२] ॥८७॥ [१३]संदृशस्ते मा च्छित्सि[१३] इत्यादित्यमुपतिष्ठते । °यत्ते=

१. MHP °रभेथागं. २. MHP जुह्वाज्याज्यस्था°. ३. MHP अदानग्नीद्. ४–४. MH अग्नित्या°; P अग्नीत्या°, ५. MHP देव्या. ६. MHP तं. ७. MHP om च्छ. ८–८. P oms. ९. MHP समन्तां. १०. P oms अक्त्वा ११. MHP समरुद्भि. १२. MHP प्रक्रमेति. १३–१३. H सदृश°; MP सदृशंस्तोमात्सी [ M संदृशस्तो ].

पृथिव्या अस्मादन्नाद्यान्निर्भजानि[1] = सं ज्योतिषाऽभूवम् इति ॥८८॥ ऐन्द्रीमावृतमन्वावर्ते[2] इति दक्षिणा पर्यावर्तते ॥८९॥ तदानीमेवोपावर्तते समहं = रायस्पोषः इति ॥९०॥ समिद्धो अग्ने मे दीदिहि इत्युप वा समिन्धे[3] समिधं वाऽभ्यादधाति । °समेद्धा ते अग्ने दीद्यास᳘ स्वाहा इति ॥९१॥ वसुमान् यज्ञो वसीयान् भूयासम् इत्युपतिष्ठते ॥९२॥ अग्न आयू᳘षि[4] पवसे इति द्वाभ्यामाग्निपावमानीभ्यां गार्हपत्यमभ्येति । °आ सुवोर्जं = मयि इति ॥९३॥ अग्ने गृहपते इत्युपतिष्ठते । °सुगृहपति = तन्तवे इत्यन्ततः ॥९४॥ कस्त्वा युनक्ति स त्वा विमुञ्चतु इत्युलूखलमुसलं परेक्षते ॥९५॥ यानि घर्मे कपालानि इति कपालानि । °उपचिन्वन्ति = श्वताम् इति ॥९६॥ यज्ञो बभूव स आ बभूव इति यज्ञस्य पुनरालम्भं[5] प्राङेति । °स प्र जज्ञे स वावृधे स देवानां = रयीणाम् इति ॥९७॥ गोमाँ अग्नेऽविमाँ अश्वी[6] यज्ञः इति प्राङुत्क्रम्य जपति । °नृवत्सखा = सभावान् इति ॥९८॥ पयस्वतीरोषधयः इति तिरःपवित्रमप आचामति । °पयस्वद्वीरु = स᳘ सृज इति ॥९९॥ अग्ने व्रतपते इति मार्जयित्वा समिधमादधाति । °व्रतमचारिषं[7] तदशकं तन्मेऽराधि[8] स्वाहा इति ॥१००॥ आगत्यापरेण गार्हपत्यमासीनां[9] पत्नीं विस्र᳘सयति इमं वि ष्यामि = तनुवा मम इति ॥१०१॥ पयस्वतीरोषधयः इति तिरः पवित्रमप आशयति । °पयस्व = सृज इति ॥१०२॥ अग्ने व्रतपते इति मार्जयित्वा समिधमाधापयति । °व्रतमचारिषं तदशकं तन्मेऽराधि स्वाहा इति ॥१०३॥ प्रतिपरैति[10] पत्नी दक्षिणतः ॥१०४॥ उपविश्य यजमानभागं प्राश्नाति प्रजापतेर्विभान्नाम = मा(-ने-)न इति ॥१०५॥ सन्तिष्ठेते दर्शपूर्णमासौ सन्तिष्ठेते दर्शपूर्णमासौ ॥१०६॥ [ १२ ] [ इति तृतीयोऽनुवाकः ]

[ इति दर्शपूर्णमासाख्यो द्वितीयः प्रपाठकः ]



---

१. MHP °दन्नादानिर्भ° . २. P °वर्तत. ३. MHP समिन्ध. ४. MHP add च after आयू᳘षि. ५. MHP °रालम्बेति. ६. MHP अश्वीय. ७. M °माचरि. ८. P °रोधि. ९. MHP °माधीनां. १. MHP प्रतिरैति.

# अथ तृतीयः प्रपाठकः

## [ याजमानम् ]

## [ प्रवत्स्यदुपस्थानम् ]

प्रवसथमेष्यन् भवति ॥१॥ स पुरस्तादेव सꣳशास्ति यदस्य सꣳशिष्यं भवति ॥२॥ स यज्ञोपवीतं कृत्वाऽप आचम्य यजमानायतने[1] तिष्ठन्नाहवनीयमुपतिष्ठते मम नाम प्रथमं जातवेदः = विभराण्यग्ने इति ॥३॥ अथ[2] वाचंयमः प्रव्रजति ॥४॥ स यदा वै वाचं यच्छति मनस्तर्हि वाक्[3] समारोहति। यदु वै मनः स प्राणः। (यदु वै वाक्) साऽनार्ता देवता। सोऽनार्तां देवताꣳ समारोह्य प्रवसति ॥५॥ सोऽगारेण[4] वा वृक्षेण वाऽन्तर्धाय वाचं विसृजते ॥६॥ तस्य प्रवसतो[5] व्रतम्॥७॥ नानृतं वदति[6] = न्त्यधःशायी प्राकुछयिता[7] वा ॥८॥ (प्रपथात्) प्रागुच्चारः समिधमाहरति ॥९॥ इडाऽग्निर्भवति ॥१०॥ न द्वादशीमति प्रवसति ॥११॥ यथा दैव्ये विपरिधायैवं प्रोष्य गृहानुपावर्तते ॥१२॥ प्रपथात् समिधं कुरुते ॥१३॥ अग्नीन् पराख्याय वाचं यच्छति मनस्तर्हि वाक् समारोहति। सोऽनार्तमिव देवताꣳ समारोह्य (गृहानुपावर्तते ॥१४॥ स यज्ञोपवीतं कृत्वाऽप) आचम्य यजमानायतने तिष्ठन्नाहवनीये विपरिधत्ते मम नाम तव च = गन्धर्वः इति ॥१५॥ तूष्णीं तृतीयꣳ समिधोऽभ्यादधाति ॥१६॥ अन्वाहार्यपचनमेत्य तूष्णीं तृतीयꣳ समिधोऽभ्यादधाति ॥१७॥ अभिप्रपद्य गार्हपत्यमुपतिष्ठते त्वत्पितारो अग्ने = सुहिते मा धाः इति ॥१८॥ तूष्णीं तृ(-तीयꣳ समिधोऽभ्यादधा-)ति ॥१९॥ उपचिनोति परि वा समूहयति अयमग्निः श्रेष्ठतमोऽयं[8] = सुवीर्यम् इति ॥२०॥ अथ यजमानायतने तृणेषु कूर्चे वोपविश्यामन्त्रयते 'यो नाभिवदत्यभिवदितव्यान्[9]' संवदते यैरस्य संवदितव्यं भवति इति तु दैव्यमुपस्थानम् ॥२१॥ एवꣳ ह देवा उप(-तस्थुरेवमृषय एवं ये पूर्वे श्रोत्रिया ऋतायव आसुः ॥२२॥ तदेतद्) ह्यु त्सन्नं व्रतस्य

१. M P °मानं यतने. २. MHP अग्ने. ३. MHP वाद्. ४. Ao II.148 : 6.7: °ऽङ्गारेण. ५.MHPप्रस्रवतो. ६.MHP abr, see supra I.8.39-43. ७. MH प्राक्च्छतीता; P प्राक्तीता. ८. MHP °तमो या. ९-९. MHP यानभि°.

[1]गरिम्णाऽविद्यया वाऽन्येन वा ॥२३॥ नान्वाख्याने[1] ब्राह्मणमस्ति ॥२४॥ न नृम्णायेच्छन्दोब्राह्मणमेवैतत् ॥२५॥ तदेतदप्येकरात्रेणोपेप्सेद् दैव्यस्योपेप्सद् ॥२६॥ इति नु दैव्यमुपस्थानम् ॥२७॥

[ विराजक्रमोपस्थानम् ]

अथा(-तो विराजक्रमाः ॥२८॥ स) पुरस्तादेव सꣳशास्तीति समानम् ॥२९॥ स यज्ञोपवीतं कृत्वाऽप आचम्य पश्चात्तिष्ठन् गार्हपत्यमुपतिष्ठते नर्य प्रजां मे गोपाय इति ॥३०॥ अथर्वं पितुं[2] मे गोपाय इत्यन्वाहार्यपचनम् ॥३१॥ शꣳस्य पशून् मे गोपाय इत्याहवनीयम् ॥३२॥ सप्रथ सभां मे गोपाय इति[3] (सभ्यम् ॥३३॥ अहे बुध्निय मन्त्रं मे गोपाय इत्या-)[4] वसथीयम् ॥३४॥ नमो वोऽस्तु गोपायत मा इति सर्वान् समस्तान् ॥३५॥ अथ वाचंयमः प्रव्रजति ॥३६॥ स यदा वै वाचं यच्छतीति समानम् ॥३७॥ सोऽगारेण वा वृक्षेण वाऽन्तर्धाय वाचं विसृजते ॥३८॥ तस्य प्रवसतो[5] व्रतम् ॥३९॥ कामाशनं[6] कामशयनं कामालङ्कारोऽपरिमितं प्रवसतः[7] ॥४०॥ य(-था दैव्ये विपरिधायैवं प्रोष्य) गृहानुपावर्तते ॥४१॥ प्रपथात्[8] समिधं कुरुते ॥४२॥ अग्नीन् पराख्याय वाचं यच्छति ॥४३॥ [9]स यदा वै वाचं यच्छतीति[9] समानम् ॥४४॥ स यज्ञोपवीतं कृत्वाऽप आचम्य पश्चात्तिष्ठन् गार्हपत्यमुपतिष्ठते नर्य प्रजां मेऽजूगुपस्तां मे गोपाय इति ॥४५॥ तूष्णीं तृतीयꣳ समिधोऽभ्यादधाति ॥४६॥ अथर्वं पितुं[2] मेऽजूगुपस्तं मे गोपाय इत्यन्वाहार्यपचनम् ॥४७॥ तूष्णीं तृतीयꣳ समिधोऽभ्यादधात्युप वा निदधाति ॥४८॥ शꣳस्य पशून् मेऽजूगुपस्तान् मे गोपाय इत्याहवनीयम् ॥४९॥ तूष्णीं तृतीयꣳ समिधोऽभ्यादधात्युप वा निदधाति ॥५०॥ सप्रथ सभां मेऽजूगुपस्तां[10] मे गोपाय इति सभ्यम् ॥५१॥ अहे बुध्निय मन्त्रं मेऽजूगुपस्तं

१--१. MHP विद्येयावास्येनान्वाख्याने. Caland (Ao IV.5:27; fn 4) gives the vyākhyā text as गरिम्णा गुरुत्वेन वा; विद्यया वा, अनेन वा ( अन्येन वा ? ) नान्वाख्याने ब्राह्मणमस्ति, विधायकं वाक्यं नास्तीत्यर्थः; ब्राह्मणे विहितं हि कल्पकारैरन्वाख्यायते. Cf BaudhŚS III. 14 : 84.10–11. २. MHP पितुर्मे. ३. MHP इत्यथ ४. See I. 4.28–29. ५. MP प्रसवती [ M वतो ]; H प्रसतो. ६. MHP कामाशयनं. ७. MHP प्रसवतो. 8. MHP प्रथात्. ९–९. HP om. १०. MHP °जूगुपस्तस्तां.

मे गोपाय इत्यावसथीयम्[1] ॥५२॥ नमो वोऽस्त्वजूगुपत मा [2]गोपायत इति[2] सर्वान्[3] समस्तान् ॥५३॥ अथ यजमानायतने तृणेषु कूर्चे वापविश्येति समानम् ॥ ४॥ स यद् अजूगुपोऽजूगुपः इत्युपतिष्ठेत प्रवसतो गोप्तारो[4] मन्येरन्, न सार्धं वसतः ॥५५॥ स यद् अजूगुपो गोपाय इत्युपतिष्ठते [5]यथा हैवास्य[5] प्रवसतो गोप्तारो मन्यन्त एवꣳ सार्धं वसतः ॥५६॥ तस्माद् अजूगुपस्तान् मे गोपाय इत्येत्रोपतिष्ठेत ॥५७॥ इत्यु वेव विराज-क्रमाः ॥५८॥ [ १ ][6]

## [ माहाचमसोपस्थानम् ]

अथातो माहाचमसम्[7] ॥१॥ माहाचमसेनोपस्थास्यमानो[8] भवति ॥२॥ स पुरस्तादेव सꣳशास्तीति समानम् ॥३॥ स यज्ञोपवीतं कृत्वाऽप आचम्य पश्चात्तिष्ठन् गार्हपत्यमुपतिष्ठते अभयं ते अभयं मे मानुषान्मा भयाद् गोपाय इति ॥४॥ अभयं ते अभयं मे इत्यन्वाहार्यपचनम् । °पित्रियान्मा भयाद् गोपाय इति ॥५॥ अभयं ते अभयं मे इत्याहवनीयम् । °दैव्यान्मा भयाद् गोपाय इति ॥६॥ नमो वो अस्तु गोपायत मा इति सर्वान् समस्तान् ॥७॥ अथ वाचंयमः प्रव्रजति ॥८॥ स यदा वै वाचं यच्छतीति[9] समानम्[9] ॥९॥ सोऽगारेण वा वृक्षेण वाऽन्तर्धाय वाचं विसृजते ॥१०॥ तस्य प्रवसतो[10] व्रतं यथा विराजक्रमेषु ॥११॥ [11](यथा दैव्ये विपरिधा-)येवं प्रोष्य गृहानुपावर्तते ॥१२॥ प्रपथात्[12] समिधं कुरुते ॥१३॥ अग्नीन् पराख्याय वाचं यच्छति ॥१४॥ स यदा वै वाचं यच्छतीति समानम् ॥१५॥ स यज्ञो-पवीतं कृत्वाऽप आचम्य यजमानायतने तिष्ठन्नाहवनीयमुपतिष्ठते अभयं तेऽभयं मे दैव्यान्मा भयादजूगुपस्तस्मान्मा भयाद् [13]गोपाय इति ॥१६॥ तूष्णीं[13] तृतीयꣳ समिधोऽभ्यादधात्युप वा निदधाति ॥१७॥ अभयं ते अभयं मे इत्यन्वाहार्यपचनम् । °पित्रियान्मा[14] भयादजूगुपस्तस्मान्मा भयाद् गोपाय इति ॥१८॥ तूष्णीं तृतीयꣳ समिधोऽभ्यादधात्युप वा निदधाति ॥१९॥ अभयं ते अभयं मे इति गार्हपत्यम् । °मानुषान्मा[15] भयादजूगुपस्तस्मान्मा भयाद्

---

१. MHP °सथीय. २–२. MHP गोपायतमेति ३. MHP सर्वा सर्वाः. ४. MHP गोप्तारं. ५–५. Ao II. 148:7.3 : यथैवास्य. ६. MHP close the kaṇḍikā with इति प्रथमः. ७. MP माहचम°; Ao II. 164.31 : महाच°. ८. MP प्रयच्छ°. ९. MHP समान. १०. MP प्रसवतो. ११. MHP om. १२. MH प्रवथात्, p प्रवधात्. १३–१३. MP गोपायेतिन्तूष्णीं. १४. MHP पवित्रियान्मा. १५. MHP मनुषा°.

गोपाय इति ॥२०॥ तूष्णीं तृतीयꣳ समिधोऽभ्यादधात्यु(-प वा निदधाति ॥२१॥ न-)मो वो अस्त्वजूगुपस्तस्मादु[1] गोपायत मा इति सर्वान् समस्तान् ॥२२॥ अथ यजमानायतने तृणेषु कूर्चे[2] वोपविश्येति समानम् ॥२३॥ अयमु ह वै लोको गार्हपत्योऽन्तरिक्षलोकोऽन्वाहार्यपचनः सुवर्गो आहवनीयः ॥२४॥ स यत् [3]प्रवत्स्यन्नितः पराच[3] उपतिष्ठत इमा(-नेव लोकानाप्नो-)ति न काचनार्तिर्भवति, न रिष्टिः ॥२५॥ स यत्पुनरेत्यैवमे-) वोपतिष्ठेत[4] प्रैभ्यो लोकेभ्यश्च्यवेत, क्षिप्रे हैवास्माल्लोकात् प्रेयात्[5] ॥२६॥ स पुनरेत्यामुतोऽर्वाच[6] 'उपतिष्ठत एष्वेव तल्लोकेषु प्रतितिष्ठति, नार्ति-मार्छति, सर्वमायुरेति ॥२७॥ अहरहर्वा(.......) पाप्मनो बिभ्य (.......) वेत्स्यति । स नो श्रद्धावित् । तं परा वावप्स्यन्न्यगेवाभ्यत्रहरिष्यतीति[7] ॥२८॥ स यद् अभयं ते अभयं मे इत्युपतिष्ठतेऽभयमेवैभ्यो दधाति, तेऽस्मा अभये दत्ते अभयं ददति ॥२९॥ त्रीण्यु ह वै भयानि, दैव्यं पित्रियं मानुष-मिति ॥३०॥ एतद्वै दैव्यं योऽलोकतायै बिभेत्यथ हैतत् पित्रियं योऽप्रजाताया अथ हैतन्मानुषं योऽपशुतायै ॥३१॥न ह वा एनं देवतो न पितृतो न मनुष्यतो भयमागच्छति य एतेनोपतिष्ठते ॥३२॥ इत्यु वेव[8] माहाचमसम्[9] ॥३३॥

## [ विच्छिन्नप्रायश्चित्तिः ]

अथातो विच्छिन्नप्रायश्चित्तिः ॥३४॥ स यद्यस्मै प्रोषुषे काञ्चिद् यज्ञार्तिमाचक्षीरन्नभि वाऽस्तमगादभि[10] वोदगादभि वोदहार्षु रुद्धृतो[11] वोदवासीद् अनो वा रथो वा व्ययासीद् अग्निहोत्री वा न्यसदद् अग्निहोत्रे वाऽधिश्रिते चान्तरेणागादित्यन्यां वैवꣳरूपां काञ्चिद् यज्ञार्तिमाच-क्षीरन् [12]गार्हपत्य आज्यं[12] विलाप्योत्पूय[13] स्रुवं च स्रुचं च संमृज्य प्राङेत्याहवनीयस्यार्धं चतुर्गृहीतं गृह्णीते ॥३५॥ तज्जुहोति मनो ज्योति-र्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु । या इष्टा उषसो निम्रुचश्च ताः

---

१. MHP °पस्तमा. २. P कूर्चौ. ३–३. MHP °न्नितमपरा°; thus Ao II.148 : 9.2. ४. H °तिष्ठते. ५. MHP प्रयाद् ६. MHP मुतोर्वाच. ७. MHP °प्स्यन्त्य°; (H °हरिष्यतेति). ८. MHP वेप. ९.AoII.148 :8.5 : महा°. १०. MHP वास्तमयातस्मिदमभि. [ M °दमि ];. thus Ao II. 154.28–29. ११. Ao II.154.29 : वोदाहर्षुरु. १२–१२. P °पत्याज्यं. १३. MHP विलोप्योत्पूलय.

संदधामि हविषा घृतेन स्वाहा इति ॥३६॥ स यथाऽऽत्मनाऽऽत्मानँ सन्दध्यात् पर्वणा पर्वं श्लेष्मणा चर्मण्यं वाऽन्यद् वा श्लेषयेद् एवमेतद्यज्ञस्य विलिष्टँ संदधाति, सँस्करोति ॥३७॥ न ह वै तत्र काचनार्तिर्भवति न रिष्टिः यत्रैषा प्रायश्चित्तिः क्रियते ॥३८॥ तन्नु ह स्मैतत् पूर्वे श्रोत्रिया यत्र क्व च दशतँ रात्रीरतिप्रोषुस्तद् विच्छिन्नरूपमेव मेनिरे, ते ह स्मैतां जुह्वति ॥३९॥ तदाहुर्नानाख्याते[१] जुहुयात् ॥४०॥ यथाऽनार्तम्[२] आर्तरूपं कुर्वीत यथाऽनुपतापिनं[३] भिषज्येत्तादृक् तत् ॥४१॥ तस्मान्नानाख्याते जुहुयादिति ॥४२॥ नानाख्याते जुहोत्येषा स्थितिः ॥४३॥[४] इत्यु वेव विच्छिन्नप्रायश्चित्तिः[४] ॥४४॥ अथातोऽन्वाधानस्यैव ॥४५॥ [.२]

## [ अन्वाधानम् ]

अथातोऽन्वाधानस्यैव ॥१॥ तन्नु हैतदेके महारात्र एवाग्निहोत्रँ हुत्वाऽग्नीनन्वादधति[५] अग्निहोत्राद्ध यज्ञास्तायन्ते तथाऽग्निहोत्रेण यज्ञँ संतँस्यामहे इति वदन्तः ॥२॥ ब्राह्मणमु वै भवति यथा वै समृतसोमा एवं वा=एते=श्वोभूते यजते इति तथा पूर्वे देवताः परिग्रहीष्यामहे[६] इति वदन्तः ॥३॥ स यदेवं कुर्याद्यथाऽनागतायातिथ्यं कुर्याद् यथाऽनागतं जिगृहीषेत् तादृक् तत् ॥४॥ अथ हैक उदिते[७]ऽन्वादधति[८] तथा पश्यन्तो[९]देवताः परिग्रहीष्यामहे[९] इति वदन्तः ॥५॥ स यदेवं कुर्याद् यथाऽतीतायातिथ्यं कुर्याद्, यथाऽतीतं[१०] जिगृहीषेत् तादृक् तत् ॥६॥ विरश्मावादित्येऽन्वादध्यात् ॥७॥ पूर्वो वा अग्निरर्चिषाऽधूमेन[११] तपत्यमुत आदित्यस्तेजसा रश्मिभिः। तावत्र संगच्छेते। स यथा समागतौ परिगृह्णीयात् समागतौ प्रीणीयात् ता(-दृक् तत्॥८॥तस्माद्विरश्मावेवादित्येऽन्वाद-)[१२] ध्यादिति॥९॥ विरश्मावेवादित्ये[१३]ऽन्वादधात्येषा स्थितिः ॥१०॥ विहव्यानां प्रथमयाऽऽहवनीय एकां, द्वे तूष्णीम् ॥११॥ तूष्णीं गार्हपत्ये तिस्रः ॥१२॥

१. MHP तमाहु°. २. MHP °नर्तं. ३. H °नुषता°. ४–४. MH इत्यवच्छिन्न°. ५. MHP दधाति; thus Ao II.149 : 10.2. ६. H °ग्रहीष्याम. ७. MHP कृदिते. ८. MHP °दधाति; thus Ao II.149 : 10.7. ९–९. MHP देवतारिग्र°; thus Ao ibid. १०. Thus MHP; Caland gives in fn 1 ( Ao II. 149 : 10.9 ) यथातिथ्यम् as Ms reading. ११. Ao II. 149 : 10.10 : धूमेन instead of अधूमेन. १२. Caland supplies the broken text as त(थैवन्वाद)ध्याद् (Ao II.149 : 10.12). १३. Ao II. 149 : 10.12 : विरश्मावादित्ये.

तूष्णीमन्वाहार्यपचने तिस्रः ॥१३॥ प्राङेत्याहवनीये चतुर्थीमभ्यादधाति प्राक्स꣡ꣳस्थतायै[१] ॥१४। अथ यजमानायतने ति(-ष्ठन् द्विरुत्तराभि-रुपतिष्ठते ॥१५॥ अथैक-)मेवान्वाधाय नोपतिष्ठते ॥१६॥ अथैकं विहव्या-नामेव प्रथमयाऽऽहवनीय एकां द्वे तूष्णीम् ॥१७॥ अग्ने जातान्[२] इति गार्हपत्य एकां द्वे तूष्णीम् ॥१८॥ प्राङेत्याहवनीये चतुर्थीमभ्यादधाति प्राक्स꣡ꣳस्थ(-तायै अर्वाञ्चमिन्द्रममुतो हवामहे यो गोजिद्धन-)जिदश्वजिद्यः[३]। इमं नो यज्ञं विहवे जुषस्वास्य कुर्मो हरिवो मेदिनं त्वा स्वाहा इति ॥१९॥ अथ यजमानायतने तिष्ठन्[४] सप्तभिरेवोत्तराभिरुपतिष्ठते ॥२०॥ अथैक-मेवान्वाधाय नोपतिष्ठते ॥२१॥ अथासन्नमित्याचक्षते ॥२२॥ अथैकं विह(-व्यानामेव प्रथमयाऽऽहवनीय एकां द्वे तूष्णीम् ॥२३॥ द्वितीयया गार्ह-)पत्य एकां द्वे तूष्णीम् ॥२४॥ तृतीययाऽन्वाहार्यपचन एकां द्वे तूष्णीम् ॥२५॥ प्राङेत्याहवनीये चतुर्थीमभ्यादधाति प्राक्स꣡ꣳस्थतायै ॥२६॥ अथ [५]यज-मानायतने तिष्ठन्[५] द्विरुत्तराभिरुपतिष्ठते ॥२७॥ अथैकमेवमेवान्वाधाय नोपतिष्ठते ॥२८॥ अथैकं द्वा(-भ्यामाहवनीये द्वे, एकां तूष्णीम् ॥२९॥ द्वाभ्यां गार्हपत्ये द्वे,) एकां तूष्णीम् ॥३०॥ द्वाभ्यामन्वाहार्यपचने द्वे, एकां तूष्णीम् ॥३१॥ प्राङेत्याहवनीये चतुर्थीमभ्यादधाति प्राक्स꣡ꣳस्थतायै ॥३२॥ अथ यजमानायतने तिष्ठन् द्वाभ्यामुत्तराभ्यामुपतिष्ठते ॥३३॥ अथैकमेवान्वाधाय नोपतिष्ठते ॥३४॥ अथैकं तिसृभिराहवनीये तिस्रः ॥३५॥ तिसृभिर्गार्हपत्ये (तिस्रः ॥३६॥ द्वाभ्यामन्वाहार्यपचने द्वे) एकां तूष्णीम् ॥३७॥ प्राङेत्याहवनीये चतुर्थीमभ्यादधाति प्राक्स꣡ꣳस्थतायै ॥३८॥ नात्रोपतिष्ठते ॥३९॥ अथ यथाऽऽहितम् ॥४०॥ भूः इति गार्हपत्ये तिस्रः ॥४१॥ भुवः इत्यन्वाहार्यपचने तिस्रः ॥४२॥ सुवः इत्याहवनीये तिस्रः ॥४३॥ एतन्नु ह यथाऽऽहितमित्याचक्षते ॥४४॥ एतेषां यतमत् कामयेत तत्कुर्यात् ॥४५॥ इत्यु (वेवान्वाधानस्य) ॥४६॥

## [ व्रतोपायनम् ]

अथातो[६] व्रतोपायनस्यैव ॥४७॥ तन्नु हैतद् एकेऽग्नीनेवान्वाधाय व्रतमुपयन्ति ॥४८॥ तथा नो व्रतोपेतानाम् ॥४९॥ यद्यजुषा कृत्यं तत् करिष्यन्ति यजुषा शाखामाहृत्य यजुषा वत्सानपाकरिष्यन्ति इति ॥५०॥ अथ

१. MHP स꣡ꣳस्थिता°. २. P oms. ३. MH °जिद्या. ४. P ins. एव after तिष्ठन्. ५–५. P oms. ६. MHP ततो; cf III.3.1.

दक्षिणतस्तिष्ठन् व्रतमुपैति विक्रम्य विक्राम्य ह्रीन्द्रो वृत्रमहन् समृद्ध्यै इति ब्राह्मणम् ॥५१॥ पयस्वतीरोषधयः इति तिरःपवित्रमप[1] आचामति। °पयस्व=सꣳसृज इति ॥५२॥ अग्ने व्रतपते इति मार्जयित्वा समिधमादधाति। °व्रतं चरिष्यामि=ताꣳ स्वाहा इति ॥५३॥ प्राण्यापानिति[2] ॥५४॥ प्राणैरात्मानमन्तरतः [3]पूरयित्वाऽऽह इदमहमनृतात्[3] सत्यमुपैमि इति ॥५५॥ अनृतं[4] वै मनुष्याः सत्यं देवा मनुष्येभ्यस्तद्देवानुपैति ॥५६॥ एवꣳ ह देवा व्रतमुपेयुरेवमृषय एवं ये पूर्वे श्रोत्रिया ऋतायव आसुः ॥५७॥ अथो [5]इदमाहुः यदि गावो[5] यजुषाऽपाकृतानां[6] धयेयुर्वा नंश्येयुर्वा प्रायश्चित्तिः कार्या स्यादिति ॥५८॥ सायमेव यजुषा शाखामाहृत्य यजुषा वत्सानपाकरोति ॥५९॥ प्रातर्हं [7]स्मैवम् ॥६०॥ आ दक्षिणायै[7] व्रतमुपैति ॥६१॥ स ह स्म वाचंयमो भवत्या सꣳस्थायै ॥६२॥ तदाहुः कोऽर्हति व्रतोपेतो वाचंयमो बहु वदन् सत्यं वदन्निति ॥६३॥ स यदव्रतोपेतस्य यद्यजुषा[8] कुर्याद् यथाऽदीक्षितं वाऽव्रतोपेतं वा याजयेत्तादृक् तत् ॥६४। त्रीण्यु ह वै दर्शपूर्णमासयोर्व्रतोपायनानि—अन्वाधाय बर्हिषा वत्सैः[9] ॥६५॥ अथैकमासन्नेष्विति ॥६६॥ स यथा ह वा अनसोऽपरीणत्काद्[10] व्रीहियवाः शीर्यन्त एवꣳ ह वा अव्रतोपेतस्य यद्यजुषा क्रियते तच्छीर्यते ॥६७॥ [11]इष्टैरेवावृता प्रणेष्यमाणा न शीर्येतेष्टिः ॥६८॥ नेष्टिरुपवसथ इवास्ति[11] ॥६९॥ उत्सीदति तद् यदासन्नेषु हविःष्विति ॥७०॥ [४] । इति प्रथमोऽनुवाकः]

## [ हविरभिमन्त्रणम् ]

अथातो हविर्निरुप्यमाणमभिमन्त्रयते अग्निꣳ होतारमिह=अस्य इति ॥१॥ तदाहुः, हविरेवं निरुप्यमाणमभिमन्त्रयेत अग्निꣳ होतारमिह तꣳ हुवे इत्यृत्विज[12] आयतः। आयन्तु देवाः सुमनस्यमानाः इति ॥२॥ तानेव पुनर्वियतः वि यन्तु देवा हविषो मे [13]अस्य इति[13] ॥३॥ मीमाꣳसैषा ॥४॥ समस्तेन हविरेव निरुप्यमाणमभिमन्त्रयेत[14] ॥५॥ उलूखलमुसलं दृषदुपलं

---

१. MHP om अपः. २. Ao II. 149:11.8 °नित्य्. ३–३. MHP °यित्वा नेदमह°. ४. P अमृतं. ५–५. MHP इत्याहुर्यदृशीव. ६. MHP °वाकृतानां. ७–७. MHP स्मैव दक्षिणायी. ८. HP यद्युजुषा. ९. MHP वसैः. १०. MHP परीणत्का; thus Ao II. 150 : 11.13. ११–११. MHP इष्टैरेवावत्प्रणेष्यन्मानसीनेष्टिर्नेष्टरूप°. १२. MHP इर्वात्विज. १३–१३. MH अस्यैति. १४. °मन्त्रयत; H °मन्त्रय.

युज्यमानं कस्त्वा युनक्ति (इति)[१] ।।६।। यानि घर्मे कपालानि इति कपालानि । 'उपचिन्वन्ति वेधसः । पूष्णस्तान्यपि व्रत इन्द्रवायू[२] युङ्क्ताम् इति ।।७।। एतदेवानुद्रुत्य[३] विमोचनकाले इन्द्रवायू विमुञ्चताम् इति ।।८।।

## [ नष्टकपालप्रायश्चित्तिः ]

अथातः कपालस्यैव नष्टस्य ।।९।। तद्ध ब्राह्मणं भवति यद्येकं कपालं[४] =मेककपालम् इति ॥१०॥ तदाहुः यदेतस्यै प्रायश्चित्तीया इष्टेर्नश्येन्न ततः प्रायश्चित्तिश्च नातिशिष्येत इति ॥११॥गार्हपत्ये स्रुवाहुतिं जुहुयात् त्रयस्त्रिꣳ-(-शत्तन्त-)वो ये[५]=एतद्दधामि स्वाहा इति ॥१२॥ अथान्यत् प्रतिनिदधाति[६] घर्मो देवाँ अप्येतु इति नु यद्युपहितानाम् ।।१३।। अथ यद्युद्वास्यमानानामेता-मेव जूहुयात् त्रयस्त्रिꣳश[७]=स्वाहा घर्मो देवाँ अप्येतु स्वाहा इति ।।१४।।

## [ भिन्नकपालप्रायश्चित्तिः ]

अथातः कपालस्यैव भिन्नस्य ।।१५।। स यद्यप्रोक्षितानां[८] [९]भिद्येतान्य-दाहृत्याथ चेष्टेत्[९] ।।१६।। अथ यदि प्रोक्षित(-ानां भिद्येत गार्हपत्ये स्रुवा-हुतिं जूहुयात् अभिन्नो) घर्मो=रन्ति स्वाहा इति ।।१७।। अथान्यत् प्रति-निदधाति यद्दते चिदभिश्रिषः=पुनः इति ।।१८।। अथैनद्[१०] भस्मन्नुपो-हति।।१९।।

## [ दीर्णपात्राणां प्रायश्चित्तिः ]

[११]अथातः पात्राणामेव[११] दीर्णानाम् ।।२०।। स यद्यप्रोक्षितानां दीर्येतान्य-दाहृत्याथ चेष्टेत् ॥२१॥ अथ यदि प्रोक्षितानां [१२]दीर्येत तस्य[१२] नेदीयो (वा)[१३] दीर्येत [१४]गार्हपत्ये स्रुवा[१४](-हुतिं जुहुयात् विधुं द-)द्राणꣳ समने बहूनां युवानꣳ सन्तं पलितो जगार । देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समानः स्वाहा इति ॥२२॥ अथान्यत् प्रतिनिदधाति यद्दते चि=नः इति ॥२३॥ यदि दारुमयमन्वेनत्[१५] प्रहरति, अथ यदि मृन्मयं भस्मन्ने-वैनदुपोहति[१६] ॥२४॥ अथातः सान्नाय्यस्य स्कन्नस्य ॥२५॥ [५]

---

१. MHP om. २. MP om इन्द्र. ३. MHP °श्रुत्य. ४. MHP कपालः. 5. HP वाये. ६. H °दधामि. ७. P त्रियं°. ८. MHP यद्य : प्रोक्षि°. ९–९. H °त्याथाचष्टे°. १०. P अत्रैनद्मस्म°. ११–११. MHP अथात पोत्राणा°. १२–१२. MHP दीर्येतरस्य. १३. MHP om. १४–१४. MHP गार्हपत्यस्यव. १५. MHP दातृमय°. १६. Ao II.152.13 : अपोहति.

## [ स्कन्नसान्नाय्यप्रायश्चित्तिः ]

अथातः सान्नाय्यस्य स्कन्नस्य ॥१॥ (तन्नु हैतदेके स्वधाꣳ समिव सिञ्चन्ति सं त्वा सिञ्चामि यजुषा इति ॥२॥ मीमाꣳसैषा ॥३॥ उदपात्र-)[१] मुपनिनीयानुमन्त्रयेत भूपतये स्वाहा, भुवनपतये स्वाहा, भूतानां पतये स्वाहा इति ॥४॥ यद्यलं प्रचरणाय[२] स्यात् प्रचरेत्[३] ॥५॥ यदि सन्ततिरतिशिष्येत तूष्णीं भूयोऽभ्यानीय प्रचरेत् ॥६॥ अथ यदि सर्वमेव स्कन्देत्[४] सान्नाय्यावृता सान्नाय्यं दोहयेत् ॥७॥ अथ यदि सर्वमेव भिद्येत विधुं दद्राणम् इत्येताꣳ हुत्वा यद्दत्ते चिदभिश्रिषः इत्येतया प्रतिनिधाय सान्नाय्यावृतैव सान्नाय्यं दोहयेत् ॥८॥ अथ यद्यमेध्यतां[५] नीयाच्छ्वा वा पिबेत् कृष्ण-शकुनो वा कीटो वा प्रपतेदप एनदभ्यवहृत्य निर्णिज्य स्थालीं मार्जयित्वा सान्नाय्यावृतैव सान्नाय्यं दोहयेत् ॥९॥ [६]गथुनसो हार्क्षाकायणस्य[६] हस्ती सान्नाय्यं पपौ । स[७] ह स्म पर्यस्तश्चङ्क्रम्यते[८], यन्मर्या[९] इत्थमवेदिष्यामो हस्ती[१०] नः सान्नाय्यं पातेत्यन्वस्य[११] प्रायश्चित्तिमवक्ष्यामहीति[१२] ॥१०॥ तदु होवाचानुबुध्योद्दालक आरुणिः । अल्पो मर्या गग्लना आस, य एतावन्न विदाञ्चकार । यज्ञो वै[१३] यज्ञस्य प्रायश्चित्तिः, सान्नाय्यावृत् सान्नाय्यस्याग्निहोत्रावृदग्निहोत्रस्येति ॥११॥ सान्नाय्यावृता सान्नाय्यं दोहयेदिति ॥१२॥ सान्नाय्यावृतैव सान्नाय्यं दोहयति ॥१३॥

## [ स्कन्नाज्यप्रायश्चित्तिः ]

अथात आज्यस्यैव स्कन्नस्य ॥१४॥ तन्नु हैतदेके[१४] स्वधाꣳ समिव सिञ्चन्ति सं त्वा सिञ्चामि यजुषा इति ॥१५॥ मीमाꣳसैषा ॥१६॥ उदपात्र-मुपनिनीयान्वेवैतेन[१५] मन्त्रयेत भूपतये[१६]=स्वाहा इति ॥१७॥ यद्यलं प्रचरणाय स्यात् प्रचरेत् ॥१८॥ यदि सन्ततिरतिशिष्येत तूष्णीं (भू-)[१७] योऽभ्यानीय प्रचरेत् ॥१९॥ अथ यदि सर्वमेव स्कन्देदन्यदाहृत्य निरुप्याथ चेष्टेत् ॥२०॥ अथ यदि सर्वमेव भिद्येत विधुं दद्राणम्[१८] इत्येताꣳ हुत्वा यद्दत्ते चिदभिश्रिषः इत्येतया प्रतिनिधायान्यदाहृत्य निरुप्यैवाथ चेष्टेत्[१९] ॥२१॥

---

१. Cf below S.15–17; Ao II.156.3–5. २. MHP प्रहरणाय. ३. MHP प्रहरेत्. ४. MHP स्कन्दे. ५. P मध्यमेध्यता°. ६–६. H गथुन सहोर्क्षा°. ७. MHP om; thus Ao II. 150 : 13.3. ८. MH प्रयस्तश्चं° P प्रयस्तंश्चं°. ९. H यत्मया. १०. P हस्तिनः. ११. MHP वातेत्य°. १२. H °श्चित्त° महते; MP °र्महिति. १३.MHP वा; thus Ao II. 150 : 13.6. १४. MHP °देते. १५.Ao II.156.4 oms उप. १६.MHP;abr, see above S.4. १७. MHP om. १८. MHP द्राणम्. १९. MH चेष्टा°.

अथ यदि गृहीतानां स्कन्देदुदपात्रमुपनिनीयान्वेवैतेन मन्त्रयेत भूपतये= स्वाहा इति ॥२२॥ यद्यलं प्रचरणाय स्यात् प्रचरेत् ॥२३॥ यदि सन्ततिर-तिशिष्येत तूष्णीं भूयोऽभ्यानीय प्रचरेत् ॥२४॥ अथ यदि सर्वमेव [1]स्कन्दे-द्यस्या अभिस्कन्देत्तस्या[1] यजुर्भिर्गृह्णीयात् ॥२५॥ अथ यदि सर्वमेव भिद्येत विधुं दद्राणम् इत्येताꣳ हुत्वा यद्दते चिदभिश्रिषः इत्येतया प्रतिनिधाय तस्या एव यजुर्भिर्गृह्णीयात् ॥२६॥

[ आज्यावकाशोत्पवनम् ]

अथात आज्यावकाशस्यैव[2] ॥२७॥ तदवेक्षेत आज्यमसि सत्यमसि इति ॥२८॥ तन्नु हैतदेकेऽनवेक्ष्याज्यमुत्पुनन्ति ॥२९॥ स यदेवं कुर्यादाज्यमेव पुनीयान्नात्मानम् ॥३०॥ अथ यद्यवेक्ष्योत्पुनात्याज्येनैवात्मानं पुनीते, पवित्राभ्यामाज्यम् ॥३१॥ तस्मादवेक्ष्यैवोत्पुनीयात्[3] ॥३२॥

[ आज्यग्रहाणामनुमन्त्रणम् ]

अथात [4]आज्यग्रहाणामेव ॥३३॥ तन्नु[4] हैतदेक उदस्य पौरोडाशिका-नाज्यग्रहान् [5]यजमानयजूꣳषिकै (-रनुमन्त्रयन्ते) ॥३४॥ योनिर्वै[6] पौरोडा-शिका आज्यग्रहा आत्मा यजमानयजूꣳषिकाः। स यदेवं कुर्यादन्यत्र योने-रात्मानं दध्यात्तादृक् तत्[7] ॥३५॥ पौरोडाशिकैरेवाध्वर्युर्गृह्णीते[8] यजमान-यजूꣳषिकैर्यजमानोऽनुमन्त्रयेत। यथा योनौ रेतः सिञ्च्याद्योनावात्मानं दध्यात्तादृक् तत्[9] ॥३६॥ स जुह्वा(-माज्यं गृह्णाति) पञ्चानां त्वा इति ॥३७॥ [ ६ ]

पञ्चानां त्वा=जनानां यन्त्राय धर्त्राय गृह्णामि इति ॥१॥ कामाय त्वा इति पञ्चमीं, यदि पञ्चगृहोती ॥२॥ चतुर्थे वा काममनुवर्तयति ॥३॥ अथोपभृति चरोस्त्वा पञ्चबि=विशे त्वा यन्त्राय धर्त्राय गृह्णामि इति ॥४॥ कामाय त्वा इत्येव पञ्चमीं, यदि (पञ्चगृहीती) ॥५॥ चतुर्थे[10] वा काममनुवर्तयति ॥६॥ अथोपभृत्येव (सुवीर्याय त्वा)=गृह्णामि इति ॥७॥ कामाय त्वा इत्येव पञ्चमीं, यदि पञ्चगृहीती[11] ॥८॥ चतुर्थे वा काममनु-

---

१–१. MP °द्यस्या अधि [ P °स्याधि ]. २. P आज्याका° ३. MHP °देवेक्ष्यै°. ४–४. MHP °ग्रहणामेवान्नु. ५. MHP याजमानाय यजूंषि°; thus Ao II. 165.11. ६. MHP यानिर्वै. ७. MHP om तत्. ८. MHP °गृहीत. ९. MHP om. १०. MH चतुर्थो. ११. MHP पञ्चपञ्चगृहीतीति; thus Ao II 163.9.

वर्तयति ॥९॥ अथ ध्रुवायां भूरस्माकँ ह=ताभ्यो गृह्णामि इति ॥१०॥ कामाय त्वा इत्येव पञ्चमीं, यदि पञ्चगृहीती ॥११॥ चतुर्थे वा काममनुवर्तयति ॥१२॥

[ हविर्ग्रहणानुमन्त्रणम् ]

अथ परिधीन् परिधीयमानानभिमन्त्रयते[1] ॥१३॥ ध्रुवोऽसि=भूयासम् इति मध्यमम् । (°धीरश्चेत्ता वसुविद् इति ॥१४॥ उग्रोऽसि=भूयासम् इति दक्षिणार्ध्यम् । °उग्रश्चे-)त्ता वसुविद् इति॥१५॥अभिभूरस्य=भूयासम् इत्युत्तरार्ध्यम् । °अभिभूश्चेत्ता[2] वसुविद् इति ॥१६॥ अथ मध्यमं परिधिमन्वारभ्य जपति युनज्मि त्वा=ते इति ॥१७॥ [3]यन्म अग्ने इति प्रस्तरँ साद्यमानम् । अस्य[3]=उपस्थ (इति)[4] ॥१८॥ भूर्भुवः सुवः इति स्रुचः सन्नाः ॥१९॥ अथो आसन्नानि हवीँषि ॥२०॥ इध्ममाधीयमानमभिमन्त्रयते [5]अग्ने देवेद्ध[5]=मन्द्रजि(-ह्वा इति ॥२१॥ तदाहुः अग्ने देवेद्ध मन्द्रजिह्वा इति इध्मम्, अग्ने म-)न्विद्ध[6] मन्द्रजिह्वा[6] इति होतारमीक्षेतेति ॥२२॥ मीमाँसैषा ॥२३॥ समस्तेनेध्ममेवाधीयमानमभिमन्त्रयते ॥२४॥ वेदेनोपवाज्यमानम् उच्छुष्मो अग्ने=सते इति ॥२५॥ स्रुवेणाघारमाघार्यमाणम् मनोऽसि प्राजापत्यं मनसा मा भूतेनाऽऽविश इति ॥२६॥ स्रुग्भ्यामुत्तरम् वागस्यैन्द्री सपत्न(-क्षयणी=विश इति ॥२७॥ प्रवरं प्रव्रियमाणम् अमर्त्यस्य ते होतर्मूर्धन्नाजिघर्मि)[7] रायस्पोषाय=र्याय इति ॥२८॥ प्रयाजमिष्टमिष्टमनुमन्त्रयते[8] वसन्तमृतूनां[9]=प्रीणीताम् इति ॥२९॥ उभाविष्टावाज्यभागौ अग्नीषोमयोरहं देवयज्यया चक्षुष्मान् भूयासम् इति ॥३०॥ अग्नेरहं देवयज्ययाऽन्नादो भूयासम् इत्याग्नेयँ हविः ॥३१॥ दब्धिरस्यदब्धो भूयासममुं दभेयम् इत्युपाँशुयाजम् ॥३२॥ अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासम् इत्यग्नी-)षोमीयम् ॥३३॥ इन्द्राग्नियोरहं देवयज्ययेन्द्रियाव्यन्नादो भूयासम् इत्यैन्द्राग्नम् ॥३४॥ इन्द्रस्याहं देवयज्ययेन्द्रियावी भूयासम् इत्यैन्द्रम् ॥३५॥ महेन्द्रस्याहं देवयज्यया जेमानं महिमानं गमेयम् इति यदि महेन्द्रयाजी ॥३६॥ अग्नेः स्विष्टकृतोऽहं देवयज्ययाऽऽयुष्मान् यज्ञेन प्रतिष्ठां गमेयम् इति सौविष्टकृतम् ॥३७॥ [७]

[ इति द्वितीयोऽनुवाकः ]

---

1. P °मानाननुमन्त्र°. २. MHP °भूयेत्ता. ३–३. Emended. MHP न्त अग्न इति प्रस्तरं साद्यमानं यन्मे अग्न. ४.MHP om. ५–५.MHP नेदेवेध्म. ६–६. MHP सिद्धेतिमन्त्रजि°. ७. Cf BaudhŚS III. 18:89.14–15. ८. P. प्रयाजमिष्टमनु° ९. MHP वसन्तं मरूनां.

## [ इडाभागाद्यनुमन्त्रणम् ]

अग्निर्मा दुरिष्ट्या(-त्पातु इति प्राशित्रमवदीय-)मानमभिमन्त्रयते । अग्निर्मा दुरिष्टात् = जेषम् इति ॥१॥ इडामाह्रियमाणाम् सुरूपवर्षवर्ण[1] = स्वत्येहि इति ॥२॥ अवान्तरेडामवदीयमानाम्[2] रन्तिरसि रमतिरसि सूनर्यसि इति ॥३॥ तामेवोपाꣳशूपहूयमानाम्[3] जुष्टे जुष्टिं तेऽशीयोपहूत उपहवं तेऽशीय इति ॥४॥ उच्चैरुपहूयमानाम् सा मे सत्याऽऽशीरस्य = गमेयम्[4] (इति)[5] ॥५॥ तद्वै ब्राह्मणं भवति । यर्हि होतेडामुपह्वयेत तर्हि यजमानो = सृजति इति ॥६॥ स यत्राभिजानाति इडोपहूता इति तद् वायु[6] मनसा ध्यायति वायुष्टे वत्सस्तमुपावसृजामि[7], सा मे वायुना वत्सेन श्रद्धा तपोऽमुं कामं धुक्ष्व इति यं कामं[8] = पद्यते ॥७॥ बर्हिषदमष्टाकपालं कृत्वा ब्रध्न पिन्वस्व इति ॥८॥ अन्वाहार्यम्[9] प्रजापतेर्भागोऽसि इति ॥९॥ सन्ततिं हूयमानम् मनो ज्योतिर्जुषताम् इति ॥१०॥

अनूयाजमिष्टमिष्टमभिमन्त्रयते[10] वर्हिषोऽहं देवयज्यया = प्रतिष्ठां गमेयम् इति ॥११॥ अथ वाजवतीभ्याꣳ स्रुचौ व्यूहति वाजस्य मा प्रसवेन; उद्ग्राभं च निग्राभं च इति ॥१२॥ अथ यत्रोज्जितीर्होता[11] प्रतिपद्यते तद्यथादेवतमनुमन्त्रयते अग्नेरहमुज्जितिमनूज्जेषꣳ सोमस्य = स्विष्टकृतोऽहमुज्जितिमनूज्जेषम् इति ॥१३॥ ब्राह्मणमु वै भवति[12] एष वा अन्यो यज्ञस्य दोह इडायामन्यः । यर्हि = तर्हि ब्रूयाद् एमा अग्मन्नाशिषो दोहकामाः इति ॥१४॥ स यत्राभिजानात्याशास्ते अयं यजमानोऽसौ इति, तत् जपति एमा अग्मन्नाशिषो = मिषम् इति ॥१५॥ प्रस्तरं प्रह्रियमाणम्[13] रोहितेन त्वाऽग्निर्देवतां[14] = सूर्यो देवतां गमयतु इति ॥१६॥ अत्र प्रस्तरेण सह यजमानभागमनुप्रहरेत् ॥१७॥ यदि यजमानः प्रसवेत् प्रजापतेर्विमान्नाम = सह यजमानेन इति ॥१८॥ स[15] यत् सह यजमानेन इति ब्रूयात् प्रमायुको यजमानः स्यात् ॥१९॥ ब्राह्मणमु वै भवति अयं वै प्रजापतेर्विमान्नामलोकस्तस्मिन्नेवैनं

---

१. P गुरूप°. २. MH °न्तरे यामवदी°; P °न्तरे वर्षवर्ण यामवदी°. ३. MHP तामेवोपां हूय°. ४. MHP शयेत. ५. MHP om ६. MHP वायुमं°. ७. MHP वत्सन्त उपाव°. 8. MHP abr, see supra I.9.18. ९. MHP °हार्यें. १०. MHP °याजमिष्टमभि°, cf supra III.7.29. ११. MHP यत्रोजंतीं°. १२. MHP ins. इति after भवति. १३. MHP °माणां. १४. MHP देवता. १५. MHP सं.

दधाति सह यजमानेन इति ॥२०॥ तस्मादु काममेव सह यजमानेन इति ब्रूयात् कामम् अमुं यजमानस्य लोकः इति॥२१॥ अथ परिधीन् प्रह्रियमाणान् वि ते मुञ्चामि इति ॥२२॥ [८]

वि ते मुञ्चामि रशना = देवतासु इति ॥१॥ शंयुवाके विष्णोः शंयोरहं देवयज्यया यज्ञेन प्रतिष्ठां गमेयम् इति ॥२॥ अथ वेदे वेदोऽसि वित्तिरसि = = वाजिनम्[१] इत्यनुच्छन्दसम् ॥३॥ वेदे वेदोऽसि वित्तिरसि = विदेय[२] (इत्याह । वेदेन वै देवा असुराणां वित्तं वेद्यमविन्दन्त तद् वेदस्य वेदत्व-)मिति[३] । यद्यद् भ्रातृव्यस्याभि ध्यायेत् तस्य नाम गृह्णीयात् । तदेवास्य सर्वं वृङ्क्ते[४] ॥४॥ घृतवन्तं कुलायिनꣳ रायस्पोषꣳ सहस्रिणं [५]वेदो ददातु वाजिनम् इत्यनुब्राह्मणम्[५] ॥५॥ वेदे वेदोऽसि वित्तिरसि विदेयाहम्; साधुसनिरसि सनिताऽसि सनेयाहम् प्रजां पशून् सुवर्गं लोकम्; कर्मासि करुणमसि = जि(-न-)म् इति ॥६॥ [६]अथात्रैव वाऽऽसीनो[६] ( दक्षिणतोऽनु ) समेत्य वा पत्नीसंयाजमिष्टमिष्टमनुमन्त्रयते ॥७॥ सोमस्याहं = धिषीय इति सौम्यम् ॥८॥ त्वष्टुरहं देव = पुषेयम् इति त्वाष्ट्रम् ॥९॥ उभाविष्टावुत्तरौ[७] देवानां पत्नीरग्निर्गृहपति = प्र भूयासम् इति ॥१०॥ अथ प्राङेत्य ध्रुवामाप्याययति आप्यायतां ध्रुवा घृतेन इति॥११॥ अथ समिष्ट(-यजूꣳषि) जुहोति देवा गातुविदः इति ॥१२॥ अथ[८] यजमान-भागमनुप्रहरेद् यद्यमुत्र प्रहरेयुः[९] प्रजापतेर्विभान्नाम लोकः इति ॥१३॥ अथान्तर्वेदि[१०] प्रणीता आसाद्य दक्षिणत उपविश्य यजमानभागं प्राश्नाति ॥१४॥ व्रतोपेतस्यैषोऽवदीयत इत्याहुस्तथा हास्यान्तर्यज्ञं प्राशितो भवतीति ॥१५॥ अथाप आचम्यापो (न्यु-)प्य पूर्णपात्रमभिमृशति सदसि सन्मे भूयाः[११] इति ॥१६॥ अथ दिशो मार्जयते प्राच्यां दिशि देवा ऋत्विजो = मार्जयन्ताम् इति ॥१७॥ अथ तृचेनाञ्जलौ निनयते[१२] आपो हि ष्ठा मयोभुवः इति ॥१८॥ अथ द्वाभ्यामात्मानं विमृष्टे समिन्द्र णः सं वर्चसा इति ॥१९॥ अथोपोत्थाय दक्षिणं वेद्यन्तमनु विष्णुक्रमान् क्रमते ॥२०॥ उत्तरं वेद्या अꣳसमभि प्रच्यव-मानो दक्षिणं पादं पूर्वं प्रहरति ॥२१॥ सव्येनानु निक्रामति विष्णोः क्रमोऽस्य-भिमातिहा इति ॥२२॥ तन्नु हैतदेके चतुर्थेन पर्यायेण वेदिमभि प्रच्यवन्ते यजमानायतनं वै वेदिः । य एनं तत्र ब्रूयात् प्रायतनादच्योष्टाप्रतिष्ठितो

१. P वादिनम्. २. MHP विदेयादे. ३. MHP ष्यति for °मिति. ४. MP वृजे;. cf. BhārŚS IV.19.2. ५–५. MHP repeated. ६–६. MHP अथात्र वेवांसीनो. ७. HP उभौ विष्टा°. ८. MHP अत्र. ९. MHP प्रस्मरेयुं. १०. P °र्वेदी. ११. MHP भूयात्. १२. HP निनयतः

भवतीति ॥२३॥ अथाहात्रेव[1] स्यात् । तस्मात् तृतीय [2]एव स[2] पर्याये चतुर्थमनुवर्तयेत, प्रपदे वा विकर्षेद् विष्णोः क्रमोऽसि शत्रूयतो[3] हन्ता इति ॥२४॥ अथोपतिष्ठते ॥२५॥ प्राङ् प्रक्रामति अगन्म सुवः सुवरगन्म इति ॥२६॥ अथादित्यमुपतिष्ठते ॥२७॥ [ ९ ]

## [ आदित्योपस्थानम् ]

अथादित्यमुपतिष्ठते संदृशस्ते[4] मा छित्सि = सं ज्योतिषाऽभुवम् इत्यातः ॥१॥ ऐन्द्रीमावृतमन्वावर्ते इति दक्षिणा पर्यावर्तते ॥२॥ तदानीमेवोपावर्तते समहं प्रजया सं मया प्रजा इति ॥३॥ अथोपसमिन्धे समिद्धो[5] अग्ने मे[6] दीदिहि इति ॥४॥ अथोपतिष्ठते वसुमान् यज्ञो[7] वसीयान् भूयासम् इति ॥५॥ अथ द्वाभ्यामाग्निपावमानीभ्यां गार्हपत्यमभ्येति[8] अग्न आयूँषि पवसे; अग्ने पवस्व इति ॥६॥ अथोपतिष्ठते अग्ने गृहपते इति ॥७॥ आशिष आशास्ते शतँ हिमा = तन्तवे इत्यन्ततः ॥८॥ कस्त्वा युनक्ति स त्वा विमुञ्चतु इत्युलूखलमुसलं परेक्षते ॥९॥ यानि घर्मे कपालानि [9]इति कपालानि[9] । उपचिन्वन्ति वेधस. = विमुञ्चताम् इति ॥१०॥ अथ यज्ञस्य पुनरालम्भेन प्राङेति यज्ञो बभूव स आ बभूव इति ॥११॥ अथ प्राङुत्क्रम्य जपति गोमाँ अग्नेऽविमाँ अश्वी[10] यज्ञः इति ॥१२॥ अथोपवेषमादत्ते ॥१३॥ तं पुरस्तात्प्रत्यञ्चँ स्थविमत उत्तर उपगूहति यो नः कनीय=वीरवतीं[11] विदेय इति ॥१४॥ अथ दक्षिणतस्तिष्ठन् व्रतं विसृजते विक्रम्य विक्रम्य हीन्द्रो वृत्रमहन् समृद्ध्यँ इति ब्राह्मणम् ॥१५॥ पयस्वतीरोषधयः इति तिरःपवित्रमप आचामति । पयस्व = सँ सृज इति ॥१६॥ अग्ने व्रतपते इति मार्जयित्वा समिधमादधाति । व्रतमचारिषं = अराधि स्वाहा इति ॥१७॥ प्राण्यापानिति[12] ॥१८॥ प्राणेरात्मानमन्तरतः पूरयित्वाऽऽह इदमहँ सत्यादमृतमुपैमि इति ॥१९॥ सत्यं वै देवा अमृतँ सुवर्गो लोको, देवेभ्य एव तत् सुवर्गं लोकमुपैति ॥२०॥ अथ दक्षिणत उपविश्य पयोऽन्नु[13](-पिबति इदँ हविः प्रजननं)[14] मे अस्तु दशवीरँ सर्वगणँ स्वस्तये । आत्मसनि प्रजासनि पशुसन्यभयसनि लोकसनि

---

१.MHPअथाहैवा. २–२.MHP स एव. ३.MHP श्रूयतो [H°ते]. ४.M सदृशस्तो. ५. MHP समिन्धो. ६. MHP om. ७. P यज्ञे. ८. HP °मभ्यैति. ९–९. P oms. १०. MHP अश्वीय. ११. M र्पातं; HP °पती. १२. P °पानीति. १३. MHP पयोन्न. १४. Thus Ao II.150 : 16.1-2.

वृष्टिसनि[१]। अग्निः[२] प्रजां बहुलां मे करोतु। अन्नं पयो रेतो[३] अस्मासु धेहि इतीन्वावृत्[४] ॥२१॥ अथातो ब्राह्मणमेव यज्ञाद्वा एतद्यजमानो जायते यद्यजते। (तमेतं जातं) यज्ञमयं लोकमयं[५] प्राणमयममृतमयꣳ सꣳस्कुर्वन्ति। पयोभार्यो वै जातो भवति। नो वै जातायौदनं[६] न सक्तूनुपहरति। पयो वै जाताय प्रतिदधाति। स यथा ह वै दृतिः[७] शुष्को निष्पीत एवꣳ (ह) वा एष एतर्हि; यज्ञो (हैन-)मतिशुष्कं[८] निष्पीतमाप्याययति। स यत्पयोऽनुपिबत्यात्मानमेव तच्चन्द्रमसमाप्याययन्[९] मन्यते तस्मात्पयोऽनुपिबेत्, पयो न विसृजेत् ॥२२॥ [१०]

[ इति तृतीयोऽनुवाकः ]

## [ आग्रयणेष्टिः ]

आग्रयणेष्ट्या यक्ष्यमाणो नवाꣳश्च व्रीहीनुपकल्पयते, श्यामाकाꣳश्च ॥१॥ अमावास्येन ह(-वीꣳषि) निर्वपति—आग्नेयमष्टाकपालं, सौम्यꣳ श्यामाकं चरुम्, ऐन्द्राग्नं द्वादशकपालं, वैश्वदेवं चरुं द्यावापृथिव्यमेककपालम् ॥२॥ निरुप्ते प्राणग्रहाꣳश्च पृश्नीꣳश्च व्याचष्टे॥३॥तस्य हविष्कृता वाचं विसृज्य चतुर्गृहीतेन सप्तहोतृ(-नाहवनीये जुहोति अग्नये स्वाहा इत्येतान् ॥४॥ ऊर्ध्वा अस्य समिधो भवन्ति इति द्वादशाप्रीः ॥५॥ शतायुधाय शतवीर्याय इति पञ्चाज्यानीर्होतैव ॥६॥ वैतसात्त्रिꣳशत्तमः ॥७॥ श्रृतेषु [१०]हविःषु स्तम्बयजुर्हरति[१०] ॥८॥ वेदिं परिगृह्णाति॥९॥करणं जपति॥१०॥ प्रसिध्यति कर्मा समासादनात्[११] ॥११॥ समासन्नेऽपानग्रहाꣳ[१२](-श्च पृश्नीꣳश्च व्याचष्टे ॥१२॥ ध्रुवा असदन् यन्मे अग्ने इति समभिमृश्य)[१३] दशहोतारं व्याचष्टे ॥१३॥ अग्नये समिध्यमानायानु वाच आह ॥१४॥ सप्तदश सामिधेनीरन्वाह ॥१५॥ प्रसिध्यति कर्मा प्रयाजेभ्यः ॥१६॥ यज्ञं च मे प्रजां च इति प्रयाजानिष्टाननुमन्त्रयते। °सर्वं चायुः सुवर्गं च लोकं च ब्रह्म च मे क्षत्रं च कामदावत् इति ॥१७॥ आज्यभागौ यजति ॥१८॥ रयिमन्त(-त्वाज्यभागौ ॥१९॥ अग्नयेऽनुब्रूहि इत्याहाज्यस्य गृह्णानश्-)चतुः॥२०॥

१. MH °सनिः. Ao II. 150 : 16.3 oms. २. H अग्नि. ३. MH रेती. ४. H °तीत्वावृद्; P इति न्वावृद. ५. MHP वोक°. ६. MHP जातयोदनं. ७. MHP धृतिः. ८. MHP मीतं०; Ao II.151:16.9 : हैनं मीतं (?) शुष्कं. ९. MHP तद्यश्चन्द्र°; Ao II. 151 : 16.10 : तद् यं; fn1 यथा for यं. १०–१० MHP हविष्मत्तं यजु°. ११. MH °साधनात्; P कर्म समासाद्य°. १२. M ग्रहकागं; HP ग्रहकां. १३. See supra I.7.5–.6

  

अग्निना रयिमश्नवत् इत्यन्वाह ॥२१॥ जुषाणेन यजति ॥२२॥ वषट्कृते जुहोति ॥२३॥ सोमायानुब्रूहि इत्याहाज्यस्यैव[1] गृह्णानश्चतुः॥२४॥ गयस्फानो[2] अमीवहा इत्यन्वाह ॥२५॥ जुषाणेनैव[3] यजति ॥२६॥ वषट्कृते जुहोति ॥२७॥ अग्नयेऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥२८॥ अग्निर्मूर्धा इत्यन्वाह ॥२९॥ भुवः इति (यजति ॥३०॥ वषट्कृते जुहोति ॥३१॥ सोमायानुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥३२॥ त्वं नः सोम विश्वतः इत्यन्वाह ॥३३॥ या ते धामानि इति यजति ॥३४॥ वषट्कृते जुहोति ॥३५॥ इन्द्राग्निभ्यामनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥३६॥ इन्द्राग्नी रोचना दिवः इत्यन्वाह ॥३७॥ श्नथद्वृत्रम् इति यजति ॥३८॥ वषट्कृते जुहोति ॥३९॥ विश्वेभ्यो देवेभ्यो (-ऽनुब्रूहि इत्याहोप-)स्तृणानोऽवद्यन् ॥४०॥ विश्वेदेवा ऋतावृधः इत्यन्वाह ॥४१॥ विश्वेदेवाः शृणुतेमꣳ [4]हवं मे[4] इति यजति ॥४२॥ वषट्कृते जुहोति ॥४३॥ द्यावापृथिवीभ्यामनुब्रूहि इत्याहोपस्तीर्णाभिघारितमेककपालमादधानः ॥४४॥ द्यावा नः पृथिवी इमम् इत्यन्वाह ॥४५॥ प्र पूर्वजे इति यजति ॥४६॥ वषट्कृते जुहोति ॥४७॥ अनुयज्ञैः इत्येककपालꣳ हुतमनुमन्त्रयते ॥४८॥ [११]

अनुयज्ञैः इत्येककपालꣳ हुतमनुमन्त्रयते । 'अनु राध्याम[5] गोभिरन्वश्वैरनु[6] विश्वैरनु पुष्टैरनु प्रजयाऽन्विन्द्रियेण देवा नो यज्ञमृजुधा[7] नयन्तु[8] इति ॥१॥ स यदि पर्यावर्तेतर्जुꣳ स्थापयित्वा याज्यापुरोऽनुवाक्याभ्यामभिहृत्य[9] द्वाभ्यामुत्तराभ्यामभि जुहुयात् प्रति यज्ञैः प्रतिष्ठा धनेन प्रत्यश्वैः प्रति विश्वेन पुष्टेन प्रति प्रजया प्रतीन्द्रियेण वैश्वानरो नो अदब्धः स्वस्त्यन्तरा पातु दुरितानि विश्वा स्वाहा; सं ते तराꣳसि[10] सं ते वचाꣳसि सं ते पयाꣳसि सं ते वपूꣳषि[11] सं ते पर्वाणि पर्व नो यज्ञियं[12] तु स्वाहा इति ॥२॥ अग्नये स्विष्टकृतेऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥३॥ सकृत्सकृदुत्तरार्धात्सर्वेषाꣳ हविषामवद्यति ॥४॥ आशयादेककपालस्यावदाय द्विरभिघारयति ॥५॥ न प्रत्यानक्ति ॥६॥ गायत्रियौ संयाज्ये ॥७॥ अग्निꣳ स्तोमेन बोधय इत्यन्वाह ॥८॥ स हव्यवाट् इति यजति ॥९॥ वषट्कृते जुहोति ॥१०॥ अत्याक्रम्य[13]

१. MHP °त्याज्य°. २. MP शयस्पानो; H शयस्फानो. ३. MH जुषमाणे°. ४–४. MP हवमु. ५. MHP राध्यमा. ६. MHP नोभिरन्व°. ७. MH यजुमृ°. ८. MHP नयतु. ९. MP °भिहृत्य. १०. P शंसि. ११. MHP वरूंषि. १२. MHP यज्ञयं. १३. H आक्रम्य.

यथाऽऽयतनᳪ (स्रुचौ)[1] सादयित्वा प्राशित्रमवद्यति ।।११।। अप उपस्पृश्येडामवद्यति ।।१२।। उपहूतायामिडायामग्नीध आदधाति ।।१३।। प्राश्नन्ति ।।१४।। मार्जयन्ते ।।१५।। परिहरन्ति ब्रह्मणे ॥१६॥ प्राशिते[2] प्राशित्रेऽग्नीदुदपात्रेणोत्कर उपसीदति ॥१७॥ वासो ददाति ॥१८॥ प्रथमजं वत्सं ददाति ।।१९।। [3]यस्य श्रपणं[3] तस्य खारीं ददाति ।।२०।। सन्ततिमनु होतुराहुतिं जुहोति ।।२१।। प्रसिध्यति कर्म[4] पत्नीहोमात् ।।२२।। पत्नीहोममनु द्वे स्रुवाहुती[5] जुहोति त्वं दूतः; संवत्सरस्य प्रतिमाम् इति ।।२३।। प्रसिध्यति [6]कर्म सौम्यात्[6] ।।२४।। इतरेषाᳪ हविषाᳪ समवदाय भद्रान्नः श्रेयः समनैष्ट देवाः इति दक्षिणत उपविश्य त्रियंजमानभागं प्राश्नाति । [7]त्वयाऽवसेन[7]=स्योनः इति ।।२५।। प्रसिध्यति कर्म ।।२६।। सन्तिष्ठत (एषेष्टिः)[8] ॥२७।। [१२] [ इति चतुर्थोऽनुवाकः ]

॥ इत्याग्रयणेष्टिः ।।

## [ ब्रह्मत्वम् ]

ब्रह्मा वृतो भवति ॥१॥ स यज्ञोपवीतं कृत्वाऽप आचम्य द्वाभ्यामात्मन्नग्निं गृह्णीते मयि गृह्णाम्यग्रे अग्निᳪ( रायस्पोषाय; यो ) नो अग्निः पितरो हृत्स्वन्तः इति॥२॥हस्तौ संमृशते कर्मणे वां देवेभ्यः शकेयम्; शक्त्यै वाᳪ सुकृताय वाम् इति ॥३॥ बृहस्पतिर्ब्रह्मा इत्यन्तरा वेदिं चोत्करं च प्रपद्यते। स यज्ञं पातु स यज्ञपतिं पातु स मां पातु स यज्ञन्यम् इति॥४॥अपरेण वेदिमत्याक्रम्य अहे दैधिषव्य इत्यु(-पतिष्ठते ) यत्रो(-पवेक्ष्यन् भवति । [9]उदत-)[9] स्तिष्ठान्यस्य=योऽस्मत्पाकतरः इति ॥५॥ [10]निरस्तः परावसुः[10] इति तृणं निरस्यति ॥६॥ इदमहमायुषः सदने सीदामि[11] इत्युपस्थं कृत्वोपविशति ॥७॥ उपविश्य जपति देव सवितरेतं त्वा वृणुते बृहस्पतिं दैव्यं ब्रह्माणं तत्त्वं मनसे[12] प्रब्रूहि, मनो गायत्रियैं, गायत्री ( त्रिष्टुभे )[13] त्रिष्टुब् जगत्यै; जगत्यनुष्टुभेऽनुष्टुप् पङ्क्त्यै, पङ्क्तिर्वसुभ्यो; वसवो रुद्रेभ्यो रुद्रा आदित्येभ्य आदित्या विश्वेभ्यो देवेभ्यो विश्वे देवा बृहस्पतये बृहस्पतिर्ब्रह्मणे ब्रह्म भूर्भुवः सुवर्बृहस्पतिर्देवानां ब्रह्माऽहं मनुष्याणां

१. MHP om. २ MHP प्राशित्रे. ३–३. MHP यस्याश्रयणं. ४. MHP कर्म. ५. M °हुतिञ्जु°; H °हुति. ६–६. MHP कर्म सौम्य. ७. MHP त्वयावसाने. ८. MHP om. ९. Cf BhārŚS XIII. 21.11. १०-१०. MHP निरस्ततप°. ११. P सीदामित्यु°; H सीदमित्यु°. १२. MHP मुनसे. १३. MHP om.

तꣳ स ऋच्छताद्[1] योऽस्मेऽन्ववापदादुप[2] वा मीमाꣳसातै भूर्भुवः सुवरोमहमसौ मानुषः इति ॥८॥ प्रणीतासु प्रणीयमानासु वाचं य(-च्छ-)त्या[3] हविष्कृतः ॥९॥स यत्राह ब्रह्मन्नपः प्रणयिष्यामि यजमान वाचं यच्छ इति तत्प्रसुवति प्रणय[4] यज्ञं देवता वर्धयैता नाकस्य पृष्ठे यजमानो अस्तु । सप्तर्षीणांꣳ सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेह्यों प्रणय इति ॥१०॥स्तम्बयजुषि [5]ह्रियमाणे (वाचं यच्छ-)त्योत्तरस्मा[5]त्परिग्राहात्[6] ॥११॥ स यत्राह ब्रह्मन्नुत्तरं परिग्राहं परिग्रहीष्यामि इति तत्प्रसुवति[6] बृहस्पते परिगृहाण वेदिं प्रिया देवानाꣳ स्योना नो अस्तु । स्तृणीत बर्हिरन्तरस्या उपस्थे शिवो नो अस्त्वदित्या [7]उपस्थ ओं परिगृहाण[7] इति ॥१२॥ सामिधेनीष्वनूच्यमानासु वाचं यच्छत्या परिधानात् ॥१३॥ अनूच्यमानायां[8] पुरोनुवाक्यामा वषट्कारात् ॥१४॥ स यत्रर्चा वा यजुषा वा करोति तद्वाचं यच्छत्या परिधानात् ॥१५॥ स यदन्तरेण वाचं विसृजेत यज्ञं विच्छिन्द्यात् ॥१६॥ अथ यदि प्रमत्तो विसृजेत वैष्णवीमृचमनुब्रूयात् विष्णो[9] त्वं नो अन्तमः शर्म यच्छ सहन्त्य । प्र ते[10] धारा मधुश्च्युत उत्सन्दुह्रते अक्षितम् इति ॥१७॥ प्राशित्रेऽवदीयमाने वाचं यच्छति ॥१८॥ [१३]

प्राशित्रेऽवदीयमाने वाचं यच्छत्या प्रसवात् ॥१॥ स यत्रास्मै प्राशित्रं परिहरति तदप उपस्पृश्य प्रतीक्षते सूर्यस्य त्वा चक्षुषा प्रति पश्यामि इति ॥२॥ देवस्य त्वा सवितुः=हस्ताभ्यां प्रतिगृह्णामि इति परिगृह्णाति ॥३॥ पृथिव्यास्त्वोपस्थे सादयामि इति सादयति ॥४॥ आभ्याꣳ हैके प्राश्नन्ति[11] ॥५॥तदनादृत्याभ्यामेव[12] प्राश्नीयात् अग्नेस्त्वाऽऽस्येन[13] प्राश्नामि इत्यद्भिरभिश्च्योत्यातिहायैव दन्तान् । [14]ब्राह्मणस्योदरेण बृहस्पतेर्ब्रह्मणा इति ॥६॥ अग्रेण दक्षिणं जान्वेतां दिशꣳ संक्षालं निनीय, निर्णिज्य प्राशित्रहरणं, ब्रह्मभागमस्मिन्नवधायाद्भिर्मार्जयित्वा प्राणान् संमृशते वाङ् म आसन् नसोः=

---

१. MHP °तान्. २. MP योमोन्व°. ३. MP यम्या; H यस्या. ४. Cf. BaudhŚS III. 24 : 96:1 : देव सवितः प्रणय; BhārŚS III. 16.1 : हिं प्रणय. ५–५. MHP ह्रियमाणदुत्तरस्मा°. ६. MHP repeat ब्रह्मा परिग्रहीष्यामीति तत्प्रसुवति after प्रसुवति. ७–७. MHP उपस्थं परि°. ८. MHP twice. ९. HP om. १०. MHP व्रते. ११. HP repeat आभ्यामेके after प्राश्नन्ति. १२. MH तदाना°. १३. MHP °स्त्वास्यौ.

ऊर्ब्वोरोजोऽरिष्टा[1] ( विश्वान्य-)ङ्गानि = मा मा हिꣳसीः इति ॥७॥ ( स )[2] यत्राह ब्रह्मन् प्रस्थास्यामः[3] समिधमाधायाग्नीदग्निꣳ सकृत्सकृत् समृड्ढि इति तत्प्रसुवति देव सवितरेतत्ते प्राह तत् प्र च[4] सुव प्र च यज बृहस्पतिर्ब्रह्मा; स यज्ञं पाहि यज्ञपतिं पाहि स मां पाहि यज्ञन्यं भूर्भुवः सुवरों प्रतिष्ठ इति ॥८॥ स यदभक्त[5] वाचंयमः स्यात् ( पितृदेवत्यो भवेद् ), बहु भाषेत यज्ञं विच्छिन्द्यात् ॥९॥ स 'यत्तीर्थे तीर्थे'[6] वाचं यच्छति तन्न[7] पितृदेवत्यो भवति[8], न यज्ञं विच्छिनत्ति ॥१०॥ समिष्टयजुषि हुत एतेनैव यथैतं[9] निष्क्रम्य द्वौ शकलावाहवनीये प्रास्यति यन्म आत्मनो मिन्दाऽभूत्; पुनरग्निश्चक्षुरदात् इति ॥११॥ एते(-नैव ब्रह्मा भवति दर्शपूर्णमासयोरिष्टीनां चा-)[10]तुर्मास्यानां पशुबन्धस्य ॥१२॥ ( स )[11] यत्रास्मै पुरोडाशं परिहरति तदप उपस्पृश्यैव मनसा प्रतीक्षते ॥१३॥ एवं मनसा प्रतिगृह्णाति ॥१४॥ एवं मनसा प्राणेन प्राश्नाति ॥१५॥ एवमप उपस्पृश्य मनसा प्राणान् संमृशते ॥१६॥

[ १४ ] [ इति पञ्चमोऽनुवाकः ]

एतेनैव दीक्षणीयस्य ब्रह्मा (भवति ॥१॥ स यत्राह ब्रह्म-)न् प्रचरिष्यामो होतर्घर्ममभिष्टुहि इति तद्दिवाकीर्त्यामृचमभिव्याहृत्य ब्रह्मा प्रसुवति॥२॥अथ यत्र प्राञ्चं महावीरꣳ हरति तद्दक्षिणतोऽनुसमेत्य प्रचरतां दक्षिणतस्तिष्ठति ॥३॥ एतेनैवोपसदां[12] ब्रह्मा भवति ॥४॥महावेद्यै[13] स्तम्बयजुषि ह्रियमाणे[14] दक्षिणत आ(-स्ते ॥५॥ राज्ञो आसा-)द्यमानस्य दक्षिणत आस्ते ॥६॥ [15]अग्रेह्रियमाणस्य[15] दक्षिणत एति॥७॥ उत्तरस्य परिग्राहस्य दक्षिणत आस्ते ॥८॥ हविर्धानयोः प्रोह्यमाणयोर्दक्षिणत एति ॥९॥ औदुम्बर्या उच्छ्रियमाणायै दक्षिणतस्तिष्ठति ॥१०॥ उपरवाणां चेष्यमाणानां दक्षिण(-त आस्ते ॥११॥ उप-)स्थे राजानं कृत्वा वैसर्जनानाꣳ हूयमानानां दक्षिणत आस्ते ॥१२॥ अग्नीषोमयोः प्रणीयमानयोर्दक्षिणत एति ॥१३॥ पुराऽग्नेः सादना-

१. MHP उरवोरोजपेदष्ठीवयोर्जवोरिष्टा. २. MHP om. ३. MHP ins इति after प्रस्थास्यामः. ४. MP om. ५. P यदमवतं. ६-६. H तीर्थे once. ७. MHP तत्. ८. Caland in Ao II.151 : 17.3 fn 2. expresses his doubt about the wholeness of the sentence. ९. HP यथैतत्. १०. Cf BaudhŚS III. 25 : 98.2–3. ११. MHP om. १२. H °वोपसद्यं. १३. H °वेद्य. १४. MHP प्रियमाणे. १५-१५. M HP अग्ने प्रियमाणस्य.

दुत्तरेणाग्नीध्रियं धिष्णियं परीत्य दक्षिणतस्तिष्ठति ॥१४॥ सन्नेऽग्नौ प्राञ्च [१]आयन्ति ॥१५॥ अध्वर्यवे[१] राजानꣳ संप्रदाय (....) प्रदक्षिणꣳ हविर्धानमुपविश्याग्नीषोमीयस्य पशोर्दक्षिणत आस्ते ॥१६॥वसतीवरीणां परिह्रियमाणानां दक्षिणतस्तिष्ठति ॥१७॥ आग्नीध्रे संवसन्ते ॥१८॥ स यत्रैनं प्रातरनुवाकाय बोधयन्ति स यज्ञोपवीतं कृत्वाऽप आचम्य द्वाभ्यामात्मन्नग्निं गृहीत्वैवमेवा(-न्तरा वेदिं चोत्करं च ) प्रपद्य पूर्वेण हविर्धाने अपरेणाहवनीयं गत्वा[२]ऽग्रेण दक्षिणꣳ हविर्धानमुपविश्योपाकृते प्रातरनुवाके वाचं यच्छत्या परिधानात् ॥१९॥ परिहिते प्रातरनुवाके पूर्वया द्वारा हविर्धानं प्रपद्योत्तरेण ध्रुवस्थालीं [३]परीत्यापरेणा(-भिषूय-)माणस्य दक्षिणत आस्ते ॥२०॥ ग्रहाणां[४] गृह्यमाणानां दक्षिणत आस्ते ॥२१॥ स यत्र ग्रहान् गृहीत्वा बहिष्पवमानाय सर्पन्ति तदुद्गातॄनन्वारभ्य ब्रह्मा स्रुवाहुतिं[५] जुहोति बृहस्पते ॥२२॥ [१५] ॥

बृहस्पते अति यदर्यो अर्हा = चित्रꣳ स्वाहा इति ॥१॥ अथोदञ्चꣳ[६] स्तुत्वा बहिष्पवमानायोप(-विश्य ) स यत्राह ब्रह्मन् स्तोष्यामः, प्रशास्तः[७] इत्याह प्रस्तोता, देव सवितरेतत्ते प्राह इति प्रसवं जपति ब्रह्मा । °तत् प्र च सुव प्र च यज बृहस्पतिर्ब्रह्माऽऽयुष्मत्या = स्तुत देवस्य सवितुः प्रसव इन्द्रवन्त स्तुत इति ॥२॥ त्रिराह[८] रश्मिरसि क्षयाय त्वा क्षयं जिन्व इति ॥३॥ मनसा स्तुते बहिष्पवमान एतेनैव यथेतमागत्याग्रेण दक्षिणꣳ हविर्धानमुपविश्य सवनीयस्य पशोर्दक्षिणत आस्ते ॥४॥ तस्य वपाꣳ हुत्वा मार्जयित्वा सं प्रसर्पन्ति ॥५॥ प्रसिद्धꣳ[९] सꣳसर्पणम् ॥६॥ उत्तरेण हविर्धाने दक्षिणेनाग्नीध्रमुत्तरेणाग्नीध्रीयमग्निं गत्वोत्तरेण सदः परीत्यापरया द्वारा सदः प्रसप्स्यन् देवी द्वारौ मा मा सं ताप्तम् इति सदसो द्वारौ समीक्षते[१०]॥७॥ नमः सदसे इति सदः प्रेक्षते[११] ॥८॥ नमः सदसस्पतये इति यजमानम् ॥९॥ नमः सखीनां पुरोगाणां चक्षुषे इति पूर्वप्रसृप्तानामक्षीणीक्षते ॥१०॥ नमो दिवे नमः पृथिव्यै इत्यपरेणौदुम्बरीं गत्वैवमेव सदसो दक्षिणार्धात् तृणमुदस्यति ॥११॥ एवमुपविशति ॥१२॥ एवमुपविश्य जपति ॥१३॥ उपाकृतेषु पवमानेषु वाचं यच्छत्या

१-१. MH °ध्वर्यवो; P आयन्त्वध्वर्यवो. २. MHP दत्वा. ३. MHP परीत्यापरेणापर. ४. MHP ग्रहणां. ५. MHP °हुतिर्. ६. MHP °दञ्च. ७. MP प्रशस्तर्. ८. MHP निराह. ९. H प्रसिद्ध. १०. MHP °क्षन्ते. ११. MHP प्रैक्षते.

परिधानाद्, आवषट्कारादितरेषाꣳ स्तुतशस्त्राणम् ॥१४॥ स यत्रर्चा वा यजुषा वा करोति तद्वाचं यच्छति इति समानी मीमाꣳसा ॥१५॥ एतेनैव प्रातःसवनस्य ब्रह्मा भवति ॥१६॥ एतेन माध्यन्दिनस्य सवनस्य ॥१७॥ एतेन तृतीयसवनस्य ॥१८॥ स यत्रावभृथमवयन्ति[1] तद्दक्षिणतोऽनुसमेत्य प्रचरतां दक्षिणतस्तिष्ठति ॥१९॥ एतेनैवोदयनीयस्य[2] ब्रह्मा भवति ॥२०॥ एतेनानूबन्ध्यस्योदवसानीयस्य[3] ॥२१॥ स यदि यज्ञ ऋक्तो भ्रेषं नीयात् ब्रह्मणे प्रब्रूत इति ब्रूयात् ॥२२॥ यदि यजुष्टो यदि सामतो ब्रह्मणे प्रब्रूत इत्येव ब्रूयात् ॥२३॥ स यदि यज्ञ ऋक्तो भ्रेषं नीयात् (भूः)[4] स्वाहा इति स्रुवाहुतिमाग्नीध्रे जुहुयात् ॥२४॥ यदि यजुष्टो भुवः स्वाहा इति स्रुवाहुति-माग्नीध्र[5] एव[6] जुहुयात् ॥२५॥ यदि सामतः सुवः स्वाहा इति स्रुवाहुतिमा-ग्नीध्र एव जुहुयात् ॥२६॥ अथ यदि सर्वत एव यज्ञो भ्रेषं नीयादविज्ञाताद्वा कुत इदमजनि इति गार्हपत्य आज्यं विलाप्योत्पूय स्रुवं च स्रुचं च संमृज्या-त्रैव समिधं निगृह्य ब्रह्माणं दक्षिणतो निषाद्य प्राङेत्य तृणेषु कूर्चे वोपसाद्य समिधमाधायाहवनीये[7] जुहुयात् मनो ज्योतिर्जुषतामाज्यमरिष्टं यज्ञꣳ समिमं[8] दधातु । बृहस्पतिस्तनुतामिमं नो विश्वे देवा इह मादयन्तां भूर्भुवः सुवः स्वाहा इति ॥२७॥ सैषा सर्वप्रायश्चित्तिः ॥२८॥ स ह वाव[9] ब्रह्मा य एवं वेद ॥२९॥ तस्मादेवंविदमेव ब्रह्माणं कुर्वीत ॥३०॥ एतेनैवाग्निष्टो-मस्य ब्र(-ह्मा भवति ॥३१॥ एतेनैवो-)क्थ्यस्य ॥३२॥ एतेन षोडशिनः ॥३३॥ एतेनातिरात्रस्य ॥३४॥ एतेनाप्तोर्यामस्य ॥३५॥ एतेन वाजपेयस्य ॥३६॥ [10]एतेन राजसूयस्य[10] ॥३७॥ एतेनाश्वमेधयोः ॥३८॥ एतेन सर्वेषां यज्ञक्रतूनाम् ॥३९॥ [१६]

[ इति षष्ठोऽनुवाकः ]

॥ इति ब्रह्मत्वम् ॥

[ इति तृतीयः प्रपाठकः ]

---

१. H °भृशमव°; P भृतमव°. २. MH एकेनैवोद°. ३. MH °वसानस्य. ४. MHP om. ५. MHP ध्रुवाहुति°. ६. MHP एवं. ७. P हवनीयं. ८. P समिधं. ९. MH वाप. १०–१०. P oms.

# अथ चतुर्थः प्रपाठकः

## [ चातुर्मास्यानि ]

### [ वैश्वदेवपर्व ]

शिशिरेऽर्धकक्षमुपोषति[1] ॥१॥ ता वसन्ता[2] प्रसुवो भवन्ति ॥२॥ श्वः(फाल्-)गुभिः पौर्णमासीत्यग्निहोत्रोच्छिष्टमातच्य[3] निदधाति हविरातञ्चनाय ॥ ॥ उत्परेत्य[4] पलाशशाखामाच्छिनत्ति इषे त्वोर्जे त्वा इति ॥४॥ तयाऽऽगत्य वत्सानपाकरोति वायवः स्थोपायवः स्थ इति ॥५॥ देवो वः सविता प्रेरयतु इति गा अनुमन्त्रयते । °श्रेष्ठतमाय कर्मण आप्यायध्वमघ्निया विश्वेभ्यो देवेभ्यो भागमूर्जस्वतीः पयस्वतीः इति ॥६॥ प्रसिध्यति (कर्म,[5] ॥७॥ देवस्य त्वा सवितुः प्रसवे इत्यसिदमादायोत्परैति[6] ॥८॥ कक्षस्यार्धमुपोषति[7] ॥९॥ प्रसुवो लुनाति ॥१०॥ प्रस्तरमापूर्य निदधाति ॥११॥ बर्हिर्लुनाति ॥१२॥ [8]तत् त्रेधा[8] सन्नह्यति ॥१३॥ एकस्मिन् प्रस्तरमुपनह्यति ॥१४॥ तदेकधा पुनः सन्नह्यति ॥१५॥ प्रसिद्धमितरत् ॥१६॥ बर्हिर्लुनाति ॥१७॥ आरम्भणीयाया इष्ट्या[9] आहरन्नेति ॥१८॥

यज्ञायुधानि सँसाद्यापः प्रणीयारम्भणीयामिष्टिं निर्वपति प्राजापत्यं द्वादशकपालम् ( ऋतव्यं चरुं वैश्वानरं द्वादशकपालं)[10] पार्जन्यं चरुं वैष्णवं त्रिकपालम् ॥१९॥ निरुप्ते प्राणग्रहाँश्च पृश्नीँश्च व्याचष्टे ॥२०॥ समासन्नेऽपानग्रहाँश्च पृश्नीँश्च[11] दशहोतारं व्याचष्टे ॥२१॥ तस्यै वार्त्रघ्नावाज्यभागौ ॥२२॥ प्रजापतयेऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥२३॥ प्रजापते न त्वदेतान्यन्यः इत्यन्वाह ॥२४॥ स वेद इति यजति ॥२५॥ वषट्कृते जुहोति ॥२६॥ ऋतुभ्योऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥२७॥ ग्रीष्मो हेमन्तः इत्यन्वाह ॥२८॥ इदुवत्सराय इति यजति ॥२९॥ वषट्कृते जुहोति ॥३०॥ वैश्वानरायानुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥३१॥

---

१. MHP °रेक्षकक्षमुपैषति [ M °मुपौ ]. २. H वसन्तो. ३. HP °मास्यहोरात्रमुच्छिष्ट°. ४. MHP °त्परेपरेत्य. ५. MHP om. ६. HP परेति. ७. MHP तक्षस्यार्घ्यमुपैषति [ M. °स्यार्घं यमु° ]. ८–८. HP तत्रेडा. ९. MHP इष्टस्ते. १०. MHP om. ११. MHP abr, see supra I.7.5-6.

वैश्वानराय पृथुपाजसे[१] इत्यन्वाह। °विपो[२] रत्ना विधन्त धरुणेषु गातवे[३]। अग्निर्हि देवाँ अमृतो दुवस्यत्यथा धर्माणि सनता न दूदुषद् इति ॥३२॥ त्वमग्ने इति यजति। °शोचिषा[४] शोशुचान आ रोदसी अपृणा[५] जायमानः। त्वं देवाँ[६] अभिशस्तेरमुञ्चो वैश्वानर[७] जातवेदो महित्वा इति ॥३३॥ वषट्कृते जुहोति ॥३४॥ पर्जन्यायानुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥३५॥ पर्जन्याय प्र गायत इत्यन्वाह। °दिवस्पुत्राय मीढुषे। स नो यवसमिच्छतु इति ॥३६॥ अच्छा वद तवसम्[८] इति यजति। °गीर्भिरुक्थैः[९] स्तुहि पर्जन्यं नमसा विवास। अभिक्रन्दन् वृषभो वाजिनीवाञ्रेतो दधात्वोषधीषु गर्भम् इति ॥३७॥ वषट्कृते जुहोति ॥३८॥ विष्णवेऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥३९॥ इदं विष्णुर्विचक्रमे इत्यन्वाह॥४०॥तदस्य प्रियमभि पाथो अश्याम् इति यजति। °नरो यत्र देवयवो मदन्ति=उत्सः[१०] इति ॥४१॥ वषट्कृते जुहोति ॥४२॥ त्रिष्टुभौ संयाज्ये ॥४३॥ तस्यै[११] दक्षिणा अनड्वान् वत्सतर्‍यृषभो धेनुर्वामनः ॥४४॥ सन्ततिमनु होतुराहुतिं जुहोति ॥४५॥ प्रसिध्यति कर्म ॥४६॥ सन्तिष्ठत आरम्भणीयेष्टिः ॥४७॥

सायं निर्णिक्तैः पात्रैर्गा आयतीः[१२] प्रतीक्षते एता आचरन्ति मधुमद्दुहानाः इति॥४८॥ हुत्वाऽग्निहोत्रꣳ सान्नाय्यं दोहयति (बहु दुग्धि) विश्वेभ्यो देवेभ्यो हविः इति ॥४९॥ विश्वे त्वा देवा वैश्वानराः श्रीणन्तु[१३] इत्येनत्प्रतिष्ठापयति ॥५०॥ विश्वेषां त्वा देवानां भागꣳ सोमेनातनच्मि इति हविरातञ्चनेनातनक्ति ॥५१॥ अदस्तमसि[१४] विश्वेभ्यस्त्वा देवेभ्यः इत्युदन्वता पात्रेणापिदधाति ॥५२॥ अग्ने हव्यꣳ रक्ष इति त(-त् यत्र गुप्तं मन्यते तन्नि-)[१५]दधाति ॥५३॥ एवमेव प्रातरग्निहोत्रꣳ हुत्वा सान्नाय्यं दोहयति ॥५४॥ [१६]नात्र प्रतीक्षते ॥५५॥ नाभिद्योतयति[१६] ॥५६॥ नापः प्रत्यानयति ॥५७॥ नातनक्ति संक्षालनान्तम्[१७] ॥५८॥ यज्ञायुधानि सꣳसाद्यापः प्रणीय वैश्वदेवꣳ हविर्निर्वपत्याग्नेयमष्टाकपालम् ॥५९॥ [१]

---

१. MHP वाजसे. २. MHP विवो. ३. P गातेव. ४. MH शोशुचा. ५. MHP अवृणा. ६. P देवम्. ७. MP °नरो. ८. MH तमसम्. ९. MHP रुक्तै. १०. MHP उक्थः. ११. MHP तत्यै. १२. MHP आयतीं. १३. MHP त्रीणिन्तु. १४. MHP अदस्त्वमसिं. १५. MHP broken, cf infra IV.5.17. १६. H repeats. १७. M संक्षालान्तं; P संक्षालन्तं; H स ंक्षालानान्तं.

आग्नेयमष्टाकपालꣳ निर्वपति (सौम्यं चरुꣳ सावित्रं द्वाद-)शकपालं सारस्वतं चरुं पौष्णं चरुं मारुतं सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालम् ॥१॥ निरुप्ते प्राणग्रहाꣳश्च पृश्नीꣳश्च व्याचष्टे ॥२॥ तस्य हविष्कृता वाचं विसृज्य चतुर्गृहीतेन पञ्चहोतारमाहवनीये जुहुयात् ॥३॥ (शृते)वा दध्यानयति दधनि वा शृतम् ॥४॥ शृतेषु हविःषु स्तम्बयजुर्हरति ॥५॥ वेदिं परिगृह्णाति ॥६॥ करणं जपति ॥७॥ प्रसूत उत्तरं परिग्राहं परिगृह्णाति ॥८॥ योयुपित्वावस्कभ्य[1] संप्रेष्यति प्रोक्षणीरासादयेध्मा[2]=देहि पृषदाज्याय दध्याहरेहि यजमान इति ॥९॥ (एतत् कुर्वन्ति ॥१०॥ स्रुवं च स्रुचश्च (संमार्ष्टि) ॥११॥ आज्यानि गृह्णीतेऽध्वर्युः पृषदाज्यव-)न्ति[3] ॥१२॥ इध्माबर्हिः प्रोक्षति[4] ॥१३॥ वेदिं प्रोक्षति[5] ॥१४॥ आसन्नं प्रोक्षति ॥१५॥ अपो निनीय प्रस्तरं गृह्णाति ॥१६॥ स्तृणाति बर्हिः ॥१७॥ प्राङ्ुत्सृप्य परिधीन्[6] परिदधाति ॥१८॥ समिधावादधाति ॥१९॥ परिधिषु वाचयित्वाऽग्निं युनक्ति ॥२०॥ आगत्य तिरश्ची सादयति ॥२१॥ तिरश्च्योः प्रस्तरम् ॥२२॥ प्रस्तरे जुहूम् ॥२३॥ ब्रहिर्षीतरे ॥२४॥ अलङ्कुर्वन्ति ॥२५॥ उपस्तीर्णाभिघारि(-तेषु हविःषु) पात्रे[7] निदधाति ॥२६॥ (समभि-)घार्य हवीꣳष्याहरन्ति ॥२७॥ समासन्नेऽपानग्रहाꣳश्च पृश्नीꣳश्च व्याचष्टे ॥२८॥ ध्रुवा असदन्; यन्मे अग्ने इति समभिमृश्य पञ्चहोतारं व्याचष्टे ॥२९॥ निर्मन्थ्येन चरति ॥३०॥ अग्नये समिध्यमानायानुवाच आ(-ह)[8] ॥३१॥ सप्तदश सामिधेनीरन्वाह ॥३२॥ आवाहयन् वाजिनोऽप्यावाह(-यति ॥३३॥ अनूक्तासु सामि-)धेनीषु[9] स्रुवेणाघारमाघार्याह अग्नीदग्निं त्रिस्त्रिः समृड्ढि[10] इति ॥३४॥ स्रुग्भ्यामुत्तरम् ॥३५॥ असꣳस्पर्शयन्नत्याक्रम्य ध्रुवाꣳ समज्य सादयित्वा प्रवरं[11] प्रवृणीते ॥३६॥ सीदति होता ॥३७॥ प्रसूतः[12] स्रुचावादत्तो ॥३८॥ नव प्रयाजान् यजति ॥३९॥ ओ श्रावय इत्याह ॥४०॥ समिधो यज इति ॥४१॥ यज यज इति ॥४२॥ चतुर्थेऽर्धꣳ समानीयाष्टमे सर्वꣳ समानयते ॥४३॥ उपभृतोऽधि सर्वं प्र यजति ॥४४॥ प्रयाजानिष्ट्वाऽत्याक्रम्य ध्रुवामभिघारयत्यनुपूर्वꣳ

---

१. MHP °स्कुभ्य. २. MHP abr, see supra II.8.1. ३. MHP broken, cf. infra IV. 5.49-51. ४. P प्रोक्ष्यति. ५. P प्रोक्ष्य. ६. MHP परिधीय. ७. MHP वाने. ८. MHP om ह of आह. ९. MHP घेनेषु°. १०. P समृद्धीति. ११. MH प्रचरं. १२. MH प्रसूत्र.

हवीꣳषि ॥४५॥ पृषदाज्यमन्ततः ॥४६॥ नोपभृतꣳ रिक्ता हि सा भवति ॥४७॥ आज्यभागौ यजति ॥४८॥ वार्त्रघ्नावाज्यभागौ ॥४९॥ अग्नयेऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥५०॥ [२]

अग्नयेऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥१॥ अग्निमूर्धा इत्यन्वाह ॥२॥ भुवः इति यजति ॥३॥ वषट्कृते जुहोति ॥४॥ सोमायानुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥५॥ त्वं नः सोम विश्वतः इत्यन्वाह ॥६॥ या ते धामानि इति यजति ॥७॥ वषट्कृते जुहोति ॥८॥ सवित्रेऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥९॥ तत्सवितुर्वरेण्यम् इत्यन्वाह ॥१०॥ अचित्ती इति यजति ॥११॥ वषट्कृते जुहोति ॥१२॥ सरस्वत्या अनुब्रूहि इत्याहोपस्तृणानोऽवद्यन्॥१३॥ चोदयित्री सूनृतानाम् इत्यन्वाह ॥१४॥ पावीरवी इति यजति ॥१५॥ वषट्कृते जुहोति ॥१६॥ पूष्णेऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥१७॥ पूषा गा अन्वेतु नः इत्यन्वाह ॥१८॥ शुक्रं ते अन्यद् इति यजति ॥१९॥ वषट्कृते जुहोति ॥२०॥ मरुद्भ्योऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥२१॥मरुतो यद्धवो दिवः इत्यन्वाह ॥२२॥[1] या वः शर्म[1] इति यजति ॥२३॥ वषट्कृते जुहोति ॥२४॥ विश्वेभ्यो देवेभ्योऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥२५॥ विश्वेदेवा ऋतावृधः इत्यन्वाह ॥२६॥ विश्वेदेवाः शृणुतेमꣳ हवं मे इति यजति॥२७॥ वषट्कृते जुहोति ।.२८॥ द्यावापृथिवीभ्यामनुब्रूहि इत्याहोपस्तीर्णाभिघारितमेककपालमादधानः[2] ॥२९॥ द्यावा नः पृथिवी इमम् इत्यन्वाह ॥३०॥ प्र पूर्वजे इति यजति ॥३१॥ वषट्कृते जुहोति ॥३२॥ अग्नये स्विष्टकृतेऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥३३॥ सकृत्सकृदुत्तरार्धात् सर्वेषाꣳ हविषामवद्यति ॥३४॥ आशयादेककपालस्यावदाय[3] द्विरभिघारयति ॥३५॥ न प्रत्यनक्ति ॥३६॥ गायत्रियौ संयाज्ये ॥३७॥ अग्निꣳ स्तोमेन बोधय इत्यन्वाह ॥३८॥ (स)[4] हव्यवाड् इति यजति ॥३९॥ वषट्कृते जुहोति ॥४०॥ अत्याक्रम्य[5] यथायतनꣳ स्रुचौ सादयित्वा प्राशित्रमवद्यति ॥४१॥ अप उपस्पृश्येडामवद्यति ॥४२॥ उपहूतायामिडायामग्नीध[6] आदधाति ॥४३॥ प्राश्नन्ति ॥४४॥ मार्जयन्ते॥४५॥ परिहरन्ति ब्रह्मणे ॥४६॥ प्राशिते[7] प्राशित्रे चरौ यजमानभागं प्रास्योद्वासयन्ति हवीꣳषि ॥४७॥ अन्वाहार्यं वाचयति ॥४८॥ आसादयन्ति वाजिनम् ॥४९॥ सन्ततिमन्वष्टौ विष्टम्भान्वारोहाञ्जुहोति असवे स्वाहा ॥५०॥ [३]

१--१. MHP यावच्छर्म. २. MHP °होपस्तृणाभि°. ३. P आशयदेक°. ४. MHP om. ५. MH आक्रम्य. ६. MH °ग्नीड. ७. HP प्राशित्रे.

असवे स्वाहा, वसवे स्वाहा, विभुवे[1] स्वाहा, विवस्वते स्वाहा इति विष्टम्भाः ; मघवे स्वाहा, माधवाय स्वाहा, शुक्राय स्वाहा, शुचये स्वाहा इत्यन्वारोहाः ॥१॥ एहि यजमान[2] इत्युक्त्वाऽन्वारब्धे यजमाने[3] होतुराहुतिं नवमीं जुहोति ॥२॥ ब्रह्मन् प्रस्थास्यामः इति ॥३॥ पृषदाज्येन नवानूयाजान् यजति ॥४॥ आगत्य वाजवतीभ्याꣳ स्रुचौ व्यूहति ॥५॥ शंयुना प्रस्तरपरिधि संप्रकिरति ॥६॥ अप उपस्पृश्य(-नाज्यं लिप्तायाꣳ स्रुचि बर्हिषि विषिञ्चन्)[4] वाजिनमानयति ॥७॥ वाजिभ्योऽनुब्रूहि इत्याहोपतिष्ठन्नध्वर्युः ॥८॥ वाजेवाजेऽवत वाजिनो नः इत्यन्वाह ॥९॥ शन्नो भवन्तु वाजिनः इति यजति ॥१०॥ वषट्कृते जुहोति ॥११॥ ऊर्ध्वज्ञुरेतस्यानुवषट्करोति ॥१२॥ वाजिनस्याग्ने वीहि इति दिशो जुहोति ॥१३॥ भक्षमुच्छिनष्टि ॥१४॥ तस्य [5]भक्षस्य स्वादो[5](-रभक्षि वयसः सुमेधाः स्वाध्यो वरिवो-)वित्तरस्य । विश्वे यं देवा उत मर्त्याश्च मधु ब्रुवन्तो अनु सञ्चरन्ति इति होता प्रथमो भक्षयत्यथाध्वर्युरथ ब्रह्माऽथाग्नीदथ यजमानः[6] ॥१५॥ प्राणैस्ते भक्षयन्ति ॥१६॥ प्रत्यक्षाद् भक्षो यजमानस्य ॥१७॥ परेत्य पत्नीः[7] संयाजयन्ति ॥१८॥ फलीकरणहोमꣳ हुत्वा प्राङेत्य त्रीणि समिष्टयजूꣳषि जु(-होति ) ॥१९॥ यज्ञ यज्ञं गच्छ=सुवीरः स्वाहा इति स्रुवेण हुत्वा ध्रुवामाप्याय्य देवा गातुविदो इति स्रुचा जुहोति । °गातुं वित्त्वा=वाते धाः इति ॥२०॥

सꣳस्थामनु हविषो निवर्तयते ॥२१॥ तस्यैते संभारा उपक्लृप्ता भवन्ति त्रेणी[8] च शलली लोहितायसश्च क्षुरः कꣳसश्च हिरण्यं च शराश्चापश्च ॥२२॥ यजमानायतने शरानुपस्तृणोते ॥२३॥ तेषूपविशति यजमानः प्रागावृत्त उपस्थं कृत्वा ॥२४॥ कंꣳसे हिरण्यमवधायाप आनयति ॥२५॥ तासामु[9] त्रेण्या शलल्योपसंगृह्य लोहितायसेन क्षुरेण प्रवपति ॥२६॥ ऋतमेव परमेष्ठी इति वाचयति । °ऋतं नात्येति किञ्चन । ऋतेन पृथिवी दृढा उष्णिहा शिर आक्रान्तमुष्णिहा शिर आक्रमीत् । अग्निस्तिग्मेन शोचिषा वैश्वानरस्य तेजसा । ऋतेन त्वा निवर्तये सत्येन[10] परिवर्तये शिवेन त्वोपवर्तये ।

---

१. MH विभवे. २. MHP यजमानाय. ३. MHP यजमान. ४. MHP broken, cf. infra IV.7.59. ५--५. MHP भक्षस्वाहे. ६. MH °मानं. ७. MH पत्नी. ८. MHP श्रेणी. ९. MP तासामुन्ते; H तासमुं. १०. MH शिवेन.

-द्व्रतं तत्सत्यं तद्व्रतं तच्छकेयं तेन शकेयं तेन राध्यासम् इति ॥२७॥ पुरस्ता-दग्रे[1]. वपतेऽथ[2] दक्षिणतोऽथ पश्चादथोत्तरतोऽथ मध्ये ॥२८॥ स॑स्था-मनु हविषः[3] प्रसिद्धम् ॥२९॥ पौर्णमासेन हविषा यजते ॥३०॥ देवव्रतानि चरति ॥३१॥ नानृतं वदति ॥३२॥ न मा॑समश्नाति ॥३३॥ न स्त्रिय-मुपैति ॥३४॥ नास्य [4]पल्पूलनेन वासः पल्पूलयन्ति[4] ॥३५॥ अधः-शाय्यमृन्मयपात्र्यशूद्रोच्छिष्टी[5] ॥३६॥ स्वयं[6] पादौ[7] प्रक्षालयते ॥३७॥ भक्ताशी स्यात् ॥३८॥ इति चातुर्मास्ययाजिनः ॥३९॥ [ ४ ] [ इति प्रथमोऽनुवाकः ]

## [वरुणप्रघासपर्व]

वरुणप्रघासा एवातः ॥१॥ तेषा॑ संभाराश्चतस्रश्च स्थाल्यौ द्वयानि च यज्ञायुधानि द्वे च बर्हिषी [8]चत्वार इध्मा[8] [9]द्वे च वेदी[9] उत्तर-वेदिश्च व्रीहियवाश्चैषीकं च शूर्प॑ शमीपर्णानि च करीरसक्तवश्च मेष्यै च लोमानि मेषस्य च ॥२॥ श्वोऽषाढाभिः पौर्णमासीत्यग्निहोत्रोच्छिष्ट-मातच्य निदधाति हविरातञ्चनाय ॥३॥ उत्परेत्य पलाशशाखा-माच्छिनत्ति इषे त्वोर्जे त्वा इति ॥४॥ तयाऽऽगत्य[10] वत्सानपाकरोति वायवः स्थोपायवः स्थ इति ॥५॥ देवो वः सविता प्रेरयतु इति गा अनु-मन्त्रयते । श्रेष्ठतमाय = मघ्नियां मरुद्भ्यो[11] वरुणाय भागमूर्जस्वतीः पयस्वतीः इति ॥६॥ प्रसिध्यति (कर्म)[12] ॥७॥ देवस्य त्वा सवितुः प्रसवे इत्यसिदमा-दायोत्परैति ॥८॥ बर्हिषोऽर्धं[13] प्रसिद्धम् ॥९॥ द्वे बर्हिषी[14] लुनाति, यजुषाऽन्यत् तूष्णीमन्यत् ॥१०॥ ते आहरन्नैति ॥११॥

सायं निर्णिक्तैः पात्रैर्गा आयतीः प्रतीक्षते एता आचरन्ति मधुमद्दुहानाः इति ॥१२॥ हुत्वाऽग्निहोत्र॑ सान्नाय्यं दोहयति बहु दुग्धि मरुद्भ्यो[11] वरुणाय हविः इति ॥१३॥ मरुतो वां वरुणः श्रीणन्तु इत्येनत् प्रतिष्ठापयति ॥१४॥ मरुतां वां वरुणस्य भाग॑[15] (सोमेनात-)नच्मि[16] इति हविरातञ्चनेनातनक्ति ॥१५॥

---

१. H °दग्ने. २. H व्रतपते. ३. MHP हविषं. ४--४. MHP °लनेव [M °नेन ] वासमपलूलयन्ति. ५. M °मयवाय्य°; HP °मयवाज्य° ६. MHP स यं ७. H oms. ८-८. MHP चत्वारेध्मा°. ९--९. MHP repeat. १०. MHP तयादित्य. ११. MHP मरुज्यो. १२. MHP om. १३. MHP बर्हिषोर्ध्वं. १४. MHP बर्हि. १५. MH भाग एव. १६. MHP नर्चीति; cf supra IV.1.57.

  

अदस्ते स्थो मरुद्भ्यो वां वरुणाय इत्युदन्वद्भ्यां[1] पात्राभ्यामपिदधाति[2] ॥१६॥ अग्ने हव्यꣳ रक्ष इति तं यत्र गुप्ते मन्यते तन्निदधाति ॥१७॥ एवमेव प्रातरग्निहोत्रꣳ हुत्वा सान्नाय्ये दोहयति ॥१८॥ नात्र प्रतीक्षते ॥१९॥ नाभिद्योतयति २०॥ नापः[3] प्रत्यानयति ॥२१॥ नातन(-क्ति संक्षालनान्तम् ॥२२॥ अग्रेणाहव-)[4]नीयं वेदी क्लृप्ते भवतः पृथमात्रादसंभिन्ने[5] ॥२३॥ उत्तरस्यामुत्तरवेदिः ॥२४॥ तयोः [6]स्तम्बयजुषी हरत[6] [7]उत्तरस्या अध्वर्युर्दक्षिणायै[7] प्रतिप्रस्थाता ॥२५॥ नानैव स्फ्यावाददाते ॥२६॥ तूष्णीं कर्म प्रतिप्रस्थातुः ॥२७॥ यदेवाध्वर्युः करोति तत्प्रतिप्रस्थाता करोतीति ब्राह्मणम् ॥२८॥ वेदीं परिगृह्णीतः ॥२९॥ करणं जपति ॥३०॥ (योयुपित्वाऽवस्कभ्य संप्रेष्यति प्रोक्षणीरासादयतमिध्माबर्हिषी उपसादयतꣳ स्रुवौ च स्रुचश्च संमृष्टं पत्नीꣳ सन्नह्याज्याभ्यामुदेतं पृषदाज्याय दध्या-)[8]हरेहि यजमानाग्नीदुत्तरवेद्यामुप[9] सीद इति ॥३१॥ उत्तरवेदिं निवपति ॥३२॥ इध्मावाःदीपयतः ॥३३॥ उपयमनीरुपकल्पयतः[10] ॥३४॥ अग्नेरावृताऽग्नी प्रहरतः ॥३५॥ प्रसिध्यति कर्माऽतिमुक्तिभ्यः[11] ॥३६॥ अतिमुक्तीर्हुत्वा यज्ञायुधानि सꣳसाद्यापः प्रणीय वरुणप्रघासान् निर्वपति, आग्नेयमष्टाकपालम्[12], (ऐन्द्राग्नमेकादशकपालं, मारुती-)मामिक्षां, वारुणीमामिक्षां, कायमेककपालम् ॥३७॥ निरुप्ते प्राणग्रहाꣳश्च पृश्नीꣳश्च व्याचष्टे ॥३८॥ तस्य हविष्कृता वाचं विसृज्य चतुर्गृहीतेन पञ्चहोतारमाहवनीये जुहोति ॥३९॥ यवानां पाकपेष्याणां प्रतिपुरुषं[13] करम्भपात्राणि करोत्येकमतिरिक्तम् ॥४०॥ एषु पञ्चमेषु (कुशोर्णानि) श्लेषयति मेष्यै च लोमानि ॥४१॥ मेषे [14]कुर्वन्ति॥४२॥ इषीक[14]ꣳ शूर्पꣳ श्रयन्ते[15] हवीꣳषि ॥४३॥ आमिक्षे कुरुतः ॥४४॥ शृतयोर्वा[16] दधिनी[17] आनयतो दध्न्योर्वा[18] शृते ॥४५॥ शृतेषु हविःषु स्फ्यावाददाते ॥४६॥ ब्रह्मन्नुत्तरौ परिग्राहौ

१. MHP °दन्वक्थ्यां. २. MHP °मविद. ३. MH नाच; P नच नच; thus supra IV. 1.57. ४. MHP thus supra IV.1.58. ५. MHP प्रथमा°. ६—६. P °यजुषि इह रत. ७--७. P उत्तरस्याध्व°. ८. Cf. supra II.8.1. ९. P °वेद्यमु°. १०. MHP उपनीरूपकत्वयतो. ११. M °मुक्तीभ्यो. १२. MHP ins निर्वपति after °कपालम्. १३. MHP पूरुषं. १४--१४. MP °त्यषीकं; H °त्यूषीकं १५. MP श्रव्यन्ते. १६. P श्रुतयो°. १७. MHP दधनी. १८. MHP दधन्यो°.

परिग्रहीष्यावः इति प्रसूतावुत्तरौ परिग्राहौ[1] परिगृह्णीतः ॥४७॥ योयुपित्वाऽवस्क्रम्य संप्रेष्यति प्रोक्षणी-)रासादयतमिध्माबर्हिषी[2] उपसादयत[3] स्रुवौ (च)[4] स्रुचश्(-च)[4] संमृष्ट[5] पत्नीं सन्नह्याज्यामुदेतं[6] पृषदाज्याय दध्याहरेहि यजमान इति ॥४८॥ एतत् कुर्वन्ति ॥४९॥ स्रुवौ (च)[4] स्रुचश्(-च)[4] संमृष्टः ॥५०॥ आज्यानि गृह्णीतोऽध्वर्युः पृषदाज्यवन्ति प्रसिद्धानि, तूष्णीं प्रतिप्रस्थाता ॥५१॥ इध्माबर्हिषी प्रोक्षतः ॥५२॥ वेदी प्रोक्षतः ॥५३॥ आसन्ने प्रो(-क्षतः ॥५४॥ अपो निनी-)य[7] प्रस्तरौ गृह्णीतः ॥५५॥ स्तृणीतो बर्हिषी ॥५६॥ प्राञ्चावुत्सृप्य[8] परिधीन् परिधत्तः ॥५७॥ समिध आधत्तः ॥५८॥ परिधिषु वाचयित्वाऽग्नी युङ्क्तः ॥५९॥ आगत्य तिरश्चोः[9] सादयतः ॥६०॥ तिरश्चीषु[10] प्रस्तरौ ॥६१॥ प्रस्तरयोः जुह्वौ[11] ॥६२॥ बर्हिषोरितरौ ॥६३॥ अलङ्कुर्वन्त्यनुपूर्वं[12] हवींषि ॥६४॥ उपस्तीर्णाभिघारिते आमिक्षे उद्धरतः ॥६५॥ मारुत्यां मेषमवदधाति ॥६६॥ [५]

मारुत्यां मेषमवदधाति, वारुण्यां मेषीम् ॥१॥ ताभ्यां शमीपर्णानि च करीरसक्तूंश्चोपकिरतः, परः शतानीतरस्मा एवमितरस्यै ॥२॥ अभिघार्य[13] वाजिनं निदधाति ॥३॥ समभिघार्य हवींष्याहरन्ति ॥४॥ ऐन्द्राग्नादध्वर्युरुत्तरस्यां[14] वेद्यां हवींष्यासादयति ॥५॥ दक्षिणायां मारुतीं प्रतिप्रस्थाता, वारुणीं च कायं चोत्तरस्यामध्वर्युः ॥६॥ समासन्नेऽपानग्रहांश्च पृश्नींश्च व्याचष्टे ॥७॥ ध्रुवा असदन्; यन्मे अग्ने इति समभिमृश्य पञ्चहोतारं व्याचष्टे ॥८॥ निर्मन्थ्येन चरति ॥९॥ अग्नये समिध्यमानायानुवाच आह ॥१०॥ सप्तदश सामिधेनीरन्वाह ॥११॥ आवाहयन् वाजिनोऽप्यावाहयति[15] ॥१२॥ अनूक्तासु सामिधेनीषु स्रुवाभ्यामाघारावाघारयतः[16] ॥१३॥ [17]अथाह अग्नीदग्नी[17] त्रिस्त्रिः संमृड्ढि इति ॥१४॥ संमृष्ट उत्तरो[18]ऽग्निर्भवत्यसंमृष्टो दक्षिणः ॥१५॥ अथ गत्वा[19] प्रतिप्रस्थाता

---

१. MHP °ग्राहे. २. MHP °दयेध्मा°. ३. MHP °दयतः. ४. MHP om च. ५. M समृड्ढि; HP संमृष्ट. ६. MHP °ज्येनोदेहि. ७. Cf. supra IV.2.15-16. ८. H °वृत्सृप्य. ९. MHP तिरश्चीनि. १०. MH तिरश्चिषु. ११. MP स्रुचो; H स्रुचौ. १२. MHP °कुर्वन्तोनु. १३. MHP अभिघाय. १४. H ऐन्द्राद°. १५. MH °व्यावाह°, P °व्वाह. १६. P °घारमाघा°. १७-१७. MHP अथाग्नीद°. १८. MHP उत्तरे. १९. MHP दत्वा.

पत्नीं पृच्छति पत्नि कति ते जाराः इति ।।१६।। इयन्तः इति ह ब्रूया-द्यावन्तः स्युः ।।१७।। यद्यु[1] न स्युः न सन्ति इति ब्रूयात् ।।१८।। यद्य-संख्येयाः [2]स्युः इयन्तः[2] कनीयाꣳसः इति पाꣳसूनुदगृह्णीयात् ।।१९।। सा यत् सन्तं जारं न प्रब्रूयात् प्रियान् ज्ञातीन् रुध्यात् ।।२०।। असौ मे जारः इति निर्दिशेद् यं द्विष्यात् ।।२१।। तं वरुणो गृह्णातु इति यं द्वेष्टि यजमानस्तं ध्यायति ।।२२।। [3]तां प्रघास्यान् हवामहे[3] इति दक्षिणेनान्वाहार्यपचनं प्रतिप्रस्थाता पत्नीं नयत्यैषीकेण[4] शूर्पेण करम्भपात्राणि बिभ्रतीम् । °मरुतो = सजोषसः इति ।।२३।। आगच्छतो दक्षिणमग्निम् ।।२४।। उपोत्था-यास्या[5] अधि यजमानः करम्भपात्राण्यादत्ते ।।२५।। शीर्षन्नधि निधाय पुरस्तात् प्रत्यङ्‌तिष्ठन् पुरोनुवाक्यामन्वाह [6]मो षु ण[6] इन्द्र पृत्सु = वन्दते गीः इति ।।२६।। उभौ याज्यामिति ब्राह्मणम् ।।२७।। यद् ग्रामे यदरण्ये इति प्रतिप्रस्थाता पत्नी वाचयति । °यत् सभायां = अवयज(-नम-)सि स्वाहा इति ।।२८।। अनुप्रास्यत्यैषीकꣳ[7] शूर्पम् ।।२९।। तौ अक्रन् कर्म[8] कर्मकृतः इति प्रतिप्रस्थाता नयति । °सह वाचा = [9]सुदानवः इति[9] ।।३०।। प्रतिपरैति पत्नी ।।३१।। दक्षिणत उपविशति यजमानः ।।३२।। संमाष्ट्र्यग्नीद्दक्षिण-मग्निम्[10] ।।३३।। [11]स्रुग्भिरुत्तरावाघारावाघारयतोऽसꣳस्पर्शयन्तौ स्रुचः ।।३४।। अत्याक्रम्य ध्रुवे[12] समज्य[13] सादयित्वा प्रवरं प्रवृणीते।।३५।।सीदति[14] (होता ।।३६।। प्रसू-)तौ स्रुच आददाते ।।३७।। प्रयाजान् यजतो[15] नवेतरो नवेतरः ।।३८।। ओ श्रावय इत्याह ।। ३९।। समिधो यज इति ।।४०।। यज यज इति ।।४१।। चतुर्थेऽर्धꣳ समानीयाष्टमे सर्वꣳ समानयत उपभृत्यध्वर्युः[16] ।।४२।। उच्छिनष्टि प्रतिप्रस्थाताऽनुयाजेभ्यः[17] ।।४३।। प्रयाजानिष्ट्वाऽत्या-क्रम्य ध्रुवे अभिघारयतः ।।४४।। ऐन्द्राग्नादध्वर्युरुत्तरस्यां वे(-द्याꣳ हवीꣳष्यासादय-)ति[18] ।।४५।। [19]मारुत्यां मेषमवदधाति वारुण्यां मेषीम्[20] ।।४६।। दक्षिणायां मारुतीं प्रतिप्रस्थाताऽभिघारयति, वारुणीं च कायं चोत्तरस्या-

१. यद्य. २-२. MHP स्युरितः. ३-३. MH तान्प्रघास्यान्नवामहे; P प्रघास्यन्नवा°. ४. MHP नयन्त्यैषी°. ५. MHP °त्थायायास्या. ६-६. MHP मोष्मण. ७. MHP °षीकीं. ८. P oms. ९-९ P सुदानयति. १०. MH °ग्नीदक्षि°; P °ग्निदक्षि°. ११. P स्रुचीरु°. १२. MH स्रुवे; P स्रुवेय. १३. P समज्यमा. १४. MHP ins. ते after सीदति. १५. MHP यजते. १६. MHP °भृत्योध्व°. १७. P °स्थाता नो याजेभ्यः. १८. MHP thus supra IV.6.5. १९. MHP ins. हरति before मारुत्यां. २०. MHP मेषं.

मध्वर्युः[1] ॥४७॥ पृषदाज्यमन्ततः ॥४८॥ नोपभृतꣳ रिक्ता हि सा भवति ॥४९॥ आज्यभागौ यजति ॥५०॥ वार्त्रघ्नावाज्यभागौ ॥५१॥ उपविशति प्रतिप्रस्थातै(-न्द्राग्नात्) ॥५२॥ अग्नयेऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥५३॥ [६]

अग्नयेऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥१॥ प्रसिद्धाः[2] पञ्चानाꣳ हविषां याज्यापुरोनुवाक्याः ॥२॥ इन्द्राग्निभ्यामनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥३॥ इन्द्राग्नी रोचना दिवः इत्यन्वाह ॥४॥ श्नथद्वृत्रम् इति यजति ॥५॥ वषट्कृते जुहोति ॥६॥ (दक्षि-)णायां मारुत्यां प्रतिप्रस्थाता प्रचरति ॥७॥ मरुद्भ्योऽनुब्रूहि[3] इत्याहोपस्तृणानोऽवद्यन् ॥८॥ सकृत् पश्चान्मेष्या अवद्यति सकृदामिक्षायै सकृच्छमीपर्णानाꣳ सकृत् करीरसक्तूनाम् ॥९॥ सर्वां च मेषीमुत्तरेणावदानेनावदत्ते ॥१०॥ सर्वेषां चैतेषाममवद्यति ॥११॥ अभिघारयति ॥१२॥ प्रत्यनक्ति ॥१३॥ म(-रुतो यद्ध इ-)त्यन्वाह ॥१४॥ (या वः) शर्म इति यजति ॥१५॥ वषट्कृते जुहोति ॥१६॥ उपविशति प्रतिप्रस्थाता ॥१७॥ सꣳसर्पति होता ॥१८॥ वारुण्या च कायेन चोत्तरस्यामध्वर्युः प्रचरति ॥१९॥ वरुणायानुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥२०॥ एवमेवैतेषामवद्यत्यभिघारयति प्रत्यनक्ति ॥२१॥ अव ते हेड इत्यन्वाह ॥२२॥ [4]उदुत्तमम् इति[4] यजति ॥२३॥ वषट्कृते जुहोति ॥२४॥ कायानुब्रूहि इत्याहोपस्तीर्णाभिघारितमेककपालमादधानः[5] ॥२५॥ कया नश्चित्र आ भुवद् इत्यन्वाह ॥२६॥ को अद्य युङ्क्ते इति यजति ॥२७॥ वषट्कृते जुहोति ॥२८॥ अग्नये स्विष्टकृतेऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥२९॥ ऐन्द्राग्नादध्वर्युरुत्तरस्यां वेद्याꣳ हविषाꣳ स्विष्टकृतमवद्यति ॥३०॥ अथ प्रतिगृह्णाति प्रतिप्रस्थात्रे ॥३१॥ तमु स उत्तरां वेदिमाहृत्य मारुत्याः स्विष्टकृतमवद्यति ॥३२॥ वारुण्याश्च कायस्य चोत्तरस्यामध्वर्युः ॥३३॥ आशयादेककपालस्यावदाय द्विरभिघारयति ॥३४॥ न प्रत्यनक्ति ॥३५॥ त्रिष्टुभौ संयाज्ये ॥३६॥ पिप्रीहि[6] इत्यन्वाह ॥३७॥ अग्ने यदद्य[7] विशो[8] अध्वरस्य होतः इति यजति ॥३८॥ वषट्कृते जुहोति॥३९॥ अत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा प्राशित्रमवद्यति ॥४०॥ तदुभे

१. P °त्तरस्या अध्व°. २. MHP प्रसिद्धां. ३. M मरुभ्यो. ४–४. MHP उदुत्तरेण. ५. MHP °होपस्तृणाभि°. ६. MHP °ऽपि व्रीहो°. ७. MHP यद्यद. ८. MHP विशा.

वेदी अत्यूह्य सादयति ॥४१॥ अप उपस्पृश्यैन्द्राग्नादध्वर्युरुत्तरस्यां वेद्याꣳ हविषामिडामवद्यति ॥४२॥ अथ प्रतिगृह्णाति[1] (प्रति-)प्रस्थात्रे[2] ॥४३॥ तमु स उत्तरां वेदिमाहृत्य मारुत्या[3] इडामवद्यति ॥४४॥ वारुण्याश्च कायस्य चोत्तरस्यामध्वर्युः ॥४५॥ उपहूतायामिडायामग्नीध[4] आदधाति ॥४६॥ प्राश्नन्ति ॥४७॥ मार्जयन्ते[5] ॥४८॥ परिहरन्ति ब्रह्मणे ॥४९॥ प्राशिते[6] प्राशित्रे चरौ यजमानभागं प्रास्योद्वासयन्ति[7] हवीꣳषि ॥५०॥ अन्वाहार्यं वाचयति ॥५१॥ आसादयन्ति[8] वाजिनम् ॥५२॥ मन्ततिमन्त्रष्टौ विष्टम्भान्वारोहान् जुहोति मलिम्लुचाय स्वाहा, सागराय[9] स्वाहा, गणश्रिये स्वाहा, अभिभुवे स्वाहा इति विष्टम्भाः, नभसे स्वाहा, नभस्याय स्वाहा, इषाय स्वाहा, ऊर्जाय स्वाहा इत्यन्वारोहाः ॥५३॥ एहि यजमान[10] इत्युक्त्वाऽन्वारब्धे यजमाने होतुराहुतिं नवमीं जुहोति ॥५४॥ ब्रह्मन् प्रस्थास्यामः इति ॥५५॥ पृषदाज्येन नवानूयाजान् यजत्यध्वर्युर्यदुच्छिनष्टि तेन प्रतिप्रस्थाता ॥५६॥ आगत्य वाजवतीभ्याꣳ[11] स्रुचो[12] व्यूहतः ॥५७॥ शंयुना प्रस्तरपरिधि संप्रकिरतः ॥५८॥ अप उपस्पृश्यानाज्यं लिप्तायां स्रुचि बर्हिषि विषिञ्चन् वाजिनमानयति ॥५९। वाजिभ्योऽनुब्रूहि इत्याहोत्तिष्ठन्नध्वर्युः ॥६०॥ प्रसिद्धं वाजिनेन चरति ॥६१॥ दिशो जुहोति ॥६२॥ भक्षमुच्छिनष्टि ॥६३॥ तस्य भक्षस्य[13] सूर्यवर्चा भगभक्तो न आविश विश्वविन्मनसस्पतिरनेहसो मा जागृविः इति होता प्रथमो भक्षयत्यथाध्वर्युरथ ब्रह्माऽथाग्नीदथ[14] यजमानः ॥६४॥ प्राणैस्ते भक्षयन्ति ॥६५॥ प्रत्यक्षाद् भक्षो यजमानस्य ॥६६॥ परेत्य पत्नीः[15] संयाजयन्ति ॥६७॥ फलीकरणहोम[16]ꣳ हुत्वा प्राङेत्य समिष्टयजूꣳषि जुहुतस्त्रीणीतरस्त्रीणीतरः[17] ॥६८॥ वारुण्यै[18] निष्कासमितरेषा[19]ꣳ हविषां निष्कासान् संभरन्ति ॥६९॥(तु-)षैश्च[20] निष्कासेन चावभृथमवयन्ति ॥७०॥ अत्र दशामेखले पर्यस्येते[21] ॥७१॥ उरुꣳ हि राजा इत्येतां त्रिरन्वाह ॥७२॥ [ ७ ]

१. H प्रगृ॰. २. MHP om प्रति. ३. MHP मारुत्याम्. ४. P ॰ग्नीद. ५. MP. मार्जन्ते. ६. HP प्राशित्रे. ७. MHP प्रास्योपास॰. ८. MHP ॰सादयति; thus supra IV.3.49. ९. MHP सगराय. १०. MHP ॰मानाय. ११. P वाचव॰. १२. MHP स्रुचौ. १३. MHP भक्ष. १४. P ॰थाग्निः. १५. MH पत्नी. १६. MHP ॰करणे होमं. १७. MHP स्तृणीतरस्त्रीणीतकरा. १८. MHP वारुण्ये. १९. MHP निष्कास इत॰. २०. MHP श्चैष. २१. P पर्यस्थिते.

उरु౨ हि राजा इत्येतां त्रिरन्वाह । °वरुणश्चकार = विधश्चित् इति ॥१॥ शतं ते राजन् भिषजः इति [1]यतोऽपः परापश्यति[1] तद्वाचयति । °सहस्रमुर्वी गम्भीरा सुमतिष्टे[2] अस्तु मु(-मुग्-)घ्यस्मत् इति ॥२॥ अभिष्ठितो[3] वरुण(-स्य पाशोऽ-)ग्नेरनीकमप आ विवेश इति बर्हिः प्रास्याभिजुहोति । °अपान्नपात् प्रतिरक्षन्नसूर्यं दमेदमे समिधं यक्ष्यग्ने = न्तः. स्वाहा इति ॥३॥ चतुर्गृहीतं गृह्णीते ॥४॥ अपबर्हिषश्चतुरः प्रयाजान् यजति ॥५॥ आज्यभागौ यजति ॥६॥ अप्सुमन्तावाज्यभागौ ॥७॥ अग्नयेऽनुब्रूहि इत्याहाज्यस्य [4]गृह्णानश्चतुः ॥८॥ अप्स्वग्ने[4] सधिष्टव इ(-ति यजति) ॥९॥ वषट्कृते जुहोति ॥१०॥ सोमायानुब्रूहि इत्याहाज्यस्य गृह्णानश्चतुः ॥११॥ अप्सु मे सोमो अब्रवीत् इत्यन्वाह । °अन्तर्विश्वानि = [5]भेषजीः इति[5] ॥१२॥ जुषाणेनैव यजति ॥१३॥ वषट्कृते जुहोति ॥१४॥ वरुणायानुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥१५॥ पश्चाच्च पुरस्ताच्च निष्कासानामवद्यति ॥१६॥ अभिघारयति ॥१७॥ प्रत्यनक्ति ॥१८॥ ( इमं मे वरुण इत्यन्वाह ॥१९॥ तत्त्वा या-)मि इति यजति ॥२०॥ वषट्कृते जुहोति ॥२१॥ अग्नीवरुणाभ्यामनुब्रूहि इत्याहोपस्तीर्णाभिघारितान्निष्कासानादधानः[6] ॥२२॥ त्वं नो अग्ने वरुणस्य वि(-द्वान् इत्यन्वाह ॥२३॥ स त्वं नो अग्नेऽ-)[7]वमो भवोती इति यजति ॥२४॥ वषट्कृते जुहोति ॥२५॥ चतुर्गृहीतं गृह्णीते ॥२६॥ अपबर्हिषो द्वावनूयाजौ यजति ॥२७। अवभृथ निचङ्कुण इति स्रुचमप्स्वस्यति[8] । °निचेरु = कृतम् इति ॥२८॥ उरोरा नो देव रिषस्पाहि इति बिन्दून् प्रतिसूय सुमित्रा न आप ओषधयः सन्तु इति प्राणेनापां भक्षयति । °दुर्मित्रा = द्विष्मः इति ॥२९॥ सं त्वा विशन्त्वोषधीरुताप: इत्यवभृथं संप्रकिरति । °यज्ञस्य त्वा = विधेम इति ॥३०॥ देवीराप एष वो गर्भः इति संप्रकीर्णमनुमन्त्रयते । °तं वः सुप्रतीतं = ब्रूताद् इति ॥३१॥ प्रतियुतो वरुणस्य पाशः[9] प्रत्यस्तो वरुणस्य पाशः इत्यप्सूत्तरसिचौ न्यस्यतः ॥३२॥ इदमहं निर्वरुणस्य पाशान्मुच्ये इति वासोभ्यामभिनिर्वेष्टयेते[10] ॥३३॥ उदुत्तमं वरुण पाशमस्मद् इति दशामेखले विस्र౨सयेते । °अवाधमं वि = तये स्याम इति ॥३४॥ अभ्यवेत्यान्योऽन्यस्य पृष्ठीर्धावतः तौ ॥३५॥ उद्वयं तमसस्परि इति प्रतिप्रस्थातोन्नयति ।

१–१. P यतोपपरा°. २. MP समतीष्टे; H समितिष्ठे. ३. MHP °भिष्टुतो. ४–४. MHP चतुरस्वग्ने. ५–५. MHP भेषजीति. ६. MHP °स्तृणाभि° साना आद°. ७. MHP om. ८. MHP °मुपमारयति. ९. MHP पाशं°. १०. HP निर्वपेष्ट [P°पेष्ठ].

°पश्यन्तो = त्तमम् इति ॥३६॥ एधोऽस्येधिषीमहि इत्यौदुम्बरीः समिधः कुर्वीते ॥३७॥ अप्रतीक्षमायन्ति[1] ॥३८॥ समिदसि तेजोऽसि तेजो मयि धेहि इत्याहवनीये यजमानोऽभ्यादधाति ॥३९॥ एवमेव गार्हपत्ये [2]पत्नी ॥४०॥ अपो[2]ऽन्वचारिषम् इत्येनावुपस्थापयति । [3]रसेन = [3]वर्चसा इति[3] ॥४१॥ [4]आगत्य विसृजति[4] पूर्वमग्निमपरस्मिन्नाहवनीये ॥४२॥ सꣳस्थामनु हविषो निवर्तयते[5] ॥४३॥ प्रसिद्धाः संभाराः ॥४४॥ यो घर्मः[6] पर्यवर्तयदन्तान्पृथिव्या अनु = अग्निस्तिग्मेन शोचिषा वैश्वानरस्य तेजसर्तेन त्वा निवर्तये सत्येन परिवर्तये शिवेन त्वोपवर्तये । तदृतं तत्सत्यं तद्व्रतं तच्छकेयं तेन शकेयं तेन राध्यासम् इति । ४५॥ पुरस्तादग्रे वपतेऽथ दक्षिणतोऽथ पश्चादथोत्तरतोऽथ मध्ये ॥४६॥ सꣳस्थामनु हविषः[7] (प्रसिद्धम्)[8] ॥४७॥ पौर्णमासेन हविषा यजते ॥४८॥ देवव्रतानि चरति ॥४९॥ [८] [इति द्वितीयोऽनुवाकः]

## [ साकमेधपर्व ]

### [ अनीकवती[ष्टिः ]

श्वः कृत्तिकाभिः पौर्णमासीति यज्ञायुधानि सꣳसाद्यापः प्रणीयाग्नये-ऽनीकवते पुरोडाशमष्टाकपालं निर्वपति साकꣳ सूर्येणोद्यता ॥१॥ निरुप्ते प्राणग्रहाꣳश्च पृश्नीꣳश्च[9]=दशहोतारं व्याचष्टे ॥२॥ तस्यै वार्त्रघ्नावाज्य-भागौ ॥३॥ अग्नयेऽनीकवतेऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥४॥ भद्रा नो अग्ने इत्यन्वाह ॥५॥ भद्रं ते अग्ने सहसिन्ननीकम् इति यजति ॥६॥ वषट्कृते जुहोति ॥७॥ शर्धस्पत्यौ संयाज्ये[10] ॥८॥ जुष्टो दमूना अतिथि-र्दुरोणः इत्यन्वाह । °इमं नो यज्ञ = भोजनानि इति ॥९॥ अग्ने शर्धं महते सौभगाय इति यजति । °तव द्युम्नान्युत्तमानि सन्तु । सं जास्पत्यꣳ सुयममा कृणुष्व शत्रूयतामभि (तिष्ठा महाꣳ-)सि इति ॥१०॥ वषट्कृते जुहोति ॥११॥ सन्ततिमनु होतुराहुतिं जुहोति ॥१२॥ प्रसिध्यति कर्म ॥१३॥ सन्तिष्ठत एवेष्टिः ॥१४॥

### [ सान्तपनीष्टिः ]

यज्ञायुधानि सꣳसाद्यापः प्रणीय मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुं निर्वपति ॥१५॥ निरुप्ते प्राणग्रहाꣳश्च पृश्नीꣳश्च व्याचष्टे ॥१६॥

---

१. P यान्ति २–२ MH पत्न्यवो°. ३–३. MHP पर्यस्येति. ४–४. MHP °गत्यापिसृ°. ५. P निर्वर्तं°. ६. MH घर्मं, p घर्मं. ७. MHP हविषं. ८. MHP om. ९. MHP abr, see IV.2.28–29. १०. MHP संयाज्यौ.

समासन्नेऽपानग्रहाँश्च पृश्नीँश्च[1]=दशहोत(-रं व्याचष्टे ॥१७॥ तस्यै वार्त्रघ्नावाज्यभागौ) ॥१८॥ मरुद्भ्यः सान्तपनेभ्योऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥१९॥ सान्तपना इदँ हविः इत्यन्वाह ॥२०॥ संवत्सरीणा[2] मरुतः स्वर्काः[3] इति यजति ॥२१॥ वषट्कृते जुहोति ॥२२॥ स्वस्तिमत्यौ संयाज्ये ॥२३॥ स्वस्ति नो दिवो अग्ने पृथिव्याः इत्यन्वाह ॥२४॥ यथा होतर्मनुषो देवताता इ(-ति)[4] यजति ॥२५॥ (वषट्कृते जुहोति) ॥२६॥ वर्तयति शंयुना[5] बर्हिः ॥२७॥ सन्ततिमनु होतुराहुतिं जुहोति ॥२८॥ प्रसिध्यति कर्म ॥२९॥ सन्तिष्ठत एषेष्टिः ॥३०॥

[ गृहमेधीयेष्टिः ]

निर्णिक्तया स्थाल्याऽपहतैस्तण्डुलैर्गा आयतीः प्रतीक्षते ॥३१॥ सायँ सर्वासां दुग्धे गार्हपत्ये गृहमेधीयं चरुँ श्रपयति ॥३२॥ यस्य श्रृतस्य त्रीनोदनानुप(-स्तीर्णाभिघारितानुद्धरति ॥३३॥ प्रथमोद्धृतं ) बहूपसिञ्चति ॥३४॥ अथेतरयोरुपसिञ्चति ॥३५॥ द्रुत्वाऽध्वर्युः परिधीन् [6]संवर्तयति ॥३६॥ आहरन्त्योदनान्[6] ॥३७॥ मध्यतः प्रथमोद्धृतमासादयति ध्रुवाभाजनम् ॥३८॥ तस्मादाज्यभागौ यजति ॥३९॥ तस्मादुपस्तरणाभिघारणं दक्षिणतश्चोत्तरतश्च ॥४०॥ इतरावाज्यभागौ यजति ॥४१॥ रयि(-मन्तावाज्यभागौ ॥४२॥ रयिमतेऽग्नयेऽनुब्रूहि इत्याहाज्य-)स्य गृह्णानश्चतुः ॥४३॥ अग्निना रयिमश्नवत् इत्यन्वाह ॥४४॥ जुषाणेन यजति ॥४५॥ वषट्कृते जुहोति ॥४६॥ सोमायानुब्रूहि इत्याहाज्यस्यैव[7] गृह्णानश्चतुः ॥४७॥ गयस्फानो[8] अमीवहा इत्यन्वाह ॥४८॥ जुषाणेनैव यजति ॥४९॥ वषट्कृते जुहोति ॥५०॥ मरुद्भ्यो गृहमेधिभ्योऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥५१॥ पश्चाच्च पुरस्ताच्च मध्यमस्योदनस्यावद्यति ॥५२॥ एवं दक्षिणार्धस्यैवमुत्तरार्धस्य ॥५३॥ अभिघारयति ॥५४॥ प्रत्यनक्ति ॥५५॥ गृहमेधास [9]आगत इत्यन्वाह[9] ॥५६॥ प्र बुध्निया ईरते वो महाँसि इति यजति ॥५७॥ वषट्कृते जुहोति ॥५८॥ अग्नये स्विष्टकृतेऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥५९॥ सकृदुत्तरार्धान्मध्यमस्यौदनस्यावद्यति ॥६०॥ एवं दक्षिणार्धस्यैवमुत्तरार्धस्य ॥६१॥ द्विरभि-

१. MHP abr, see supra I.7.5–6. २. MHP °रीणां. ३. MHP स्वधा. ४. MHP om ति. ५. M शंयं; HP शयं. ६–६. P संहरन्त्यो°. ७. MHP °त्याज्यस्यैव. ८. MP गयस्पानो; H रायस्फानो. ९–९. P °गतेऽत्य°.

धारयति ॥६२॥ न प्रत्यनक्ति ॥६३॥ विराजौ संयाज्ये ॥६४॥ प्रेद्धो अग्ने दीदिहि इत्यन्वाह ॥६५॥ इमो अग्ने वीततमानि[1] हव्या इति यजति ॥६६॥ वषट्कृते जुहोति ॥६७॥ संगृह्यैवैतान् परिधीननुप्रहरति ॥६८॥ तान् सꣳस्रावेणाभिजुहोति ॥६९॥ अत्याक्रम्य[2] यथायतनꣳ स्रुचौ सादयित्वा मध्यम ओदन इतरयोरिडाꣳ समवद्यति ॥७०॥ उपहूतायामिडायामुत्तर-मेवौदनमग्नीध उपोहति दक्षिणं ब्रह्मणे ॥७१॥ प्राश्नन्ति ॥७२॥ मार्जयन्ते[3] ॥७३॥ अग्निहोत्रमेवातो जुहोति ॥७४॥ [ ९ ]

अग्निहोत्रमेवातो जुहोति ॥१॥ यत् स्थाल्यामतिशिष्यते तस्या-ध्वर्युश्च यजमानश्च प्राश्नीतः ॥२॥ अन्य उपजना:[4] प्रतिवेशं पत्नियै पचन्ति ॥३॥ तस्य [5]प्राश्नाति ॥४॥ अञ्जते[5] ॥५॥ अभ्यञ्जते ॥६॥ अनु वत्सान् वासयन्ति ॥७॥ आज्येन स्थाल्या निष्कासमभ्यानीय गार्हपत्य-स्यान्तिकं निदधाति ॥८॥ तं यजमान एव स्वयमनुतिष्ठेत् इतीदम् ॥९॥ तस्यौषसमध्वर्युरग्निहोत्रꣳ[6] हुत्वोपस्तीर्णाभिघारितं गार्हपत्ये पूर्णदर्व्यं[7] जुहोत्यृषभस्य रवथमनु[8] ॥१०॥ पूर्णा दर्वि परापत इत्यपरेणाग्निं[9] तिष्ठन् पुरोनुवाक्यामन्वाह । °सुपर्णं = शतक्रतो इति ॥११॥ देहि मे इति यजति । °ददामि ते = मि ते स्वाहा इति ॥१२॥ एतस्मिन् काले यजमान ऋषभ इव [10]रूयात् ॥१३॥ सवषट्कारमिव[10] तदित्याहुर्यदृषभेणेति ॥१४॥ स्वाहा इति जुहोति ॥१५॥

## [ क्रीडिनीष्टिः ]

यज्ञायुधानि सꣳसाद्यापः प्रणीय मरुद्भ्यः क्रीडिभ्यः पुरोडाशꣳ सप्त-कपालं निर्वपति साकं सूर्येणोद्यता ॥१६॥ निरुप्ते प्राणग्रहाꣳश्च पृश्नीꣳश्च व्याचष्टे ॥१७॥ समासन्नेऽपानग्रहाꣳश्च पृश्नीꣳश्च[11] = दशहोतारं व्याचष्टे ॥१८॥ तस्यै वार्त्रघ्नावाज्यभागौ ॥१९॥ मरुद्भ्यः क्रीडिभ्योऽनुब्रूहि इत्याहोपस्तृणानो[12]ऽवद्यन् ॥२०॥ क्रीडं वः शर्धो मारुतम् इत्यन्वाह ॥२१॥ [13]अत्यासो न ये[13] मरुतः स्वञ्चः इति यजति ॥२२॥ वषट्कृते जुहोति ॥२३॥

---

१. P वीततमेति. २. H आक्रम्य. ३. MHP मार्जन्ते. ४. MHP उपजानां. ५–५. MH सान्नात्याञ्ज°. ६. P तस्यैष°. ७. MHP °दर्वं. ८. H स्वथमनु. ९. MHP °णाग्निस्ति°. १०–१०. MHP रूयादुस्संवादतमिव. ११. MHP abr, see supra I.7.5–6. १२. P°होऽपस्तृ°. १३–१३. M 'सोऽन्नये.

त्रिष्टुभौ संयाज्ये ।।२४।। सन्ततिमनु होतुराहुतिं जुहोति ।।२५।। प्रसिध्यति कर्म ।।२६।। सन्तिष्ठत एषे(-ष्टिः) ।।२७।।

[ महाहविरिष्टिः ]

(महाहवि-)रेवातः ।।२८।। पूर्वेणाहवनीयं वेदिः क्लृप्ता भवति रथावकाशा ।।२९।। तस्यै स्तम्बयजुर्हरति ।।३०।। वेदिं परिगृह्णाति ।।३१।। करणं जपति ।।३२।। स्फ्यमुदपात्रम् इति संप्रेष्यति । शम्यामाहरेहि यजमानाग्नीदुत्तरवेद्यामुपसीद इति ।।३३।। उत्तरवेद्या आवृतोत्तरवेदिं निवपति ।।३४।। इध्ममादीपयन्ति ।।३५।। उपयमनोरुपक(-ल्पयन्ति ।।३६।। अग्ने-रावृताऽग्निं प्रह-)[1]रति ।।३७।। प्रसिध्यति कर्माऽतिमुक्तिभ्यः[2] ।।३८।। अतिमुक्तीर्हुत्वा यज्ञायुधानि सꣳसाद्यापः प्रणीय महाहविर्निर्वपत्याग्नेय-मष्टाकपालम् ।।३९।। [ १० ]

आग्नेयमष्टाकपालꣳ[3] सौम्यं[4] =कादशकपालमैन्द्रं चरुं वैश्वकर्मण-मेककपालम् ।।१।। निरुप्ते प्राणग्रहाꣳश्च पृश्नीꣳश्च व्याचष्टे ।।२।। तस्य हविष्कृता वाचं विसृज्य (चतुर्गृहीतेन पञ्चहोतारमा-)हवनीये जुहोति ।।३।। श्रप्यन्ते हवीꣳषि ।।४।। शृतेषु हविःषु[5] स्फ्यमादत्ते ।।५।। ब्रह्मन्नुत्तरं परिग्राहं परिग्रहीष्यामि इति प्रसूत उत्तरं परिग्राहं परिगृह्णाति ।।६।। योयुपित्वाऽवस्कभ्य संप्रेष्यति प्रोक्षणीरासादयेध्मा=ह्याज्येनोदेहि पृषदाज्याय दध्याहरेहि यजमान इति ।।७।। एत(-त् कुर्वन्ति ।।८।। स्रुवं च स्रुचश्च संमार्ष्टि ।।९।। आज्यानि गृह्णीते) पृषदाज्यवन्ति ।।१०।। इध्माबर्हिः प्रोक्षति ।।११।। वेदिं प्रोक्षति ।।१२।। आसन्नं प्रोक्षति ।।१३।। अपो निनीय प्रस्तरं गृह्णाति ।।१४।। स्तृणाति[6] बर्हिः ।।१५।। प्राङुत्सृप्य[7] परिधीन् परिदधाति ।।१६।। समिधावादधाति ।।१७।। परिधिषु वाचयित्वाऽग्निं युनक्ति ।।१८।। आगत्य तिरश्ची सादयति ।।१९।। तिरश्च्योः प्रस्तरम् ।।२०।। प्रस्तरे जुहूम् ।।२१।। बर्हिषीतरे ।।२२।। अलङ्कुर्वन्ति ।।२३।। उपस्तीर्णाभिघारिते(-षु हविः-)षूद्वासयति ।।२४।। समभिघार्य हवीꣳष्याहरन्ति ।।२५।। समासन्ने-ऽपानग्रहाꣳश्च पृश्नीꣳश्च व्याचष्टे ।।२६।। ध्रुवा असदन् यन्मे अग्ने इति समभिमृश्य पञ्चहोतारं व्याचष्टे ।।२७।। निर्मन्थ्येन चरति ।।२८।। अग्नये समिध्यमानायानुवाच आह ।।२९।। सप्तदश सामिधेनीरन्वाह ।।३०।।

१. Cf. IV. 5.34–35. २. M °मुक्तीभ्यो. ३. H अग्नेनयम°. ४. MHP abr, see TS I.8.4.4. ५. P हविष्णु. ६. MHP स्तृणीत. ७. HP °त्सृज्य.

अनूक्तासु सामिधेनीषु स्रुवेणाघारमाघार्याह अग्नीद(-ग्निं त्रिस्त्रिः संमृड्ढि इति ॥३१॥ स्रुग्भ्यामु-)त्तरम् ॥३२॥ असꣳस्पर्शयन्नत्याक्रम्य ध्रुवाꣳ समज्य सादयित्वा प्रवरं प्रवृणीते ॥३३॥ सीदति होता ॥३४॥ प्रसूतः स्रुचावादत्ते ॥३५॥ प्रयाजान् यजति ॥३६॥ ओ श्रावय इत्याह ॥३७॥ समिधो 'यज इति' ॥३८॥ यज यज इति ॥३९॥ चतुर्थेऽर्धꣳ समानीयाष्टमे सर्वꣳ समानयते ॥४०॥ उपभृतोऽधि सर्वं प्रयजति ॥४१॥ प्रयाजानिष्ट्वा-ऽत्याक्रम्य ध्रुवामभिघारयत्यनुपूर्वꣳ हवीꣳषि ॥४२॥ पृषदाज्यमन्ततः ॥४३॥ नोपभृतꣳ रिक्ता हि सा भवति ॥४४॥ आज्यभागौ यजति ॥४५॥ वार्त्र-घ्नावाज्यभागौ ॥४६॥ अग्नयेऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥४७॥

[ ११ ]

अग्नयेऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥१॥ प्रसिद्धाः षण्णाꣳ हविषां याज्यापुरोनुवाक्याः ॥२॥ इन्द्रायानुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥३॥ एन्द्रसानसिꣳ रयिम् इत्यन्वाह ॥४॥ प्र स साहिषे इति यजति ॥५॥ वषट्कृते जुहोति ॥६॥ विश्वकर्मणेऽनुब्रूहि इत्याहोपस्तीर्णाभिघारितमेक-कपालमादधानः[2] ॥७॥ विश्वकर्मन् हविषा वावृधानः इत्यन्वाह ॥८॥ विश्वकर्मन् हविषा वर्धनेन इति यजति ॥९॥ वषट्कृते जुहोति ॥१०॥ अग्नये स्विष्टकृतेऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥११॥ सकृदुत्तरार्धा-त्सर्वेषाꣳ हविषामवद्यति ॥१२॥ एककपालस्यावदाय द्विरभिघारयति ॥१३॥ न प्रत्यनक्ति ॥१४॥ त्रिष्टुभौ [3]संयाज्ये ॥१५॥ पिप्रीहि इत्यन्वाह ॥१६॥ अग्ने[3] यदद्य विशो अध्वरस्य होतः इति यजति[4] ॥१७॥ वषट्कृते जुहोति ॥१८॥ अत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा प्राशित्रमवद्यति ॥१९॥ अप उपस्पृश्येडामवद्यति[5] ॥२०॥ उपहूतायामिडायामग्नीध आ-दधाति ॥२१॥ प्राश्नन्ति ॥२२॥ मार्जयन्ते ॥२३॥ परिहरन्ति ब्रह्मणे[6] ॥२४॥ प्राशिते प्राशित्रे चरौ यजमानभागं प्रास्योद्वासयन्ति हवीꣳषि ॥२५॥ अन्वाहार्यं वाचयति ॥२६॥ सन्ततिमन्वष्टौ विष्टम्भान्वारोहाञ्जु-होति सꣳसर्पाय स्वाहा, चक्षुषे स्वाहा, सूर्याय स्वाहा, ( ज्योतिषे स्वाहा )[7] इति विष्टम्भाः, सहसे स्वाहा, सहस्याय स्वाहा, तपसे स्वाहा, तपस्याय स्वाहा

---

१–१. HP om. २. MHP °पस्तृणाभि. ३–३. MHP °ज्येऽपि ब्रीहीत्यन्वाहोग्ने [M °होऽग्ने]. ४. MHP जुहोति. ५. MH °स्पृश्येत्येडा°. ६. MHP ब्राह्मणे. ७. MHP om; cf. MS III.12.11.

इत्यन्वारोहाः ॥२७॥ एहि यजमान इत्युक्त्वाऽन्वारब्धे यजमाने होतुराहुतिं नवमीं जुहोति ॥२८॥ ब्रह्मन् प्रस्थास्यामः इति ॥२९॥ पृषदाज्येन नवानूयाजान् यजति ॥३०॥ आगत्य वाजवतीभ्याꣳ स्रुचौ व्यूहति ॥३१॥ शंयुना प्रस्तरपरिधि[1] प्रकिरति ॥३२॥ परेत्य पत्नीः संयाजयन्ति ॥३३॥ फलीकरणहोमꣳ हुत्वा प्राङेत्य त्रीणि समिष्टयजूꣳषि जुहोति ॥३४॥ यज्ञ यज्ञं=सुवीरः[2] स्वाहा इति स्रुवेण हुत्वा ध्रुवामाप्याय्य देवा गातुविद इति स्रुचा जुहोति। °गातुं वित्त्वा=वाते धाः इति ॥३५॥ प्रसिध्यति कर्म ॥३६॥ सन्तिष्ठते महाहविः ॥३७॥ [ १२ ]
[ इति तृतीयोऽनुवाकः ]

## [ पितृयज्ञः ]

पितृयज्ञ एवातः ॥ १ ॥ तस्य संभाराः व्रीहियवाश्चाम्बरीषं चाभिवान्यायै च दुग्धमिक्षुशलाका च मूलच्छिद् वेदिस्तल्प्या (यजमानसंमि-)ता चतुःस्रक्तिः सर्वतः समे(-क्ष-)णश्च[3] द्राघीयाꣳश्चेध्मः समूलं च बर्हिराञ्जनं च कशिपु[4] दशोपबर्हणे[5] च परिश्रयणं च ॥२॥ दक्षिणेन गार्हपत्यं यज्ञायुधानि संꣳसाद्यापः प्रणीय सोमाय पितृमते पुरोडाशꣳ षट्कपालं निर्वपति, पितृभ्यो बर्हिषद्भ्यो धानाः, पितृभ्योऽग्निष्वात्ते(-भ्योऽभिवान्यायै दुग्धे म-)न्थम्[6] ॥३॥ अवघ्नन्ति दक्षिणार्धे प्रतिपुरुषमेककपालꣳस्त्रियम्बकान्, एकमतिरिक्तम् ॥ ४ ॥ अम्बरीषेणान्वाहार्यपचने धाना उपतपति ॥५॥ ताः[7] परिगन्ध्य[8] द्वेधा करोति ॥६॥ तासामर्धाः सक्तून् कुर्वन्ति ॥७॥ अन्वाहार्यपचन(-नि दक्षिणावृत्तस्तिष्ठन्नव-)हन्ति ॥८॥ अस्मा उपस्तीर्णाभिघारितं पुरोडाशमन्वाहार्यपचनान्यर्धम्, स तस्यालङ्कारः ॥९॥ [9]आज्येन धानाः संयावयन्ति[9] स तासामलङ्कारः ॥१०॥ अभिवान्यायै दुग्धेऽर्धपात्रमिक्षुशलाकया[10] मन्थमुपमन्थति दक्षिणावृत्तोऽनारभ्य,[11] स

---

१. MHP प्रस्तरं परिधिं. २. MHP सुवरे. ३. MHP समो..... दश्च. ४. MHP कशि. ५. MP दृचोपबर्हणं; H °बर्हणं. ६. MHP त्यम्. ७. MHP तां. ८. MHP गन्ध्यं. Caland (Ao II.163.15–19) quotes the Vyākhyā : ताः परिगण्य द्वेधा करोति; परिगण्य विकृष्य परितो विकृष्य. From this it appears that the Vyākhyākāra has understood परिगन्ध्य as परिगण्य. Cf. BaudhŚS V.11:144.11 : परिक्षुदय. ९–९. P oms; MH या हरन्ति. १०. MHP °पात्रं इक्षुकशला° [H °पात्र, P °पात्रे]. ११. P °वृत्ते.

तस्यालङ्कारः ॥११॥ अन्वाहार्यंप(-चना-)न्युप[1] समादधाति ॥१२॥ तस्यै मनसा स्तम्बयजुर्हरति ॥१३॥ वेदिं परिगृह्णाति ॥१४॥ करणं जपति ॥१५॥ उदकुम्भमाहृत्य दक्षिणेंऽसे निदधाति ॥१६॥ समूलं बर्हिराहृत्योत्तरत एवोपसादयति ॥१७॥ द्राघीयाꣳसमिध्ममाहृत्योत्तरत[2] एवोपसादयति ॥१८॥ उदकुम्भमादाय परिषेक्ता त्रिरपसलैः [3]परिषिञ्चन् प(-र्येति ॥१९॥निधायो-) दकुम्भं[3] प्रतिपथं त्रिः पुनः पुनः परिद्रवति ॥२०॥ समूलं बर्हिरादाय त्रिरेवापसलैः परिस्तृणन्[4] पर्येति[5] ॥२१॥ निधाय प्रस्तरं प्रतिपथं त्रिः पुनः परिद्रवति[6] ॥२२॥ प्रस्तरमादाय प्राङुत्सृप्य परिधीन् परिदधाति ॥२३॥ समिधावादधाति ॥२४॥ परिधिषु वाचयित्वाऽग्निं युनक्ति ॥२५॥ अपरेणाग्निं प्रस्तरं न्यस्यति ॥२६॥ समूलं[7] तिरश्चो बर्हिराहरन्ति ॥२७॥ अस्मा एकꣳ स्रुवमेकां[8] जुहूमेकामुपभृतमेकां[9] ध्रुवामेकामाज्यस्थालीमेकं[9] प्राशित्रहरणमेकं मेक्षणमेकं पुरोडाशमेकां धानाम् एकं मन्थमेकामिक्षुशलाकामेकमाञ्जनमेकमभ्यञ्जनमेकं कशिपुमेकमुपबर्हणमेकं[10] परिश्रयणम् ॥२८॥ एकैकमेवैनान्यनूचीनान्युदाहरन्ति ॥२९॥ समासाद्य ध्रुवा असदन्, यन्मे अग्ने इति समभिमृश्य षड्ढोतारं व्याचष्टे ॥३०॥ अग्नये देवेभ्यः पितृभ्यः समिध्यमानायानुब्रूहि इत्य(-हाज्यस्य गृह्णानश्चतुः)[11] ॥३१॥ उशन्तस्त्वा हवामहे [12]इत्येतां त्रिरन्वाह[12] । उशन्तः=अत्तवे इति ॥३२॥ तानिध्मेन परीप्सति ॥३३॥ अतिशिनष्टि समिधम् ॥३४॥ अनूक्तासु सामिधेनीषु स्रुवेणाघारमाघार्याह [13]अ(-ग्नीद-)ग्निꣳ सकृत् सकृत् संमृड्ढि इति ॥३५॥ उत्थाय प्रवरं प्रवृणीते ॥३६॥ ओ श्रावय इत्याह ॥३७॥ सीद (होतः)[14] इत्येष एवात्र प्रवरः ॥३८॥ नार्षेयं वृणीते न होतारम् ॥३९॥ सीदति होता ॥४०॥ प्रसूतः स्रुचावादत्ते ॥४१॥ अपबर्हिषश्चतुरः[15] प्रयाजान् यजति ॥४२॥ आज्यभागौ यजति ॥४३॥ जीवमन्तावाज्यभागौ[16] ॥४४॥ अग्नयेऽनुब्रूहि इत्याहाज्यस्य गृह्णानश्चतुः ॥४५॥ आ नो अग्ने सुचेतुना[17] इत्यन्वाह ।

१. MHP त्वाप. २. MHP °मिध्माहृ°. ३–३. MH °षिञ्चन्व····दकुभं [M य कुंभं]; H षिञ्चन्वयकुंभं. ४. MHP om परि. ५. MHP वर्येति. ६. H प्रतिद्र°. ७. MHP स्वयं. ८. MHP ध्रुवमे°. ९–९. MHP °मेतां ध्रुवामेकमा°. १०. MHP कशिल्पेक°. ११. MHP om. १२–१२. MHP एतास्त्रिमन्वाह. १३. MHP om अग्नीद्. १४. MHP om. १५. MHP च बर्हिषश्चतुरं. १६. H °मन्त्रावा°. १७. MHP सुतेतुना.

°रयिं=जीवसे इति ॥४६॥ जुषाणेन यजति ॥४७॥ वषट्कृते जुहोति ॥४८॥ सोमायानुब्रूहि इत्याहाज्यस्यैव[1] गृह्णानश्चतुः ॥४९॥ त्वꣳ सोम महे भगम् इत्यन्वाह। °त्वं दूत=जीवसे इति ॥५०॥ जुषाणेनैव यजति ॥५१॥ वषट्कृते जुहोति ॥५२॥ अत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा प्राचीनावीतानि कुर्वते ॥५३॥ [ १३ ]

प्राचीनावीतानि कुर्वते ॥१॥ आदत्ते दक्षिणार्ध्यं परिधिम् ॥२॥ तं[2] मध्यमं परिधिमनु निपातयति ॥३॥ परिश्रयन्ति ॥४॥ उत्तरां वेद्यै श्रोणिं प्रति परिश्रयणस्य सन्धिं कुर्वन्ति ॥५॥ विपर्यन्ति ॥६॥ उत्तरतो ब्रह्मा च यजमानश्चोपविशतो दक्षिणतो होता चाग्नीच्च[3] ॥७। दक्षिणतोऽवदायोदङ्ङतिचङ्क्रम्यते[4] ॥८॥ आ स्वधा इत्याश्रावयति[5] ॥९॥ अस्तु स्वधा इति प्रत्याश्रावयति ॥१०॥ स्वधा नमः इति वषट्करोति[6] ॥११॥ [7]वषट्कृते जुहोति[7] ॥१२॥ सोमाय पितृमतेऽनुस्वधा कुरु इत्याहोपस्तृणानोऽवद्यन् ॥१३॥ सकृत्पुरोडाशस्यावद्यति, सकृद्धानानाꣳ सकृन्मन्थस्य॥१४॥ अभिघारयति ॥१५॥ प्रत्यनक्ति ॥१६॥ द्वे द्वे पुरोनुवाक्ये अन्वाह त्वꣳ सोम प्रचिकितो मनीषा=मघवा मवा (नः इति ॥१७॥ आ स्वधा इ-)त्याश्रावयति[8] ॥१८॥ अस्तु स्वधा इति प्रत्याश्रावयति[9] ॥१९॥ सोमं पितृमन्तꣳ स्वधा कुरु इत्याह ॥२०॥ ये स्वधा इत्यागुरते[10]॥२१॥ त्वꣳ सोम पितृभिः संविदानः इति यजति। °अनुद्यावा=रयीणाम् इति ॥२२॥ स्वधा नमः इति वषट्करोति ॥२३॥ वषट्कृते जुहोति ॥२४॥ पितृभ्यो बर्हिषद्भ्योऽनु स्वधा कुरु इत्याहोपस्तृणानोऽवद्यन् ॥२५॥ (सकृद्धानानामवद्यति) सकृन्मन्थस्य, सकृत्पुरोडाशस्य ॥२६॥ अभिघारयति ॥२७॥ प्रत्यनक्ति ॥२८॥ बर्हिषदः पितर ऊत्यर्वाग् इत्यन्वाह। °इमा वो हव्या=गमिष्ठाः[11] इति ॥२९॥ आ स्वधा इत्याश्रावयति ॥३०॥ अस्तु स्वधा इति प्रत्याश्रावयति ॥३१॥ पितॄन् बर्हिषा स्वधा कुरु इत्याह ॥३२॥ ये स्वधा इत्यागुरते[12] ॥३३॥ उपहूताः पितरः सोम्यासः इति यजति। (°बर्हिष्येषु निधिषु=अवन्त्वस्मान् इति) ॥३४॥ स्वधा नमः इति वषट्करोति ॥३५॥ वषट्कृते जुहोति ॥३६॥

१. MHP त्याज्य°. २. MHP त. ३. P चाग्निच्च. ४. MH °तोवदातयाद° [M तोऽव°]. ५. MHP °श्रावयेति. ६. P oms. ७–७. MH om. ८. MP श्रापयेति; H श्रावयेति. ९. MH श्रापयति. १०. MHP °गुरुते. ११. MHP गमिष्मा. १२. MH °गुरुता; P °गुरुते.

पितृभ्योऽग्निष्वात्तेभ्योऽनु स्वधा कुरु इत्याहोपस्तृणानोऽवद्यन् ॥३७॥ सक्तुन्मन्थस्यावद्यति, सक्तुपुरोडाशस्य सक्तुद्धानानाम् ॥३८॥ अभिघारयति ॥३९॥ प्रत्यनक्ति ॥४०॥ शृण्वन्तु नः पितरः सोम्यासः इत्यन्वाह[1] । अग्निष्वात्ता ऋतुभिः संविदाना भागं जुषाणा प्रथन्तां ( ······· ) भगमायजन्तु ॥ वान्यायै दुग्धे जुषमाणाः करम्भमुदीराणा [2]अवरे परे[2] च । अग्निष्वात्ता ऋतुभिः संविदाना आसद्यास्मिन् बर्हिषि मादयन्ताम् इति ॥४१॥ आ स्वधा इत्याश्रावयति[3] ॥४२॥ अस्तु स्वधा इति प्रत्याश्रावयति ॥४३॥ पितॄनग्निष्वात्तान् स्वधा कुरु इत्याह ॥४४॥ ये स्वधा इत्यागुरते ॥४५॥ आगत्य पितरो मादयन्ताम् इति यजति । अग्निष्वात्ता ऋतु(-भिः संविदानाः । भागं जुषा-)णा अवरे परे च । असुं य ईयुरवृका ऋतज्ञाः इति ॥४६॥ स्वधा नमः इति वषट्करोति ॥४७॥ वषट्कृते जुहोति ॥४८॥ अग्नये कव्यवाहनायानु स्वधा कुरु इत्याहोपस्तृणानोऽवद्यन् ॥४९॥ सक्तुपुरोडाशस्यावद्यति, सक्तुद्धानानाꣳ सक्तुदिक्षुशलाकया[4] मन्थस्य ॥५०॥ तामवदायाधोऽधः स्रुचावग्नीधे प्रयच्छति ॥५१॥ द्विरभिघारयति ॥५२॥ न प्रत्यनक्ति ॥५३॥ यदग्ने कव्यवाहन इत्यन्वाह । पितॄन् यक्ष्यृतावृधः । प्र च[5] = पितृभ्य[6] [7]आ ॥ ये तातृपुर्देवत्रा[7] जेहमाना होत्रावृधः स्तोमतष्टासो अर्कैः । [8]आऽग्ने याहि सुविदत्रेभिरर्वाङ् सत्यैः कव्यैः पितृभिर्घर्मसद्भिः इति ॥५४॥ आ स्वधा इत्याश्रावयति[9] ॥५५॥ अस्तु स्वधा इति प्रत्याश्रावयति ॥५६॥ अग्निं कव्यवाहनꣳ स्वधां कुरु इत्याह ॥५७॥ ये स्वधा इत्यागुरते ।५८॥ हव्यवाहम् इति यजति । अजरं[10] पुरुप्रियमग्निं घृतेन हविषा सपर्यन्[11] । उपासदं[12] कव्यवाहं पितॄणाꣳ स नः प्रजां वीरवतीꣳ समृण्वतु इति ॥५९॥ स्वधा नमः इति वषट्करोति ॥६०॥ वषट्कृते जुहोति ॥६१॥ अनुप्रहरत्यग्नीदिक्षुशलाकाम् ॥६२॥ ताꣳ सꣳस्रावेणाभिजुहोति ॥६३॥ अत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा प्राशित्रमवद्यति ॥६४॥ तदुत्तरतोऽत्यूह्य सादयति ॥६५॥ अप उपस्पृश्येडामवद्यति ॥६६॥ उपहूतायामिडायामग्नीध आदधाति ॥६७॥ अवजिघ्रत्यग्नीत्, न प्राश्नाति ॥६८॥ मार्जयते ॥६९॥ अवजिघ्रति होता, न

---

१. P इत्याह. २–२. M अवरेऽपरे. ३. MHP श्रावयेति. ४. H शलाकाया. ५. MHP प्रचः. ६. P पितृव्य. ७-७. MHP आयेत पितृयुर्दे [M तृपु]. ८. P oms आ. ९. MHP श्रावयेति. १०. MP अजां; H अपां. ११. H सपर्यंत. १२. उवासदं.

प्राश्नाति ॥७०॥ मार्जयते ॥७१॥ परिहरन्ति ब्रह्मणे ॥७२॥ अवजिघ्रति ब्रह्मा, न प्राश्नाति ॥७३॥ मार्जयते ॥७४॥ तान्यत्रैवेडापात्रे संप्रकिरन्ति ॥७५॥ अथ त्रीनुदपात्रान्निनयति ॥७६॥ [ १४ ]

अथ त्रीनुदपात्रान्निनयति मार्जयन्तां पितरः इति दक्षिणायाꣳ श्रोण्यां, मार्जयन्तां पितामहाः इति दक्षिणेंऽसे, मार्जयन्तां प्रपितामहाः इत्युत्तरेंऽसे ॥१॥ मार्जयस्व इत्याह यजमानम् ॥२॥ तस्याञ्जलावुपस्तृणीते ॥३॥ सकृत् पुरोडाशस्यावद्यति, सकृद्धानानाꣳ सकृन्मन्थस्य ॥४॥ अभिघारयति ॥५॥ एतत्ते तत इति दक्षिणायाꣳ श्रोण्यां ददाति । °याꣳश्च त्वमन्वसि ये च त्वामनु ये च त्वामभितो ये च त्वया [1]सह स्वधाक्षितिः इति[1] ॥६॥ इयमस्माकम् इत्यग्रेणाग्निमागत्योत्तरां वेद्यै श्रोणीमभिमृशति । °इमां वयं जीवा[2] जीवन्तोऽनुसञ्चरन्तो भूयास्म इति ॥७॥ उपस्तृणीत एवास्याञ्जलौ ॥८॥ सकृद्धानानामवद्यति, सकृन्मन्थस्य, सकृत्पुरोडाशस्य ॥९॥ अभिघारयति ॥१०॥ एतत्ते पितामह इति दक्षिणेंऽसे ददाति । °या(-ꣳश्च त्व-)मन्वसि ये च त्वामनु = क्षितिः इति ॥११॥ इयमस्माकम् इत्येवाग्रेणाग्निमागत्योत्तरां वेद्यै श्रोणीमभिमृशति । °इमां वयं = भूयास्म इति ॥१२॥ उपस्तृणीत एवास्याञ्जलौ ॥१३॥ सकृन्मन्थस्यावद्यति, सकृत् पुरोडाशस्य, सकृद्धानानाम् ॥१४॥ अभिघारयति ॥१५॥ एतत्ते प्रपितामह इत्युत्तरेंऽसे ददाति । °याꣳश्च त्वमन्वसि (ये च त्वामनु = क्षितिः) इति ॥१६॥ इयमस्माकम् इत्येव(-ग्रेणा-)-ग्निमागत्योत्तरां वेद्यै श्रोणीमभिमृशति । °इमां = भूयास्म इति ॥१७॥ मार्जयते ॥१८॥ यजमानः अत्र पितरो यथाभागं मन्दध्वम् इत्युक्त्वोदङ्ङो निष्क्रामति ॥१९॥ आ तमितोस्तिष्ठन्ति ॥२०॥ सुसंदृशं त्वा वयम् इत्याहवनीयमभिव्यनिति[3] । °मघवन् मन्दिषीमहि[4] । प्र नूनं पूर्णबन्धुरः स्तुतो[5] = हरी (इति ॥२१॥ अमीमदन्त पितरः सोम्याः इत्यभिपर्यावर्तते)[6] ॥२२॥ यत् पात्रियामतिशिष्यते[7] तत्[8] त्रिरवजिघ्रति ये सजाताः[9] समनसो जी = शतꣳ समाः इति ॥२३॥ नमोः वः पित[10] = वसिष्ठो भूयासम् इति ॥२४॥ अथ त्रीनेवोदपात्रान्निनयति मार्जयन्तां पितरः इति दक्षिणायाꣳ श्रोण्यां, मार्जयन्तां

१—१. MHP स स्वधा स्वधाक्षितृती. २. P जित्वा. ३. MP °व्यनति. ४. MHP ins इति after मन्दिषीमहि. ५. MHP इत्यत एवै. ६. MHP om, thus supra II.2.27. ७. MHP °रिष्यते. ८. MH om. ९. MHP समजाताः १०. MHP abr, see supra II.2.29.

पितामहाः इति दक्षिणेंऽसे, मार्जयन्तां प्रपितामहाः इत्युत्तरेंऽसे ॥२५॥ ददाति (कशिपूपबर्हणे आञ्जनाभ्यञ्जने) ॥२६॥ आञ्जतां[1] पितरः: इति दक्षिणायाꣳ श्रोण्यामानक्ति[2] ॥२७॥ अभ्यञ्जतां पितर आञ्जतां पितरः इति द्विरानक्ति सकृदभ्यनक्ति ॥२८॥ [3]आञ्जतां पितामहाः[3] इति दक्षिणेंऽसे आनक्ति[4] ॥२९॥ [5]अभ्यञ्जतां पितामहा आञ्जतां पितामहाः इति द्विरेवानक्ति सकृदभ्यनक्ति[5] ॥३०॥ आञ्जतां प्रपितामहाः इत्युत्तरेंऽसे आनक्ति[6] ॥३१॥ अभ्य(-ञ्जतां) प्रपितामहा आञ्जतां प्रपितामहाः इति द्विरेवानक्ति[7] सकृदभ्यनक्ति ॥३२॥ दशां छिनत्ति एतद्वः पितरो वासो[8]=करोतु मामनेनसम् इति ॥३३॥ यज्ञोपवीतानि कुर्वते[9] ॥३४॥ ऋजुधा चरन्ति ॥३५॥ सादयन्ति[10] दक्षिणार्ध्यम् ॥३६॥ परिधिमवोद्धरन्ति ॥३७॥ परिश्रयणं विपर्यन्ति॥३८॥ सन्ततिꣳ हुत्वा षड्ढोतुराहु तं[11] जुहोति ॥३९॥ (संप्रेष्यति ब्रह्मन्,)[12] प्रस्थास्यामः समिधमाधाया(-ग्नीद-)ग्नि[13]ꣳ सकृत् संमृड्ढि इति ॥४०॥ अपबर्हिषौ द्वावनूयाजौ यजति ॥४१॥ आगत्य वाजवतीभ्याꣳ स्रुचौ व्यूहति ॥४२॥ शंयुना प्रस्तरपरिधि[14] संप्रकिरति ॥४३॥ न पत्न्यन्वास्ते ॥४४॥ न संयाजयन्ति ॥४५॥ न समिष्टयजुर्जुहोति ॥४६॥ अत्रैव यत्पुरोडाशस्यातिशिष्यते यद्धानानां यन्मन्थस्य तत्सर्वꣳ संप्रकिरन्ति ॥४७॥ प्रजापते न त्वदेतान्यन्यः इत्याहवनीयस्यार्धमेति। °विश्वा=रयीणाम् इति ॥ सन्तिष्ठते पितृयज्ञः ॥४८॥ कोशबिले त्र्यम्बकान् संप्रकिरन्ति ॥४९॥ अन्तमं[15] पलाशस्य पर्णमुपकल्पयते ॥५०॥ [ १५ ]

[त्र्यम्बकेष्टिः]

अन्तमं पलाशस्य[16] पर्णमुपकल्पयते ॥१॥ इमां दिशं प्राचीमुदीचीं चतुष्पथꣳ स्पाशयन्ते ॥२॥ तमपरेणाखूत्करमन्यतममेकोल्मुकमादायोदपात्रं[17]

---

१. MHP दक्षिणां for आञ्जतां. २. H °मनक्ति. ३--३. M अभ्यञ्जतां°; H अभ्यञ्जतां प्रपितामहा. ४. MHP सभ्यनक्ति, ५–५. H oms; M आञ्जतां पितामहा अभ्यञ्जतां पितामहा इति द्विरभ्यनक्ति सकृदानक्ति. ६. P अनक्ति. ७. MHP °वातनक्ति. ८. MHP abr, see supra II.2. 31--37. ९. P कुर्वीत. १०. MHP सारयन्ति. ११. M प्रड्ढोतु. १२. MHP om. १३. MHP °मादायाग्नि. १४. P परिघी. १५. M अन्त्यमं, thus infra IV.16.1. १६. MH पलास्य. १७. P °णाखूत्कखूत्करम°.

च कुमारीमामन्त्र्य त्र्यम्बकैरुत्परायन्ति[१] ॥३॥ यावन्तो गृह्याः स्मः इति गार्हपत्यमुपतिष्ठते । °तेभ्यः = शर्म मे यच्छ इति ॥४॥ आखुस्ते रुद्र पशुः इत्याखूत्करे[२] त्र्यम्बकमन्ववस्यति । °तं जुषस्वैष ते रुद्र भागः = तं जुषस्व इति ॥५॥ चतुष्पथ एकोल्मुकꣳ[३] सादयित्वोपसमादधाति[४] ॥६॥ अन्तमे[५] पलाशस्य पर्णे[६] त्र्यम्बकाणाꣳ समवद्यति ॥७॥ भेषजं गवे[७] इत्यपरेणाग्निं पुरोनुवाक्यामन्वाह । °अश्वाय पुरुषाय भेषज = मेष्यै[८] कृधि इति ॥८॥ अवाम्ब रुद्र मदिमहि इति यजति । °अव देवं त्र्यम्बकम् । यथा नः = व्यवसाययात् । यथा नः सर्वमिज्जगदयक्ष्मꣳ सुमना असत् स्वाहा इति ॥९॥ अनुप्रास्यति पर्णं कोशबिले ॥१०॥ त्र्यम्बकानुत्खिदति ॥११॥ तान् विमथ्नते ॥१२॥ तान् समाहरन्ति ॥१३॥ तान् यजमानस्याञ्जलावावपन्ति[९] ॥१४॥ त्र्यम्बकं यजामहे इति दक्षिणा(-नूरू-)नाघ्नानाः[१०] प्रसलैः परियन्ति[११] । °सुगन्धि पुष्टिवर्धनमुर्वा = माऽमृतात्[१२] इति ॥१५॥ तानेवोत्खिदति[१३] ॥१६॥ तान् विमथ्नते ॥१७॥ तान् समाहरन्ति ॥१८॥ तान् यजमानस्यैवावपन्ति॥१९॥ त्र्यम्बकं यजामहे इत्येव दक्षिणानूरूनाघ्नानाः प्रतिपथं परियन्ति ॥२०॥ [१४]प्रेतो मुक्षीय माऽमुतः इति ह कुमारी [१५]वा पतिकामा[१५] ब्रूयात् ॥२१॥ तस्या[१६] एनानञ्जलावावपन्ति भगेन[१७] त्वा सꣳसृजामि मासरेण सुरामिव इति ॥२२॥ तान्नु साऽन्ततो (यजमानस्यैवा-)ञ्जलावावपति ॥२३॥ तान् मूतयोः[१८] कृत्वा विविधेनोदपात्रमादायाध्वर्युश्च यजमानश्च[१९] हस्ते शुष्के स्थाणावासजतः एष ते रुद्र भागस्तं जुषस्व तेन = कृत्तिवासाः इति ॥२४॥ अपः परिषिच्याप्रतीक्षमाव्रजते ॥२५॥ आगत्य विसृजति पूर्वमग्निमपरस्मिन्नाहवनीये ॥२६॥ (पुनरे-)त्यापः प्रणीयादित्यं चरुं[२०] निर्वपति ॥२७॥ निरुप्ते प्राणग्रहाꣳश्च पृश्नीꣳश्च [२१]व्याचष्टे ॥२८॥ समासन्नेऽपानग्रहाꣳश्च पृश्नीꣳश्च[२१] = दशहोतारं व्याचष्टे॥२९॥ तस्यै वार्त्रघ्नावाग्यभागौ॥३०॥

१ M रुत्वरायन्ति; H रुत्वर यन्ति; P रुत्वारायान्ति; thus Ao II.158.33. २. MHP °खून्करे. ३. M एङ्कोन्मुकं; HP एकोन्मुकं. ४. MHP समाधा°. ५. MHP अन्तमेव. ६. MHP पर्णं. ७. P गाव. ८. MHP मेष्ये. ९. P °स्यां जावावपति. १०. MHP °घ्नानां. ११. MHP पर्यन्ति. १२. MHP माममृताद्. १३. MP °त्खिददिति. १४. MHP प्रेता. १५--१५. MHP वपतिकामा. १६. MHP तस्य. १७. MHP भगन. १८. MHP मूतयों. १९. H °मानस्य. २०. H oms. २१--२१ P oms व्याचष्टे = पृश्नीꣳश्च. MHP abr, see supra I.7.5--6.

अदितिर्नं उरुष्यतु इत्यन्वाह ॥३१॥ महीमू षु मातरम् इति यजति ॥३२॥ वषट्कृते जुहोति ॥३३॥ त्रिष्टुभौ संयाज्ये ॥३४॥ (सन्ततिमनु होतुराहुतिं) जुहोति ॥३५॥ प्रसिध्यति कर्म ॥३६॥ मन्तिष्ठत एषेष्टिः ॥३७॥ सꣳस्थामनु हविषो[1] निवर्तयते ॥३८॥ प्रसिद्धाः संभाराः ॥३९॥ य इमां महीं पृथिवीमृतुभिः पर्यवर्तयदन्ताद्[2] पृथिव्या अनु । अग्निस्तिग्मेन शोचिषा वैश्वानरस्य तेजसर्तेन त्वा निवर्तये सत्येन परिवर्तये शिवेन [3]त्वो(-पवर्तये तद्वतं तत्स-)त्यं तद्व्रतं तच्छकेयं तेन राध्यासम् इति पुरस्तादग्रे वपतेऽथ दक्षिणतोऽथ पश्चादथोत्तरतोऽथ मध्ये ॥४०॥ सꣳस्थामनु हविषः प्रसिद्धम् ॥४१॥ प्रसिद्धं पौर्णमासेन हविषा यजते ॥४२॥ देवव्रतानि चरति ॥४३॥ [१६] [इति चतुर्थोऽनुवाकः]

## [ शुनासीरीयपर्व ]

अद्य मृगशीर्षेण पौर्णमासीति यज्ञायुधानि सꣳसाद्यापः प्रणीय शुना(-सीरीयं निर्वपत्याग्नेय-)मष्टाकपालꣳ सौम्यं चरुꣳ सावित्रं द्वादशकपालꣳ सारस्वतं चरुं वैष्णवं चरुमैन्द्राग्नं द्वादशकपालं वैश्वदेवं चरुमिन्द्राय शुनासीराय पुरोडाशं द्वादशकपालं वायव्यं पयः सौर्यमेककपालम् ॥१॥ निरुप्ते प्राणग्रहाꣳश्च पृश्नीꣳश्च व्याचष्टे ॥२॥ तस्य हविष्कृता वाचं विसृज्य चतु(-र्गृहीतेन पञ्चहोतारमाज्य-)स्याहवनीये जुहोति ॥३॥ श्रप्यन्ते[4] हवीꣳषि ॥४॥ शृतेषु हविःषु स्तम्बयजुर्हरति ॥५॥ वेदिं परिगृह्णाति ॥६॥ करणं जपति ॥७॥ प्रसूत उत्तरं परिग्राहं परिगृह्णाति ॥८॥ योयुपित्वाऽवस्कभ्य संप्रेष्यति प्रोक्षणीरासादयेध्मावर्हिरुपसादय स्रुवं[5] च स्रुचश्च संमृड्ढि पत्नी[6]ꣳ सन्नह्याज्येनोदेहि (पृषदा-)ज्याय[7] दध्याहरेहि[7] यजमान इति ॥९॥ एतत् कुर्वन्ति ॥१०॥ (स्रुवं च)[8] स्रुचश्च[9] संमृज्याज्यानि गृह्णीते पृषदाज्यवन्ति ॥११॥ इध्माबर्हिः प्रोक्षति ॥१२॥ वेदिं प्रोक्षति ॥१३॥ आसन्नं प्रोक्षति ॥१४॥ अपो निनीय प्रस्तरं गृह्णाति॥१५॥ स्तृणाति ब्रहिः ॥१६॥ प्राङुत्सृप्य परिधीन् परिदधाति ॥१७॥ समिधावादधाति ॥१८॥ परिधिषु वाचयित्वाऽग्निं युनक्ति ॥१९॥ आगत्य तिरश्ची सादयति ॥२०॥ तिरश्च्योः प्रस्तरम् ॥२१॥ प्रस्तरे जुहूम् ॥२२॥

---

१. P हविषे. २. MH पर्यपर्यवर्त°. ३. MHP यो. ४. MH शर्पन्ते; H शूर्पं ते. ५. MHP स्रुचं. ६. P पात्रीं. ७–७. MHP °त्याहाध्या for °ज्याय दध्या°. ८. MHP om. ९. MHP स्रुच संमृ°.

बर्हिषीतरे ॥२३॥ अलङ्कुर्वन्त्यनुपूर्वं हवींषि ॥२४॥ उपस्तीर्णाभिघारितान्युद्वासयति ॥२५॥ समभिघार्यं हवींष्याहरन्ति ॥२६॥ समासन्ने ऽपानग्रहांश्च पृश्नींश्च व्याचष्टे ॥२७॥ ध्रुवा असदन्, यन्मे अग्ने इति समभिमृश्य पञ्चहोतारं व्याचष्टे ॥२८॥ निर्मन्थ्येन चरति ॥२९॥ अग्नये समिध्यमानायानुवाच आह ॥३०॥ सप्तदश सामिधेनीरन्वाह ॥३१॥ अनूक्तासु सामिधेनीषु स्रुवेणाघारमाघार्याह अग्नीदग्निं(त्रि-)स्त्रिः[1] संमृड्ढि इति ॥३२॥ स्रुग्भ्यामुत्तरम् ॥३३॥ असंस्पर्शयन्नत्याक्रम्य ध्रुवां समज्य सादयित्वा प्रवरं प्रवृणीते ॥३४॥ सीदति होता ॥३५॥ प्रसूतः स्रुचावादत्ते ॥३६॥ नव प्रयाजान् यजति ॥३७॥ ओ श्रावय इत्याह ॥३८॥ समिधो यज इति ॥३९॥ यज यज इति ॥४०॥ चतुर्थेऽर्धं समानीयाष्टमे सर्वं समानयति[2] ॥४१॥ उपभृतोऽधि सर्वं प्रयजति ॥४२॥ प्रयाजानिष्ट्वाऽत्याक्रम्य ध्रुवामभिघारयत्यनुपूर्वं हवींषि ॥४३॥ पृषदाज्यमन्ततः ॥४४॥ नोपभृतं रिक्ता हि सा भवति ॥४५॥ आज्यभागौ यजति ॥४६॥ वार्त्रघ्नावाज्यभागौ ॥४७॥ अग्नयेऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥४८॥ [ १७ ]

अग्नयेऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥१॥ प्रसिद्धाः सप्तानां हविषां याज्यापुरोनुवाक्याः ॥२॥ इन्द्राय शुनासीरायानुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥३॥ इन्द्रं वयं शुनासीरम् इत्यन्वाह । अस्मिन् यज्ञे हवामहे आ वाजेरुप नो हवामहे इति ॥४॥ प्र हव्यानि इति यजति । घृतवन्त्यस्मै हर्यश्वाय भरता[3] सजोषाः । इन्द्रर्तुभिर्ब्रह्मणा वावृधानः शुनासीरी हविरिदं जुषस्व इति ॥५॥ वषट्कृते जुहोति ॥६॥ वायवेऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥७॥ वायो शतं हरीणाम्[4] इत्यन्वाह ॥८॥ प्र याभिर्यासि दाश्वांसम् इति यजति ॥९॥ वषट्कृते जुहोति ॥१०॥ सूर्यायानुब्रूहि इत्याहोपस्तीर्णाभिघारितमेककपालमादधानः[5] ॥११॥ उदु त्यं जातवेदसम् इत्यन्वाह ॥१२॥ चित्रं देवानामुदगादनीकम् इति यजति ॥१३॥ वषट्कृते जुहोति ॥१४॥ अग्नये स्विष्टकृतेऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥१५॥ सकृत्सकृदुत्तरार्धात् सर्वेषां हविषामवद्यति ॥१६॥ आशयादेककपालस्यावदाय द्विः ॥१७॥ अभिघारयति ॥१८॥ न प्रत्यनक्ति ॥१९॥

१. MHP °दग्निस्त्रि°. २. MHP नयतु. ३. MHP भरतो. ४. M हरीणीम्; H P हरिणिम्. ५. H oms आदधानः

अग्निꣳ स्तोमेन बोधय इत्यन्वाह ॥२०॥ स हव्यवाड् इति यजति ॥२१॥ वषट्कृते जुहोति ॥२२॥ अत्याक्रम्य[1] (यथायत-) नꣳ स्रुचौ (सादयित्वा प्राशित्र-)मवद्यति ॥२३॥ अप उपस्पृश्येडामवद्यति ॥२४॥ उपहूताया-मिडायामग्नीध आदधाति ॥२५॥ प्राश्नन्ति ॥२६॥ मार्जयन्ते ॥२७॥ परिहरन्ति ब्रह्मणे ॥२८॥ प्राशिते प्राशित्रे चरौ यजमानभागं प्रास्यो-द्वासयन्ति हवीꣳषि ॥२९॥अन्वाहार्यं वाचयति ॥३०॥ सन्ततिमनु द्वौ विष्ट-म्भान्वारोहौ (जुहोति अभिषाहे स्वाहा इति विष्टम्भः सꣳसर्पोऽस्यꣳहस्-) पत्याय स्वाहा इत्यन्वारोहः[2] ॥३१॥ एहि यजमान इत्युक्त्वाऽन्वारब्धे यजमाने होतुराहुतिं तृतीयां जुहोति ॥३२॥ ब्रह्मन् प्रस्थास्यामः इति ॥३३॥ पृषदाज्येन नवानूयाजान् यजति ॥३४॥ आगत्य वाजवतीभ्याꣳ स्रुचौ व्यूहति ॥३५॥ शंयुना प्रस्तरपरिधि संप्रकिरति ॥३६॥ प(-रेत्य पत्नीः) संयाजय(-न्ति ॥३७॥ फ-)लीक(-रणहोमꣳ) हुत्वा प्राङेत्य त्रीणि समिष्ट-यजूꣳषि जुहोति ॥३८॥ यज्ञ यज्ञं गच्छ यज्ञ=सुवीरः स्वाहा इति स्रुवेण हुत्वा ध्रुवामाप्याय्य देवा गातुविदः इति स्रुचा जुहोति । गातुं वित्त्वा= स्वाहा वाते धाः इति ॥३९॥ सꣳस्थामनु हविषो निवर्तयते ॥४०॥ प्रसिद्धाः संभाराः ॥४१॥ एकं मासमुदसृजत=संवर्तयामि जीवसे । अग्निस्ति-ग्मेन शोचिषा वैश्वानरस्य तेजसर्तेन त्वा निवर्तये सत्येन[3] परिवर्तये शिवेन त्वोपवर्तये । तद्दतं=तेन राध्यासम् इति पुरस्ता[4]=मध्ये ॥४२॥ सꣳस्थामनु हविषः[5] प्रसिद्धम् ॥४३॥ पौर्णमासेन हविषा यजते ॥४४॥ ( देवव्रतानि चरति )[6] ॥४५॥ [१८] [ इति पञ्चमोऽनुवाकः ]

[ इति चातुर्मास्याख्यः चतुर्थः प्रपाठकः ]

---

१. MHP आक्रम्य. २. MH °रोहा. ३. M सत्ये. ४. MHP abr, see supra IV.4.32. ५. MHP हविषं. ६. MHP om.

## [ अथ पञ्चमः प्रपाठकः ]

### [ अथ पशुबन्धः ]

पशुना यक्ष्यमाणः संभारान् संभरते ॥१॥ द्वे रशने, द्वे वपाश्रपण्यौ, त्रयः काष्मर्यमयाः परिधयः, औदुम्बरो मैत्रावरुणदण्डो, हृदयशूलो, दधि पृषदाज्याय, सक्तवः सक्तुहोमाय ॥२॥ गार्हपत्य आज्यं विलाप्योत्पूय स्रुवं च स्रुचश्च[1] संमृज्य प्राङेत्याहवनीयस्यार्धं चतुर्गृहीतं गृह्णीते ॥३॥ देवस्त्वा सविता [2](मध्वा-)नक्तु इत्येनꣳ हिरण्यमन्तर्धायाज्येनानक्ति ॥४॥ ओषधे त्रायस्वैनम् इति बर्हिषा परिदधाति ॥५॥ स्वधिते मैनꣳ हिꣳसीः इति स्वधितिना प्रहरति ॥६॥ यः प्रथमः शकलः[3] परापतति तमुपनह्य निदधाति ॥७॥ अनक्षसङ्गं वृश्चति ॥८॥ प्राञ्चं वोदञ्चं वा प्रपातयति[4] ॥९॥ दिवमग्रेण मा लेखीः[5] इत्यनुमन्त्रयते । अन्तरिक्षं मध्येन मा हिꣳसीः पृथिव्या संभव इति ॥१०॥ वनस्पते शतवल्शो[6] विरोह स्वाहा इति हिरण्यमुपास्य व्रश्चने जुहोति ॥११॥ सहस्रवल्शा[7] वि वयꣳ रुहेम इत्यात्मानं प्रत्यभिमृशते ॥१२॥ अप उपस्पृश्य यं त्वाऽयꣳ स्वधितिस्तेतिजानः[8] प्रणिनाय महते सौभगाय इत्य(-न्वग्रꣳ शाखाः प्रहापयति)[9] ॥१३॥ अच्छिन्नो रायः सुवीरः इति परिवासयति ॥१४॥ एवमेवोत्तरस्य स्कन्धस्य चषालं परिवासयति ॥१५॥ चतुरङ्गुलश्रयमेतदाहरन्ति ॥१६॥ यूपमष्टाश्रिं तक्ष्णुवन्ति ॥१७॥ स यदि पुरस्तादिष्टिं[10] कुर्वन्त्यन्वाहार्यपचने पितृभ्यो दत्त्वा यज्ञायुधानि सꣳसाद्यापः प्रणीयाग्नयेऽष्टाकपालं निर्वपति ॥१८॥ निरुप्ते प्राणग्रहाꣳश्च पृश्नीꣳश्च व्याचष्टे ॥१९॥ समासन्नेऽपानग्रहाꣳश्च[11] (पृश्नीꣳश्च)[12] दशहोतारं व्याचष्टे ॥२०॥ तस्यै वार्त्रघ्नावाज्यभागौ ॥२१॥ अग्निर्मूर्धा भुवः इति हविषः ॥२२॥ त्रिष्टुभौ संयाज्ये ॥२३॥ सन्ततिमनु होतुराहुतिं[13] जुहोति ॥२४॥ प्रसिध्यति कर्म ॥२५॥ सन्तिष्ठत एषेष्टिः ॥२६॥ यद्यु नेष्टिं कुर्वन्त्यन्वाह(-र्यपचने) पितृभ्यो दत्त्वा पूर्वेणाहवनीयं वेदिं कल्पयन्ति[14] रथावकाशाम् ॥२७॥ संप्रति पुरस्ताद्वेद्यां[15] तस्यै[16] सन्धावुपरसंमितं यूपावटं खनति ॥२८॥ तस्यै

१. MHP स्रुचं च. २. MHP om. ३. MHP शकलं. ४. MHP प्रप्रापयाति. ५. MP लिखेः. ६. MP °वलिशो. ७. MP वलिशा. ८. MP तेतिजचानः. ९. MHP om. १०. MHP °दिष्टं; thus Ao II.154.3.

११. H °न्नेपान् ग्रहान्. १२. MHP om. १३. MHP सन्तति मे जुहोतु. १४. MP कपयन्ति. १५. MHP °वेद्यं. १६. MHP तस्य.

स्तम्बयजुर्हरति ॥२९॥ वेदिं परिगृह्णाति ॥३०॥ करणं जपति ॥३१॥ स्फ्यमुदपात्रम् इति संप्रेष्यति । °शम्यामाहरेहि यजमान(-ेदपात्रेणावो-)क्ष इति ॥३२॥ चात्वालकालँ स्फ्येनोद्धत्य उन्नम्भय पृथिवीम् इत्युदपात्रेणावोक्षति । 'भिन्द्धीदं=वि सृजा दृतिम् इति ॥३३॥ शम्यया परिमिमीते ॥३४॥ दक्षिणतः[1] प्राचीँ शम्यां[2] निधाय वित्तायनी मेऽसि इत्यन्तरतः स्फ्येनानुलिखति ॥३५॥ तिक्तायनी मेऽसि इति पश्चादुदीचीम्[3] ॥३६॥ अवतान्मा नाथितम् इति (पुरस्तादुदीचीम् ॥३७॥ अवतान्मा व्यथि-)तम् इत्युत्तरतः प्राचीम् ॥३८॥ विदेरग्निर्नभो नामाग्ने अङ्गिरः इति मध्यतः स्फ्येन पुरीषस्योपहन्ति ॥३९॥ योऽस्यां पृथिव्यामसि इत्यादत्ते ॥४०॥[4] आयुषा नाम्नेहि इति[4] हरति ॥४१॥ यत्तेऽनाधृष्टं नाम यज्ञियं तेन त्वाऽऽदधे इति पूर्वेणाग्नीधँ[5] हृत्वोत्तरवेद्याँ सादयति ॥४२॥ अग्ने अङ्गिरः इति द्विती(-यं प्रहरति ॥४३॥ द्वितीयस्यां पृथिव्यामसि इत्यादत्ते ॥४४॥ आयुषा नाम्नेहि इत्येव हरति ॥४५॥ यत्तेऽनाधृष्टं नाम यज्ञियं तेन त्वाऽऽदधे इति पूर्वेणैवाग्नीधँ[5] हृत्वोत्तरवेद्याँ सादयति ॥४६॥ अग्ने अङ्गिरः इति तृतीयं प्रहरति ॥४७॥ यस्तृतीयस्यां[6] पृथिव्यामसि इत्यादत्ते ॥४८॥ आयुषा नाम्नेहि[7] इत्येव हरति ॥४९॥ यत्तेऽनाधृष्टं नाम यज्ञियं तेन त्वाऽऽदधे इति पूर्वेणैवाग्नीधँ हृत्वोत्तरवेद्याँ सादयति ॥५०॥ तूष्णीं चतुर्थँ हरति ॥५१॥ अद्भिः सन्तृप्य सिँहीरसि महिषीरसि इति संयौति ॥५२॥ उरु प्रथस्वोरु ते यज्ञपतिः[8] प्रथताम् इति स्फ्येन प्रथयति ॥५३॥ ध्रुवाऽसि[9] इति त्रिः शम्यया[10] सँहन्ति ॥५४॥ सर्वतः प्रादेशमात्रीँ सुष्ठु चतुःस्रक्तिं कृत्वा देवेभ्यः शुन्धस्व इत्यद्भि(-रवोक्षति, देवेभ्य शु-)म्भस्व[11] इति सिकताभिः ॥५५॥ अद्भिरेवोपरिष्टाद् ॥५६॥ अनग्नामुत्तरनाभिं कृत्वा यन्ति ॥५७॥ शूर्पेण वा तृणैर्वा प्रच्छाद्येध्ममादीपयन्ति ॥५८॥ उपयमनीरुपकल्पयन्ति[12] ॥५९॥ उत्तरवेद्यै संभाराः ॥६०॥ [ १ ]

उत्तरवेद्यै संभाराः—गुल्गुलुः सुगन्धितेजनँ शुक्लोर्णास्तुका पौतुद्रवाः [13]परिधय उपाँशुग्रहणं[13] प्रोक्षण्यः[14] पञ्चगृहीतमाज्यम् ॥१॥आदीप्त इध्मे

---

१. MHP दक्षिणः. २. MH शम्यं. ३. MH °दीचम्. ४-४. MHP आषानामेहीति. ५. MHP °णाग्नीसं. ६. MHP यत्तृती°. ७. P नाम्नाही°. ८. MP °पतिं. ९. MHP twice. १०. P शंमया. ११. MHP न्धस्वे° [ H wrongly corrected as °न्द्वसे]. १२. MHP कत्वयन्ति. १३-१३. P °घयोपांशु. १४. MHP प्रोक्षणयः.

चतुर्गृहीतं गृह्णीते ॥२॥ तज्जुहोति[1] ॥३॥ षड्ढोतारं मनसाऽनुद्रुत्यापरं चतुर्गृहीतं गृह्णीते ॥४॥ तज्जुहोति[1] ॥५॥ अन्वग्निरुषसामग्रमख्यद् इत्यनुख्यातिम् । अन्वहानि[2]=आ ततान स्वाहा इति ॥६॥ उद्यच्छन्त इध्मम् ॥७॥ उपयच्छन्त्युपयमनीः ॥८॥ अग्नये प्रह्रियमाणायानुब्रूहि [3]इत्याह । एकस्फ्यया[3]-ऽनुद्रव इति ॥९॥ स्फ्येन लिखन्नेकस्फ्ययाऽनुद्रवत्योत्तरवेद्यै[4] ॥१०॥ कवियँज्ञस्य वि तनोति पन्थाम् इत्यध्वर्युर्यजमानं वाचयति । [5]नाकस्य=सनीयान् इति ॥११॥ (अनु-)द्रुत्य[6] इन्द्रघोषस्त्वा वसुभिः पुरस्तात् पातु इत्युत्तरनाभि प्रोक्षति । मनोजवास्त्वा पितृभिर्दक्षिणतः पातु; प्रचेतास्त्वा रुद्रैः पश्चात् पातु; विश्वकर्मा त्वाऽऽदित्यैरुत्तरतः पातु; बृहस्पतिस्त्वा विश्वैर्देवैरुपरिष्टात् पातु इति ॥१२॥ यत्प्रोक्षणीनामुच्छिष्यते तद्[1] दक्षिणत उत्तरवेद्यै स्फ्यस्य वर्त्मन्नुप[7] निनयति ॥१३॥ यं द्वेष्टि यजमानस्तं ध्यायति ॥१४॥ अप उपस्पृश्य पञ्चगृहीतमादाय हिरण्यमुपास्याक्ष्णयोरुत्तरनाभिं व्याघारयति ॥१५॥ सिꣳहीरसि सपत्नसाही स्वाहा इति दक्षिणेंऽसे ॥१६॥ सिꣳहीरसि सुप्रजावनिः स्वाहा इत्युत्तरस्या[8]ꣳ श्रोण्याम् ॥१७॥ सिꣳहीरसि रायस्पोषवनिः स्वाहा इति दक्षिणायाꣳ श्रोण्याम् ॥१८॥ सिꣳहीरस्यादित्यवनिः स्वाहा इत्युत्तरेंऽसे ॥१९॥ सिꣳहीरस्या वह देवान् देवयते यजमानाय स्वाहा इति मध्ये ॥२०॥ भूतेभ्यस्त्वा इति स्रुचमुद्गृह्णाति ॥२१॥ विश्वायुरसि पृथिवीं दृꣳह इति मध्यमं परिधिं परिदधाति पौतुद्रवम्[9] ॥२२॥ ध्रुवक्षिदस्यन्तरिक्षं[10] दृꣳह इति दक्षिणार्ध्यम् ॥२३॥ अच्युतक्षिदसि दिवं दृꣳह इत्युत्तरार्ध्यम् ॥२४॥ अग्नेर्भस्मास्यग्नेः पुरीषमसि इति संभारान् निवपति ॥२५॥ [11]तान् इडायै सृप्तं[11] घृतवच्चराचरम् इति सꣳस्रावेणाभि[12] जुहोति । देवा अन्वविन्दन् गुहाहितम् । ये ग्राम्याः पशवो[13] विश्वरूपा विरूपाः सन्तो बहुधैकरूपाः तेषाꣳ सृप्तानां[14] मयि रन्तिरस्तु स्वाहा इति ॥२६॥ उपनिवपत्युपयमनीः[15] ॥२७॥ सादयत्यग्निम् ॥२८॥ प्रजापतिरसि विश्वकर्मा इति सन्नमुपतिष्ठते । तदसौ

---

१–१. H तं जु०. २. MP अन्वाहानि. ३–३. MHP त्याहैस्फ्या°. ४. H स्फ्येनुद्र°; P स्फ्यो अनु. ५. MHP om अनु. ६. MHP om. ७. MP वर्मन्नु. ८. MHP °त्तरेऽस्यां. ९. MP पौतुन्द्रवं. १०. MH ध्रुवन्तरिक्षं°; P ध्रुवन्तरक्षं. ११–११. MHP तानीडा°; H सप्तं. १२. MHP संस्रुवेणाः° १३. MP पेशवो. १४. MHP सप्तानां. १५. MHP °निवयमनी.

सूर्यस्तदयमग्निः संप्रियः पशुभिर्भुवत्[1] इति ॥२९॥ आहुतिषाहेऽतिमुक्तीर्जुहोति अग्निर्यज्ञं नयतु प्रजानन्[2] मैनं यज्ञहनो विदन्[3]। देवेभ्यः प्रब्रूताद्यज्ञं प्र प्र यज्ञपतिं तिर स्वाहा ॥ वायुर्यज्ञं नयतु प्र=तिर स्वाहा ॥ सूर्यो यज्ञं नयतु प्र=तिर स्वाहा ॥ यज्ञो यज्ञं नयतु=तिर स्वाहा इति ॥३०॥ स्फ्यमादायोत्तिष्ठन्नाह ब्रह्मन्नुत्तरं परिग्राहं परिग्रहीष्यामि इति[4] ॥३१॥ दक्षिणत उत्तरवेद्यै ब्रह्मोपविशति ॥३२॥ प्रसूत उत्तरं परिग्राहं परिगृह्णाति ॥३३॥ योयुपित्वाऽस्कभ्य संप्रेष्यति प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचश्च[5] संमृड्ढि पत्नीं सन्नह्याज्येनोदेहि पृषदाज्याय दध्याहरेहि (यज-)मान इ(-ति ॥३४॥ एतत् कुर्वन्ति ॥३५॥ स्रुवं च स्रुचश्च) संमृज्याज्यानि गृह्णीते पृषदाज्यवन्ति प्रसिद्धम् ॥३६॥ जुहूपभृतोर्गृहीत्वा महीनां पयोऽसि इति पृषदाज्यायोपस्तृणीते ॥३७॥ विश्वेषां देवानां तनूः इति द्वितीयम् ॥३८॥ ऋध्यासमद्य पृषतीनां ग्रहम् इति तिरःपवित्रं स्रुचि दध्यानयति । °पृषतीनां ग्रहोऽसि इति ॥३९॥ विष्णोर्हृदं(-यमसि इति ) प्राप्य परिधिं ( परिद-)धाति ॥४०॥ (विष्णुस्त्वाऽ-)नु विचक्रमे इति द्वितीयम् ॥४१॥ प्रति दध्ना घृतेन वर्धताम् इति वाचयति । °तस्य मेष्टस्य=अस्तृतम् इति ॥४२॥ ध्रुवायै काल आज्यस्थालीमुपोद्यच्छति ॥४३॥ इध्माबर्हिः प्रोक्षति ॥४४॥ [ २ ]

इध्माबर्हिः प्रोक्षति ॥१॥ वेदिं प्रोक्षति ॥२॥ आसन्नं प्रोक्षति ॥३॥ अपो निनीय प्रस्तरं गृह्णाति ॥४॥ स्तृणाति (बर्हिः) ॥५॥ परिगृह्य[6] परिधीन् ( कार्ष्मर्यम-)यान् समिधावादधाति ॥६॥ परिधिषु वाचयित्वाऽग्निं युनक्ति ॥७॥ आगत्य तिरश्ची सादयति ॥८॥ तिरश्च्योः प्रस्तरम् ॥९॥ प्रस्तरे जूहूम् ॥१०॥ बर्हिषीतरे ॥११॥ समासाद्य ध्रुवा असदन्, यन्मे अग्ने इति समुद्दिश्य दशहोतारं व्याचष्टे ॥१२॥ अप उपस्पृश्य "देवस्य त्वा" सवितुः प्रसवे इत्यभ्रिमादत्ते । °अश्विनो=नारिरसि इति ॥१३॥ परिलिखितं[8] रक्षः परिलिखिता अरातयः इति यूपावटं परिलिखति । इदमहं रक्षसो ग्रीवा=कृन्तामि इति ॥१४॥ प्रतिप्रस्थातः इत्याह । °एतं खनोपरसंमितम् इति ॥१५॥ तष्टो यूपोऽष्टाश्रिः[9] क्लृप्तचषालः ॥१६॥ प्रक्षालितपूर्वेण [10]"यूपावट उपलिखितो[10]" भवति सह द्वाभ्यां शकलाभ्याम् ॥१७॥

१. MHP °र्भुवः. २. HP प्रजान. ३. P विद्वनु. ४. HP om. ५. MHP स्रुचं च. ६. MHP प्रगृह्य. ७–७. M देवस्व त्वा; H देवस्त्वा. ८. M पालयितं; H पलायितम्. ४. MHP यूपाष्टाश्रीः. १०-१०. MHP °वटमुप°.

तमुपरिक्रामन् संप्रेष्यति यवमतीः प्रोक्षणीर्बर्हिराज्यमुपाꣳशुग्रहणमाहरेहि यजमान इति ।।१८।। पृथिव्यै त्वाऽन्तरिक्षाय त्वा दिवे त्वा इति यूपं प्रोक्षति ।।१९।। शुन्धतां लोकः पितृषदनः इति यूपावटेऽपोऽवनयति[1] ।।२०।। यवोऽसि यवयास्मद् द्वेषः इति यवान् प्रस्कन्दयति । °यवयारातीः इति ।।२१।। पितृणाꣳ सदनमसि इति विषूचीनाग्रं बर्हिरवस्तृणाति[2] ।।२२।। पितृभ्यः स्वाहा इति हिरण्यमन्तर्धायाज्येन जुहोति ।।२३।। स्वावेशोऽस्यग्रेगाः[3] इत्युक्त्वोत्तानं[4] यूपशकलमवदधाति । °नेतॄणां=तस्य वित्ताद् इति ।।२४।। यूपायाज्यमानायानुब्रूहि इत्याह ।।२५।। अग्रमु(-दङ्मुखस्तिष्ठन् देवस्त्वा) [5]सविता मध्वाऽनक्तु इति प्रवृह्य चषालꣳ हिरण्यमन्तर्धायाग्रमनक्ति ।।२६।। एवमेव चषालमक्त्वा[5] सुपिप्पलाभ्यस्त्वौषधीभ्यः इति प्रतिमुञ्चति ।।२७।। एवमेवाग्निष्ठामश्रिमनक्ति[6] ।।२८।। नाभिदघ्ने त्रिः परिमृशति ।।२९।। आन्तमनक्ति ।।३०।। उच्छ्रियमाणायानुब्रूहि[7] इत्याह ।।३१।। उद्दिवꣳ स्तभान इत्युच्छ्रयति । °आऽन्तरिक्षं पृण पृथिवीमुपरेण दृꣳह इति ।।३२।। अभि तिष्ठ पृतन्यतः इत्यवदधाति । °अधरे[8] सन्तु शत्रवः । इन्द्र इव वृत्रहा तिष्ठापः क्षेत्राणि सञ्जयन् इति ।।३३।। ते ते [9]धामान्युश्मसि गमध्ये[9] इति वैष्णवीभ्यां कल्पयति[10] । °गावो यत्र भूरिश्रृङ्गा=युज्यः सखा इति ।।३४।। यदाग्निष्ठामश्रिमाहवनीयेन संमिन्वन्त्यथ तद्विष्णोः परमं पदम् इति चषालमुत्काशयति । °सदा पश्यन्ति=चक्षुराततम् इति ।।३५।। ब्रह्मवनिं त्वा क्षत्रवनिम् इति पुरीषेण पर्यूहति । °सुप्रजावनिꣳ रायस्पोषवनिं पर्यूहामि इति ।।३६।। ब्रह्म दृꣳह क्षत्रं दृꣳह इति मैत्रावरुणदण्डेन दृꣳहति । °प्रजां दृꣳह रयिं दृꣳह रायस्पोषं दृꣳह सजातान् यजमानाय दृꣳह इति ।।३७।। उन्नम्भय पृथिवीम् इत्युदपात्रमुपनिनयति । °भिन्द्धीदं दिव्यं नभः उद्नो[11]=दृतिम् इति ।।३८।। न पुरा परिव्येतोयूपमनुसृजेत्[12] ।।३९।। परिवीयमाणायानुब्रूहि[13] इत्याह ।।४०।। परिवीरसि इति नाभिदघ्ने परिव्ययति । °परि

---

१. MHP वोपनयति. २. MHP बर्हिः twice. ३. MHP स्वावेशस्याग्रे°. ४. MH इत्यक्त्वोक्तानां [M °क्तानं]. ५–५. MHP °मनक्त्वा; P oms सविता=एव and puts it after अधरे सन्तु शत्रवः (below S.33). ६. P °वाग्निष्टोमश्रिमिनक्ति. ७. P °च्छ्रियत्या. ८. MHP अपरे. ९–९. MHP °न्युश्मसीह मध्य. १०. MHP कल्वयति. ११. H उन्नो; MP उत्नो. १२. MHP °व्यैतो°. १३. MHP परिपीय°.

त्वा दैवीर्विशो व्ययन्तां = मनुष्याः इति ॥४१॥ त्रिः परिवीयाऽन्तं[1] प्रवेष्टयति ॥४२॥ [2]अणिमन् स्थविमत् प्रवयति[2] ॥४३॥ दिवः सानुरसि इति स्वरुमादत्ते ॥४४॥ अन्तरिक्षस्य त्वा सानाववगूहामि[3] इति मध्यमे परिव्ययेऽवगूहति ॥४५॥ शकलान्तं यूपमुत्सृजति ॥४६॥ [३]
[ इति प्रथमोऽनुवाकः ]

इषे त्वा इति बर्हिषी आदत्ते ॥१॥ प्रजापतेर्जायमानाः इत्युपाकरणीये जुहोति । °प्रजा जाताश्च = मन्यता ꣳ स्वाहा ॥ इमं पशुं पशु = हव्य ꣳ स्वाहा इति ॥२॥ उपवीरसि इति पुरस्तात् प्रत्यञ्चं पशुमुपाकरोति । °उपो देवा = रेवती रमध्वमिन्द्राग्निभ्यां त्वा जुष्टमुपाकरोमि इति ॥३॥ प्रजाते बर्हिषी निधाय ( अग्नेर्जनित्रमसि इति )[4] शकलमादत्ते ॥४॥ वृषणौ स्थ[5] = जागतं छन्दोऽनु प्र जायस्व इति ॥५॥ अग्नये मथ्यमानायानुब्रूहि इत्याह ॥६॥ मन्थन्त्यग्निम् ॥७॥ जातायानुब्रूहि ( इत्याह )[6] ॥८॥ प्रह्रियमाणायानुब्रूहि इत्याह ॥९॥ भवतं[7] नः समनसौ इति प्रहरति । °समोकसा = द्य नः इति ॥१०॥ अग्नावग्निश्चरति प्रविष्टः इति प्रहृत्याभिजुहोति । ( °ऋषीणां पुत्रो अधिराज एष = ) भागधेय ꣳ स्वाहा इति ॥११॥ अप उपस्पृश्य देवस्य त्वा सवितुः प्रसवे इत्युत्तानेन हस्तेन रशनामादत्ते । °अश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् आददे[8] इति ॥१२॥ ऋतस्य त्वा देव हविः पाशेनारभे इत्यक्षणया शृङ्गं पशोः परिहरति ॥१३॥ धर्षा[9] मानुषान् इति युनक्ति ॥१४॥ आहरन्त्यस्मै प्रोक्षणीः पात्रि(-याम् ॥१५॥ अद्भ्यस्त्वौषधी-)भ्यः प्रोक्षामि इति [10]पशुं प्रोक्षति[10] । °इन्द्राग्निभ्यां जुष्टं इति ॥१६॥ अपां पेरुरसि इति पाययति । °स्वात्तं चित् सदेव ꣳ हव्यमापो देवीः स्वदतैनम् इति ॥१७॥ यदि न पिबेन्न वा [11]उवेत् न म्रियसे[11] इत्यस्य दक्षिणं कर्णमाजपेत् । °न हन्यसे जीवन्निदेषि पथिभिः सुवर्ग्यैः । उज्जातेन [12]भिनदद्दुज्जनि(-त्वैः स्वर्गे लोके यजमानं हि धेहि )मास्यै ह्रास्या आहुत्यै यामुपेम[13] इति ॥१८॥ शश्वद्धविः इत्येव[14] वक्षः प्रोक्ष्य[15] पृष्ठं प्रोक्षति ॥१९॥ निपाय्योपोक्ष्य[16] निधाय

१. MHP °वीयन्तां. २--२. MHP अग्निमन् स्थविम प्रययति; thus Ao II.152.11. ३. MHP सानावपगू°. ४. Cf supra I.3.9 ५. MHP abr, see supra I.3.10-13. ६. MHP om. ७. P भवन्तः. ८. MHP om. ९. MHP हर्षा. १०--१०. MHP om. ११--११. MHP उवेतन्म्रियतस. १२. MH भिनददर्जुन; P भिनद्दुजुंन. १३. MH या उपेम. १४. H बत्येव; P बत्ये. १५. P प्रोक्षय. १६. P °य्योपेक्ष्य.

पात्रम् अग्नये समिध्यमानायानुवाच आह ॥२०॥ अनूक्तासु सामिधेनीषु [१]स्रुवेणाघारमाघार्याह [१]अग्नीदग्निं त्रिः संमृड्ढि इति ॥२१॥ स्रुग्भ्यामुत्तरम् ॥२२॥ असꣳस्पर्शयन्नत्याक्रम्य (सं ते प्राणो वायुना) गच्छताम् इति जुह्वा पशुꣳ समनक्ति । [२]सं यजत्रैरङ्गानि सं यज्ञपतिराशिषा इति ॥२३॥ ध्रुवाꣳ समज्य (स्रुचौ)[३] सादयित्वा प्रवरं प्रवृणीते ॥२४॥ आश्रावयति ॥२५॥ ओ श्रावय इत्याह ॥२६॥ अग्निर्देवो होता देवाः प्रावितारः इति तद्धोतारं वृणीते ॥२७॥ को नामासि इत्येनमाह ॥२८॥ नाम प्रब्रूते असौ मानुषः इति ॥२९॥ आहवनीये (शकलं प्रास्यति यथा) होतुर्नाम भवति ॥३०॥ आश्रावयत्येवातः ॥३१॥ ओ श्रावय इत्याह अग्निर्देवीनां विशां पुरएताऽयं[४] यजमानो मनुष्याणां तयोरस्थूरि[५] गार्हपत्यं दीदयच्छतꣳ [५]हिमा द्वा यू राधाꣳसीत्संपृञ्चानावसंपृञ्चानौ तनुवः[५] इति ॥३२॥ एतस्मिन् काले मैत्रावरुणाय दण्डं प्रयच्छति ॥३३॥ [ ४ ]

एतस्मिन् काले मैत्रावरुणाय दण्डं प्रयच्छति ॥१॥ त्वां गावोऽवृणत[६] राज्याय इति मैत्रावरुणदण्डेन[७] ब्रह्मा[८] यजमानं वाचयति । [९]त्वाꣳ हवन्त= वसूनि[९] इति ॥२॥ सीदति होता ॥३॥ प्रसूतः[१०] स्रुचावादत्ते ॥४॥ प्रयाजान् यजति ॥५॥ ओ श्रावय इत्याह ॥६॥ [११]समिद्ध्यः प्रेष्य प्रेष्य इति[११] ॥७॥ एकादश प्रयाजान् यजति ॥८॥ चतुर्थेऽर्धꣳ समानीयाष्टमे सर्वꣳ समानयते ॥९॥ उपभृतोऽधि[१२] स्रुच्येकादशं परिशिष्य दशेष्ट्वा[१३]ऽत्याक्रामति ॥१०॥ [१४]स्वरुः स्वधितिः इति ॥११॥ अक्ष्णया[१४] स्वरुं च स्वधितिं च संगृह्य घृतेनाक्तौ इत्यन्तरतः स्रुचः स्वरुमनक्ति बहिष्टात् स्वधितिम् °पशुं त्रायेथाम् इति ॥१२॥ स्वधितिना प्रति ललाटं पशोरुन्मार्ष्टि ॥१३॥ [१५]एषा तेऽश्रिः स्पष्टाऽस्तु इत्याह[१५] ॥१४॥ शमित्रे स्वधितिं [१६]प्रयच्छति ॥१५॥ अनया[१६] पशुꣳ स्पृशति ॥१६॥ अवगूह्य स्वरुं यथायतनꣳ स्रुचौ

---

१–१. MP °दग्निस्त्रिः,. H °दग्नीस्त्रिः २. MHP om. ३. MHP पुरतोयं [M °तोऽयं]. ४. MH तरयो°. ५–५. MHP हिमा वायो राधांसीन् संवृण्वानाव संवृञ्चानौ तवानुव. ६. P वृणुत. ७. MH दण्डे. ८. MHP om; cf. infra VI.2.2. ९. MH वसूमीति. १०. MHP स्यूतः. ११–११. MHP समिज्य प्रेष्यतः प्रेष्येति. १२. MHP °भृतोसि. १३. P दशेष्वा. १४–१४. MHP कस्विधित्यक्ष्णया; cf. Ao IV.207.17 : कस्वधिति; cf. BaudhŚS IV.6:117.1; BhārŚS VII.11.13. १५–१५. MHP एषा ते श्री स्पष्टान्त्वित्याह [H °ष्टान्वि°]; cf VaikhŚS X.12:111.7 : एषा तेऽश्रिः प्रज्ञातास्तु इति. १६–१६. MHP प्रयच्छन्याया [M °न्त्याया].

सादयित्वा पर्यग्नयेऽनुब्रूहि इत्याह[1] ॥१७॥ आहवनीयादग्नीदुल्मुकमादायान्तरा[2] चात्वालोत्करौ निष्क्रम्य प्रसलैस्त्रिः पर्यग्निकरोति ॥१८॥ [3]प्रजानन्तः[3] प्रतिगृह्णन्तु पूर्वे इत्युल्मुकपाणौ परिद्रवति ॥१९॥ पञ्चापाव्यानां[4] यजूꣳषि जुहोति प्राणमङ्गेभ्यः = शरीरैः[5] स्वाहा; येषामीशे = नस्य[6] सन्तु स्वाहा; ये बध्यमान = अग्निस्ताम् = विदानः स्वाहा; [7]य आरण्याः[7] पश = वायुस्तां = विदानः स्वाहा; प्र मुञ्चमाना = पाथः स्वाहा इति ॥२०॥ एहि यजमान इत्युक्त्वाऽन्वारब्धे यजमाने होतुराहुतिꣳ[8] षष्ठीं जुहोति ॥२१॥ निधायोल्मुकमाग्नीध्रं प्रतिपथं त्रिः पुनः परिद्रवति ॥२२॥ तदेवाग्नोदुल्मुकमादत्ते बर्हिषी अध्वर्युर्वपाश्रपण्यौ प्रतिप्रस्थाता ॥२३॥ उल्मुकप्रथमा उदञ्चो यन्त्यन्तरा चात्वालं चोत्करं च ॥२४॥ आश्राव्य उप प्रेष्य होतर्हव्या देवेभ्यः इत्याह ॥२५॥ रेवतीर्यज्ञपतिं प्रियधाऽऽविशत इति वपाश्रपणीभ्यां पशुमन्वारभन्ते । °उरो अन्तरिक्ष[9]=यज्ञपतिं धा· इति ॥२६॥ पृथिव्याः सम्पृचः पाहि इति बर्हिरुपास्य तस्मिन्नुपरि पशु[10] निक्षिणन्ति प्रतीचीनशिरसमुदीचीनपादम् ॥२७॥ अमायुं कृण्वन्तꣳ संज्ञपयत[11] इत्याह ॥२८॥ संज्ञप्तं प्रब्रूताद् इति ॥२९॥ तस्मात् नानाप्राणो यजमानस्य पशुना इत्यध्वर्युश्च यजमानश्च व्यावर्तेते । °यज्ञो देवेभिः = कामाः इति ॥३०॥ आगत्य पृषदाज्यमवेक्षन्ते इह [12]प्रजाः इति[12] ॥३१॥

[ ५ ]

इह प्रजा विश्वरूपा रमन्तामस्मिन् यज्ञे विश्वविदो घृताचीः; अग्निं कुलायमभि संवसाना अस्मानवन्तु पयसा घृतेन इति ॥१॥ वाचंयमा अनवेक्षमाणा आसते ॥२॥ यत्पशुर्मायुमकृत इति संज्ञप्ते स्रुवाहुतिं जुहोति । °उरो वा पद्भिराहते अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वꣳहसः स्वाहा इति ॥३॥ शमितार उपेतन इति वपाश्रपणीभ्यां पशुमुपायन्ति । °यज्ञं देवेभि = परि ( इति ॥४॥ संवेष्ट्य रसनां ) ग्रीवासु पाशा(-त्पशुं प्रमुञ्चति) अदितिः[13] पाशं प्र मुमोक्त्वेतम् इति ॥५॥ विशालथोपसजति[14]

१. H oms आह. २. MHP °दुन्मुक°; P °यान्तरे. ३. MP प्रजानन्तु; H प्रजानन्ति. ४. M पञ्च चाव्यानां; H पञ्च चाज्यानां. ५. MHP शरीरे. ६. HP यस्य. ७–७. MHP यज्ञ आरण्यां. ८. MHP आहुती. ९. P °रिक्षो. १०. P पशून्. ११. MHP संयज्ञपतये. १२--१२. HP पजापतिः. १३. MP तानदति; H तानदितिः. १४. MHP °सर्जति.

नमः पशुभ्यः = पाशम् इति ॥६॥ ताᳪ शुष्के स्थाणौ प्रतिमुञ्चति ॥७॥ यं द्वेष्टि यजमानस्तं ध्यायति ॥८॥ अपः परिषिच्याप्रतीक्षमाव्रजते[1] ॥९॥ आनयति प्रतिस्थाता पत्नीᳪ सह पान्नेजनेन ॥१०॥ अन्तरा चात्वालं चोत्करं (चोदङ्ङुप निष्क्रम्य अनर्वा) प्रेहि इत्युदोचीमानयति । °घृतस्य कुल्या = रायस्पोषेण इति ॥११॥ आगत्य पशोः प्राणानाप्याययति[2] ॥१२॥ वाक् त आप्यायताम् इति वाचम् ॥१३॥ प्राणस्त आप्यायताम् इति [3]प्राणम् ॥१४॥ चक्षुस्त आप्यायताम् इति चक्षुः ॥१५॥ श्रोत्रं त आप्यायताम् इति)[3] श्रोत्रम् ॥१६॥ या ते प्रा(-णाञ्छुग्जगाम इत्येतानेव पुनराप्याय-)यति । °या चक्षु(-र्यां)[4] श्रोत्रं = शुन्धताम् इति ॥१७॥ नाभिस्त आप्यायताम् इति नाभिम् ॥१८॥ (पायुस्त आप्यायताम् इति)[5] पायुम्[6] ॥१९॥ मेढ्रं त आप्यायताम् इति मेढ्रम् ॥२०॥ शुद्धाश्चरित्राः इति पदः संनिधाय मार्जयति । °शमद्भ्यः शमोषधीभ्यः इति ॥२१॥ शं पृथिव्यै (शमहोभ्या-)म् [7]इत्यतिशि(-ष्टा दक्षिणतोऽनुपृष्ठं वा निनयति ॥२२॥ आपो) देवीः शुद्धायुवः इति निनीता अपो[8]ऽनुमन्त्रयते । °शुद्धा यूयं देवां[9] ऊढ्वᳪ शुद्धा वयं परिविष्टाः परिवेष्टारो वो भूयास्म इति ॥२३॥ प्रतिपरैति पत्नी॥२४॥ कवोत्तानमिव पशुं कुरुत इत्याह ॥२५॥ तस्य ओषधे त्रायस्वैनम् इति दक्षिणेन नाभिं बर्हिषा त्वचमुप संगृह्णाति ॥२६॥ स्वधिते मैनᳪ हिᳪसीः इति स्वधितिना[10] तिरश्चीनमाच्छ्यति ॥२७॥ स्थविमतो बर्हिषश्छित्वो-भयतः[11] पशावनतिक्रम्य[12] निरस्यति रक्षसां भागोऽसीदमहᳪ रक्षोऽधमं तमो नयामि योऽस्मान् द्वेष्टि यं च वयं द्विष्म इदमेनमधमं तमो नयामि इति ॥२८॥ अप उपस्पृश्य इषे त्वा इति वपामुत्खिदति ॥२९॥ घृतेन द्यावापृथिवी ॥३०॥ [ ६ ]

घृतेन द्यावापृथिवी प्रोर्णाथाम्[13] इति वपाश्रपणो प्रोर्णोति ॥१॥ अविशालयोपतृणत्ति ॥२॥ अच्छिन्नो रायः सुवीरः इति परिवासयति ॥३॥

---

१. MH °षिच्य प्रतीक्ष°; P षिचय प्रतीक्ष°. २. MHP °प्याययतो. MHP ins अद्भिरभिषेकं after °प्याययति which seems to be commentory on आप्याययति. ३–३. H oms. ४. MHP om या. ५. MHP om. ६. MHP वायुम्. ७. MH °मितश्रो°; P °मित्रश्रो°. ८. MHP आपो. ९. MHP देवा. १०. MHP स्वधिनो. ११. P बर्हिषाच्छि-त्वो°. १२. MHP °नत्क्रम्य. १३. MHP प्रोर्णोथाम्.

देवेभ्यः शुन्धस्व देवेभ्यः शुम्भस्व इति बर्हिषा परिवासनं प्रतियौति ॥४॥ उदपात्रेणाभिषिच्य प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयः [1]इत्युल्मुकेन प्रतितपति शामित्रे[1] ॥५॥ अङ्गारान् संप्रकृष्य उर्वन्तरिक्षमन्विहि इत्युल्मुकप्रथमाः पुनरायन्त्यन्तरा चात्वालं चोत्करं च ॥६॥ वपाश्रपणी पुनरन्वारभन्ते ॥७॥ उप त्वाऽग्ने दिवेदिवे इति तिसृभिर्गायत्रीभिराहवनीयमुपायन्ति। °दोषावस्त=स्वस्तये इति ॥८॥ प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयः इत्याहवनीयस्यान्तमेऽङ्गारे प्रतितपति[2] ॥९॥ तामेतेनान्तरा यूपं चाहवनीयं चातिहृत्य दक्षिणत उदगावृत्तः प्रतिप्रस्थाता वपाꣳ श्रपयति ॥१०॥ तस्यै वायो वीहि स्तोकानाम् इत्यध्वर्युर्बर्हिरुपास्यति ॥११॥ त्वामु ते दधिरे हव्यवाहम् इति स्रुवाहुत्याऽभिजुहोति। °श्रृतं कर्तार=जुषस्व स्वाहा इति ॥१२॥ स्तोकेभ्योऽनुब्रूहि इत्याह ॥१३॥ यदैतं मैत्रावरुणः षडृचꣳ सूक्तमन्वाहाथ स्वाहाकृतीः ॥१४॥ प्रैषमादायाध्वर्युरत्याक्रामति ॥१५॥ ओ श्रावय इत्याह ॥१६॥ स्वाहाकृतीभ्यः [3]प्रेष्य इति[3] ॥१७॥ वषट्कृते जुहोति ॥१८॥ पृषदाज्यमभिघार्यं वपामभिघारयति ॥१९॥ आज्यं च हिरण्यशल्कं च ॥२०॥ वपाया उपस्तृणीत इन्द्राग्निभ्याम् ॥२१॥ इन्द्राग्निभ्यां छागस्य वपाया मेदसोऽवदीयमानस्यानुब्रूहि इत्याह स्रुवेण वपाꣳ संप्रलुम्पन्[4] ॥२२॥ हिरण्यशल्केन चैवाज्येन चोपरिष्टादभिघारयति ॥२३॥ ते एतेनैव यथैतमाहृत्योत्तरतः प्रतिप्रस्थाता वपाश्रपण्यौ धारयꣳस्तिष्ठति ॥२४॥ ओ श्रावय इत्याह ॥२५॥ इन्द्राग्निभ्यां छागस्य वपां मेदः प्रस्थितं प्रेष्य इति ॥२६॥ स्वाहा देवेभ्यः इति पुरस्ताद् वपायै प्रतिप्रस्थाता स्रुवाहुतिं जुहोति ॥२७॥ जातवेदो वपया गच्छ देवान् इति वषट्कृतेऽध्वर्युर्वपां जुहोति। °त्वꣳ हि होता=दन्तु देवाः स्वाहा इति ॥२८॥ देवेभ्यः स्वाहा इत्युपरिष्टात् स्रुवाहुत्याऽभिजुहोति ॥२९॥ स्वाहोर्ध्वनभसं[5] मारुतं गच्छतम् इति विषूची वपाश्रपणी प्रहरति, प्राचीं विशालां प्रतीचीमविशालाम् ॥३०॥ ते वपायै सꣳस्रावेणाभिजुहोति ॥३१॥ वपया प्रचर्य आपो हि ष्ठा मयोभुवः इति तृचेन मार्जयन्ते चात्वाले ॥३२॥ [ ७ ][6] [ इति द्वितीयोऽनुवाकः ]

---

१–१. MP °त्युन्मुके व्रतपति शामित्रो; H oms. २. MHP व्रतपति. ३–३. MHP प्रेष्यति. ४. MHP °लुम्प. ५. M स्वाहोर्ध्वन्नम°. ६. HP put the sign of broken text; no indication of the end of the Kaṇḍikā. M, however, gives the sign of closing of the Kaṇḍikā.

(अग्नीत्पशुपुरोडा-)शं निर्वप इति संप्रेष्यति । °ब्रह्मन् पृषदाज्यं गोपाय प्रतिप्रस्थातः[1] पशुं विशाधि इति ॥१॥ एतत्कुर्वन्ति ॥२॥ अग्नीत्पशुपुरोडाशं[2] निर्वपत्यैन्द्राग्नमेकादशकपालम् ॥३॥ ब्रह्मा पृषदाज्यं गोपायति ॥४॥ प्रतिप्रस्थाता पशुं विशास्ति ॥५॥ (शमितर्)[3] हृदयं जिह्वां वक्षस्तानि [4]त्रीणि, तनिम मतस्ने[4] (तानि त्रीणि) श्रोणिर्गुदो [5]पर्याकृतस्तानि त्र्यङ्गाणि सव्यं दोरेकचरं[5] पार्श्वे प्रयवणीये दक्षिणाꣳ श्रोणिमध्यूध्नि[6] विष्कर्लि[7] वनिष्ठुं[8] यन्मेदस्तदवधत्तात् त्रिः प्रच्युतस्य हृदयमुत्तमं कुरुताद् इति ॥६॥ अग्नीत् पशुपुरोडाशमुपस्तीर्णाभिघारितमुद्वा(-सयति ॥७॥ तयोर्द्व)योरुपस्तृणान आह प्रतिप्रस्थातरिन्द्राग्निभ्यां)[9] पुरोडाशस्यावदीयमानस्यानुब्रूहि इति ॥८॥ पश्चाच्च पुरस्ताच्च जुह्वामवद्यति ॥९॥ अभिघारयति ॥१०॥ प्रत्यनक्ति ॥११॥ सकृदुत्तरादुपभृत्यवद्यति ॥१२॥ द्विरभिघारयति ॥१३॥ न प्रत्यनक्ति ॥१४॥ सन्धायाध्वर्यव आदधाति ॥१५॥ ओ श्रावय इत्याह ॥१६॥ इन्द्रा(-ग्निभ्यां पुरोडाशं प्र-)[10]स्थितं [11]प्रेष्य इति[11] ॥१७॥ वषट्कृते जुहोति ॥१८॥ अग्नयेऽनुब्रूहि इत्याह पुरोडाशस्य स्विष्टकृतꣳ समानयमानः ॥१९॥ ओ श्रावय इत्याह ॥२०॥ अग्नये [12]प्रेष्य इति[12] ॥२१॥ वषट्कृते जुहोति ॥२२॥ अत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वाऽवदानानि संभिद्याभिघार्य होत्र इडामादधाति ॥२३॥ उपहूतायामिडाया(-मग्नीध आदधाति षडवत्तम्)[13] ॥२४॥ प्राश्नन्ति ॥२५॥ मार्जयन्ते ॥२६॥ सहैव पात्रिया पुरोडाशं पूर्वेणाहवनीयꣳ सहाद्भिर्ब्रह्मणे परिहरति ॥२७॥ प्राश्नाति ब्रह्मा ॥२८॥ मार्जयते ॥२९॥ अग्नीदुत्तरबर्हिषा द्रव इति संप्रेष्यति । °प्रतिप्रस्थातः पशौ संवदस्व इति ॥३०॥ एतत्कुर्वन्ति ॥३१॥ अग्नीत् प्लक्षशाखामाहृत्य पर्णसून उपदधाति देवानामवसे इति ॥३२॥ स्रुवेण प्रतिप्रस्थाता पृषदाज्यस्योपहन्ति

---

१. H °प्रस्थाता. २. MHP °डाशान्. ३. MHP om. ४--४. M त्रीणी°; HP तृणीत निनमतस्ने. ५. MHP दोरक°. ६. Cf Ao II.165.39 : अभ्युध्नि. ७. MHP पिष्कर्लि; Ao II.165.32 : विष्कलीं. ८. M वनिष्ठं; H वविष्ठं; P वनिष्टं. ९. MHP broken; cf. infra VI.26.17–18. १०. MHP broken; cf. infra VI.26.26. ११--११. MP प्रेष्यति; H प्रेषयति. १२-१२. MHP प्रेष्यति. १३. Cf BaudhŚS IV.8:121.20.

शुक्राणाꣳ शुक्रम् इति ॥३३॥ उत्क्रम्य [1]स्रुचोपयम्य पृच्छति[1] शृतꣳ हवी३: शमित:[2] इति ॥३४॥ शृतम् इति स आह ॥३५॥ तद्देवानां पूषा मा प्रपथात् पातु इति ॥३६॥ उत्क्रम्यैव पृच्छति शृतꣳ हवी३: शमितः इति ॥३७॥ शृतम् इति स आह ॥३८॥ तद्देवानां पूषा मा पशुपाः पातु इति ॥३९॥ उत्क्रम्यैव पृच्छति शृतꣳ हवी३: शमितः इति ॥४०॥ [3]शृतम् इति[3] स आह ॥४१॥ तद्देवानां पूषा माऽधिपतिः पातु इति ॥४२॥ पुराऽभिघारणाद्धृदयशूलेन हृदयꣳ सꣳस्पर्शयति ॥४३॥ तं प्रज्ञातं निदधाति ॥४४॥ सं ते मनसा मनः इति पृषदाज्येन हृदयमुत्तमं कृत्वाऽभिघारयति । [5]सं प्राणेन प्राणो जुष्ट[4] देवेभ्यो हव्यं[5] घृतवत् स्वाहा इति ॥४५॥ तमन्तरा यूपं चाहवनीयं चातिहृत्य दक्षिणत उपसादयति ॥४६॥ तस्य चतसृषूपस्तृणान आह प्रतिप्रस्थातर्मनोतायै[6] हविषोऽवदीयमानस्यानुब्रूहि इति जुहूपभृतोर्वसाहोमीयायां चेडापात्रे च ॥४७॥ द्विर्हृदयस्य जुह्वामवद्यति, द्विर्जिह्वायै, द्विर्वक्षसः, द्विस्तनिम्नः, द्विर्द्विमतस्नयोस्त्रियङ्गाणि ॥४८॥ विस्रस्य गुदं त्रेधा करोति ॥४९॥ तस्य मध्यमस्कन्धं द्वेधा विच्छिद्य जुह्वामवदधाति ॥५०॥ स्थविमोपयड्भ्यो[7] निदधात्यणिमत्[8] स्विष्टकृतम् ॥५१॥ द्विः सव्यस्य दोष्णोऽवद्यति, द्विर्द्विः पार्श्वयोर्द्विर्दक्षिणायै[9] श्रोण्या अध्युध्न्यै ॥५२॥ उत्तमाया अवद्यति ॥५३॥ यूष्णोपसिञ्चति ॥५४॥ यूषन्नवधाय[10] मेदसा[11] प्रोर्णोति ॥५५॥ अभिघारयति ॥५६॥ प्रत्यनक्ति पशुम् ॥५७॥ दक्षिणस्य दोष्णः स्थूलं पिशितमवद्यति[12] ॥५८॥ तदुपभृत्यवदधाति ॥५९॥ अणिम्नो[13] गुदस्योपभृत्येवावदधाति[14] ॥६०॥ सव्यायै श्रोण्यै स्थूलं पिशितमवद्यति ॥६१॥ तदुपभृत्येवावदधाति ॥६२॥ यूष्णोपसिञ्चति ॥६३॥ यूषन्नवधाय[10] मेदसा[11] प्रोर्णोति ॥६४॥ द्विरभिघारयति ॥६५॥ न प्रत्यनक्ति पशुम् ॥६६॥ वपाहोमं विश्राव्याभिघारयति ॥६७॥ अनस्थिकमिडापात्रे संप्रकिरति ॥६८॥ यूष्णोपसिञ्चति ॥६९॥ ऐन्द्रः प्राणः इति पशुमवत्तꣳ समभिमृशति । [°]अङ्गे अङ्गे नि देध्यदैन्द्रो[15]ऽपानो

१--१. MHP स्रुचोपयत्यच्छति २. MHP शमितुर्. ३-३. H oms. ४. MHP जुष्टो. ५. MHP om. ६. MHP °प्रस्थाता म°. ७. M °मोऽपयट्°; HP °यट्भ्यो; cf. VaikhŚS X.18.117.18 : स्थवीयोपयड्भ्यः ८. HP °त्यणिम. ९. MH °दक्षिणां ये; P °दक्षिणां यश्रो०. १०. HP यूषं नवधा°. ११. MHP मेदसाः १२. MHP विशित°. १३. MHP अणिम गु°. १४. HP °भृत्यैवाद°. १५. MP निदध्यदै°; H निदध्यादै°.

अङ्गे अङ्गे वि=मदन्तु इति ॥७०॥ श्रीरसि इति पार्श्वेन वसाहोमं प्रयौति । ॰अग्निस्त्वा=रोहिष्यै इति ॥७१॥ प्रयुतं द्वेषः इति त्रिः प्रयौति ॥७२॥ प्रयुतं द्वेषः इति यं द्वेष्टि यजमानस्तं ध्यायति ॥७३॥ तं[1] प्रतिप्रस्थात्रे[2] आदधाति ॥७४॥ स्रुचोः पञ्चहोतारं व्याचष्टे ॥७५॥ [८]

स्रुचोः पञ्चहोतारं व्याचष्टे ॥१॥ [3]प्रतिपराहरन्ति विष्कलि[3] पत्नियै ॥२॥ सन्धायाध्वर्यव आदधाति ॥३॥ (ओ श्रावय इत्याह)[4] ॥४॥ इन्द्राग्निभ्यां छागस्य हविषोऽनुब्रूहि इत्याहोत्तिष्ठन्नध्वयुः[5] ॥५॥ वसाहोमं प्रतिप्रस्थाताऽऽदत्ते ॥६॥ ओ[6] श्रावय इत्याह ॥७॥ इन्द्राग्निभ्यां छागस्य हविः[7] प्रस्थितं [8]प्रेष्य इति[8] ॥८॥ घृतं घृतपावानः[9] पिबत इत्यर्धर्चे प्रतिप्रस्थाता वसाहोमं जुहोति । ॰वसां वसापावानः[9]=( त्वाऽन्तरिक्षाय स्वाहा इति ) ॥९॥ वषट्कृतेऽध्वर्युर्हविर्जुहोति ॥१०॥ वनस्पतयेऽनुब्रूहि इत्याह स्रुवेण पृषदाज्यस्योपघ्नन्[10] जुह्वामानीय ॥११॥ ( ओ श्रावय इत्याह )[11] ॥१२॥ वनस्पतये प्रेष्य इति ॥१३॥ वषट्कृते जुहोति ॥१४॥ अग्नये स्विष्टकृतेऽनुब्रूहि इत्याह हविषः[12] स्विष्टकृतꣳ समानयमानः ॥१५॥ ओ श्रावय इत्याह ॥१६॥ अग्नये स्विष्ट(-कृते प्रेष्य इति ॥१७॥ वषट्कृते जुहोति ) ॥१८॥ दिशो जुहोति दिशे स्वाहा=उद्दिशे स्वाहा; आप्यायन्तां दिशो घृतेन स्वाहा । दिग्भ्यो नमो दिग्भ्यो स्वाहा इति ॥१९॥ दिशोऽनु पञ्चहोतुराहुतिं[13] जुहोति ॥२०॥ यं[14]=स्रुचोः[14]=व्याचष्टे ॥२१॥ अत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वाऽभिघार्य प्रत्यङ्ङावृत्तहोत्र[15] इडामा-(-दधाति मेदस्व-)तीम्[16] ॥२२॥ [17]अवान्तरे(-डामादधाति ॥२३॥ उपहूतायामिडा-)यां वक्षो ब्रह्मण[18] उपोहति ॥२४॥ प्राश्नन्ति ॥२५॥ मार्जयन्ते ॥२६॥ अग्नीदौपयजानङ्गारानाहर इति संप्रेष्यति । ॰उपयष्टरुप सीद ब्रह्मन् प्रस्थास्यामः समिधमाधायाग्नीदग्निꣳ सकृत् संमृड्ढि इति ॥२७॥ आहवनीयादग्नीदौपयजानङ्गारानाहृत्य पूर्वेण होतारं बर्हिषो व्यूह्य

१. MHP ते. २. MH ॰प्रस्थात. ३–३. MHP ॰हरन्तिष्कलिं. ४. MHP om. ५. MHP ॰ध्वयं. ६. P आ. ७. MHP हविं. ८–८. H प्रेष्यति. ९. MHP ॰पावनं. १०. MH ॰पघ्नन्त. ११. MHP om. १२. P हविषा. १३. MHP ॰होतारा॰. १४. MHP abr, see supra V.8.73–75. १५. P ॰वृता॰. १६. MHP broken; cf. infra VI.22.7. १७. MHP दीपान्तरे. १८. MHP ब्राह्मण.

निवपति ॥२८॥ गुदेनोपयष्टोपसीदति ॥२९॥ पृषदाज्यस्यानूयाजान् यजति ॥३०॥ उपभृतमेवोपभृतं कुरुत एतां जुहूँ यस्यां पृषदाज्यम् ॥३१॥ ओ[1] श्रावय इत्याह ॥३२॥ देवेभ्यः प्रेष्य इति ॥३३॥ प्रेष्य[2] प्रेष्य इति ॥३४॥ एकादशानूयाजान् यजति ॥३५॥ यदाऽऽह[3] मैत्रावरुणो यज इत्यथोपयष्टोपयजति समुद्रं गच्छ स्वाहा इति गुदस्य प्रच्छेदमसंभिन्दन्न-पर्यावर्तयन् ॥३६॥ अग्निं वैश्वानरं [4]गच्छ स्वाहा इति[4] सर्वमन्ततो गुदं जुहोति ॥३७॥ अद्भ्यस्त्वौषधीभ्यः[5] इति बर्हिषि हस्तौ निमृष्टे ॥३८॥ प्राणान्[6] मनो हार्दि यच्छ इत्युपयष्टा यजमानं वाचयति । °तनूं त्वचं पुत्रं नप्तारमशीय इति ॥३९॥ अनूयाजानिष्ट्वोपपरिक्रम्य स्वरुमनक्ति यन्ता रन्ता रायः इति ॥४०॥ इह धृतः इत्येनं स्रुच्युद्दधाति[7] । °इह विधृतिरिह स्वधृतिः इति ॥४१॥ दिवं ते धूमो गच्छतु इत्येनं जुहोति । °अन्तरिक्षमर्चिः पृथिवीं भस्मना पृण[8] स्वाहा इति ॥४२॥ अत्र यूपमनुप्रहरति ॥४३॥ यद्यनुप्रहृष्यन्तो भवन्त्यागत्य वाजवतीभ्यां स्रुचौ व्यूहति ॥४४॥ शंयुना प्रस्तरपरिधि संप्रकिरति ॥४५॥ परेत्य [9]विष्कल्या पत्नीः[9] संयाजयन्ति ॥४६॥ आज्यस्य सोमं यजति ॥४७॥ आज्यस्य त्वष्टारम् ॥४८॥ आज्यस्य राकाम् ॥४९॥ देवानां पत्नीभ्योऽनुब्रूहि इत्याहोपस्तृणानो-ऽवद्यन् ॥५०॥ पश्चाच्च पुरस्ताच्चोत्तानायै विष्कल्या अवद्यति ॥५१॥ अभिघारयति ॥५२॥ प्रत्यनक्ति ॥५३॥ ओ श्रावय इत्याह ॥५४॥ देवानां पत्नीर्यज इति ॥५५॥ वषट्कृते जुहोति ॥५६॥ अग्नये गृहपतये-ऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥५७॥ नोच्यै विष्कल्या[10] उत्तरार्धाच्छूलं[11] पिशितमवद्यति[12] ॥५८॥ द्विरभिघारयति ॥५९॥ न प्रत्यनक्ति ॥६०॥ ओ श्रावय इत्याह ॥६१॥ अग्निं गृहपतिं यज इति ॥६२॥ वषट्कृते उत्तरार्धेऽतिहाय पूर्वा आहुतीर्जुहोति ॥६३॥ उत्तानाया इडामादधाति ॥६४॥ नीच्या अग्नीधे षडवत्तम्[13] ॥६५॥ एतत्कृत्वाऽऽज्यस्यैव फली-

---

१. MHP आ. २. MH प्रैष्यः. ३. MHP यथाह. ४–४. MHP गच्छस्व ताहेति. ५. MHP आज्यस्त्वौष° ६. Cf TS I.3.11.13 : मनो मे हार्दि यच्छ. ७. MHP स्रुच्यु°. ८. P पृणा. ९–९. MHP गिष्कल्या पत्नी; thus Ao II.165. 32–33. १०. MHP पिष्कल्या. ११. MH °रार्धाञ्छूलं; Ao II.165.34: °र्धात् कूलं. १२. MHP विशितम°; thus Ao II.165.34. १३. MHP शंयन्त्वम्; thus BaudhŚS IV.10:125.1.

करणहोमँ हुत्वा प्राङेत्य त्रीणि समिष्टयजूँषि जुहोति यज्ञ यज्ञं गच्छ = वाते धाः इति ॥६६॥ अयं ते योनिर्ऋत्वियः इत्यरण्योरग्निँ समारोहयते ॥६७॥ [ ९ ] .

अयं ते योनिर्ऋत्वियः इत्यरण्योरग्निँ समारोहयते । °यतो = रयिम् इति यद्युदवस्यति ॥१॥ यद्यु न शकल एव पूर्वमग्निँ समारोह्य अहं त्वदस्मि इत्यपरस्मिन्नाहवनीये विसृजति । °मदसि = जातवेदः इति ॥२॥ यत्कुसीदमप्रतीत्तं मयि इत्युत्तरां वेद्यै श्रोणिमुपोषति[१] । °येन यमस्य बलिना चरा = भवामि इति ॥३॥ विश्वलोप विश्वदावस्य त्वाऽऽसञ्जुहोमि स्वाहा इत्यञ्जलिना सक्तून् प्रदाव्ये[२] जुहुतो यजमानश्च पत्नी च ॥४॥ अ(-ग्धा-)देकः इति हस्तान् संप्रघ्नाते[३] । °अहुतादेकः स = रेण्यम् इति ॥५॥ अयं नो नभसा पुरः इत्याहवनीयमुपतिष्ठते । °सँस्फानो = सन् इति ॥६॥ स त्वं नो नभसस्पते इति वा(-यु-)म् । °ऊर्जं नो = कृधि इति ॥७॥ देव सँस्फान इत्यादित्यम् । °सहस्रपोषस्ये = स्वस्तिम् इति ॥८॥ आशासानः[४] सुवीर्यम् इति यूपम्[५] । °राय = मानाय तिष्ठ इति यदि तिष्ठति ॥९॥ इमं (?विष्यामि वरुणस्य पाशम् इति ) यद्यनुप्रहृतः ॥१०॥ स्फ्यमादायोदपात्रं च हृदयशूलेनोत्परायन्ति ॥११॥ अन्तरा चात्वालं चोत्करं च गत्वा पूर्वेण यूपं बहिर्वेदि[६] स्फ्येनोद्धत्य उन्नम्भय पृथिवीम् इत्युदपात्रे[७]-ऽवोक्षति । °भिन्द्धीदं = दृतिम् इति ॥१२॥ 'शुगसि इति[८] शुष्कस्य चार्द्रस्य च सन्धौ पराञ्चँ हृदयशूलमुद्वासयति । °तमभि शोच योऽस्मान् द्वेष्टि यं च वयं (द्विष्मः इति ॥१३॥ धाम्नो) धाम्नो राजन् इत्युपतिष्ठते °इतो वरुण = मुञ्च । अप्सु राज्ञो वरुणस्य गृहो हिरण्ययः कृतस्ततो[९] धृतव्रतो राजा विश्वा धर्माणि पश्यति इति ॥१४॥ सुमित्रा न आप ओषधयः [१०]°सन्तु इत्यपः[१०] परिषेच्याप्रतीक्षमायन्ति[११] । °दुर्मित्रा = द्विष्मः इति ॥१५॥ उदवसायैता आहुतीर्जुहोति, यद्युदवस्यति ॥१६॥ यद्यु नात्रैव चतुर्गृहीतेन दशहोतारं गार्हपत्ये ( जुहोति ), षड्ढोतारमन्वाहार्यपचने,

---

१. MHP °मुपौषति. २. M प्रदाप्ये. ३. H संव्रघ्नाते; cf. BaudhŚS IV.11:127.5 : प्रध्वँसयते. ४. MHP °सानाः. ५. MHP रूपम्. ६. MHP बर्हिर्वेदि. ७. MHP °त्युदपा·····न्ते. ८–८. MH शुगन्तीति; P शुगन्वीति. ९. MHP कृता ततो. १०–१०. MHP सन्त्वितः ११. MH °षेच्यप्रतीक्ष°.

पञ्चहोतारममात्ये, चतुर्होतारꣳ सभायाम् ॥१७॥ आगत्य द्विराज्यस्योपस्तृणीते[1] ॥१८॥ दध्यानयति ॥१९॥ द्विरेवाभिघारयति ॥२०॥ तज्जुहोति इडायैं सृप्तं घृतवच्चराचरम् इत्याहवनीये। °देवा = रन्तिरस्तु स्वाहा इति ॥२१॥ पुनरूर्जा निवर्तस्व इति दध्ना गार्हपत्ये जुहोति। °पुन:: = विश्वत: स्वाहा इति ॥२२॥ सह रय्या निवर्तस्व (इत्यन्वाहार्यपचने जुहोति। °अग्ने पिन्व-)स्व=स्परि स्वाहा इति ॥२३॥ पूर्णाहुतिमेवातो जुहोति ॥२४॥ परिश्रित्याहवनीयं चतुर्गृहीतं गृह्णीते ॥२५॥ अभिपूर्य सप्तहोतारं व्याचष्टे ॥२६॥ सप्त ते[2] इत्येतामृचं मध्यतो दधाति ॥२७॥ समिधमाधाय होतुराहुत्या जुहोति ॥२८॥ वरमस्मै[3] ददाति ॥२९॥ सन्तिष्ठते पशुबन्धः सन्तिष्ठते पशुबन्धः ॥३०॥ [ १० ]

[ इति तृतीयोऽनुवाकः ]

इति पशुबन्धाख्यः पञ्चमः प्रपाठकः



---

१. MHP द्विराज्यमुप°. २. P oms. ३. MHP परस्मै.

# अथ षष्ठः प्रपाठकः

## [ अथाग्निष्टोमः ]

### [ दीक्षणीयेष्टिः ]

दीक्षिष्यमाणः संभारान् संभरते ॥१॥ (अहते) दीक्षितवसने सद्यो मथितं[1] नवनीतꣳ सद्यः पिष्टमाञ्जनꣳ सतूला शरेषीका[2] द्वयानि च (कृष्णा-)जिनं[3] च [4]कृष्णविषाणा चौदुम्बरश्च[4] दण्डश्चमसश्च व्रतप्रदाने ॥२॥ स्पष्टे देवयजने प्राचीनवंशशाला मिता[5] भवति[6] (नक्षत्रप-)थेन[7] संमिता ॥३॥ दक्षिणश्चोत्तरश्च द्वारौ ॥४॥ केशश्मश्रू वपते ॥५॥ नखानि निकृन्तते ॥६॥ आशितो भूत्वा स्नातोऽभ्यक्तो भद्रादभि श्रेयः प्रेहि इति कृतशालं देवयजनम(-भिप्रै-)ति । °बृहस्पतिः पुरएता ते अस्त्वथेमवस्य वर आ पृथिव्याः इति ॥७॥ अपरेण शालामवस्यति आरे शत्रून् कृणुहि सर्ववीरः इति ॥८॥ ए(-दमगन्म देवयज-)नं पृथिव्याः इति देवयजनमभिमन्त्रयते । °विश्वे देवा = मदेम इति ॥९॥ कण्टकवतीं[8] चाकण्टकां[9] च शाखे आदाय अपेत[10] वीत वि च सर्पंतातः इत्यतीकाशा(-न्) यजति प्राचीनं च शालायै देवयजनात् । °येऽत्र स्थ पुराणा ये च नूतनाः । अदादिदं यमोऽवसानं पृथिव्या अक्रन्निमं पितरो लोकमस्मै इति ॥१०॥ उत्तरे शाले न्यस्य चतुर्गृहीतं गृह्णीते ॥११॥ तज्जुहोति स्योना पृथिवि[11] नो भव इत्यौदुम्बर्ये काले दर्भस्तम्बे हिरण्यमुपास्यान्तामाहुतिम् । °अनृक्षरा निवेशनी । यच्छा नः शर्म सप्रथाः स्वाहा इति ॥१२॥ पूर्वया द्वारा शालां प्रपद्य मथित्वाऽग्नीन् विहृत्यान्वाहार्यपचने पितृभ्यो दत्वा पुत्रे वा भ्रातरि वर्णमुपनयति ॥१३॥ अनृणो भूत्वा यज्ञायुधानि सꣳसाद्यापः प्रणीयाग्नावैष्णवमेकादशकपालं दीक्षणीयं निर्वपति ॥१४॥ निरुप्ते प्राणग्रहाꣳश्च पृश्नीꣳश्च व्याचष्टे ॥१५॥ तस्य हविष्कृता वाचं विसृज्य चतुर्गृहीतेन सप्तहोतारमाहवनीये जुहोति द्वादशर्तून् मधवे स्वाहा, माधवाय [12]स्वाहा इत्येतान्[12] ॥१६॥ शृतेऽस्मिन्

१. MHP मथितं. २. MP शकरीषका. ३. MHP °जनी. ४–४. M °षाणश्चौ; HP °षाणाश्चौ°. ५. MHP om; thus Ao II.151 : 19.1. ६. MHP भवत; thus Ao II.151:19.1. ७. MHP °तेन. ८. MHP कण्ठक°. ९. H कण्ठकां. १०. MP °पीत. ११. MHP पृथिव्य; cf. RV. I.22.15; TĀ.X.1.60. १२–१२. P स्वाहेतान्.

स्तम्बयजुर्हरति ॥१७॥ वेदिं परिगृह्णाति ॥१८॥ करणं जपति ॥१९॥ प्रसूत उत्तरं परिग्राहं परिगृह्णाति ॥२०॥ योयुपित्वाऽवस्कभ्य संप्रेष्यति प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचश्च संमृड्ढि पत्नीं सन्नह्याज्येनोदेहि इति ॥२१॥ एतत् कुर्वन्ति ॥२२॥ (स्रुवं च)[1] स्रुचश्च[2] संमृज्याज्यानि गृह्णीते ॥२३॥ इध्माबर्हिः प्रोक्षति ॥२४॥ वेदिं प्रोक्षति ॥२५॥ आसन्नं प्रोक्षति ॥२६॥ अपो निनीय प्रस्तरं[3] गृह्णाति ॥२७॥ स्तृणाति बर्हिः ॥२८॥ प्राङुत्सृप्य परिधीन् परिदधाति ॥२९॥ समिधावादधाति ॥३०॥ परिधिषु वाचयित्वाऽग्निं युनक्ति ॥३१॥ आगत्य तिरश्ची सादयति ॥३२॥ तिरश्च्योः प्रस्तरम् ॥३३॥ प्रस्तरे जुहूम् ॥३४॥ बर्हिषीतरे ॥३५॥ (समासन्ने-)[4] ऽपानग्रहांश्च पृश्नींश्च व्याचष्टे ॥३६॥ ध्रुवा असदन्; यन्मे अग्ने इति समभिमृश्य दशहोतारं व्याचष्टे ॥३७॥ अग्नये समिध्यमानायानुवाच आह ॥३८॥ अनूक्तासु सामिधेनीषु स्रुवेणाघारमाघार्याह[5] अग्नीदग्निं त्रिस्त्रिः[6] संमृड्ढि इति ॥३९॥ स्रुग्भ्यामुत्तरम् ॥४०॥ असंस्पर्शयन्नत्याक्रम्य ध्रुवां समज्य सादयित्वा प्रवरं प्रवृणीते ॥४१॥ सीदति होता ॥४२॥ प्रसूतः स्रुचावादत्ते ॥४३॥ प्रयाजान् यजति ॥४४॥ प्रयाजानिष्ट्वाऽत्याक्रम्य ध्रुवामभिघारयति हविः ॥४५॥ अथोपभृतम् ॥४६॥ आज्यभागौ यजति ॥४७॥ अग्नाविष्णू (हविषो)[7] यजति ॥४८॥ स्विष्टकृतं यजति[8] ॥४९॥ अत्याक्रम्य यथायतनं स्रुचौ सादयित्वा प्राशित्रमवद्यति ॥५०॥ अप उपस्पृश्येडामवद्यति ॥५१॥ उपहूतायामिडायामग्नीध्र आदधाति ॥५२॥ प्राश्नन्ति ॥५३॥ मार्जयन्ते[9] ॥५४॥ परिहरन्ति ब्रह्मणे[10] ॥५५॥ प्राशिते[11] प्राशित्रे सन्ततिमनु होतुराहुतिं जुहोति ॥५६॥ ब्रह्मन् प्रस्थास्यामः इति ॥ ॥५७॥ अनूयाजान् यजति ॥५८॥ आगत्य वाजवतीभ्यां स्रुचौ व्यूहति ॥५९॥ शंयुना प्रस्तरपरिधि संप्रकिरति ॥६०॥ परेत्य पत्नीः (संयाजयन्ति)[12] ॥६१॥ फलीकरणहोमं हुत्वा प्राङेत्य निधाय स्रुचमुदञ्चं[13] निष्क्रामति ॥६२॥ उत्तरेण शालां परिश्रित एत एव दीक्षणीयाः संभारा उपक्लृप्ता भवन्ति ॥६३॥ उदकुम्भोऽहतं वासः ॥ ६४ ॥ [ १ ]

१. MHP om. २. MHP om च. ३. MHP प्रस्तारं. ४. MHP om; thus supra IV.2.28. ५. MHP ध्रुवेणाघा°. ६. MHP त्रिः once. ७. MHP om. ८. MHP स्विष्टं य०. ९. MHP मार्जंन्ते. १०. P ब्रह्म. ११. MHP प्राशित्रे. १२. MHP broken; thus supra IV.4.18. १३. MH °दञ्चो.

## [ यजमानदीक्षा ]

उदकुम्भोऽहतं वासः सद्यो मथितं नवनीतꣳ सद्यः पिष्टमाञ्जनꣳ सतूला शरेषीकोभयानि दर्भपुञ्जीलानि क्षुरम(-यसम्) ॥१॥ (आप) उन्दन्तु[1] जीवसे इत्यस्य दक्षिणं गोदानमुनत्ति[2]। दीर्घायुत्वाय वर्चसे इति ॥२॥ ओषधे त्रायस्वैनम् इति त्रिभिर्दर्भपुञ्जीलैः प्राचीन(-मनूच्छ्रयति स-)तूलैः ॥३॥ स्वधितिं[3] निदधाति स्वधिते मैनꣳ हिꣳसीः इति ॥४॥ स्वधितिना देवश्रूरेतानि[4] प्रवपे इति प्रवपति ॥५॥ स्वस्त्युत्तराण्यशीय इ(-ति यजमानो) जपति[5] ॥६॥ पुरोप्तꣳ सत्क्षुरगन्धि करोति ॥७॥ अप आशयति आपो अस्मान् मातरः शुन्धन्तु इति ॥८॥ घृतेन नो[6] घृतपुवः[7] पुनन्तु इत्यद्भि-रभिषिञ्चते ॥९॥ विश्वमस्मत्प्रवहन्तु रिप्रम् इति स्रवन्तीरन्ववेक्षते[8] ॥१०॥ उदाभ्यः शुचिरा [9]पूत एमि इत्युदङ्ङुत्सर्पति[9] ॥११॥ सोमस्य तनूरसि तनुवं मे पाहि इत्यहतं वासः परिधत्ते ॥१२॥ महीनां पयोऽसि (इति पाणिभ्यां प्रमृणाय) व(-र्चोधा असि व-)र्चो मयि धेहि इत्यनुलोमं नवनीतेनाभ्यङ्क्ते ॥१३॥ वृत्रस्य कनीनिकाऽसि चक्षुष्पा असि चक्षुर्मे पाहि इति सतूलया शरेषीकयाऽञ्ज-नस्याङ्क्ते त्रिर्दक्षिणं त्रिरुत्तरम् ॥१४॥ दक्षिणमनु निरस्यति ॥१५॥ न निधावते इति ब्राह्मणम् ॥१६॥ एकविꣳशत्या दर्भपुञ्जीलानां चित्पति-स्त्वा पुनातु वाक्पतिस्त्वा पुनातु इत्येनं पवयति[10] सप्तभिः; देवस्त्वा सविता मध्वाऽनक्त्वच्छिद्रेण[11] पवित्रेण वसोः सूर्यस्य रश्मिभिः इति सप्तभिः; तस्य ते पवित्रपते पवित्रेण यस्मै कं पुने तच्छकेयम् इति सप्तभिः ॥१७॥ सर्वैः[12] सह पुरेजानं पवयेत् ॥१८॥ [13]आ वो[13] देवास ईमहे इत्येनं प्रपादयति। सत्य-धर्माणो अध्वरे [14]यद् वो[14] देवास आ=पाहि इति ॥१९॥ पवमानः सुवर्जनः इत्येनमुत्तरेण वेदिं तिष्ठन्तमष्टर्चेन पावमानेनोपस्थापयति ॥२०॥ अञ्जसा [15]सत्यमुपगेषम् इत्यपरेण[15] वेदिमत्याक्रामति। सुविते मा धाः इति ॥२१॥ यजमानायतन उपविशति ॥२२॥ आकूत्यै प्रयुजेऽग्नये स्वाहा इति स्रुवेणा-धीतस्य यजूꣳषि जुहोति ध्रुवाया अधि। मेधायै मनसे अग्नये=स्वाहा (इति)[16] ॥२३॥ आपो देवीर्बृहतीर्विश्वशम्भुवः इति समस्यति। द्यावापृथिवी

१. MHP उदन्तु. २. MHP °मनक्ति. ३. MHP अति. ४. MHP देवशूरेता° ५. HP वपति. ६. MHP वो. ७. M घृतवः. ८. MHP स्रवन्ति-रन्व°. ९–९. MP पूतयेऽमीत्यु°. १०. MHP वपयति. ११. MP मध्वन°. १२. MHP सर्वं. १३–१३. MHP आपो. १४–१४. MP यद्वे. १५–१५. MHP °गेषयत्य°. १६. MHP om.

उर्वन्तरिक्षं बृहस्पतिर्नो हविषा वृधातु स्वाहा इति ॥२४॥ स्रुवेण हुत्वा ध्रुवामाप्याय्य जुह्वां चतुर्विगृह्णाति ॥२५॥ अभिपूर्य पूर्णाहुतिं जुहोति विश्वे देवस्य नेतु = पुष्यसे स्वाहा इति ॥२६॥ तूष्णीमन्तर्वेदि प्रणीता निनीयान्तर्वेदि कृष्णाजिने आस्तृणाति प्रतीचीनग्रीवे उत्तरलोम्नी[1] ॥ २७॥ [2]तयोः ऋक्सामयोः शिल्पे[2] स्थः इति[3] शुक्लं च कृष्णं च संमृशतः । [4]ते वामा रभे [4]ते मा[4] पातमाऽस्य यज्ञस्योदृचः इति ॥२८॥ अथैने प्रसलैः[5] प्राची पर्यूहत्यौच्छिन्दन् ?सभूमेः (अ-)धि ते ॥२९॥ इमां धियꣳ शिक्षमाणस्य देव इति दक्षिणं जान्वाच्य यजमान आसर्पति । [6]क्रतुं दक्षं = रुहेम ॥ सुत्रामाणं पृथिवीं = स्वस्तये इति ॥३०॥ उपरि कृष्णाजिने प्रागावृत्त उपस्थं कृत्वोपविशति ॥३१॥ ऊर्गस्याङ्गिरसी इति ॥३२॥ [२]

ऊर्गस्याङ्गिरसी इति मेखलां पर्यस्यते । [6]ऊर्णं म्रदा ऊर्जं मे यच्छ इति ॥१॥ पाहि मा मा मा[6] हिꣳसीः इति ग्रन्थिं करोति ॥२॥ विष्णोः शर्मासि इति वाससा प्रोर्णुते । [6]शर्म यजमानस्य शर्म मे यच्छ इति ॥३॥ द्यावा(-पृथिवी)[7] प्रोर्णाथाम् इति सशिरः[8] प्रोर्णुते ॥४॥ नक्षत्राणां माऽतीकाशात् पाहि इति वाससोऽतोकाशै रतीक्षते ॥५॥ इन्द्रस्य योनिरसि मा मा हिꣳसीः इत्यस्य सिचि कृष्णविषाणां प्रबध्नाति ॥६॥ कृष्यै त्वा सुसस्यायै इत्यन्तर्वेदि त्रिर्लिखति ॥७॥ सुपिप्पलाभ्यस्त्वौषधीभ्यः इत्यस्य दक्षिणं गोदानꣳ स्यूते ॥८॥ सूपस्था देवो वनस्पतिः इत्यस्मा औदुम्बरं दण्डं[9] प्रयच्छति ॥९॥ ऊर्ध्वो मा पाह्योदृचः इति (यजमानः प्रतिगृह्णाति)[10] ॥१०॥ स्तुतोऽसि जनधाः सपत्नो[11] मा पाहि इत्यस्मा अरिक्तं चमसमादधाति ॥११॥ व्रीहियवौ च भवतः ॥१२॥ आज्यस्तोकश्च ॥१३॥ आज्यं च ॥१४॥ स्तोको [12]हस्त एव[12] ॥१५॥ व्रतानां[13] व्रतपते तपोऽहं दीक्षामुपैमि । सत्यꣳ स्वꣳ श्रद्धां दक्षिणामग्रमक्षितं[14] ब्रह्मलोकम् इति ॥१६॥ प्राणेन सत्येन दीक्षे इति त्रिरुक्त्वा चमसेऽध्यङ्गुलीर्निपिचति स्वाहा यज्ञं मनसा स्वाहा द्यावापृथिवीभ्याम् । स्वा-

---

१. MHP °लोम्नि. २–२. MP तयोरुत्सामयोश्शित्वे. ३. HP om. ४–४. MHP तमा. ५. P प्रसक्तैः. ६. MHP om. ७. MHP om पृथिवी. ८. MHP सशिरा. ९. MH दग्धं; P दब्धं. १०. MHP om; cf. BaudhŚS VI. 5:161.11 ११. MHP समक्षो. १२-१२. MHP हस्तावेव. १३. MHP ता. १४. MHP दक्षिणामग्नम° [P °क्षि ति].

होरोरन्तरिक्षात् स्वाहा इति ॥१७॥ सर्वा निपिच्य[1] वाताद्यज्ञमारभे इति चतस्र उत्पिचति ॥१८॥ अत्र कृष्णाजिने अध्यूहत उदीचीनग्रीवे[2] ॥१९॥ दीक्षितोऽसि[3] इत्येन[4]ᳪ (सᳪशास्ति । दीक्षित-)[5]वादं वद, कृष्णाजिनान्मा नियौंषीरौदुम्बरस्ते दण्डः[6] स्पष्टोऽस्तु[7] मा पुरा नक्षत्रेभ्यो वाचं विसृष्ठाः[8] । यदि विसृजासै वैष्णवीमृचमनुब्रवः[9] इति ॥२०॥ स यदि प्रमत्तो विसृजेत वैष्णवी-मृचमनुब्रूयाद् विष्णो त्वं नो अन्तमः = अक्षितम् इति ॥२१॥ अदीक्षिष्टायं ब्राह्मणः इति (त्रिरुपाᳪश्वे-)नमाह । असावामुष्यायणः[10] । तमिन्द्राग्निभ्यां विश्वेभ्यो देवेभ्यो ब्राह्मणेभ्यः सोमपेभ्यः प्रब्रूमः इति ॥२२॥ अदीक्षिष्टायं ब्राह्मणः इति त्रिरन्य उच्चैर्निष्क्रम्य । °असावामुष्यायणः । स इन्द्राग्निभ्यां विश्वेभ्यो देवेभ्यो ब्राह्मणेभ्यः सोमपेभ्यः सोमः[11] प्राह इति ॥२३॥ वाचंयम आस्त ओन्नक्षत्रात् ॥२४॥ उदितेषु (नक्षत्रेषु पूर्वया द्वारो-)पनिष्क्रम्य भूर्भुवः सुवः इति वाचं विसृजते । °भूर्भुवः सुवर्व्रतं कृणुत (व्रतं)[12] कृणुताग्नि-र्यज्ञिय आपो यज्ञिया गावो यज्ञिया देवा यज्ञिया यज्ञो यज्ञियोऽहं यज्ञियः प्रपद्य यजमानः[13] ( इति········॥२५॥ ) दैवीं धियं मनामहे इति मार्जयते । °सुमृडीकामभीष्टये[14] वर्चोधां यज्ञवाहसᳪ सुपारा नो असद् वशे इति ॥२६॥ अयं[15] ते योनिर्ऋत्वियः इत्यात्मन्नग्निᳪ समारोहयते । °यतो जातो = रयिम् इति ॥२७॥ ये देवा मनोजाता मनोयुजः इति व्रतयति । °सुदक्षा दक्षपिता = (तेभ्यः स्वाहा इति ॥२८॥ अहं त्वद-)स्मि इति व्रतयित्वा विसृजति । °मदसि त्वमेतत् = रस्मि यथायथं वह हव्यानि देवान् पुत्रः पित्रे लोककृज्जातवेदः इति ॥२९॥ दैवीं धियं मनामहे इत्येव[16] मार्जयते ॥३०॥ संविशन्तमेवातो वाचयति अग्ने त्वम् ॥३१॥ [३]

अग्ने त्वᳪ सुजागृहि = पुनर्ददं इति ॥१॥ त्वमग्ने व्रतपाः असि इति प्रबुद्ध-यजुषं वाचयति । ( °देव आ मर्त्येष्वा ।) त्वं यज्ञेष्वीड्यः इति ॥२॥ विश्वेदेवा अभि मा माऽववृत्रन्[17] इति पर्यावर्तस्य यजुर्वाचयति ॥३॥ समहमिन्द्रियेण

---

१. MHP निविच्य. २. MHP °ग्रीव. ३. H दक्षिणतो. ४. MH °त्येनाम्. ५. Cf. BaudhSS VI.6:162.4. ६. MHP दग्धः. ७. MHP स्पष्टौस्तु. ८. MH विस्रष्ठा. ९. HP °ब्रुव. १०. MH लमसावा; P लमन-सावा°. ११. MHP सोमं. १२. MHP om; cf. BaudhSS VI.6:163.1-3. १३. MHP °मानां. १४. MHP समृड्ढिकामहिष्टये [P °ष्ठये]. १५. MHP अहं. १६. MH इत्येवं. १७. MP वाववृत्रन् ।

वीर्येण इत्येवमेवास्मै प्रातस्तप्त्वा व्रतमाहरन्ति ॥४॥ समानं व्रतनम् ॥५॥ पुराऽऽदित्यस्योदयाद् वाचमुपाकरोति अग्नीन्[1] ज्योतिष्मतः कुरुत, दीक्षित वाचं यच्छ, पत्नि[2] वाचं यच्छ इति यदि पत्नी दीक्षिता स्यात् ॥६॥ आदित्येन वाचं विसृज्याथ यदि सनिं प्रहिणुयात् पूषा सन्या इति व्रजन्तममुमन्त्रयते । [3]सोमो राधसा देवः सविता वसोर्वसुदावा इति ॥७॥ रास्वेयत् सोमाऽऽ भूयो भर इत्याहरन्तं प्रतीक्षते । [3]मा पृणन् पूर्त्या वि राधि माऽहमायुषा इति ॥८॥ चन्द्रमसि मम भोगाय भव इति हिरण्यं प्रतिगृह्णाति ॥९॥ वस्त्रमसि मम भोगाय भव इति वासः ॥१०॥ उस्राऽसि मम भोगाय भव इति गाम् ॥११॥ हयोऽसि मम भोगाय भव [5]इत्यश्वम् ॥१२॥ हयतरोऽसि मम भोगाय भव इत्यश्वतरम् ॥१३॥ छागोऽसि मम भोगाय भव[5] इति छागम् ॥१४॥ मेषोऽसि मम भोगाय भव इति मेषम् ॥१५॥ क्षिवस्तिरसि मम भोगाय भव इति हस्तिनं वा पुरुषं वा ॥१६॥ पतङ्गोऽसि मम भोगाय भव इति रथम् ॥१७॥ घर्त्रमसि[4] मम भोगाय भव इत्यनो वाऽगारं वा ॥१८॥ पिन्वतमसि मम भोगाय भव इति [5]क्षीरं वा सर्पिषं वा ॥१९॥ औषधमसि मम भोगाय भव इति धान्यम् ॥२०॥ वानस्पत्यमसि मम भोगाय भव इति[5] यत्किञ्चिद्वानस्पत्यम् ॥२१॥ एवमेवैतानि यथादेवतं प्रतिगृह्णाति ॥२२॥ स यदि दक्षिणानाꣳ समुदाकृतानां प्र वा पतेन्नश्येद्वा तामेष्टवै ब्रूयात् ॥२३॥ तां यदि न विन्देयुः वायवे त्वा इति तामनुदिशेत् ॥२४॥ वरुणाय त्वा इति तां यदेव[6] म्रियेत पाशो वा हन्यात् ॥२५॥ [7]निर्ऋत्यै त्वा इति[7] तां या सं वा [8]शीर्येताव वा[8] सीदेत् कर्तं वा प्रपतेत्[9] ॥२६॥ रुद्राय त्वा इति तां (यां)[10] पौरुषो वा वधो हन्यान्महादेवो वा ॥२७॥ मृत्यवे त्वा इति तां[11] या नद्धकं[12] म्रियेत ॥२८॥ सा येयं प्रपतिता स्यात्तां यदि विन्देयुर्नैनां दक्षिणास्वप्युपाकुर्यान्न[13] गोष्ठे

---

१. HP अग्नि. २. MH पत्नीं. ३–३. P. oms. ४. MHP घर्यमसि. ५–५. H oms; M oms वा after सर्पिषं. ६. MHP यथैव [M° वा]; thus Ao II.151:20.3. ७–७. MHP निरुत्वेति. ८–८. MHP शीर्येतावाव. Caland gives the Ms reding in the fn 4 as शीर्येतवावसीदत. ९. MHP प्रपते. १०. MHP om. Ao II.151:20.5 supplies the text in bracket. ११. H repeats यथैव म्रियते = मृत्यवे त्वा इति after तां. १२. MHP या नद्धक; thus Ao II.151:20.6. १३. MHP °प्यपाकु°; thus Ao.II.151:20.7.

॥२९॥ प्रतिवेशाꣳ रक्षितवै ब्रूयात् ॥३०॥ तां दक्षिणानां कालेऽनृत्विजे ब्राह्मणाय दद्यात् ॥३१॥ तस्यै कर्म ॥३२॥ स यदि दीक्षितमयोग उपेयात्[२] तप्त्वा व्रतानि वत्सान् संबध्य समारोह्याग्नीन् भद्रादभि श्रेयः प्रेहि इति प्रयायात् ॥३३॥ अथेमवस्य इत्यवस्येत् ॥३४॥ एते एव दीक्षितस्य योगावसाने ॥३५॥ स यदि वहन्तीरपो[३]ऽधिगच्छेत् ता एनं सं वा वहेयुः[४] सं वा हरेयुः ॥३६॥ न त्वपोऽवक्रामेत्[५] ॥३७॥ द्वौ लोष्टावाददीत ॥३८॥ तयोरन्यतरमप्सु प्रास्येद् देवीरापो अपां नपाद्यः = माऽवक्रमिषम्[६] इति ॥३९॥ अच्छिन्नं तन्तुं पृथिव्या अनु गेषम् इत्यन्यतरꣳ समुह्यमानो वा सꣳह्रियमाणो वा विशातयेत् ॥४०॥ यल्लोष्टस्योच्छिष्येत[७] तत्पारे न्यस्याधितिष्ठेद् अस्मै मा योषम् इति ॥४१॥ स '[८]यत्रैव वत्स्यन्[८] यक्ष्यमाणः स्यात् तदेतानि कर्माणि[९] कुर्यात्॥४२॥(....देव) यजमानमभिमन्त्रयेत ॥४३॥ यद्युद्विजेत्तत्स्तम्बाहुतिं[१०] जुहुयात् ॥४४॥ स यदि दीक्षितोऽमेध्यं पश्येद् अबद्धं मनः इत्येनं वाचयेत् । °दरिद्रं मा मा हासीः इति ॥४५॥ अथ यद्येनमभिवर्षेत् उन्दतीर्बलं धत्त इत्येनं वाचयेत् । °ओजो धत्त बलं धत्तौजोदाः[११] स्थ बलदा मा मे दीक्षां मा तपो निर्वधि(-ष्ट इति ॥४६॥ यद्यश्रु प्रपतेत्) क्रुपा आपः स्थ स्वाहाकृताः[१२] पृथिवीं गच्छत इति ता [१३]अनुमन्त्रयते ॥४७॥ यदि स्निहानं कुर्याद् मुदा आपः स्थ स्वाहाकृताः पृथिवीं गच्छत इति ताः[१३] ॥४८॥ यदि सेभुं कुर्याद् बीभत्सा आपः स्थ स्वाहाकृ=त इति ताः ॥४९॥ यदि स्वेदः प्रपतेत् तपस्या आपः स्थ=गच्छत इति ताः ॥५०॥ यदि रुधिरं[१४](प्रपतेत् क्रव्या आपः स्थ= गच्छत इति ताः ॥५१॥ यदि मूत्रं)[१५] वा पुरीषं वा कुर्याद् अꣳहोमुच आपः स्थ=त इति ताः ॥५२॥ यदि रेतः सिञ्च्याद् रेतःसिच[१६] आपः स्थ स्वाहाकृताः पृथिवीं गच्छत इति ताः ॥५३॥ एषा दीक्षा ॥५४॥ एतद्दीक्षितस्य [१७]वरणम् ॥५५॥ अपि हैतेनाप्रतिपदं[१७] दीक्षितः स्यात् ॥५६॥[४]

[ इति प्रथमोऽनुवाकः]

१. MHP दीक्षितं योग; thus Ao.I.9.20–21. २. MHP उपेयेत्. ३. H °रापो. ४. MHP पहेयुः. ५. MHP °क्रामे. ६. MH °क्रमीद्य° P °क्रामित्य°; thus Ao II.151:21.3. ७. MHP य लोष्ट°; thus Ao II.151:21.5. ८–८. MP यत्रैवाववृधतं; H यत्रैवावृतं. ९. MHP कर्माणि twice. १०. MHP द्युवदजयेत्तन्स्त [ M °द्वयुद° ]. ११. H धत्तौजास्थ. १२. MHP °कृतां. १३–१३. P oms; MH °कृतां for °कृताः. १४. MHP रुधिर. १५. Cf Bhār P.S.69. १६. MHP रेतसिच. १७–१७. HP चरमविहैनेना प्रतिपद्; thus Ao II.158.28–29.

## [ प्रायणीयेष्टिः पत्निदीक्षा च ]

श्वो राज्ञः क्रय इति रोहितं चर्म पल्पूलयित्वोत्तरे(-ण शालां संभारान् संभरते ॥१॥ उष्णी(-षं च छा-)गा च चन्द्रं च द्वे ऊर्णास्तुके शुक्लाऽन्या (कृष्णाऽन्या)[१] स्पन्द्या च राजासन्दी च सोमवाहनं च सोमवाहनौ चानड्वाहौ राजक्रयणी च राजक्रयणाश्चर्षभौ[२] च मिथुनौ चानड्वाञ्च धेनुश्च वासश्च चतुःशरावश्च सर्पिःशरावश्च बद्धजस्तुका च ॥२॥ प्रातरादित्येन वाचं विसृज्य यज्ञायुधानि सꣳसाद्यापः प्रणीय प्रायणीयं निर्वपति देवस्य त्वा = हस्ताभ्यामदित्यै पथ्यवत्या अग्निवत्यै सोमवत्यै सवितृवत्यै जुष्टं निर्वपामि इति चतुरो मुष्टीन् व्रीहीणाम् ॥३॥ निरुप्ते प्राणग्रहाꣳश्च पृश्नीꣳश्च व्याचष्टे ॥४॥ तस्य हविष्कृता वाचं विसृज्य पत्नीं दीक्षयेद् यदि दीक्षिता स्यात् ॥५॥ अपरेण शालां परिश्रित[३] एत एव दीक्षणीयाः संभारा उपक्लृप्ता भवन्त्युदकुम्भो[४] = जीवसे इत्यस्यै दक्षिणमुपपक्षमुनत्ति[५] । °दीर्घायुत्वाय[६] = स्वधिते मैनꣳ हिꣳसीः इति ॥६॥ स्वधितिना देवश्रू[७] = ति ॥७॥ एवमेवोत्तरमुपपक्षं वपति ॥८॥ पुरोप्तꣳ सत्क्षुरगन्धि[८] करोति ॥९॥ अप आशयति आपो अस्मान्[९] मातरः शुन्धन्तु इति ॥१०॥ घृतेन[१०] = शुचिरापूत एमि इत्युदीच्युत्सर्पति ॥११॥ सोमस्य तनूरसि तनुवं मे पाहि इत्यहतं वासः[११] = वाक्पतिस्त्वा पुनातु इत्येनां पवयति[१२] सप्तभिः देवस्त्वा[१३] = सर्वैः सह पुरेजानस्य जायां पवयेत्[१४] ॥१२॥ प्रैतु ब्रह्मणस्पत्नी[१५] इत्येनामपरया द्वारा शालां प्रपादयति । °वेदिं वर्णेन सीदतु । अथाहमनुकामिनी स्वे लोके विशा इह इति ॥१३॥ आगत्यापरेण गार्हपत्यं प्राजापत्य उपविशति ॥१४॥ सं त्वा नह्यामि पयसा घृतेन सं त्वा नह्याम्यप ओषधीभिः । सं त्वा नह्यामि प्रजयाऽहमद्य सा दीक्षिता सनवो वाजमस्मे इति ॥१५॥ सुप्रजसस्त्वा वयम् इत्येनामुपनिषदं वाचयति । °सुपत्नी = अदाभ्यम्[१६] इति ॥१६॥ विष्णोः शर्मासि इति वाससा

1. MHP om. २. MHP °चर्षभं. ३. MHP °श्रितं. ४. MHP abr; see supra VI 2.1–2. ५. MHP °मुनक्ति. ६. MHP abr; see supra VI.2.2–4. ७. MHP abr; see supra VI.2.5. ८. MHP सुक्षुर°. Caland seems to have accepted both the readings viz, सत्क्षुरगन्धि at VI.2.7 and सुक्षुरगन्धि here (Ao.II.166. 31–34). ९. P अस्मन्मा°. १०. MHP abr; see supra VI.2.9–11. ११. MHP abr; see supra VI.2.12–17. १२. MHP वपयति. १३. MHP abr; see supra VI.2.17–18. १४. MHP वपयेत्. १५. MHP पती. १६. P अदाम्याम्.

प्रोर्णुते । शर्म यजमानायै शर्म मे यच्छ इति ॥१७॥ द्यावापृथिवी प्रोर्ण्वाथाम् इत्यस्यै क्लृप्तं कुरीरं प्रत्यस्यति ॥१८॥ नक्षत्राणां माऽतीकाशात् पाहि इति कुरीरस्यातीकाशैरतीक्षते ॥१९॥ इन्द्रस्य योनिरसि मा मा हिꣳसीः इत्यस्यै सिचि नस्कूजनीं प्रवध्नाति ॥२०॥ कृष्यै त्वा सुसस्यायै इत्यपरेण गार्हपत्यं त्रिर्लिखति ॥२१॥ सुपिप्पलाभ्यस्त्वौषधीभ्यः इत्यस्यै दक्षिणमुपपक्षꣳ स्यूते[1] ॥२२॥ स्तुतोऽसि जनधाः सपत्नो[2] मा पाहि इत्यस्या अरिक्तं चमसमादधाति ॥२३॥ व्रीहि[3]=चतस्र उत्पिचति ॥२४॥ वाचंयमाऽऽस्ते [4]ओपहवाद् ॥२५॥ गृहपतेः[4] पत्न्युपहवमिच्छ[5] इत्याहाध्वर्युः ॥२६॥ उपहूता इति वाचं विसृजते ॥२७॥ उत्तिष्ठन् संप्रेष्यति ॥२८॥ [५]

उत्तिष्ठन् संप्रेष्यति सोमविक्रयिन् सोमꣳ शोधयापामन्ते[6] ब्राह्मणो दक्षिणत आस्ताꣳ सुब्रह्मण्य सोमवाहनं प्र णो नेग्धि ब्रह्मन्नवस्य[7] प्रतिप्रस्थाता राजक्रयणानुकल्पय[8] इति ॥१॥ एतत् कुर्वन्ति ॥२॥ आवपन्निष्काषभाजाꣳ[9] स्तण्डुलानपयच्छति ॥३॥ यं[10] चरुमावपति शृतेऽस्मिन्नाज्यमानयति ॥४॥ येन प्रचरिष्यन् भवति तत्पुनराज्यस्थाल्यां कृत्वा स्तम्बयजुर्हरति ॥५॥ वेदिं परिगृह्णाति ॥६॥ करणं जपति ॥७॥ प्रसूत उत्तरं परिग्राहं परिगृह्णाति ॥८॥ योयुपित्वाऽवस्कभ्य संप्रेष्यति प्रोक्षणीरासादये[11]=संमृड्ढ्याज्येनोदेहि (इति ॥९॥ एतत्) कुर्वन्ति ॥१०॥ (स्रुवं च)[12] स्रुचश्(च)[13] संमृज्याज्यानि गृह्णीते सर्वाणि षड्गृहीतानि ॥११॥ इध्माबर्हिः प्रोक्षति[14]=बर्हिषोतरे ॥१२॥ समासन्नेऽपानग्रहाꣳश्च पृश्नीꣳश्च व्याचष्टे ॥१३॥ ध्रुवा असदन्; यन्मे अग्ने इति समभिमृश्य षड्ढोतारं व्याचष्टे ॥१४॥ अग्नये समिध्यमानायानुवाच[15] आह ॥१५॥ अनूक्तासु सामिधेनीषु (स्रुवेणाघारमाघार्या-)ह अग्नीदग्नि त्रिस्त्रिः संमृड्ढि इति ॥१६॥ स्रुग्भ्यामुत्तरम् ॥१७॥ असꣳस्पर्शयन्नत्याक्रम्य ध्रुवाꣳ समज्य सादयित्वा प्रवरं प्रवृणोते ॥१८॥ सीदति होता ॥१९॥ प्रसूतः स्रुचावादत्ते ॥२०॥ प्रयाजान् यजति ॥२१॥ प्रयाजा-

१. MHP स्युते. २. H सभक्षो. ३. MHP abr; see supra VI.3.12–18. ४–४. H °हवा दहपते. ५. MHP पत्न्युवहमिच्छत. ६. MHP °घयावामन्ते. ७. MHP बद्धमवस्यति. ८. MHP °क्रयणानुवाकत्वये.° ९. MHP °भाजनं. १०. MHP यश्. ११. MHP abr; see supra VI.1.2 १२. MHP om. १३. MHP om च. १४. MHP abr; see supra VI.1.24–35. १५. वाचाह.

निष्ट्वाऽत्याक्रम्य पञ्चकृत्वो ध्रुवामभिघारयति हविः ॥२२॥ [1]अथोपभृत-मन्ततः ॥२३॥ आज्यभागौ[1] यजति[2] ॥२४॥ पथ्यायै (स्वस्त्या अनुब्रूहि इत्याहाज्यस्यैव गृह्णानश्चतुः)[3] ॥२५॥ ओ श्रावय इत्याह ॥२६॥ [4]पथ्याँ स्वस्तिं[4] यज इति ॥२७॥ वषट्कृते पूर्वार्धे[5] जुहोति ॥२८॥ अग्नयेऽनुब्रूहि इत्याहाज्यस्यैव गृह्णानश्चतुः ॥२९॥ ओ श्रावय इत्याह ॥३०॥ (अग्निं यज इति ॥३१॥ वषट्कृते दक्षिणार्धे जुहोति ॥३२॥ सोमायानुब्रूहि इत्याहाज्य-स्यैव गृह्णानश्चतुः ॥३३॥ ओ श्रावय इत्याह)[6] ॥३४॥ सोमं यज इति ॥३५॥ (वषट्कृतेऽपरार्धे जुहोति ॥३६॥ सवित्रे)[7]ऽनुब्रूहि इत्याहाज्यस्यैव[8] गृह्णा-नश्चतुः ॥३७॥ ओ [9]श्रावय इत्याह[9] ॥३८॥ सवितारं यज इति ॥३९॥ वषट्कृत उत्तरार्धे जुहोति ॥४०॥ अदित्या अनुब्रूहि इत्याहोपस्तृणानो-ऽवद्यन् ॥४१॥ पश्चाच्च पुरस्ताच्च[10] चरोरवद्यति ॥४२॥ अभिघारयति ॥४३॥ प्रत्यनक्ति ॥४४॥ ओ श्रावय इत्याह ॥४५॥ अदितिं यज इति ॥४६॥ वषट्कृते (मध्ये)[11] जुहोति ॥४७॥ (अ-)ग्नये स्विष्टकृतेऽनुब्रूहि इत्याह पञ्चकृत्व[12] उपस्तृणान(-ोऽवद्यन्)[13] ॥४८॥ सकृदुत्तरार्धान्मेक्षणे चरोरव-द्यति ॥४९॥ तदवदायाधोऽधः[14] स्रुचावग्नीधे प्रयच्छति ॥५०॥ द्विरभि-घारयति ॥५१॥ न प्रत्यनक्ति ॥५२॥ अष्टावत्तः स्विष्टकृत् ॥५३॥ ओ श्रावय इत्याह ॥५४॥ अग्निँ स्विष्टकृतं यज इति ॥५५॥ वषट्कृत उत्तरार्धेऽतिहाय पूर्वा आहुती(-र्जुहोति ॥५६॥ अति-)वालयत्यग्नीन्मेक्षणम् ॥५७॥ नानु-प्रहरति ॥५८॥ अत्याक्रम्य[15] यथायतनँ स्रुचौ सादयित्वा[16] प्राशित्र-मवद्यति ॥५९॥ अप उपस्पृश्य नवकृत्व इडाया उपस्तृणोते ॥६०॥ द्विरवद्यति ॥६१॥ सकृदभिघारयति ॥६२॥ द्वादशावत्तेडा[17] ॥६३॥ उपहूतायामिडायामग्नीध आदधाति ॥६४॥ प्राश्नन्ति ॥६५॥ मार्जयन्ते ॥६६॥ परिहरन्ति ब्रह्मणे ॥६७॥ प्राशिते[18] प्राशित्रे सन्ततिमनु षड्ढोतु-

१–१. MHP °भृतमनाहृत्याज्य° २. H om. ३. MHP broken; thus infra VII.22.27. ४-४. MHP पथ्यान्तों. ५. MHP दक्षिणार्धे; thus infra VII.22.30. ६. MHP om; thusinfra VII.22.17–20. ७. MHP broken; thus infra VII. 22–23. ८. P °त्याज्य°. ९–९. H oms. १०. P oms; HP om च. ११. MHP om; thus infra VII.22.37. १२. MHP वनं च कृत्वा. १३. MHP om. १४. H °वधायं. १५. MH आक्रम्य. १६. P सादयतिं. १७. MP °शवर्तेडो°; H शावर्तेडो° १८. MP प्राशित्रे; H oms.

  

राहुतिं जुहोति ॥६८॥ ब्रह्मन् प्रस्थास्यामः इति ॥६९॥ अनूयाजान् यजति ॥७०॥ आगत्य वाजवतीभ्याँ स्रुचौ व्यूहति ॥७१॥ शंयुना प्रस्तर-परिधि[1] (सं)[2] प्रकिरति ।७२॥ चतुर्गृहीतं गृह्णीते ॥७३॥ तज्जुहोति कविर्यज्ञस्य वितनोति पन्थाम् इत्यग्नीत्[3] । °नाकस्य पृष्ठ अधि रोचने दिवः[4]= सनीयान् स्वाहा इति ॥७४॥ अपरं चतुर्गृहीतं गृह्णीते ॥७५॥ [5]तस्मिन् इयं ते[5] शुक्र तनूरिदं वर्चः इति दर्भेण हिरण्यं निष्टक्यं[6] बध्वाऽवदधाति । °तया सं भव भ्राजं गच्छ इति ॥७६॥ जूरसि इत्येनं[7] जुहोति । °धृता मनसा जुष्टा विष्णवे तस्यास्ते सत्यप्रसवः प्रसवे वाचो यन्त्रमशीय स्वाहा इति ॥७७॥ अपरं चतुर्गृहीतं गृह्णीते ॥७८॥ [8]तत् शुक्रमस्यमृतमसि[8] वैश्वदेवँ हविः इति (यजमानमाज्यमवेक्षयति)[9] ॥७९॥ उत्तिष्ठन् संप्रेष्यति ॥८०॥[६.]

उत्तिष्ठन् संप्रेष्यति स्फ्यमुदपात्रं ब(-र्हिर्हि-)रण्यमाहरेहि यजमानानयन्तु पत्नीं पुरस्ताद् द्वारं व्यवस्यत इति ॥१॥ संवृता द्वारो भवन्ति यत्प्रायणीयेन चरन्ति ॥२॥ एतस्मिन् कालेऽग्नीदन्तर्वेदि[10] प्रणीता निनीय चरुस्थालीमेतां निर्णिज्य निष्काषभाजानस्यां[11] तण्डुलानोप्य[12] वेदं मेक्षणं बर्हिषोपसन्नह्य मध्यमे स्थूणाराजेऽनुवेष्ट्य निदधाति ॥३॥ प्राच्या द्वारा शालायै निष्क्रम्य हिरण्यमुद्गृह्णाति ॥४॥ तस्यातोकाशेनातीक्षते सूर्यस्य चक्षुरा रुह = विपश्चिता इति ॥५॥ (चिदसि)[13] [14]मनाऽसि इति[14] राजक्रयणीमभिमन्त्रयते । °धीरसि दक्षिणाऽसि यज्ञियाऽसि क्षत्रि[15] = सं भव इति ॥६॥ मित्रस्त्वा पदि बध्नातु इत्येनां पदि[16] यजुषा बध्नाति ॥७॥ [17]पूषाऽध्वनः पात्विन्द्रायाध्यक्षाय इत्ये(-नां यत्र राजा तत्र गमयति)[18] ॥८॥ अनु त्वा माता मन्यताम् इत्येनामनु-मन्यते ।[19] °अनु पिताऽनु भ्राता सगर्भ्योऽनु = सोमम् इति ॥९॥ रुद्रस्त्वावर्तयतु

---

१. MHP °परिधिं. २. MHP om. ३. MHP °मित्याग्निन्ना°. ४. MHP दिवा. ५–५. MHP तस्मिन्निनयन्ते. ६. MP निष्टक्यं. ७. MHP इत्येन. ८–८. MHP तच्छुक्रमत्यमृ°. ९. MHP om; cf BaudhŚS VI.12:169.10. १०. MHP °र्वेदि. ११. MHP °भाजनमस्यां. १२. MP °लानोऽप्य. १३. MHP om. १४-१४. MHP मनासीरिति. १५. MH sign of abridged text(=) is given before क्षत्रि. १६. MH वदि; P ब्रहि. १७. P यूषा°. १८. MHP om, cf. VaikhŚS XII. 16:146.17. १९. MHP °मनुमतो.

इत्येनामुत्तरतः पुरस्तात् परिक्रामयति[1]। °मित्रस्य=रव्या इति ॥१०॥ पश्चात् स्थित्वाऽऽह प्राचीमुदीचीमुत्क्रमय इति ॥११॥ तस्यै वस्व्यसि इति दक्षिणस्य सक्थ्नः षट् पदान्यनु निक्रामति[2]। °रुद्रास्यदितिः=चन्द्रासि इति ॥१२॥ बृहस्पतिस्त्वा सुम्ने रण्वतु इति सप्तमं पदमभिगृह्णाति ॥१३॥ रुद्रो वसुभिराचिकेतु इत्यधिवदति ॥१४॥ पृथिव्यास्त्वा मूर्धन्ना जिघर्मि इति पदे हिरण्यमुपास्य जुहोति। °देवयजन इडायाः पदे घृतवति[3] स्वाहा इति ॥१५॥ परिलिखितꣳ रक्षः परिलिखिता अरातयः इति स्फ्येन पदे हिरण्यमभि परिलिखति। °इदमहꣳ रक्षसो=कृन्तामि इति ॥१६॥ अस्मे रायः इति कृष्णविषाणया यावन्मूतं खात्वाऽध्वर्युः पद्धरण्याꣳ संवपति ॥१७॥ त्वे रायः इति यजमानाय प्रयच्छति ॥१८॥ तोते[4] रायः सह नौ रायः इति[5] यजमानः पत्नियै ॥१९॥ सं देवि देव्योर्वश्या पश्यस्व इति राजक्रयण्या पत्नीꣳ संकाशयति। °त्वष्टीमती=तव देवि संदृशि इति ॥२०॥ माऽहꣳ रायस्पोषेण वि योषम् इति यजमानेन। °मा मया रायस्पोषः °इति ॥२१॥ उन्नम्मय[6] पृथिवी(-म् इति पद उदपात्रमुपनि-)[7]नयति। °मिन्द्वीदं दिव्यं[8]=दृतिम् इति ॥२२॥ प्रतिपरैति[9] पत्नी पदꣳ हरन्ती ॥२३॥ राजा विचितो भवति ॥२४॥ [ ७ ] [इति द्वितीयोऽनुवाकः ]

[ सोमक्रयः ]

राजा विचितो भवति ॥१॥ रोहिते चर्मन्नुदीचीनदशं वासः प्रत्युपस्तीर्णं भवति चतुर्गुणम् ॥२॥ अपामन्ते[10] ब्रह्मा[11] दक्षिणत आस्ते ॥३॥ अप उपस्पृश्य मार्जयित्वोपाꣳशुग्रहणमादाय ए(-ष ते गायत्रो भागः इत्येतै-)श्च यजमानो (विचितꣳ राजानमुपतिष्ठते)[12]। °इति मे सोमाय ब्रूतादेष ते=साम्राज्यं लोकं गच्छेति मे सोमाय राज्ञे ब्रूताद् इति ॥४॥ आगत्य अꣳशुना ते अꣳशुः पृच्यताम् इत्यभिमृशत एनम्। °परुषा [13]परुर्गन्धस्ते काम[13]=ग्रहः

१. MH °क्रामति, P क्रमयेति. २--२. H oms; M वस्यसीति, P वस्यतीति for वस्व्यसि इति, cf. BaudhŚS. VI.12 : 169.16 : निष्क्रामति. ३. P °वती. ४. MHP ततो. ५. MHP repeat यजमानाय=इति after इति. ६–६. MHP इध्मन्नंभय. ७. BhārŚS X.5.16. ८. MHP दिव्यं. ९. MHP °परेति. १०. MHP चामन्ते. ११. MHP ब्राह्मणो. १२. Cf BaudhŚS VI.14:171.1–4; VaikhŚS XII.17:148.3–4. १३–१३. MH बरू °तेषाम.

इत्यातः ॥५॥ अभि त्यं देवꣳ सवितारम् इत्यतिच्छन्दसर्चा मिमी(-त एकयैक-)य़ोत्सर्गम्[१]। °ऊण्योः कविक्रतु=सुवः इति ॥६॥ पञ्च-कृत्वो यजुषा, तूष्णीं पञ्चकृत्वः ॥७॥ प्रजाभ्यस्त्वा इत्युपसमूहति ॥८॥ अꣳशुमाघातमिच्छन्ति चर्मन् ॥९॥ प्राणाय त्वा इत्युपनह्यति ॥१०॥ व्यानाय त्वा इत्यनुशृन्थति[२] ॥११॥ प्रजास्त्वमनु प्राणिहि इति विस्रस्योपाꣳ-शुग्रहणमवधायानुप्राणिति। °प्रजास्त्वामनु[३] प्राण(-न्तु इति ॥१२॥ उद्‌-) ह्यात्रेव चर्मन्[४] सादयति राजानम् ॥१३॥ ततः सोमविक्रयी स्वयमादत्ते ॥१४॥ तस्याददानस्योदकुम्भेन पादावुपप्रवर्तयति[५] कूपेऽवहितो ॥१५॥ सोमं ते क्रीणामि इत्युत्थायाध्वर्युः क्रयञ्जपति। °ऊर्जस्वन्तं पयस्वन्तं वीर्यावन्त-मभिमातिषाहम् इति ॥१६॥ सोमविक्रयिन् क्रय्यस्ते सोमा३ इति ॥१७॥ क्रय्यः३ इति स आह ॥१८॥ गवा ते क्रीणानि[६] इत्युपाꣳशु (छाग-)या ते क्रीडानि इत्येनमाह ॥१९॥ भूयो वा अतः सोमो राजाऽर्हति इत्याह सोम-विक्रयी ॥२०॥ भूय एवातः सोमो राजाऽर्हति इत्याहाध्वर्युः। °गोस्त्वेव[७] महान् महिमा[८] (इति)[९] ॥२१॥ शफेन ते क्रीणानि इति ॥२२॥ भूयो वा अतः सोमो राजाऽर्हति इत्याह सोमविक्रयी ॥२३॥ भूय एवातः सोमो राजाऽर्हति इत्याहाध्वर्युः। [१०]°गोस्त्वेव महान् महिमा[१०] (इति)[९] ॥२४॥ पादेन ते क्रीणानि इति ॥२५॥ भूयो वा[११]=महिमा (इति)[९] ॥२६॥ अर्धेन ते क्रीणानि इति ॥२७॥ तत्पुरासंपन्नम्[१२] ॥२८॥ भूयो वा अतः[११]=महिमा इति[११] ॥२९॥ अर्धे [१४]भोगा अस्या आचष्टे[१४]। [१५]एतस्या एव[१५] क्षीरं पयः प्रतिधुक् शरः शृतमामिक्षां वाजिनं दधि नवनीतं घृतं प्रजा उपजीवति ॥३०॥ गवा ते क्रीणानि इति ॥३१॥ क्रीतो राजा इत्याह सोमविक्रयी वयाꣳस्याचक्ष्व[१६] इति ॥३२॥ एषा राजक्रयणी इत्येनमाह ॥३३॥ तां तेऽन्यया परिपाल-

१. H °यात्स्वर्गम्; P °यात्सर्गम्; cf. BaudhŚS VI.14:171.9-11; VaikhŚS XII.17:148.6–7. २. P °नुप्रन्थति. ३. MHP प्रजात्व-मनुप्राजन [ P प्राणन्न् ] ४. MHP चर्मं; thus Ao.II.152.9. ५. P °वुपावर्तं°. ६. MHP क्रीणामी°. ७. MH गोस्त्वयि, P गोत्वयि. ८. MHP महिमानः ९. MHP om. १०–१०. MHP गोस्त्वैमहान्महिह [ P गौस्त्वं° ]. ११. MHP abr; see above S.20–21. १२. H पुरासन्तं. १३. P oms. १४–१४. MHP भोगस्याचष्टे. १५–१५. MHP एतस्यैव. १६. MHP पयांस्या°; thus Ao.II.162.13.

यिष्ग्रामः एषा छागैतच्चन्द्रमेषा[१] पिन्वमाना तस्यँ सूनुरेष धूरिषाह एष नर्यापि एतौ मिथुनावेतद्वास एष चतुःशराव एष सर्पिःशराव एषा बल्वजस्तुका प्रगृहाण हस्तम् इति ॥३४॥ तदस्य[२] शुक्रं ते शुक्रेण क्रीणामि इति हिरण्यं पाणावुद्दधाति । °चन्द्रं चन्द्रेणामृतममृतेन इति ॥३५॥ सम्यक्ते[३] गोः इत्यस्मादध्वर्युरादत्ते राजानम् ॥३६॥ अस्मे चन्द्राणि इति हिरण्यं मुष्णाति ॥३७॥ तपसस्तनूरसि इत्यजां ग्रीवास्वभिपद्यते ॥३८॥ प्रजापतेर्वर्णः इति तयाऽऽत्मानं प्रत्यावृत्तया[४] पराच्या सोमविक्रयिणमभिप्रणुदते । °तस्यास्ते = क्रीणामि इति ॥३९॥ अस्मे ते बन्धुः इति यजमानं प्रत्यावर्तयति ॥४०॥ मयि ते रायः श्रयन्ताम् इत्यात्मानम् ॥४१॥ अथैनामन्वर्जति ॥४२॥ [५]तां ततः[५] सोमविक्रयी लभते ॥४३॥ इदमहँ सर्पाणां दन्दशूकानां ग्रीवा उपग्रथ्नामि इति कृष्णामूर्णास्तुकामुपग्रथ्नाति । °योऽस्मा = द्विष्म इदमस्य ग्रीवा उपग्रथ्नामि इति ॥४४॥ अस्मे ज्योतिः इति शुक्लामूर्णास्तुकां[६] यजमानाय प्रयच्छति ॥४५॥ सोमविक्रयिणि तमः इति कृष्णायास्तमसा सोमविक्रयिण विध्यति ॥४६॥ अत्रैव चर्मन्नुपविशति राजानम् ॥४७॥ तमस्मा अध्वर्युराहरति राजानम् ॥४८॥ तं प्रतीक्षते मित्रो न एहि ॥४९॥ [ ८ ]

## [ राज्ञः पर्यावर्तनम् ]

मित्रो न एहि सुमित्रधा इति ॥१॥ इन्द्रस्योरु मा विश दक्षिणम् इत्येनं दक्षिण ऊरावासादयते । °उशन्नुशन्तँ स्योनः[७] स्योनम् इति ॥२॥ वयः सुपर्णा[८] उप सेदुरिन्द्रम् इत्येनं प्रत्यपोर्णुते । °प्रिय = बद्धान् इति ॥३॥ स्वान् भ्राज इति राजक्रयणाननुदिशते[९] । °अङ्घारे[९] = दभन्[१०] इति ॥४॥ उदायुषा स्वायुषा इति राजानमादायोत्तिष्ठति । °उदोषधीनां = [११]अनु इति[११] ॥५॥ दक्षिणे वेद्यन्ते प्रागावृत्तँ सोमवाहनँ स्थापयन्ति ॥६॥ उर्वन्तरिक्षमन्विहि इति सोमवाहनमच्छैति ॥७॥ अदित्याः सदोऽसि इति सोमवाहने कृष्णाजिनमास्तृणाति प्राचीनग्रीवमुत्तरलोम ॥८॥ अदित्याः सद आसीद इत्युपरि कृष्णाजिने राजानमासादयति ॥९॥ अस्तभ्नाद् द्यामृषभो

---

१. MHP द्राशैतच्च°. २. H तस्य. ३. H सम्यत्ते. Cf. BaudhŚS VI.15:172.7 and fn 2; VaikhŚS XII.19:149.12 and fn 9. ४. MHP प्रत्यावर्तया; thus Ao II.163.1. ५–५. P तान्ततः. ६. MH शुक्रामू°. ७. MP स्येनः. ८. MP सुवर्णा. ९–९. MHP °दिशतोऽघारे. १०. MH दमिन्; P दमिन्. ११–११. MH अन्विते.

अन्तरिक्षम् इत्यासन्नमुपतिष्ठते । °अमिमीत = म्राड् इति ॥१०॥ विश्वेत्तानि वरुण व्रतानि इति वाससा सोमवाहनं पर्यानह्यति । °वनेषु = द्रौ इति ॥११॥ उदु त्यं जातवेदसम् इति प्रस्थूणकायां कृष्णाजिनं प्रत्यानह्यत्यूर्ध्वग्रीवं बहिर्लोम[1] । °देवं = सूर्यम् इति ॥१२॥ उस्रावेतं[2] धूर्षाहौ इत्यनड्वाहावभिमन्त्रयते[3] । °अनश्रू = चौदनौ धुराधुर्यं पातम् इति ॥१३॥[4] वरुणस्य स्कम्भनमसि[4] इत्युपस्तम्भनमभिमृशति ॥१४॥ वरुणस्य स्कम्भधारण(-मसि इति) योक्त्रा[5] योक्त्रं पर्यस्य शम्यामवगूहति ॥१५॥ प्रत्यस्तो वरुणस्य पाशः इत्यनड्वाहमभिदधाति ॥१६॥ एवमेवोत्तरमनड्वाहं युनक्ति ॥१७॥ विष्टम्भे वा[6] द्रुपदे वा स्पन्द्यामनुबध्नाति ॥१८॥ अन्तरेषे सुब्रह्मण्यः पलाशशाखां धारयꣳस्तिष्ठति ॥१९॥ अनभ्यारोहन् दक्षिणा पर्यावर्तते ॥२०॥ सोमाय (राज्ञे क्रीताय प्रोह्यमाणायानुब्रूहि)[7] सुब्रह्मण्य सुब्रह्मण्यामाह्वय, मुहूर्तं तूपरम यजमानोऽन्वाह्वास्यति[8] इति ॥२१॥ [9]सुब्रह्मण्योꣳ सुब्रह्मण्योम् इति त्रिरुपांꣳश्वाह्वायति यजमानस्त्रिरुच्चैः [9]सुब्रह्मण्यः ॥२२॥ प्रच्यवस्व भुवस्पते इत्यध्वर्युर्यजमानं वाचयति । °विश्वान्यभि धामानि[10] = दधत् इति ॥२३॥ श्ये(-नो भूत्वा परा पत इति सोम-)वाहनꣳ समावर्तते पुरस्ताच्छालायै तच्छदिरन्वारभेते, न स्पन्द्याम् । °यजमानस्य = वसु इति ॥२४॥ अतिद्रुत्योल्मुकेनाग्नीत्[11] प्रतितिष्ठति, पुरोडाशीयैः प्रतिप्रस्थाता ॥२५॥ नमो मित्रस्य वरुणस्य चक्षसे इत्यध्वर्युर्यजमानं °वाचयति । °महो देवाय = शꣳसत इ(-ति ॥२६॥ वरुणस्य स्कम्भनमसि इत्युपस्तम्भनमभिमृ-)शति ॥२७॥ वरुणस्य स्कम्भसर्जनमसि इति शम्यामुद्वृहति[12] ॥२८॥ उन्मुक्तो वरुणस्य पाशः इत्युपचारणतोऽनड्वाहं मुञ्चति ॥२९॥ विमुक्तोऽन्योऽनड्वान् भवत्यविमुक्तोऽन्यः ॥३०॥ अथातिथ्यं गृह्णाति पत्न्यामन्वारब्धायां पत्न्यानुमतम् ॥३१॥ पत्न्यनुमन्यस्व इति ब्रूयात् ॥३२॥ यज्ञायुधानि सꣳसाद्यापः प्रणीय(-ातिथ्यं निर्वपति) देवस्य त्वा ॥३३॥ [ ९ ]

---

१. MP बर्हिलोमं; H बर्हिर्लोमं; H बहिर्देवलोम. २ P न्युस्रातं. ३. MHP मन्त्रयेते. ४–४. MHP वरुणस्तंभन° ५. MHP योक्त्वा. ६. P विष्टंभेव. ७. Cf. BaudhŚS VI.16:172.17–18; VaikhŚS XII.20 : 151.5; BhārŚS X.19.16. ८. MHP °नोऽन्वाहास्यति. ९–९. P. oms. १०. MH धान्यभि. ११. MHP °त्योन्मुके°. १२. P मुद्वृत्यु°; cf. BaudhŚS VI.16:174.17 : उद्गूहति; VaikhŚS XII.21:152.3 : प्रवृहति.

## [ आतिथ्येष्टिः ]

देवस्य त्वा सवितुः=हस्ताभ्यामग्नेरातिथ्यमसि विष्णवे त्वा जुष्टं निर्वपामि; सोमस्या=वे त्वा जुष्टं निर्वपामि, अतिथेरातिथ्यं=त्वा जुष्टं निर्वपामि; अग्नये त्वा=जुष्टं निर्वपामि; श्येनाय=वे त्वा जुष्टं निर्वपामि इति पञ्च मुष्टीन् व्रीहीणाम् ॥१॥ निरुप्ते प्राणग्रहाꣳश्च पृश्नीꣳश्च व्याचष्टे ॥२॥ तस्य हविष्कृता वाचं विसृज्य विमुच्येतरमनड्वाहꣳ राजानं प्रपादयति, सम्राजं पूर्वं यदि प्रवर्ग्यवान् ॥३॥ प्रत्युद्यच्छन्त आसन्द्यावुच्चैस्तराꣳ सम्राज्ञः (पूर्वस्य)[1] यदि प्रवर्ग्यवान् ॥४॥ या ते धामानि इति राजानं प्रपादयति। [2]हविषा=दुर्यान् इति ॥५॥ सम्राड् भवति ॥६॥ अथ राजानꣳ सादयति अदित्याः सदोऽस्यदित्याः सद आ सीद इति सह कृष्णाजिनेनासन्द्याम् ॥७॥ नि षसाद धृतव्रतः इति सन्नमुपतिष्ठते ॥८॥ वरुणसूक्तोपरि[2] वरुणोऽसि धृतव्रतः इत्युभे आसन्द्यौ वाससा पर्यानह्यति। [°]वारुणमसि वरुणाय त्वा इति ॥९॥ शंयोर्देवानाम् इत्यपरेण राजासन्दीमुदपात्रमुपनिनयति, सम्राज्ञः पूर्वस्य यदि प्रवर्ग्यवान्। [°]सख्यान्मा[3] देवानामपसश्छित्स्महि[4] इति ॥१०॥ अग्निं च राजानं च माऽन्तरा चरिष्ट इत्याह ॥११॥ अप्यत[5] एष आतिथ्यो वैष्णवो नवकपालः ॥१२॥ तस्य संभारा आश्वबालः[6] प्रस्तर ऐक्षवी तिरश्ची कार्ष्मर्यमयाः परिधयः शकलारणी ॥१३॥ घृतेऽस्मिन् स्तम्बयजुर्हरति[7]=श्च संमृड्ढ्याज्येनोदेहि इति ॥१४॥ एतत्कुर्वन्ति ॥१५॥ (स्रुवं च)[8] स्रुचश्च[9] संमृज्याज्यानि गृह्णीते सर्वाणि चतुर्गृहीतानि ॥१६॥ इध्माबर्हिः प्रोक्षति[10]=परिधीन् परिदधाति कार्ष्मर्यमयान् ॥१७॥ समिधावादधाति ॥१८॥ परिधिषु वाचयित्वाऽग्निं युनक्ति ॥१९॥ आगत्यैक्षवी तिरश्ची सादयति ॥२०॥ तिरश्च्योराश्वबालं प्रस्तरम् ॥२१॥ प्रस्तरे जुहूम् ॥२२॥ बर्हिषीतरे ॥२३॥ समासन्नेऽपानग्रहाꣳश्च पृश्नीꣳश्च व्याचष्टे ॥२४॥ ध्रुवा असदन्; यन्म अग्ने इति समभिमृश्य संभाराꣳश्चतुर्होतारञ्च व्याचष्टे

---

१. MHP. om. २. MP वरुणसूत्रो°; H वरुणस्य सूत्रो°. ३. H सव्यान्मा. ४. H °सच्छि°; MP °नामुपसश्चिथ्मही [ M °नामप० ]. ५. MHP अव्यत. ६. MHP बालं. ७. MHP abr; see supra VI.1.17–21. ८. MHP om. ९. MHP om च. १०. MHP abr though they do not give any sign thereof; see supra VI.1.25–29.

॥२५॥ निर्मन्थ्येन चरति ॥२६॥ अग्नये समिध्यमानायानुवाच आह ॥२७॥ सर्वंमिध्ममभ्याधाति ॥२८॥ न समिधमतिशिनष्टि ॥२९॥ अनूक्तासु सामिधेनीषु स्रुवेणाघारमाघार्याह अग्नीदग्नि त्रिस्त्रिः[१] संमृड्ढि इति ॥३०॥ स्रुग्भ्यामुत्तरम् ॥३१॥ असꣳस्पर्शयन्नत्याक्रम्य [२]ध्रुवाꣳ समज्य सादयित्वा प्रवरं प्रवृणीते ॥३२॥ सीदति होता ॥३३॥ प्रसूतः स्रुचावादत्ते ॥३४॥ प्रयाजान् यजति ॥३५॥ प्रयाजानिष्ट्वाऽत्याक्रम्य[२] ध्रुवामभिघारयति हविः ॥३६॥ नोपभृतꣳ रिक्ता हि सा भवति ॥३७॥ आज्यभागौ यजति ॥३८॥ विष्णुꣳ हविषो यजति ॥३९॥ स्विष्टकृतं यजति[३] ॥४०॥ अत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा प्राशित्रमवद्यति ॥४१॥ अप उपस्पृश्येडामवद्यति ॥४२॥ उपहूतायामिडायामग्नीध आदधाति ॥४३॥ प्राश्नन्ति ॥४४॥ मार्जयन्ते ॥४५॥ परिहरन्ति ब्रह्मणे ॥४६॥ प्राशिते प्राशित्रेऽत्रागत्य[४] सन्तति(-मनु)[५] चतुर्होतुराहुतिं जुहोति ॥४७॥ ध्रुवामाप्यायꣳ चमसे व्रतप्रदाने[६] आ पतये त्वा गृह्णामि इति हिरण्यमन्तर्धाय पञ्चकृत्वस्तानूनप्त्र[७] वि गृह्णाति परि पतये त्वा ॥४८॥ [१०]

परि पतये त्वा गृह्णामि; तनूनप्त्रे त्वा गृह्णामि=ष्ठाय त्वा गृह्णामि इति ॥१॥ तत् प्रजापतौ त्वा मनसि जुहोमि इति त्रिरवजिघ्रति यजमानः ॥२॥ तानूनप्त्रꣳ (समवमृश-)न्ते ब्रह्मा यजमानो होताऽध्वर्युः प्रतिप्रस्थाताऽग्नीत् अनाधृष्टमस्य=शस्तेऽन्यम् इति ॥३॥ अथ यजमानमेवानुवाचयति अनु मे=तपस्पतिः इति ॥४॥ अनेन इत्याह व्रतप्रदानचमसं प्रयच्छन् ॥५॥ एवमेवापराह्णे तद्दत्त्वा व्रतं प्रयच्छासि इति तेन स तथा प्रयच्छति ॥६॥ कतरत्पूर्वं क(-रिष्यामः)[८] अवान्तरदीक्षामुपनेष्यामः इति विप्रश्न एवैषः ॥७॥ अवान्तरदीक्षा एव पूर्वा ॥८॥ अग्नेः समिदसि[९] इति समिधमादत्ते ॥९॥ अग्ने व्रतपते इति मार्जयित्वा समिधमादधाति । 'त्वं व्रतानां व्रतपतिरसि या मम तनूरेषा=व्रतानि[१०] सह तन्वा[११] स्वाहा इति ॥१०॥ संतरां मेखलाꣳ समायच्छ(-स्व इत्येनꣳ सꣳशास्ति । 'संतरां मुष्टी कुरुष्व

१. MHP त्रिः once. २-२. H oms ३. MHP यजे°. ४. MHP °नामत्य. ५. MHP om. ६. MHP व्रतदाने. ७. H °नत्प्रं. ८. For text under bracket see Ao.II.165.18–19. ९. MP समदसि; H सदसि. १०. MP घृतानि. ११. MHP तन्व.

तप्तव्रत एधि मदन्तीमिर्मार्जयस्वोत्(-)[१]पूर्वं व्रतनꣳ (सृज इति)[२] ॥११॥ या ते अग्ने रुद्रिया तनू इति व्रतयति । °तया नः पाहि तस्यास्ते स्वाहा इति ॥१२॥ एतत्समारूढा एवात्राग्नयः ॥१३॥ मदन्तीरुपस्पृश्य राजानमाप्याययन्ति ॥१४॥ [३]ब्रह्मा यजमानस्तौ दक्षिणेनेतः, होताऽध्वर्युः प्रतिप्रस्थाताऽग्नीत् त उत्तरेण ॥१५॥ विस्रस्योपाꣳशुग्रहणमत्रधाय (अꣳशुरꣳशुस्ते देव सोमाऽऽप्यायताम्[३] इति राजानमाप्याययन्ति। °इन्द्रायैकध(-नविद) आ तुभ्य=मशीय इति[४] ॥१६॥ स्वस्त्युद्दचम् इति हस्तान्परीक्ष्यायन्ति ॥१७॥ आगत्य मदन्तीरुपस्पृश्य वाजवतोभ्याꣳ स्रुचौ व्यूहति ॥१८॥ परिधीननक्ति ॥१९॥ नैषामाश्रावयति ॥२०॥ प्रस्तरꣳ समुल्लुम्पति ॥२१॥ तं तीर्तिष्वनक्ति ॥२२॥ [५]तस्मिन् एष्टा[५] रायः इति दक्षिणायाꣳ श्रोण्यां निह्नुवते । °प्रेषे[६] भगाय=नमः पृथिव्यै इति ॥२३॥ त्वष्टीमती ते सपेय इति तिरोत्रासस [७]वेद्देन नेष्टा[७] पत्नीं निह्नावयति । °सुरेता रेतो=मा मया रायस्पोषः इति ॥२४॥ अग्नीन्मदन्त्यापा३ इति ॥२५॥ मदन्ति इति स आह ॥२६॥ तामिराद्रव इति ॥२७॥ परिधीनादत्ते ॥२८॥ तानतिवाल्याग्नीधे[८] प्रयच्छति ॥२९॥ तूष्णोमन्तर्वेदि प्रणीता निनीय तृणग्लाभं[९] प्रस्तरायोपमन्नह्य निदधाति ॥३०॥ अग्नीन्मदन्तीभिर्मार्जयते[१०] ॥३१॥ सन्तिष्ठत आतिथ्यम् ॥३२॥ [ ११ ] [ इति तृतीयोऽनुवाकः ]

## [ प्रवर्ग्योपसद् ]

अत्रेवाखरौ व्यूहितवा आह यदि प्रवर्ग्यवान् ॥१॥ प्रवर्ग्येण प्रचर्यं संप्रेष्यति हविरधिश्रय मदन्तीरधिश्रय इति ॥२॥ अथ यद्यप्रवर्ग्यं एवमेव संप्रेष्यति ॥३॥ विलीन आज्ये स्तम्बयजुर्हरति ॥४॥ वेदिं परिगृह्णाति ॥५॥ करणं जपति ॥६॥ प्रसूत उत्तरं परिग्राहं परिगृह्णाति ॥७॥ योयुपित्वाऽवस्कभ्य संप्रेष्यति मदन्तीरासादयेध्माबर्हिरुपसादय स्रुवं (च)[११] स्रुचौ (च)[११] संमृड्ढि हविषोदेहि इति ॥८॥ एतत्कुर्वन्ति ॥९॥ स्रुवतृतीये स्रुचौ संमृज्याज्यानि गृह्णीते ॥१०॥ अष्टौगृहीतं जुह्वां गृह्णीते ॥११॥ चतुर्गृहीतमुपभृति ॥१२॥ ध्रुवायै काल आज्यस्थालीमुपोद्यच्छति[१२] ॥१३॥

१. Cf BaudhŚS VI.19:178.14–16. २. MHP om. ३–३. P oms. ४. MHP om. ५–५. P तस्मिन्निष्टा. ६. MH. om. ७–७. MHP वेदेनेष्टा. ८. MHP °तिपाल्या°. ९. MHP घृणग्ला°. १०. MH °यन्ते. ११. MHP om. १२. P °मुपोद्यति.

इध्माबर्हिः प्रोक्षति ॥१४॥ वेदिं[1] = परिदधात्येतानेव[2] कार्ष्मर्यमयान् ॥१५॥ समिधात्रादधाति ॥१६॥ परिधिषु वाचमित्वाऽग्निं युनक्ति ॥१७॥ आगत्यैक्षवी तिरश्ची सादयति ॥१८॥ तिरश्च्योराश्ववालं प्रस्तरम् ॥१९॥ प्रस्तरे जुहूम् ॥२०॥ बर्हिषोत्तरे ॥२१॥ समासाद्य ध्रु वा असदन्; यन्मे अग्ने इति समभिमृश्य षड्ढोतारं व्याचष्टे ॥२२॥ अग्नये समिध्यमानायानुवाच आह ॥२३॥ तिस्रो वा त्रिंश अन्वाह[3] नव वा पराचीः ॥२४॥ ता अध्वर्यु रिध्मेन परीप्सति न समिधमतिशिनष्टि ॥२५॥ अनूक्तासु सामिधेनीषु स्रु वेणाघारमाघार्याह अग्नीदग्निं सकृत्सकृत् संमृड्ढि इति ॥२६॥ उत्थाय प्रवरं प्रवृणीते ॥२७॥ ओ श्रावय इत्याह ॥२८॥ सीद होतः इत्येष एवात्र प्रवरः ॥२९॥ नार्षेयं वृणीते ॥३०॥ सीदति होता ॥३१॥ प्रसूतः स्रु चावादत्ते ॥३२॥ अत्याक्रामन्नाह अग्नयेऽनुब्रू हि इति ॥३३॥ ओ श्रावय इत्याह ॥३४॥ अग्निं यज इति ॥३५॥ वषट्कृतेऽर्धमष्टौगृहीतस्य जुहोति ॥३६॥ सोमायानुब्रू हि इति ॥३७॥ ओ श्रावय इत्याह ॥३८॥ सोमं यज इति ॥३९॥ वषट्कृते सर्वमेतज्जुहोति ॥४०॥ विष्णवेऽनुब्रू हि इत्याह समानयमानः ॥४१॥ ओ श्रावय इत्याह ॥४२॥ विष्णुं यज इति ॥४३॥ वषट्कृते सर्वमेवैतज्जुहोति ॥४४॥ अत्याक्रम्य यथायतनं स्रुचौ सादयित्वा मदन्तीरुपस्पृश्य राजानमाप्याययन्ति ॥४५॥ ब्रह्मा यजमानस्तौ दक्षिणेनेतो[4] = हस्तान्परीक्ष्यायन्ति ॥४६॥ आगत्य मदन्तीरुपस्पृश्य स्रुचौ व्यूहति[5] ॥४७॥ इदमहं यजमानोऽग्निना सोमेन विष्णुना देवताभिरवर्तिं पाप्मानं भ्रातृव्यं मृत्युमपोहामि इति प्रतीचीमुपभृतमपोहति ॥४८॥ परिधीननक्ति ॥४९॥ नैषामा[6] श्रावयति ॥५०॥ प्रस्तरं समुल्लुम्पति ॥५१॥ तं तीर्तिष्वनक्ति ॥५२॥ तस्मिन् एष्टा रायः इति दक्षिणायां श्रोण्यां निह्नुवते । [7]प्रेषे[7] भगाय पृथिव्यै इति ॥५३॥ त्वष्टीमती ते सपेय इति तिरोवाससं [8]वेदेन नेष्टा[8] पत्नीं निह्नावयति । [9]सुरेता = रायस्पोषः इति ॥५४॥ सव्ये हस्ते प्रस्तरं समस्य या ते अग्नेऽयाशया तनूः इति स्रु वेणाज्यस्थाल्या अध्युपसदमुपहन्ति । [9]वर्षिष्ठा गह्वरेष्ठा इति ॥५५॥ उग्रं वचो [9]अपावधीम् इत्युभे[9] परिधौ स्पर्शयति ॥५६॥ तया नः पाहि

---

१. MHP abr; see supra VI.1.25–29. २. P °तामेव. ३. MHP त्रिशस्तान्वाह. ४. MHP abr; see supra VI.11.15–17; H °नैतौ; P °नेतै. ५. MHP व्यूहत. ६. MHP नौषा°. ७. MHP प्रैष. ८–८. MHP वेदेनेष्टा. ९–९. MHP वधीमिध्यमे.

तस्यास्ते स्वाहा इति जुहोति ॥५७॥ त्वेषं वचो अपावधीम् इत्यधिक्षिपति[१]। [२]सजूरग्निः पृथिव्यै (सजूरृ-)तस्य पथ्यया या कशेव वितस्थिषे तिग्मेव यवया वधम् ॥ अग्निस्तेऽनीकꣳ सोमशल्यं विष्णुस्तेजनꣳ रुद्रावसृष्टासि युवा नाम नमस्ते अस्तु मा मा हिꣳसीः साऽस्मदवसृष्टेतरेण चेतरौ च योऽस्मान द्वेष्टि यं च वयं द्विष्मस्तमृच्छ इति ॥५८॥ अग्नीन्मदन्त्यापा३ इति ॥५९॥ मदन्ति इति स आह ॥६०॥ तामिराद्रव इति ॥६१॥ परिधीन(-ग्दत्ते ॥६२॥ तानतिवाल्याग्नीधे प्रयच्छति ॥६३॥ तूष्णीमन्तर्वेदि प्रणीता निनीय तृणग्लाभं प्रस्त-)[२]रायोपसन्नह्य निदधाति ॥६४॥ अग्नीन्मदन्तीभिर्मार्जयन्ते[३] ॥६५॥ सन्तिष्ठत एषोपसद् ॥६६॥ एतयैवापराह्णे प्रचरति ॥६७॥ आज्यान्येव[४] विपर्ययन्ति[५] ॥६८॥ [ १२ ]

## [ महावेदिविमानम् ]

आज्यान्येव विपर्ययन्ति ॥१॥ चतुर्गृहीतं जुह्वां गृह्णीतेऽष्टौगृहीतमुप-भृति ॥२॥ तया प्रचर्य वसन्त्येताꣳ रात्रिम् ॥३॥ प्राचीं दिशꣳ स्पर्शयन्ते ॥४॥ (औदुम्बर्यै) काले शङ्कुं निहन्ति ॥५॥ प्रातरादित्येन वाचं विसृज्य रजाशयया प्रचरति ॥६॥ तस्या आहुत्यै प्रभृतिः या ते अग्ने रजाशया तनूः इति, वर्षिष्ठा गह्वरेष्ठा इति प्रमिध्यति ॥७॥ सजूर्वायुरन्तरिक्षेण इत्यनु-मन्त्रस्य प्रभृतिः सजूरृतस्य[६] पथ्यया इति प्रसिध्यति ॥८॥ तया प्रचर्य स्पन्द्यां च शङ्कुꣳश्च (निहन्ति ॥९॥ आहवनीयादेवाग्रे षट् प्राचः प्रक्रमान् प्रक्रामति ॥१०॥ तच्छङ्कुं निहन्ति ॥११॥ स शालामुखीयः शङ्कुः ॥१२॥ शालामुखीयाच्छङ्कोः) पञ्च प्राचः[७] प्रक्रमान् प्रक्रामति ॥१३॥ तच्छङ्कुं निहन्ति ॥१४॥ स वेद्यन्तः ॥१५॥ पञ्चदश दक्षिणा ॥१६॥ तच्छङ्कुं निहन्ति ॥१७॥ प्रथमनिहताच्छङ्कोः[८] षट्त्रिꣳशत् प्राचः प्रक्रपान्[९] प्रक्रामति ॥१८॥ तच्छङ्कुं निहन्ति ॥१९॥ स यूपस्य कालः ॥२०॥ द्वादश दक्षिणा ॥२१॥ तच्छङ्कुं निहन्ति ॥२२॥ द्वादशोदङ् ॥२३॥ तच्छङ्कुं निहन्ति ॥२४॥ [१०]उत्तरार्धाच्छङ्कोस्त्रीन् प्रतीचः (प्रक्रमान् प्र-)-क्रामति ॥२५॥ तच्छङ्कुं निहन्ति ॥२६॥ स[१०] चात्वालस्य कालः ॥२७॥

१. MP इत्यपक्षि°. २. For text under bracket see supra VI.11.28--30. ३ MHP °यन्ते. ४. MHP आज्यानेव. ५. MHP °यति. ६. MP सजूरुत°. ७. MHP प्राकरः. ८. H °विहिता°. ९. P प्रक्रामन्. १०–१०. P oms; M °त्तराघ्या°.

त्रीनुपरवान्[१] ॥२८॥ तच्छङ्कुं निहन्ति ॥२९॥ स उत्करस्य कालः ॥३०॥ षडुपरवान्[२] ॥३१॥ तच्छङ्कुं निहन्ति ॥३२॥ तदाग्नीध्रस्य मध्यम् ॥३३॥ तत्तृतीयम् ॥३४॥ वेद्यै यूपकालाच्छङ्कोः[३] सर्वतः प्रत्यग्दशपदामुत्तरवेदिं मिमीते ॥३५॥ उत्तरवेद्यै पञ्च प्रतीचः प्रक्रमान् प्रक्रामति ॥३६॥ तच्छङ्कुं निहन्ति ॥३७॥ तद्धविर्धानयोर्मध्यम् ॥३८॥ एकं दक्षिणा ॥३९॥ तच्छङ्कुं निहन्ति ॥४०॥ स उपरवकालः[४] ॥४१॥ प्रथमनिहताच्छङ्कोः पञ्च प्राचः प्रक्रमान् प्रक्रामति ॥४२॥ तच्छङ्कुं निहन्ति ॥४३॥ तत्सदसो मध्यम् ॥४४॥ एकं दक्षिणा ॥४५॥ तच्छङ्कुं निहन्ति ॥४६॥ (स)[५] औदुम्बर्यै कालः ॥४७। [६]उपरवकालात्स्तम्बयजुर्हरति ॥४८॥ वेदिं परिगृह्णाति ॥४९॥ करणं जपति ॥५०॥ इमां नराः कृणुत वेदिमेत्य इति समुद्रन्ति । [७]वर्ष्मन्[७] दिवो नाभा पृथिव्या यथायं यजमानो न रिष्यात्[८] । इमां कृणुत वसुमतीँ रुद्रवतीमादित्यवतीँ सवितृवतीं बृहस्पतिवतीं विश्वदेव्यावतीम् । वेदिकाराः कृणुत कृणुत इति ॥५१॥ कृण्वन्ति वेदिम् ॥५२॥ स्फ्यमुदपात्रम् इति संप्रेष्यति । [९]शम्यामाहरेहि[९] यजमानाग्नीदुत्तरवेद्यामुपसीद इति ॥५३॥ चात्वालकालँ स्फ्येनोद्धत्य[१०]=अद्भिरेवोपरिष्टात् ॥५४॥ शुल्बिण्या प्रावृत्य [११]रजाशयया प्रचरति[११] ॥५५॥ वपन्ति ॥५६॥ प्रातरादित्येन[१२] वाचं विसृज्य हराशयया प्रचरति ॥५७॥ तस्या आहुत्यै प्रभृतिः या ते अग्ने हराशया तनूः इति वर्षिष्ठा[१३] गह्वरेष्ठा इति प्रसिध्यति ॥५८॥[१४] सजूः सूर्यो दिवा इत्यनुमन्त्रस्य प्रभृतिः सजूरब्दं तस्य पथ्यया इति प्रसिध्यति[१४] ॥५९॥ तया प्रचर्य निष्क्रामन्नाह अर्धव्रतं प्रयच्छत इति ॥६०॥ एतदेव विपर्ययोत्तमयोपसदा प्रचरति ॥६१॥ आवृता प्रवर्ग्यमुद्वासयति ॥६२॥ सौरी[१५]ँ हुत्वेध्ममादीपयन्ति, उपयमनीरुपकल्पयन्ति यदि प्रवर्ग्यवान् ॥६३॥ अथ यद्यप्रवर्ग्योऽत्रेवेध्ममादीपयन्त्युपयमनीरुपकल्पयन्ति ॥६४॥ उत्तरवेद्यै संभाराः ॥६५॥ [ १३ ]

---

१. MHP त्रीनहरां° २. MHP षडपरां°. ३. MHP °काल्याच्छ°. ४ Ao.II.156.12:12 : उपरवाणां कालः. ५. MHP om. ६. MHP °कालस्तम्ब°; cf. BaudhŚS VI.22:182.13. ७. MHP वर्षं. ८. Cf. TB III.7.7.१३ : रिष्येद्. ९. P शंयामा°. १०. MHP abr; see supra V.1.32–55. ११–११. MHP राजशयया प्रचर्यंति. १२. MHP प्राकारादि° १३. MHP om. १४–१४. H oms; MP सूर्यो मिवेत्योऽनु°; P सजूः सूर्यो =प्रभृति twice. १५. MH सौरी.

## [ उत्तरवेदिसंभाराः ]

उत्तरवेद्यै संभारा—गुल्गुलुः[१] = पञ्चगृहीतमाज्यम् ॥१॥ पदं[२] त्रेधा करोति ॥२॥ [३]अत्रैवाग्नये तृतीयमुपनिवपति ॥३[३]॥ उपयमनीषु तृतीयम् ॥४॥ क्षेपाञ्जनाय[४] तृतीयं निदधाति ॥५॥ आदीप्त इध्मे चतुर्गृहीतं गृह्णीते ॥६॥ तज्जुहोति अन्वग्निरुषसामग्रमख्यद् इत्यनुख्यातिम् । °अन्वहानि= आ ततान स्वाहा इति ॥७॥ हुत्वा पञ्चगृहीतं गृह्णीते ॥८॥ उद्यच्छन्त इध्म[५] = यत्प्रोक्षणीनामुच्छिष्यते तद्दक्षिणतो महावेद्यै स्फ्यस्य वर्त्मन्नुप[६] निनयति ॥९॥ यं द्वेष्टि यजमानः[७] = यज्ञपतिं तिर स्वाहा इति ॥१०॥ स्फ्यमाददान आह व्युत्क्रामत मावोभिः परिगृहीषं ब्रह्मन्नुत्तरं परिग्राहं परि- ग्रहीष्यामि इति ॥११॥ दक्षिणतो महावेद्यै ब्रह्मोपविशति ॥१२॥ प्रसूत उत्तरं परिग्राहं परिगृह्णाति ॥१३॥ योयुपित्वाऽनवस्कभ्य पूर्वेण शालां तिष्ठन् संप्रेष्यति प्रोक्षणीरासादयेध्मार्बर्हिरुपसादय इति ॥१४॥ आसाद- यत्यस्मै प्रोक्षणीः ॥१५॥ उपसादयन्तीध्मार्बर्हिः ॥१६॥ इध्मार्बर्हिः प्रोक्षति ॥१७॥ वेदिं प्रोक्षति ॥१८॥ आसन्नं प्रोक्षति ॥१९॥ तृणकलापीं[८] प्रोक्षति ॥२०॥ यत्प्रोक्षणीनामुच्छिष्यते तत्प्रतिप्रस्थात्रे प्रयच्छन्नाह अनेनैधान् [९]प्रोक्ष इति[९] ॥२१॥ तेन स एधान् प्रोक्षति ॥२२॥ आदत्त एतꣳ शाकलमिध्मम् ॥२३॥ तमुत्तरत आहवनीयस्य सादयति ॥२४॥ अग्नी- षोमीयस्यैष पशोरिध्मा[१०] भवति ॥२५॥ तृणकलापीमेतामादायोत्तरवेद्यै पृष्ठ्याꣳ[११] स्तृणन्नेति ॥२६॥ हविर्धाने एवातः संवर्तयति ॥२७॥ [१४]

## [ हविर्धानसंवर्तनम् ]

हविर्धाने एवातः संवर्तयति ॥१॥ दक्षिणत एव दक्षिणमुत्तरत उत्तरम् ॥२॥ न पृष्ठ्यामप्यतिवर्तयन्ति[१२] ॥३॥ ते पुरस्ताच्छालायै सङ्काशिने स्थापयन्ति ॥४॥ बद्धमवस्यन्ति ॥५॥ प्राणे निचति (?········) च्छदिरुद्दधति[१३] ॥६॥ परिश्रयन्ति ॥७॥ एवꣳ संक्लृप्तेऽध्वर्युः प्रपद्य

---

१. MHP abr; see supra V.2.1. २. MHP पद. ३. P oms अत्रैव. ४. MP क्षोपा°. ५. MHP abr; see supra V.2.7–14. ६. MP वर्मन्नु°. ७. MHP abr; see supra V.2.15–31. ८. MHP °कपालीं. ९–९. MHP प्रोक्षति. १०. MHP give the sign of broken text between पशोरि° and °ध्मा. Cf Ao II.146.18. ११. MHP पृष्ठाग्°. १२. H °यति. १३. P °धाति.

शालां चतुर्गृहीतं गृह्णीते ॥८॥ तज्जुहोति युञ्जते मन उत युञ्जते धियः इत्याहवनीये । °विप्रा विप्रस्य=ष्टुतिः स्वाहा इति ॥९॥ प्रोक्षणीरादाय[1] निष्क्रामति ॥१०॥ वैष्णवी विष्ण(-वे शुन्धेथाम् इति प्रोक्षति ॥११॥ सुवाग्देव दुर्या आ वद इति वाचयति । °देवश्रुतौ दे-)वेष्वा घोषेथाम् इति ॥१२॥ स्रुवꣳ स्रुचम् इति संप्रेष्यति । °र्बर्हिराज्यमुपाꣳशुग्रहणमाहरेहि यजमानानयन्तु पत्नीम् इति ॥१३॥ आनयति नेष्टा पत्नीं तां दक्षिणया द्वारोपनिहृत्य[2] दक्षिणेनान्वाहार्यपचनं पदं बिभ्रतीम् ॥१४॥ तस्यामागतायामध्वर्युश्चतुर्गृहीतं[3] (गृह्णीते)[4] ॥१५॥ तज्जुहोति (इदं विष्णुर्वि चक्रमे इति ह-)विर्धानस्योत्तरस्यां वर्तन्याꣳ हिरण्यमुपास्य । [5]त्रेधा=सुरे स्वाहा इति ॥१६॥ पदे सꣳस्रावमवनयति ॥१७॥ आ नो वीरो जायतां कर्मण्यः इति प्राचा हस्तेन पदेनाक्षं पत्न्युपानक्ति । °यꣳ सर्वे=सद्वशी इति ॥१८॥ तूष्णीं दक्षिणत उपानक्ति ॥१९ अत्रैव स्रुवꣳ स्रुचं बर्हिराज्य-मुपाꣳशुग्रहणम् इत्यूहति ॥२०॥ (प्रति-)[6]प्रस्थात्र प्रतिपथं नेष्ट(-र पत्नी-मान-)यति ॥२१॥ तां दक्षिणया द्वारा प्रपद्योत्तरया निष्क्रामति ॥२२॥ तस्यामागतायां प्रतिप्रस्थाता चतुर्गृहीतं गृह्णीते ॥२३॥ तज्जुहोति इरावती धेनुमती हि[1] भूतम् इत्युत्तरस्य हविर्धानस्य दक्षिणायां वर्तन्याꣳ[7] हिरण्यमुपास्य । °सूयवसिनी[8] मनवे यश=मयूखैः[9] स्वाहा इति ॥२४॥ पदे सꣳस्रावमवनयति ॥२५॥ आ नो वीरो जायतां कर्मण्यः इति प्राचा हस्तेन पदेनाक्षं पत्न्युपानक्ति । °यꣳ सर्वेऽनुजीवाम यो बहूनामसद्वशी इति ॥२६॥ तूष्णीमुत्तरत उपानक्ति ॥२७॥ प्रतिपरैति पत्नी ॥२८॥ हविर्धा-नाभ्यां प्रोह्यमाणाभ्यामनुब्रूहि इत्याह ॥२९॥ सुवाग्देव[10] दुर्या आ वद इति वाचयति यदि चात्रैवोत्सृजति, यदि च न इषमा वदोर्जमा वद इति ॥३०॥ प्राची प्रेतमध्वरं कल्पयन्तीः इत्यनुमन्त्रयते । °ऊर्ध्वं यज्ञं नयतं[11] मा जीह्वरतम् इति ॥३१॥ अत्र रमेथां[12] वर्ष्मन् पृथिव्याः इति पुरस्तात् परीत्य[13] काले नभ्यस्थे [14]वा रमयतः[14] ॥३२॥ [15]दिवो वा[15] विष्णवुत वा पृथिव्याः

---

१. P °रासादय. २. M द्वारोऽवनि°; HP द्वारोवनि°. ३. MHP गृहीते. ४. MHP om. ५. MHP om प्रति. ६. MHP ह. ७. MH वर्तिन्यां. ८. MH °वसनी. ९. MHP मयूखे. १०. MHP सुवा देवा. ११. MHP नयतां. १२. MHP रमतां. १३. H परीत्यं. १४–१४. MHP वारयतो. १५-१५. MHP om.

इत्याशीर्पदयर्चा दक्षिणस्य हविर्धानस्याध्वर्युर्मेथीं निहन्ति । °महो वा विष्णवु=सव्यात् इति ॥३३॥ विष्णोर्नु कं वीर्याणि प्र वोचम् इत्युत्तरस्य प्रतिप्रस्थाता । °यः पार्थिवानि=गायः इति ॥३४॥ विष्णो रराटमसि इति रराटीयं प्रत्यभिमृशति ॥३५॥ विष्णोः पृष्ठमसि इति मध्यमं छदिः ॥३६॥ विष्णोः श्नप्त्रे[1] स्थः इत्यभितश्छदिषी ॥३७॥ विष्णोः स्यूरसि इति दक्षिणां द्वारेयीमध्वर्युः सीव्यत्युत्तरां प्रतिप्रस्थाता ॥३८॥ विष्णोर्ध्रुवमसि इत्यरत्निमात्रे स्युत्वा ग्रन्थी[2] विस्रꣳसयतः ॥३९॥ ग्रन्थीकुर्वन्तौ सीव्यतः ॥४०॥ वैष्णवमसि विष्णवे त्वा इति क्लृप्तꣳ हविर्धानमभिमृशतः ॥४१॥ देवस्य त्वा ॥४२॥ [ १५ ] [इति चतुर्थोऽनुवाकः ]

[ औदुम्बर्यवटपरिलेखनम् ]

देवस्य त्वा सवितुः प्रसवे इत्यभ्रिमादत्ते । °अश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददेऽभ्रिरसि नारिरसि (इति)[3] ॥१॥ परिलिखितꣳ रक्षः=तयः इत्यौदुम्बर्या अवटं परिलिखति । °इदमहꣳ[4] रक्ष=अपिक्रन्तामि इति ॥२॥ प्रस्तोतः इत्याह एतं खन इति ॥३॥ देवस्य त्वा सवितुः प्रववे इत्येवाभ्रिमादत्ते । °अश्विनोर्बाहु[5]=ददेऽभ्रिरसि नारिरसि इति ॥४॥ परिलिखितꣳ रक्षः=तयः इत्युपरवकालं परिलिखति । °इदमहं[6]=कृन्तामि इति ॥५॥ अथैनानवान्तरं परिलिखत्येकैकम् ॥६॥ रक्षोहणो वलगहनः परिलिखामि [7]वैष्णवान् इति[7] दक्षिणतः पूर्वार्ध्यम् ॥७॥ रक्षहणो=खामि वैष्णवान् इति यस्तस्मादपरस्तम् ॥८॥ [8]रक्षोहणो=लिखामि वैष्णवान् इति यस्तस्मादुत्तरतस्तम्[8] ॥९॥ रक्षोहणो=लिखामि वैष्णवान् इति सर्वोत्तरार्ध्यम् ॥१०॥ उन्नेतः[9] इत्याह । एतान् खनासंभिन्दन् बाहुमात्रे सन्तृन्ताद्[10] इति ॥११॥ देवस्य त्वा सवितुः प्रसवे इत्येवाभ्रिमादत्ते । °अश्विनो=नारिरसि इति ॥१२॥ परिलिखितꣳ रक्षः =रातयः इति यूपावटं परिलिखति । °इदमहꣳ रक्षसो=क्रृन्तामि इति ॥१३॥ सुब्रह्मण्य इत्याह । एत खनोपरवसंमितं[11] खातमौदुम्बर्या अवटम् अभ्येनमुपनिहितामौदुम्बरीम्[12] (इति)[13] ॥१४॥ यवमतीः

---

१. MHP श्नप्त्र. २. HP ग्रन्थि. ३. MHP om. ४. P °महः ५. M oms बाहु°. ६. M °महः. ७-७. वैष्णवीहीति. ८--८. H oms. ९. MH °न्नेतरम्. १०. Thus MHP, Ao.II.156.21; cf. VaikhŚS XIV.7 : 179.11 : संतृण्णान्; BaudhŚS VI.26:188.2; BhārŚS XII.12.2: सन्तृण्णाः. ११. MHP उपरसं°. १२. MP °भ्येत उप°; H °भ्येन उप°. १३. MHP om.

प्रोक्षणीः इति संप्रेष्यति[१] । °बर्हिराज्यमुपांशुग्रहणमाहरेहि यजमान इति ॥१५॥ दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वा इत्यौदुम्बरीं प्रोक्षति ॥१६॥ शुन्धतां लोकः पितृषदनः इत्यौदुम्बर्या अवटेऽपोऽवनयति[२] ॥१७॥ यवोऽसि यवयास्मद् द्वेषः इति यवान् प्रस्कन्दयति । °यवयारातीः इति ॥१८॥ पितॄणांᳫ सदनमसि इति विषूचीनाग्रं बर्हि(-र्हिस्तं व्यतिषज्यावस्तृणाति ॥१९॥ पितृभ्यः)[३] स्वाहा इति हिरण्यमन्तर्धायाज्येनाभिजुहोति ॥२०॥ उद्गातः इत्याह कुरुष्व यत्ते कार्यम् इति ॥२१॥ कुरुत उद्गाता यदस्य कार्यं भवत्यौदुम्बर्याम् ॥२२॥ उद्दिवᳫ स्तभान इत्येनामुच्छ्रयति । °आऽन्तरिक्षं पृण पृथिवीं दृᳫह इति ॥२३॥ द्युतानस्त्वा मारुतो मिनोतु इत्येनां मिनोति । °मित्रावरुणयोर्ध्रुवेण धर्मणा[४] इति ॥२४॥ (ब्रह्मवनि त्वा क्षत्रवनिम् इति प्रदक्षिणं)[५] पुरीषेण[६] पर्यूहति । °सुप्रजावनिᳫ रायस्पोषवनिं पर्यूहामि इति ॥२५॥ ब्रह्म दृᳫह क्षत्रं दृᳫह इति दीक्षितदण्डेन दृᳫहति[७] । °प्रजां दृᳫह रयिं दृᳫह रायस्पोषं दृᳫह सजातान् यजमानाय दृᳫह इति ॥२६॥ उन्नम्भय पृथिवीम् इत्युदपात्रमुपनिनयति । °भिन्द्धीदं दिव्यं = दृतिम् इति।।२७॥ इषे त्वा इत्यस्यै त्रि(-शाखे हिरण्यं निदधाति)[८] ॥२८॥ घृतेन द्यावापृथिवी ॥२९॥ [१६]

## [ छदिः कर्म ]

घृतेन द्यावापृथिवी आपृणेथाम् इत्यौदुम्बर्यां जुहोति ॥१॥ आन्तमन्ववस्रावयति ॥२॥ ऐन्द्रमसि इति दक्षिणं छदिरधि निदधाति ॥३॥ विश्वजनस्य छाया इत्युत्तरम् ॥४॥ दक्षिणानि छदीᳫष्युत्तरान् कुर्वन्ति ॥५॥ अन्तर्वर्तान् कुर्वन्ति ॥६॥ उदीचीनं सदो वर्धयन्ति ॥७॥ । परि त्वा गिर्वणो गिरः[९] इत्यभितः समुच्छ्रयति । (°इमा भवन्तु=जुष्टयः) इति ॥८॥ इन्द्रस्य स्यूरसि इति पूर्वां द्वारमध्वर्युः सीव्यत्यपरां प्रतिप्रस्थाता ॥९॥ इन्द्रस्य ध्रुवमसि इत्यरत्निमात्रे स्युत्वा ग्रन्थी विस्रᳫसयतः ॥१०॥ ग्रन्थीकुर्वन्तौ सीव्यतः ॥११॥ ऐन्द्रमसीन्द्राय त्वा इति क्लृप्तᳫ सदोऽभिमृशतः ॥१२॥

---

१. MHP संप्रेष्य. २. MHP °टेवोपनः. ३. Cf. BaudhŚS VI.27 : 188.21. ४. MP. धर्मेण. ५. Cf. BaudhŚS VI.27 : 189.4. ६. MHP परिषेण. ७. P दृहेति. ८. Cf. BaudhŚS VI.27:189.8. ९. MHP add इत्यङ्गिरः.

## [ उपरवकर्म ]

खातानुरवानभ्येतः ॥१३॥ तेषाँ संभाराः षट् च शङ्कवो द्वे च फलके ॥१४॥ यवमतीः प्रोक्षणीः इति संप्रेष्यति । °बर्हिराज्यमुपाँशुग्रहणमाहरेहि यजमान इति ॥१५॥ एतेषामेव शङ्कूनामेकमादाय पुरैव खातानुपरवान् खनत्येकैकम् ॥१६॥ रक्षोहणो वलगहनो वैष्णवान् खनामि इति दक्षिणतः पूर्वार्ध्यं खनति ॥१७॥ इदमहं तं वलगमुद्वपामि इति पाँसूनुद्वपति । °यं नः समानो यमसमानो निचखान इति ॥१८॥ इदमेनमधरं करोमि इति दक्षिणतोऽपरेणोपरवानङ्गुष्ठाभ्यां निबाधते । °यो नः समानो योऽसमानोऽरातीयति गायत्रेण छन्दसाऽवबाढो[1] वलगः इति ॥१९॥ रक्षोहणो= खनामि इति यस्तस्मादपरस्तं खनति ॥२०॥ इदमहं तं वलगमुद्वपामि इति पाँसूनुद्वपति । °यं नः सपत्नो यमसपत्नो[2] निचखान इति ॥२१॥ इदमेनमधरं करोमि इति दक्षिणतोऽपरेणोपरवानङ्गुष्ठाभ्यां निबाधते । °यो नः सपत्नो योऽसपत्नोऽरातीयति त्रैष्टुभेन छन्दसाऽवबाढो वलगः इति ॥२२॥ रक्षोहणो = खनामि (इति यस्तस्मादपरस्तं खनति)[3] ॥२३॥ इदमहं तं[4]= नुद्वपति । °यं नः सबन्धुर्यमसबन्धुर्निचखान इति ॥२४॥ इदमेनमधरं[5]= बाधते । °यो नः सबन्धुर्योऽसबन्धुररातीयति जागतेन छन्दसाऽवबाढो वलगः इति ॥२५॥ रक्षोहणो=खनामि इति सर्वोत्तरार्ध्यं खनति ॥२६॥ इदमहं तं[4]=नुद्वपति । यं नो भ्रातृव्यो यमभ्रातृव्यो निचखान इ(-ति ॥२७॥ रक्षोहणो= खनामि इति)[6] यस्तस्मादुत्तरस्तं खनति ॥२८॥ इदमेनमधरं[5] =धते । °यो नः भ्रातृव्यो योऽभ्रातृव्योऽरातीयत्यानुष्टुभेन छन्दसाऽवबाढो वलगः इति ॥२९॥ तान्[7] समुप्य दक्षिणेन वेदिं परोप्याप[8] उपस्पृश्य आशीवहि इति पूर्वार्ध्ययोः संमृशतेऽध्वर्युश्च यजमानश्च ॥३०॥ दक्षिणतोऽध्वर्युर्भवत्युत्तरतो यजमानः ॥३१॥ [9]अध्वर्यो किमत्र इति[9] पूर्वं पृच्छति यजमानः ॥३२॥ भद्रम् इति स आह ॥३३॥ तन्नौ[10] सह इति ॥३४॥ यजमान[11] किमत्र इति पृच्छत्यध्वर्युः ॥३५॥ भद्रम् इति स आह ॥३६॥ तन्नौ सह इति ॥३७॥ व्यशीवहि इति दक्षिणार्ध्ययोः संमृशेते ॥३८॥ यजमान[11]

---

१. MHP छन्दसा बाढो. २. MHP यसपत्नो; cf. TS I.3.2.2 : यं नः समानो°. ३. MHP om. ४. MHP abr; see above S.18. ५. MHP abr; see above S.19. ६. MHP om. ७. P तानु. ८. MP परोऽप्याय. ९–९. MHP अध्वर्योक्तिमात्रेति. १०. MHP तनौ. ११. MHP °मानः.

किमत्र इति पृच्छत्यध्वर्युः ॥३९॥ भद्र[1]=सह इति ॥४०॥ अध्वर्यो[2] किमत्र इति पृच्छति यजमानः ॥४१॥ भद्र[1]=सह इति ॥४२॥ समशीवहि[3] इत्यपराध्र्ययोः संमृशेते ॥४३॥ अध्वर्यो[4] किमत्र इति पृच्छति यजमानः ॥४४॥ भद्र[1]=सह इति ॥४५॥ यजमान किमत्र इति पृच्छत्यध्वर्युः ॥४६॥ भद्रम् इति[1]=सह इति ॥४७॥ उदशीवहि इत्युत्तराध्र्ययोः संमृशेते ॥४८॥ यजमान किमत्र इति पृच्छत्यध्वर्युः ॥४९॥ भद्रम्[1]=सह इति ॥५०॥ अध्वर्यो[2] किमत्र इति पृच्छति यजमानः ॥५१॥ भद्रम् इति स आह ॥५२॥ तन्नौ[5] सह इति ॥५३॥ अथैनानवान्तरमभिमृशत्येकैकम् ॥५४॥ विराडसि सपत्नहा इति दक्षिणतः पूर्वार्ध्यम् ॥५५॥ सम्राडसि भ्रातृव्यहा इति यस्तस्मादपरस्तम् ॥५६॥ स्वराडस्यभिमातिहा इति यस्तस्मादुत्तरस्तम् ॥५७॥ विश्वाराडसि विश्वासां नाष्ट्राणाँ हन्ता इति सर्वोत्तराध्र्यम् ॥५८॥ रक्षोहणो वलगहनः प्रोक्षामि वैष्णवान् इत्येनान् सह सर्वान् प्रोक्षति ॥५९॥[१७]

एनान् सह सर्वान् प्रोक्षति ॥१॥ रक्षोहणो वलगहनोऽवनयामि वैष्णवान् इति दक्षिणतः पूर्वार्ध्ये[6] वोपनयति ॥२॥ एवमेकस्मिन् ॥३॥ यवोऽसि यवयास्मद् द्वेषः इति यवान् प्रस्कन्दयति । °यवयारातीः इति ॥४॥ एवमेवैकस्मिन्[7] ॥५॥ रक्षोहणो वलगहनोऽवस्तृणामि (वैष्णवान् इति) विषूचीनाग्रं बर्हिः स्तृणाति ॥६॥ तस्मिन्नेवमेवैकस्मिन्[8] ॥७॥ रक्षोहणो वलगहनोऽभि जुहोमि वैष्णवान् स्वाहा इत्येनान्[9] हिरण्यमन्तर्धायान्येनाभि जुहोति ॥८॥ रक्षोहणौ वलगहनौ (प्रोक्षामि वैष्णवी इत्यधिवणफलके प्रोक्षति)[10] ॥९॥ रक्षोहणौ वलगहनावुपदधामि वैष्णवी [11]इत्येतावधिषवण(-फल-)के (अपिदधाति) ॥१०॥ प्रति तिष्ठ इति (शङ्कुं दृँहति द्वाभ्यां पश्चाद् द्वाभ्यां मध्ये ॥११॥ [12]रक्षोहणौ वलगहनौ पर्यूहामि वैष्णवी इत्येने पुरीषेण पर्यूहति[12] ॥१२॥ रक्षोहणौ वलगहनौ परिस्तृणामि वैष्णवी इत्येने [13]बर्हिषा परिस्तृणाति[13] ॥१३॥ रक्षोहणौ वलगहनौ (वैष्णवी इत्येने अभिमृशति

---

१. MHP abr; see above S.33--३४. २. MHP अध्वर्योः. ३. MHP समंशी°. ४. MHP अध्वर्युः. ५. M तन्नो; HP om. ६. MHP पूर्वार्धे. ७. MP repeat एवमेकस्मिन्. ८. MP तस्मिन्नेवैवयेतस्मिन्नेवमेक° [ M °न्नेवैवमेत° ]; H तस्मिन्नेवमेतस्मिन्नेवमेक°. ९. MH °त्येनेन्; P °त्येनन्. १०. MHP om. ११. M इत्येववधि°; HP इत्येधिष्वधि. १२–१२. H oms. १३–१३. MHP बर्हिषा च स्तृणाति चरि च स्तृणाति.

॥१४॥ रक्षोहणं त्वा व-)लगहनमभ्यूहामि वैष्णवम् इत्येनयोऽधिषवण-चर्माध्यूहति ॥१५॥ तद् बृहन्नसि बृहद्ग्रावा इत्यन्तरेषे दीक्षितदण्डेनो-द्वादयति । 'बृहतीमिन्द्राय वाचं वद रक्षोघ्नीं वलगघ्नीं वैष्णवीम् इति ॥१६॥

## [ धिष्णियकरणम् ]

एतस्मिन् काले प्रतिप्रस्थाता दक्षिणस्य हविर्धानस्य पूर्वेणोपस्तम्भनं चतुर्गृहीतं (बर्हिमुष्टिमुपनिबध्नाति ॥१७॥ तꣳ)[१] सिकताभिः पर्यूहति ॥१८॥ स्फ्यमुदपात्रम् इति संप्रेष्यति । 'पुरीषꣳ सिकता आहरेहि यजमान इति ॥१९॥ चात्वालात्पुरीषमाहरन्ति, यत्र सिकता विन्दन्ति ततः ॥२०॥ ता आग्नीध्रियं धिष्णियमुद्धत्य व्यूह्यावोक्षति[२] ॥२१॥ पुरीषं निवपति ॥२२॥ व्यूह्यावोक्षति ॥२३॥ सिकता निवपति ॥२४॥ व्यूह्या-वोक्षति ॥२५॥ एवमेव होतुर्धिष्णियं करोति ॥२६॥ [३]एवमेव मैत्रावरुणस्य[३] ब्राह्मणाच्छंसिनः पोतुर्नेष्टुरच्छावाकस्य मार्जालीयमिति ॥२७॥ अथैनान् यथापूर्वमुपस्थापयत्येकैकम् ॥२८॥ विभूरसि प्रवाहणः इत्याग्नीध्रियं[४] धिष्णियम् । 'रौद्रेणानीकेन = हिꣳसीः इति ॥२९॥ [५]वह्निरसि हव्यवाहनः इति होतुर्धिष्णियम् ॥३०॥ श्वात्रोऽसि प्रचेताः इति मैत्रावरुणस्य ॥३१॥ तुथोऽसि विश्ववेदाः[६] इति ब्राह्मणाच्छꣳसिनः ॥३२॥ उशिगसि कविः इति पोतुः ॥३३॥ अङ्घारिरसि बम्भारिः इति नेष्टुः ॥३४॥ अवस्युरसि दुवस्वान् इत्यच्छावाकस्य[७] ॥३५॥ शुन्ध्यूरसि मार्जालीयः इति मार्जालीयम् ॥३६॥ रौद्रेणानीकेन = हिꣳसीः इति सर्वेष्वनीकमनुवर्तयति ॥३७॥ [ १८ ]

[ इति पञ्चमोऽनुवाकः ]

## [ वसतीवरीग्रहणम् ]

विप्रतिष्ठन्ते धावनाय ॥१॥ अपराह्णे धौताः समायन्ति ॥२॥ कूर्चा-पिहितेन[८] कुम्भेन प्रतिप्रस्थाताऽन्तरा चात्वालं चोत्करं च गत्वा वसती-वरीर्गृह्णाति वहन्तीनां प्रतीपस्तिष्ठन्[९] छायायै चातपतश्च सन्धौ ॥३॥ यदि न वहेयुरुत्क्षुभ्य गृह्णीयात् ॥४॥ यदि छाया न स्यादात्मनश्छायां

---

१. Cf. BaudhŚS VI. 29.193.1–2. २. MHP व्यूह्यापोक्ष°. ३–३ MHP एव मैत्रावरुणयो. ४. M इत्यग्नीन्धियं; HP इत्यग्नि घियं. ५. वह्नीरसि. ६. P विश्वदेवा. ७. MHP इत्यावाकस्य. ८. MH कूर्चाविहि°. ९. MHP प्रतिपस्ति°.

कुर्यात् ॥५॥ हविष्मतीरिमा आपो हविष्मा=अस्तु सूर्यः इति ता यथेतमाहृत्यापरेण गार्हपत्यꣳ सादयति। अग्नेर्वोऽपन्नगृहस्य=घत्त इति ॥६॥ तस्मिन्नागते संप्रेष्यति स्तृणीत बर्हिः प्र व्रतं [1]यच्छत समपिव्रतान्[1] ह्वयताग्नीदाज्यमधिश्रय प्रतिप्रस्थातः स्रुचः संमृड्ढ्याज्यानि गृह्णीष्वोन्नेतर्ग्राव्णो[2] वायव्यानि दशापवित्रे द्रोणकलशे समवशमस्वोत्पत्नीमानयन्त्वन्वनाꣳसि[3] प्रवर्तयन्तु इति ॥७॥ एतत्कुर्वन्ति ॥८॥ स्रुचः संमृज्याज्यानि गृह्णीते प्रतिप्रस्थाता पृषदाज्यवन्ति प्रसिद्धम् ॥९॥ जुहूरभृतोगृंहीत्वा महीनां पयोऽसि इति पृषदाज्यायोपस्तृणीते[4] ॥१०॥ विश्वेषां देवानां तनूः इति द्वितीयम् ॥११॥ ऋध्यासमद्य पृषतीनां ग्रहम् इति तिरःपवित्रꣳ स्रुचि दध्यानयति। °पृषतीनां ग्रहोऽसि इति ॥१२॥ विष्णोर्हृदयमस्येकमिष इत्युपरिष्टादभिघारयति ॥१३॥ विष्णुस्त्वाऽनु वि चक्रमे इति द्वितीयम् ॥१४॥ भूतिर्दध्ना घृतेन वर्धताम् इति वाचयति। °तस्य मेष्टस्य[5]=अस्तृतम्[6] इति ॥१५॥ ध्रुवायै काल आज्यस्थालीमुपोद्यच्छति ॥१६॥ इध्ममादीपयन्ति ॥१७॥ उपयमनीरुपकल्पयन्ति ॥१८॥ उत् पत्नीमानयन्ति[7] ॥१९॥ अन्वनाꣳसि प्रवर्तयन्ति ॥२०॥ उदग्ने तिष्ठानु मामुदेहि इति प्रजहितमध्वर्युर्दम्पती उपस्थापयति। °वैश्वदेवैर्यज्ञियैः संविदानः। उज्जातेन भिनदुदुज्जनित्वैः, सुवर्गे लोके यजमानꣳ हि धेहि; मास्यैं ह्रास्था आहुत्यै यामुपेम उत्तिष्ठन्तमनु संमरध्वं मान्तर्गात भागिनं भागधेयात् सप्तर्षीणाꣳ सुकृतां यत्र लोकास्तत्रेमं यज्ञं यजमानं च धत्तमन्वारमेथामनु संमरेथाꣳ समानं [8]पन्थामवथो घृतेन[8]; यद्वां पूतं परिविष्टमग्नौ तस्य गुप्त्यै दम्पती सꣳरमेथाम्[9] इति ॥२१॥ आगत्यापरेण प्रागावृत्ता उपविशन्ति ॥२२॥ उपस्थे ब्रह्मा वा यजमानो वा राजानं कुरुते ॥२३॥ अध्वर्युः प्रचरण्यां चतुर्गृहीतं गृह्णीते ॥२४॥ तज्जुहोति त्वꣳ सोम तनूकृद्भ्यः इति समारब्धेषु वैसर्जनम्। द्वेषोभ्योऽन्यकृतेभ्य उरु यन्तासि वरूथꣳ स्वाहा इति ॥२५॥ जुषाणो अप्तुराज्यस्य वेतु स्वाहा इति स्रुवेणाप्तुं जुहोति ॥२६॥ उद्यच्छन्तीध्मम्[10] ॥२७॥ उपयच्छन्त्युपयमनीः ॥२८॥ आ सोमं ददते ॥ २९ ॥ [ १९ ]

१–१. MHP यच्छता विप्रता. २. MHP ग्राविण्णो. ३. MHP °शमन्वो°; H °यत्त्यन्व°; P °यत्त्वन्मनां°. ४. HP °ज्ययोय°. ५. M मेऽष्टस्य. ६. MHP असूतम्. ७. P °यत्त्व°. ८–८. MHP पन्थामयसंकृतेतं. ९. MP संरम्भेथाम्; H संभरेथाम्; cf. TĀ II. 6.2. १०. MHP °च्छन्तमिध्मम्.

आ सोमं ददत 'आ ग्राव्ण आ वायव्यान्या[1] द्रोणकलशमा वसतीवरीः ॥१॥ अग्नीषोमाभ्यां प्रणीयमानाभ्याम(-नु ब्रू-)हि इत्याह ॥२॥ 'अयं नो अग्निर्वरिवः[2] कृणोतु इत्यग्निप्रथमाः[3] प्रयन्ति । अयं मृधः पुर=वाजसातौ इति ॥३॥ आगच्छन्त्याग्नीध्रियं धिष्णियम् ॥४॥ उपनिवपत्युपयमनीः ॥५॥ सादयत्यग्निम् ॥६॥ चतुर्गृहीतं गृह्णीतेऽध्वर्युः प्रचरण्याम्[4] ॥७॥ तज्जुहोति अग्ने नय सुपथा राये अस्मान् इति नयवत्यर्चाऽऽग्नीध्रे[5] । [6]विश्वानि देव=विधेम (स्वाहा इति) ॥८॥ द्रोणकलशं च वसतीवरीश्चोपसादयन्ति ॥९॥ अतिप्रयन्ति राज्ञा चाज्यैश्च ॥१०॥ अतिद्रुत्याध्वर्युरिध्माबर्हिः प्रोक्षति ॥११॥ वेदिं प्रोक्षति ॥१२॥ आसन्नं प्रोक्षति ॥१३॥ अपो निनीय प्रस्तरं गृह्णाति ॥१४॥ स्तृणाति बर्हिः ॥१५॥ प्राङुत्सृप्य परिधीन् परिधात्येतानेव कार्ष्मर्यमयान् ॥१६॥ समिधावादधाति ॥१७॥ (उरु) विष्णो विक्रमस्व इति स्रुवाहुतिं जुहोति । °उरु क्षयाय नः कृधि । घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर स्वाहा इति ॥१८॥ प्रपद्याखर ऐक्षवी तिरश्ची सादयति ॥१९॥ तिरश्च्योराश्वबालं प्रस्तरम् ॥२०॥ प्रस्तरे जुहूम् ॥२१॥ आखर इतरे ॥२२॥ समासाद्य ध्रुवा असदन्; यन्मे अग्ने इति समभिमृश्य दशहोतारं व्याचष्टे ॥२३॥ अप उपस्पृश्य राजानं प्रपादयति दक्षिणमभि हविर्धानम् सोमो जिगाति=मा सदम् इति ॥२४॥ अदित्याः सद आ सीद इति सह कृष्णाजिनेन कबन्धे राजानमासादयति ॥२५॥ एष वो देव सवितः सोमः इति तं प्रयच्छति । °त रक्षध्वं मा वो दभद् इति ॥२६॥ एतत् त्वꣳ सोम देवानुपागाः इति स(-म्प्रदा-)योपतिष्ठते ॥२७॥ इदमहं मनुष्यो=रायस्पोषेणोपावर्ते इति मनागुपावर्तते ॥२८॥ नमो देवेभ्यः इत्यञ्जलिं (प्राञ्चं) करोति ॥२९॥ स्वधा पितृभ्यः इति दक्षिणान्यञ्चम् ॥३०॥ इदमहं निर्वरुणस्य पाशान्मुच्ये इति निष्क्रामति ॥३१॥ सुवरभि विख्येषम् इत्यनुवीक्षते ॥३२॥ वैश्वानरं ज्योतिः इत्याहवनीयं परेक्षते ॥३३॥ अग्नेः समिदसि इति समिधमादत्ते ॥३४॥ अग्ने व्रतपते इति मार्जयित्वा 'समिधमादधाति । °त्वं व्रतानां व्रतपतिरसि या मम तनूस्त्वय्यभूदियं=व्रतानि यथायथं तन्वः स्वाहा इति ॥३५॥ आहरन्त्यस्मै वसतीवरीः ॥३६॥ ता उत्तरवेद्यै दक्षिणायाꣳ श्रोण्यां निधाय तास्वपावृतासु मनाक्[7] स्पर्शयन्निवाङ्गुलीर्विसृजते ॥३७॥ स्वाहा यज्ञं मनसा=क्षाव

---

१–१. MHP आग्नाविष्णू आवयन्यात्या [ P अग्ना°; M °यव्यान्या ]. २–२. MHP यन्नो अग्निरिव. ३. MHP अग्निः प्रथमं. ४. MHP add चतुर्गृहीतं गृह्णीते. ५. MH यवत्य°; P यवर्चत्या°. ६. MHP om. ७. MP मनक्.

स्वाहा यज्ञेऽधियज्ञं विसृजे इत्यङ्गुलीरुत्पिचति ॥३८॥ प्रतिपथं वसतीवरीर्हृत्वाऽपरेण गार्हपत्यं निधाय तास्वेवमेव नेष्टा पत्नीं विसर्जयति ॥३९॥ पुरा वा दीक्षायै क्रीते वा राज्ञि यूपं वृश्चन्ति ॥४०॥ गार्हपत्य आज्यं विलाप्योत्पूय ॥४१॥ [ २० ]

## [ यूपकर्म ]

गार्हपत्य आज्यं विलाप्योत्पूय स्रुवं च स्रुचश्च[१] संमृज्य प्राङेत्याहवनीयस्यार्धं चतुर्गृहीतं गृह्णीते ॥१॥ तज्जुहोति उरु विष्णो वि क्रमस्व इति समिधमाधायाहवनीये यूपाहुतिम् । °उरु क्षयाय नः = तिर स्वाहा इति ॥२॥ स्रुवमाज्यमुपाꣳशुग्रहणं[२] त्रयमेतदाहरन्ति ॥३॥ यूपमष्टाश्रि[३] तक्ष्णुवन्ति ॥४॥ तष्टो यूपोऽष्टाश्रिः क्लृप्तचषालः प्रोक्षितेन पूर्वेण यूपावटमुपनिहितो[४] भवति सह द्वाभ्याꣳ शकलाभ्याम् ॥५॥ तमुपपरिक्रामन्[५] संप्रेष्यति यवमतीः प्रोक्षणीः[६] = पर्यूहामि इति ॥६॥ ब्रह्म दृꣳह क्षत्रं दृꣳह इति दीक्षितदण्डेन दृꣳहति । प्रजां दृꣳह[७] = शकलान्तं यूपमुत्सृजति ॥७॥ [ २१ ] [ इति षष्ठोऽनुवाकः ]

## [ अग्नीषोमीयपशुकर्म ]

इषे त्वा इति बर्हिषी आदत्ते ॥१॥ प्रजापते[८] = रेवती रमध्वमग्नीषोमाभ्यां त्वा जुष्टमुपाकरोमि इति ॥२॥ प्रज्ञाते बर्हिषी निधाय अग्ने[९] = पशुं प्रोक्षति अग्नीषोमाभ्यां जुष्टम् इति ॥३॥ अपां पेरुरसि इति पाययति । °स्वात्तं[१०] = एतस्मिन् काले मैत्रावरुणाय दण्डं प्रयच्छति ॥४॥ [२२]

एतस्मिन् काले मैत्रावरुणाय दण्डं प्रयच्छति ॥१॥ त्वां गावोऽवृणत[११] राज्याय इति दीक्षितदण्डेन[१२] ब्रह्मा[१३] = अवेक्षन्ते इह प्रजाः ॥२॥ [२३]

इह प्रजा विश्व[१४] = वपामुत्खिदति ॥१॥ घृतेन द्यावापृथिवी ॥२॥[२४]

---

१. MHP स्रुचं. २. MP wrongly give the sign of broken text (=) between °ग्रहणं and त्रय°. ३. MHP °ष्टाश्रीः. ४. MHP °निहतो. ५. P oms तम्. ६. MHP abr; see V.3.18–36. ७. MHP abr; see V.3.37–46. ८. MHP abr; see V 4.1–3. ९. MHP abr; see V.4.4–16. १०. MHP abr; see V.4.17–33. ११. MP °वृणुत. १२. MHP दण्डे. १३. MHP abr; see V.5.2–31. १४. MHP abr; see V.6.1–29.

घृतेन द्यावापृथिवी प्रोर्ण्वाथाम् इति[1]=वपाया[2] उपस्तृणीतेऽग्नीषोमाभ्याम् ॥१॥ (अग्नीषोमाभ्यां[3]) छागस्य वपाया[2] मेदसोऽवदीयमानस्यानुब्रूहि इत्याह स्रुवेण[4]=त्यो श्रावयेत्याह ॥२॥ अग्नीषोमाभ्यां छागस्य वपां मेदः प्रस्थितं प्रेष्य इति ॥३॥ स्वाहा देवेभ्यः इति[5]=मार्जयन्ते चात्वाले ॥४॥ [२५] [इति सप्तमोऽनुवाकः]

[6]अग्नीत्पशुपुरोडाशं निर्वप इति[6] संप्रेष्यति[7]=पत्यग्नीषोमीयमेकादशकपालम् ॥१॥ ब्रह्मा पृषदाज्यं[8]=कुरुतादिति ॥२॥ प्रस्थितकर्मैतत् ॥३॥ मार्जयित्वैवाध्वर्युरन्युप्तधिष्णियाननुदिशत्युत्तरेण हविर्धाने दक्षिणेनाग्नीध्रं तिष्ठन् ॥४॥ सम्राडसि[9] कृशानुः इत्याहवनीयम् ॥५॥ परिषद्योऽसि पवमानः इत्यास्तावम् ॥६॥ प्रतक्वाऽसि[10] नमस्वान् इति चात्वालम् ॥७॥ असंमृष्टोऽसि हव्यसूदः[11] इति [12]पशुश्रपणम् ॥८॥ ऋतध[12](-१माऽसि सु-)वर्ज्योतिः इत्यौदुम्बरीम् ॥९॥ ब्रह्मज्योतिरसि सुवर्धामा इति यत्र ब्रह्माऽऽस्ते ॥१०॥ अजोऽस्येकपात् इति गार्हपत्यम् ॥११॥ अहिरसि बुध्नियः इति गार्हपत्यस्य प्राजहितम्[13] ॥१२॥ अपिजोऽस्यपिजेन नाम्ना इत्यन्वाहार्यपचनम् ॥१३॥ मलिम्लुचोऽसि सगरः इति यत्र तिष्ठन् प्रत्यागृणाति ॥१४॥ कविरसि पित्रियः इति यत्र (तिष्ठन् बर्हिः स्तृणाति ॥१५॥……)[14] ?द्रावि विधर्म इति यत्र निर्मन्थ्येन चरति ॥१६॥ अग्नीत् पशुपुरोडाशमुपस्तीर्णाभिघारितमुद्वासयति ॥१७॥ तयोर्द्वयोरुपस्तृणान आह प्रतिप्रस्थातरग्नीषोमाभ्यां पशुपुरोडाशस्यावदीयमानस्यानुब्रूहि इति ॥१८॥ पश्चाच्च पुरस्ताच्च जुह्वामवद्यति ॥१९॥ अभिघारयति ॥२०॥ प्र(-त्यनक्ति ॥२१॥ सकृदुत्तरार्धादुपभृत्यवद्यति ॥२२॥ द्विरभिघारयति ॥२३॥ न) प्रत्यनक्ति ॥२४॥ सन्धायाध्वर्यव आदधाति ॥२४॥ ओ श्रावय इत्याह ॥२५॥ अग्नीषोमाभ्यां पुरोडाशं[15]प्रस्थितं प्रेष्य इति[15] ॥२६॥ वषट्कृते जुहोति ॥२७॥ अग्नये[16]=होतारं व्याचष्टे ॥२८॥ [२६]

१. MHP abr; see V.7.1–21. २. MHP वपया. ३. MHP om. ४. MHP abr; see V.7.22–25. ५. MHP abr; see V.7.27–32. ६–६. MHP °डाशान्निर्वपति. ७. MHP abr; see V.8.1–3. ८. MHP abr; see V.8.4–6. ९. P °संरा. १०. MHP व्रतमपासि. ११. MHP हव्यस्कन्द. १२–१२. MHP °श्रवणमतध. १३. MHP प्रज°. १४. Cf BaudhŚS VI.30 : 194.4; BhārŚS XII.15.12. १५–१५. MHP प्रेष्यति. १६. MHP abr; see V.8.19–75.

स्रुचोः पञ्चहोतारं व्याचष्टे ॥१॥ प्रतिपराहरन्ति[1]=वय इत्याह ॥२॥ अग्नीषोमाभ्यां छागस्य हविषोऽनुब्रूहि इत्याहो(-त्तिष्ठन्नध्वर्युः ॥३॥ वसाहोमं)[2] प्रतिप्रस्थाताऽऽदत्ते ॥४॥ ओ श्रावय इत्याह ॥५॥ अग्नीषोमाभ्यां छागस्य हविः प्रस्थितं प्रेष्य इति ॥६॥ घृतं घृतपावानः पिबत[3]=सादयित्वाऽभिघार्य प्रत्यङ् परेत्य होत्र इडामादधाति मेदस्व[4]=संमृड्ढि इति ॥७॥ आग्नीध्रादग्नीदौपयजानङ्गारानाहृत्य होतुर्धिष्णिये निवपति ॥८॥ गुदेनोपयष्टोपसीद(-ति ॥९॥ पृष-)दाज्यस्या[5]=हुत्वा प्राङेत्य तराꣳसि जुहोति ॥१०॥ [२७] ॥

( प्राङेत्य ) तराꣳसि जुहोति ॥१॥ ये देवा यज्ञहनः इति द्वे स्रुवाहुती[6] गार्हपत्ये जुहोति । ( °पृथिव्यामध्यासते । )[7] अग्निर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयꣳ स्वाहा ॥[8] ये देवा यज्ञमुषः पृथिव्यामध्यासते । अग्निर्मा=वयꣳ स्वाहा[8] इति ॥२॥ चतुर्गृहीतं गृह्णीते ॥३॥ तज्जुहोति [9]आगन्म मित्रावरुणा[9]=दिवः स्वाहा इति ॥४॥ ये देवा यज्ञहनः इति द्वे स्रुवाहुती आग्नीध्रे जुहोति । °अन्तरिक्षेऽध्यासते । वायुर्मा=वयꣳ स्वाहा ॥ ये देवा यज्ञमुषोऽन्तरिक्षेऽध्यासते । वायुर्मा=वयꣳ स्वाहा इति ॥५॥ चतुर्गृहीतं गृह्णीते ॥६॥ तज्जुहोति यास्ते रात्रीः सवितर्देवयानी=रजाꣳसि स्वाहा इति ॥७॥ ये देवा यज्ञहनः इति द्वे स्रुवाहुती आहवनीये जुहोति । °दिव्यध्यासते । सूर्यो मा ते=वयꣳ स्वाहा ॥ ये देवा यज्ञमुषो दिव्यध्यासते । °सूर्यो मा=वयꣳ स्वाहा इति ॥८॥ चतुर्गृहीतं गृह्णीते ॥९॥ तज्जुहोति येनेन्द्राय समभरः=ह्येनꣳ स्वाहा इति ॥१०॥

## [वसतीवरीव्यपहरणम्]

व्युत्क्रामत इत्याह प्रतिप्रस्थाता निपदः काले । °मावोऽभि[10]° परिह्वारिषं वसतीवरीः परिहरिष्यामि इति ॥११॥ पूर्वेण हविर्धाने अपरेणाहवनीयं यजमानो राजानं धारयꣳस्तिष्ठति ॥१२॥ पूर्वेण शालामपरेण सदः पत्न्युपविष्टा भवति ॥१३॥ अपरेण गार्हपत्यं वसतीवरीः सन्ना भवन्ति ॥१४॥

१. MHP abr; V.9.2–4. २. MHP thus supra V.9.5–6. ३. MHP abr; see V.9.9–22. ४. MHP abr; see V.9.22–27. ५. MHP abr; V.9.30–66 ६. MHP °हुतीर्गा°. ७. MHP om. ८–८. H oms. ९–९. MHP आगन्मित्रा°. १०. MHP मोपोभि.

तास्तत्र प्रतिप्रस्थाता सव्येनाꣳसेनादत्ते ॥१५॥ ता दक्षिणेन गार्हपत्यं पूर्वया द्वारोपनिहृ्त्य दक्षिणेन सदो दक्षिणं वेद्यन्तमनुहृत्य[1] दक्षिणतो यूपस्यास्पृष्टाः सादयति [2]इन्द्राग्नियोर्भागधेयी स्थ इति ॥१६॥ तास्ततो दक्षिणेनाꣳसेनादत्ते ॥१७॥ ता यथेतमाहृत्यापरेण गार्हपत्यꣳ सादयति मित्रावरुणयोर्भागधेयी स्थ इति ॥१८॥ तास्ततो दक्षिणेनैवाꣳसेनादत्ते ॥१९॥ ता उत्तरेण गार्हपत्यं पूर्वया द्वारोपनिर्हृत्य दक्षिणेन सदो दक्षिणेनाग्नीध्रमुत्तरेणाग्नीध्रीयमग्निं गत्वोत्तरं वेद्यन्तमनुहृत्योत्तरतो[3] यूपस्योपस्पृष्टाः[4] सादयति विश्वेषां देवानां भागधेयी स्थ इति ॥२०॥ तास्ततः सव्येनैवाꣳसेनादत्ते ॥२१॥ ता यथेतमाहृत्याग्नीध्रे सादयति यज्ञे जागृत इति ॥२२॥ आग्नीध्रे संवसन्ते ॥२३॥ तदाहरति राजानम् आधवनीयपूतभृतः ॥२४॥ [5]एषा आच्छृणा[5] निर्णिक्ताः कृतेड्वा वसन्ति ॥२५॥ [6]औदुम्बरा महापरिधयः[6] ॥२६॥ परिकृष्टौ[7] द्वाविध्मौ ॥२७॥ एकं बर्हिः ॥२८॥ तयोरन्यतरः पञ्चदशदारुर्नानावाक्ष्यः[8] प्रपूतशकलः, सप्त पुंवृक्षस्य दारुण्यष्टौ स्त्रीवृक्ष्यै ॥२९॥ निपद्यमानः सꣳ शास्ति[9] घर्मदुघं दधिघर्माय दोहताद्, या यजमानस्य व्रतधुक् पयस्यायै, या पत्नियै तामाशिरे इति ॥३०॥ पञ्चदश नक्षत्राणि रात्रिं नयन्ति ॥३१॥ [२८] ॥ [ इत्यष्टमोऽनुवाकः ]

॥ इति प्रथमः प्रश्नः ॥



१. MHP °हृत्वा. २. MHP इन्द्राणियो° ३. MHP °मनुहृत्वोत्त°. ४. MHP यूस्योस्पृष्टाः [H यूस्योस्पृ°; P यूरस्यो°]. ५–५. MHP एषामच्छृण्णा. ६–६. MHP °दुम्बरामाह पपरि°. ७. MHP कृष्टा. ८. M दारू नाना, HP दारु नाना. ९. MHP सं शान्ति.

# [अथ सप्तमः प्रपाठकः]

## [ अग्निष्टोमः ]

### [ प्रातःसवनम् ]

पञ्चदश नक्षत्राणि रात्रिं नयन्ति ॥१॥ यदा दशममुदेति तत्तृतीयमगतꣳ[1] रात्रियै भवति ॥२॥ तस्मिन् काले समुत्थाय जोषंकृतेषु राजानं प्रपादयति दक्षिणमभि हविर्धानम् ॥३॥ अथ संप्रेष्यति अग्नीदाज्यमधिश्रय (प्र-)तिप्रस्थातः[2] स्रुचः संमृड्ढयाज्यानि[3] गृह्णीष्व पात्राणि युङ्ग्ध्युन्नेतर्ग्राविण्णो[4] वायव्यानि दशापवित्रे द्रोणकलशे समवशम्य[5] हविर्धानयोः सꣳसादय पयश्च सक्तूꣳश्चोपकल्पयाग्नीत्सवनीयान्[6] निर्वप सर्वानैन्द्रानेकादशकपालान् इति ॥४॥ एतत् कुर्वन्ति ॥५॥ स्रुचः संमृज्याज्यानि गृह्णीते प्रतिप्रस्थाताऽग्नीधे पृषदाज्यवन्ति ॥६॥ द्रुत्वाऽऽखरे पात्राणि युनक्ति ॥७॥ अग्निर्देवता गायत्रीः छन्दः इति दक्षिणार्धपूर्वार्धे आखरस्योपाꣳशुपात्रꣳ सादयति। °उपाꣳशोऽ पात्रमसि इति ॥८॥ सोमो देवता त्रिष्टुप्[7] छन्दः इति तदुत्तरेणान्तर्यामपात्रꣳ सादयति। °अन्तर्यामस्य पात्रमसि इति ॥९॥ अन्तरेणग्रावाणमास्पृष्टꣳ सादयति दक्षिणामुखमुपाꣳशु(-पात्रात् ॥१०॥ इन्द्रो दे-)वता जगती छन्दः इति तस्य मध्यतोऽपरेणास्पृष्टं परिस्रजमैन्द्रवायवं[8] पात्रꣳ सादयति। °इन्द्रवायुवोः पात्रमसि इति ॥११॥ बृहस्पतिर्देवताऽनुष्टुप् छन्दः इति तदपरेणास्पृष्टं द्विभृष्टि मैत्रावरुणपात्रꣳ सादयति। °मित्रावरुणयोः पात्रमसि इति ॥१२॥ अश्विनौ देवता पङ्क्तिश्छन्दः इति (तदपरेणाश्विनपात्रꣳ सादयति। °अश्विनोः पात्रमसि इति) ॥१३॥ सूर्यो देवता बृहती छन्दः इति तस्य दक्षिणेन[9] वैल्वꣳ शुक्रपात्रꣳ सादयति। °शुक्रस्य पात्रमसि इति ॥१४॥ चन्द्रमा देवता सतोबृहती छन्दः इति तदुत्तरेण वैकङ्कतं[10] मन्थिपात्रꣳ सादयति। °मन्थिनः पात्रमसि इति ॥१५॥

१. MHP °मगतं; thus Ao II.152:22.2. २. MHP om प्र. ३. P. adds गृह्णीते प्रतिप्रस्थातस्सुचः संमृज्याज्यानि. ४. MH °ग्राविण्णो, P °ध्यन्नेतर्ग्राविण्णो. ५. MHP °शाम्य; thus Ao II.166.21. ६. P oms अग्नीत्; HP सवनीयं. ७. MH त्रिष्टुपे; P त्रिष्टुभे. ८. P °वायं. ९. MHP दक्षिण. १०. MHP वैकङ्क°.

अपरेण शुक्रमन्थिनोः पात्रे आश्वत्थे अश्वशफबुध्ने उभ(-यतोमुखे) प्रबाहु-(-ग्दक्षिणमृतु-)पात्रे सादयति ऋतूनां पात्रे स्थः इति ॥१६॥ विश्वेदेवा देवतोष्णिहा छन्दः इति दक्षिणस्य हविर्धानस्य पूर्वेणोपस्तम्भनमाग्रयण-स्थालीँ सादयति । °आग्रयणस्य (पात्रमसि इति ॥१७॥ इन्द्रो देवता ककु-प्छन्दः इत्युत्तरस्यां खरश्रोण्यामुक्थ्यस्थालीँ)[1] सादयति । °उक्थानां पात्रमसि इति ॥१८॥ उपनिदधात्यस्या उपशयं पात्रम् ॥१९॥ रत्तरतोऽस्या आदित्यस्थालीँ सादयति आदित्यानां पात्रमसि इति ॥२०॥ उपनिदधा-त्यस्या[2] औदुम्बरमादित्यपात्रं च सक्थि च[3] ॥२१॥ पृथिवी देवता विराट् छन्दः इत्यपरेणात्मानँ हृत्वोत्तरस्य हविर्धानस्य पूर्वेणोपस्तम्भनमनुपोप्ते[4] ध्रुवस्थालीँ सादयति । °ध्रुवस्य पात्रमसि इति ॥२२॥ प्रस्थितकर्मै-तत् ॥ २३ ॥ [ १ ]

प्रस्थितकर्मैतत् ॥१॥ गृहीतेष्वाज्येष्वाज्येष्वध्वर्युः प्रचरण्यां चतुर्गृहीतं गृह्णीते ॥२॥ तज्जुहोति स्रुवाहुतिम् [5]आसन्यान्मा मन्त्रात्[5] पाहि=शस्त्याः स्वाहा इति ॥३॥ प्रयन्त्याज्यैः[6] ॥४॥ अतिद्रुत्याध्वर्युरिध्मार्बर्हिः प्रोक्षति ॥५॥ वेदिं प्रोक्षति ॥६॥ आसन्नं प्रोक्षति ॥७॥ अपो निनीय प्रस्तरं गृह्णाति ॥८॥ स्तृणाति बर्हिः ॥९॥ प्राङुत्सृप्य परिधीन् परिदधाति ॥१०॥ औदुम्बरान् महापरिधीन् ॥११॥ स्वैर्यजुर्भिः समिधावादधाति ॥१२॥ यजमानयजुर्भिर्वाचयति ॥१३॥ औपानुवाक्यैरभिमृशति ॥१४॥ युनज्मि ते पृथिवीं ज्योतिषा सह इति मध्यमं परिधिम् ॥१५॥ युनज्मि वायुमन्तरिक्षेण ते सह इति दक्षिणार्ध्यम् ॥१६॥ युनज्मि वाचँ सह सूर्येण ते इत्युत्तरार्ध्यम् ॥१७॥ अग्निं युनक्ति ॥१८॥ प्रपद्याखरे तिरश्ची सादयति ॥१९॥ तिरश्च्योः प्रस्तरम् ॥२०॥ प्रस्तरे जुहूम् ॥२१॥ आखर इतरे ॥२२॥ समासाद्य ध्रुवा असदन्; यन्मे अग्ने इति समभिमृश्य युनज्मि तिस्रो विपृचः सूर्यस्य ते इति स्रुचोऽभिमृशति ॥२३॥ अप उपस्पृश्य अपां क्षया इति ग्राव्णोऽ[6]भिमृशति । ऋतस्य गर्भा भुवनस्य गोपा श्येना अजिरः पर्वतानां ककुभः प्रयुतो न पातारो वग्नुनेन्द्रँ ह्वयध्वं घोषेणामीवाँश्चातयध्वं युक्ता स्थ वहत इति ॥२४॥ उपोत्थाय हृदे त्वा इति राजानमुपतिष्ठते । मनसे त्वा दिवे त्वा=होत्रा यच्छ

१. MHP om. २. MHP °त्यस्मा. ३. MHP om. ४. MHP पूर्वेणानुस्तंभनः प्राप्ते. ५–५. MHP वासन्यान्मात्रमन्त्रात्. ६. P प्रयान्त्या°. ६. MHP ग्राविण्णो.

इति ॥२५॥ सोम राजन्नेह्यवरोह इत्यन्तरेषे राजानमुपावहरति । °मा भेर्मा = प्रजास्त्वामुपावरोहन्तु इति ॥२६॥ उपरि ग्रावस्वधिषवणचर्मणि सादयति राजानम् ॥२७॥ अप उपस्पृश्यादत्त एतं पञ्चदशदारुमिध्मं नानावाक्ष्यं प्रपूत-शकलम् ॥२८॥ तं विस्रस्याद्भिः प्रोक्ष्याज्येनाभिघार्याहवनीये[1] प्रास्यन्नाह देवेभ्यः प्रातर्यावभ्योऽनुब्रूहि इति यदि रथन्तरसामा, प्रातर्यावभ्यो देवेभ्योऽनुब्रूहि इति यद्युभयसामा[2] ॥२९॥ वावृत्य तिसृणामृचां मनसा प्रत्यागृणाति ॥३०॥ सꣳसृप्यास्ते ॥३१॥ अनिमेष एतस्योक्थ्यस्य प्रतिगिर इत्याहुर्यत् प्रातरनु-वाक इति ॥३२॥ यदा जानाति अभूदुषा रुशत्पशुरग्निरधाय्यृत्वियः[3] । अयोजि वां वृषण्वसू रथो दस्रावमर्त्यो माध्वी मम श्रुतꣳ हवम् इत्यथाध्वर्युः प्रचरण्यां चतुर्गृहीतं गृह्णीते ॥३३॥ तज्जुहोति शृणोत्वग्निः समिधा हवं मे इत्यनु-वित्तिमाहवनीये । °शृण्वन्त्वापो = हवं मे स्वाहा इति ॥३४॥ अपरं चतुर्गृहीतं गृह्णीते ॥३५॥ बर्हिरा(-दायो-) त्तिष्ठन् संप्रेष्यति ॥३६॥ [२]

उत्तिष्ठन् संप्रेष्यति अप इष्य होतर्मैत्रावरुणस्य चमसाध्वर्यवाद्रवैकधनिन आद्रवत नेष्टः पत्नीमुदानयाग्नीद्धोतृचमसेन च वसतीवरीभिश्च चात्वाले प्रति-तिष्ठासै इति ॥१॥ आनयति नेष्टा पत्नीꣳ [4]सह पान्नेजनीयया[4] स्थाल्या[5] (प्रेह्युदेह्यृतस्य वामीरन्वग्निस्तेऽग्रं नयत्वदितिर्मध्यं ददताꣳ रुद्रावसृष्टाऽसि युवा नाम मा) मा हिꣳसीः इति ॥२॥ अन्तरा चात्वालं चोत्करं च गत्वा वहन्तीरागच्छन्ति ॥३॥ तद्बर्हिः प्रास्याभिजुहोति देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान्मदिन्तमस्तं देवेभ्यो देवत्रा धत्त शुक्रꣳ शुक्रपेभ्यो येषां भाग स्थ स्वाहा इति ॥४॥ कार्षिरसि इति मैत्रावरुणचमसे(-नाहुतिमपप्लावयति । °अपापां मृधम् इति ॥५॥ बर्हिषी अन्तर्धाय समुद्रस्य वो-)[6]क्षित्या उन्नये इत्युन्नयते ॥६॥ तदन्वेकधनानुन्नयन्ति[7] इन्द्राय वः इति ॥७॥ वसुभ्यो रुद्रेभ्य आदित्येभ्यः इति नेष्टा पत्नीं पान्नेजनं ग्राहयति । विश्वेभ्यो = [8]यज्ञाय वः[8] पन्नेजनीर्गृह्णामि इति ॥८॥ आयन्ति ॥९॥ प्रेह्युदेहि[9] इति नेष्टा पत्नीमुदा-नयति । ऋतस्य वामीरन्व(-ग्निस्तेऽग्र=मा हिꣳसीः इति ॥१०॥ अ-)परेण गार्हपत्यꣳ सादयति ॥११॥ आगच्छत्यध्वर्युर्होतृचमसं च वसतीवरीश्च

---

१. P प्रोक्षत्याज्ये°. २. M °सामो; H °भयासोमो; P °भयासामे. ३. MHP °रधात्विया [M राग्निरधा°]. ४–४. P सपान्ने°. ५. MH स्थाली. ६. Cf. BaudhŚS VII.3:203.7. ७. °तदेक. ८–८. MP यज्ञान्थवः; H यज्ञन्थवः. ९. MHP एह्यु.

॥१२॥ चात्वाले सꣳस्पृष्टा होतृचमसे वसतीवरीभ्योऽधि प्रस्कन्दयति ॥१३॥ तमरिक्तं तिरःपवित्रं प्रचरण्या[1] समनक्ति सं ज्योतिषा ज्योतिरङ्क्ताꣳ सꣳ हविषा हविः[2]सं व्रतैर्व्रतचारिणीः[2] इति ॥१४॥ संपू(-रयति मैत्रावरुणचमसꣳ होतृचमस आनीय ॥१५॥ प्र-)चरन्त्येनं मैत्रावरुणचमस-(-द्धोतृचमसम्) ॥१६॥ मैत्रावरुणचमसेऽतिशिष्येरन् ॥१७॥ वसतीवरीषु ता आनीय सम्पूर्णमेतं ग्रहमभिमृशतः शुक्रा स्थ शुक्रज्योतिषः शुक्रस्य भर्त्रीः ज्योतिष्मन्तं वो ग्रहं[3] गृह्णामि इति ॥१८॥ पूर्वेण निग्राभ्याः प्रपादयन्त्यपरेण वसतीवरीश्चैकधनाश्च ॥१९॥ अध्वर्योऽवेरपा[3] इति होताऽध्वर्यु[4] पृच्छति सꣳस्रावेणाद्रवन्तम् ॥२०॥ उतेमनन्नमुरुते[5](-माः पश्य इतीतरः प्रत्याह )[6] ॥२१॥ यदि न पृच्छेत् समगुः इति ब्रूयात् ॥२२॥ यमग्ने पृत्सु मर्त्यम् इत्याहवनीये सꣳस्रावं जुहोति। आवो वाजेषु यं जुनाः। स यन्ता शश्वतीरिषः स्वाहा इति यद्यग्निष्टोमो[7] जुहोति ॥२३॥ यद्युक्थ्यः परिधौ निमार्ष्टि ॥२४॥ यद्यतिरात्रो[8] हुत्वा परिधौ[9] निमृज्य यजुर्वदन् प्रपद्यते ॥२५॥ धुरि प्रचरणीꣳ सादयित्वा उपयामगृहीतोऽसि इति प्राजापत्यं दधिग्रहं[10] गृह्णात्यौदुम्बरेणादित्यपात्रेण चतुःस्रक्तिना[11] तिरःपवित्रं दध्नम्। प्रजापतये त्वा ज्योतिष्मते = पृथिव्यै [12]त्वा इति ॥२६॥ अपेन्द्र[12] द्विषतो मनः इत्यपयच्छति [13]अपजिज्यासतो जह्यप यो[13] नोऽरातीयति तं [14]जहि इति[14] ॥२७॥ प्राणाय त्वा इत्युत्तिष्ठति ॥२८॥ अपानाय त्वा इति व्रजति। व्यानाय त्वा सते त्वा = ज्योतिष्मन्तं जुहोमि स्वाहा इति ॥२९॥ वरमस्मै[15] ददाति ॥३०॥ यथायतनं पात्रꣳ सादयित्वा अग्निः प्रातःसवने[16] पात्वस्मान् इति वसतीवरीणां तृतीयमवनयतोऽपरस्मिन् कलशे। वैश्वानरो म = भक्षाः स्याम इति ॥३१॥ तदन्वेकधनमानयन्ति ॥३२॥ निग्राभ्याः स्थ ॥ ॥३३॥ [ ३ ]

निग्राभ्याः स्थ देवश्रुतः इति निग्राभ्यासु वाचयति शुक्राः शुक्रभृत आयुर्मे तर्पयत प्राणं मे = मा[17]वि तृषन्[17] इति ॥१॥ राजानं[18] न्युप्याधंमु-

---

१. P प्रचरिण्या. २--२. H संपृतैर्णुत चरि°. ३. MHP ग्रन्थं. ४. MHP °ध्वयुः. ५. MP उतमेनं मुरित; H उतमेनमुरित. ६. Cf BaudhŚS VII.4:203.21. ७. MHP यद्यनिष्टो°. ८. H °रात्रौ. ९. MH परिघो. १०. MHP °ग्राहं. ११. MHP चतस्रनक्तिना. १२-१२. MHP त्वे चेन्द्र. १३-१३. M. °जन्यवयो; HP °जित्या सत्रे जन्यवमो [ P जिज्या° ]. १४-१४. MP जिहीति. १५. MHP परस्मै. १६. P °सवनं. १७-१७. MH पितृष°. १८. MHP राजन्.

द्दधाति ॥२॥ देवस्य त्वा सवितुः प्रसवे इति ग्रावाणमादत्त उपाꣳशुसवनम् । °अश्विनो = हस्ताभ्यामाददे । ग्रावास्यध्वर[1] = पयस्वन्तं वृष्टिवनि वीर्यावन्तमभिमातिषाहम् इति ॥३॥ तमूर्ध्वंमुखं कृत्वोपाꣳशुग्रहणमस्मिन्नधि निधाय इन्द्राय त्वा वृत्रघ्ने इति राज्ञोऽधिमिमीते[2] । °इन्द्राय त्वा वृत्रतुर इन्द्राय त्वाऽभिमातिघ्न इन्द्राय त्वा वसुमते रुद्रवत आदित्यवत इन्द्राय त्वा सवितृवते बृहस्पतिवते विश्वदेव्यावते इति पञ्चकृत्वो यजुषा, तूष्णीं पञ्चकृत्वः ॥४॥ श्वात्रा स्थ वृत्रतुरः इत्यप उपसृजति निग्राभ्याभ्योऽधि[3] यजमानः । °राधो गूर्ता अमृतस्य पत्नी = पिबतु इति ॥५॥ यत्ते सोम[4] दिवि ज्योतिः इत्यभिमृशत एनम् । °यत्पृथिव्यां[5] यदुरा = दात्रे[6] वोचः[7] इति ॥६॥ धिषणे 'वीडू सती वीडयेथाम्[8] इति तिरश्चर्मफलके अभिमृशते। [9] °ऊर्जं दधाथामूर्जं[9] मे धत्तां=मा मा हिꣳसिष्टम् इति ॥७॥ ऐन्द्रः सोमोऽवीवृधं वो मनसा सुजाताः[10] इत्यद्भी[11] राजानꣳ सन्तर्पयति । °ऋतप्रजाता भग = सवनाय सोमम् इति ॥८॥ ज्योतिर्हिरण्यम् इत्येनꣳ हिरण्येन श्रीणाति । °तेन त्वा श्रीणामि ज्योतिरापस्तामिस्त्वा श्रीणामि ज्योतिश्छन्दाꣳसि तैस्त्वा श्रीणामि ज्योतिरिन्द्राग्नी ताभ्यां त्वा श्रीणामि [12]ज्योतिर्द्यावापृथिवी ताभ्यां त्वा श्रीणामि[12] शृतोऽसि शृतं कुरु[13] इन्द्राय त्वेन्द्रवाततमम् [14] इति ॥९॥ षडꣳशून् निषजते प्रतिप्रस्थाताऽन्तराङ्गुलेषु द्वौ द्वौ ॥१०॥ उपाꣳशुपात्रꣳ हस्तयोः कुरुते ॥११॥ अनागसस्त्वा[15] वयम् इति त्रिरध्वर्युः प्रहरत्यस्पर्शयन् । °इन्द्रेण प्रेषिता युजा[16] वायु = शमूः[17] इति ॥१२॥ अष्टौकृत्वोऽग्रेऽभिषुणोत्यननुसृजन् ॥१३॥ ग्रावाणꣳ संभरति ॥१४॥ उपाꣳशुपात्रे प्रथमावꣳशू आदत्ते ॥१५॥ प्रतिप्रस्थाता तावन्तरेण धारयति ॥१६॥ वाचस्पतये पवस्व वाजिन् इत्यध्वर्यू रानयति ॥१७॥ निषजते तौ ॥१८॥ एकादशकृत्वो द्वितीयमननुसृजन् ॥१९॥ ग्रावाणꣳ संभरति ॥२०॥ एवमेवोपाꣳशुपात्रे चतुर्थावꣳशू[18] आदत्ते ॥२१॥ [19]प्रतिप्रस्थाता तावन्तरेण[19] धारयति ॥२२॥

---

१. H °स्याध्वर. २. MHP राज्ञाधि°. ३. MP निग्राभ्योधि. ४. P सोमं. ५. MP पृथिव्या. ६. P धात्रे. ७. MHP वाच. ८–८. MHP विविस्वती पीडयेथाम्. ९–९. MHP ऊर्जा धातामू°. १०. MP जाता. ११. MHP इत्यजी. १२–१२. H oms. १३. MH कृत; P कुरुत. १४. H °वातयम्. १५. MHP अनागस्त्वः. १६. Cf TB III.7.9.1 : उप. १७. MHP शंमूः. १८. P चतुर्था°. १९–१९. MHP °प्रस्थातावन्तरेण.

वृषा[1] वृष्णो अꣳशुभ्यां गभस्तिपूतः इत्यध्वर्यु(-रानयति ॥२३॥ निष-)जते तौ[2] ॥२४॥ द्वादशकृत्वस्तृतीयमननुसृजन्[3] ॥२५॥ ग्रावाणꣳ [4]संभरति ॥ २६॥ एवमेवोपाꣳशुपात्रे[4] षष्ठावꣳशू आदत्ते[5] ॥२७॥ प्रतिप्रस्थाता तावन्तरेण धारयति ॥२८॥ देवो देवानां=तेभ्यस्त्वा इत्यध्वर्यु-रानयति ॥२९॥ निषजते तौ ॥३०॥ स्वाङ्कृतोऽसि इत्यस्मादध्वर्युर्ग्रह-मादत्ते । [6]मधुमतीर्न[6] इषस्कृधि इति ॥३१॥ दशापवित्रेण परिमृ(-ज्य पूर्वार्धे खरस्य दक्षिणा शिरसं निदधाति ॥३२॥ मनस्त्वाष्टु इत्येनमादायो-पोत्तिष्ठ- )[7]ति ॥३३॥ उर्वन्तरिक्षमन्विहि इत्युत्तरेण होतारं व्रजति । [7]विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यः इति ॥३४॥ स्वाहा त्वा सुभवः सूर्याय इति जुहोति ॥३५॥ भूरसि श्रेष्ठो रश्मीनाम् इति हुतमनु प्राणिति । [7]प्राणपाः प्राणं मे पाहि इति ॥३६॥ देवेभ्यस्त्वा मरीचिपेभ्यः इति प्राञ्चꣳ हस्तं परिधौ निमार्ष्टि ॥३७॥ दक्षिणेन ( होतारमागत्य एष ) ते योनिः इत्याग्रयणस्थाल्याꣳ सꣳस्रावमवनयति ॥३८॥ प्राणाय त्वा इति पात्रꣳ सादयति ॥३९॥ प्राणाय त्वा प्राणाय त्वा इत्यꣳशूनपिसृजति प्रतिप्रस्थाता राज्ञि[8] द्वौ द्वौ ॥४०॥ [ ४ ]

व्युपोहन्ते[9] राजानम् ॥१॥ उपसृजति ॥२॥ अभिषुण्वन्ति ॥३॥ निग्राभमुपयन्ति ॥४॥ प्रागपागुदगधराग् इत्यञ्जलिना राजानमादायाध्वर्युर्निग्राभ्यां (परिप्लाव-)यति । [7]तास्त्वा दिश आ धावन्त्वम्ब निष्वर इति ॥५॥ एतदेव निग्राभस्योपायनम्[10] ॥६॥ उपसृजति ॥७॥ अभिषुण्वन्ति ॥८॥ निग्राभमुपयन्ति ॥९॥ उपसृजति ॥१०॥ अभिषुण्वन्ति ॥११॥ (निग्राभमुपयन्ति ॥१२॥ उपसृजति ॥१३॥ अभिषुण्वन्ति)[11] ॥१४॥ निग्राभमुप(-यन्ति ॥१५॥ उप-)[12]सृजति ॥१६॥ अभिषुण्वन्ति ॥१७॥ चतुर्थेन संभरति ॥१८॥ तमपरस्मिन्कलश उन्नेताऽऽनयति ॥१९॥ नातो राजानं प्रत्याहरेयुः ॥२०॥ एकधनानां निषिच्य वसतीवरीभ्योऽध्यभिश्चो-

---

१. MHP पृषा. २. HP तन्न. ३. MHP °स्तृद्वितीय°. ४–४. MHP संभारत्येवोपांशु° [ P °वोंशु° . ५. P वादत्ते. ६. MP °मतीन्न. ७. Cf BaudhŚS VII.5 : 207.2–3,6. ८. MHP राज्ञी. ९. P व्युपोऽहन्ते. Cf BaudhŚS VII.6 : 208.5 : व्यपोहन्ते. १०. H निग्राभ्योपा. ११. MHP om. १२. MHP om.

त्योपसासृजत्युन्नेता ॥२१॥ आप्यायस्व समेतु ते इत्युपसृज्य राजानमाप्याययन्ति । °विश्वतः सोम=सङ्गथे इति ॥२२॥ सं ते पयाꣳसि इति राजन्यस्य । °समु यन्तु=धिष्व इति ॥२३॥ उपसृजति ॥२४॥ अभिषुण्वन्ति ॥२५॥ निग्राभमुपयन्ति ॥२६॥ उपसृजति ॥२७॥ अभिषुण्वन्ति ॥२८॥ निग्राभमुप(-यन्ति ॥२९॥ उप-)सृजति[1] ॥३०॥ अभिषुण्वन्ति ॥३१॥ निग्राभमुपयन्ति ॥३२॥ उपसृजति ॥३३॥ अभिषुण्वन्ति ॥३४॥ चतुर्थेन संभरति ॥३५॥ तमपरस्मिन् कलश उन्नेताऽऽनयति ॥३६॥ नातो राजानं प्रत्याहरेयुः ॥३७॥ एकधनानामेव निषिच्य वसतीवरीभ्योऽध्यभिश्चोत्योपसासृजत्युन्नेता ॥३८॥ आप्यायस्व समेतु ते इत्येवोपसृज्य राजानमाप्याययन्ति[2] । °विश्वतः=सङ्गथे इति ॥३९॥ सं ते पयाꣳसि इत्येव राजन्यस्य । °समु यन्तु=धिष्व इति ॥४०॥ उपसृजति ॥४१॥ अभिषुण्वन्ति ॥४२॥ निग्राभमुपयन्ति ॥४३॥ उपसृजति[3] ॥४४॥ [3]अभिषुण्वन्ति ॥४५॥ निग्राभमुपयन्ति ॥४६॥ उपसृजति[3] ॥४७॥ अभिषुण्वन्ति ॥४८॥ निग्राभमुपयन्ति ॥४९॥ उपसृजति ॥५०॥ अभिषुण्वन्ति ॥५१॥ चतुर्थेन संभरति ॥५२॥ नाप्याययन्ति[4] ॥५३॥ तद्वा एतन्नवकृत्वो निग्राभमुपयन्ति, त्रिः संभरन्ति, द्विराप्याययन्ति[4] ॥५४॥ सुदुग्धꣳ राजानं कुर्वन्ति दशापवित्राभ्याम् ॥५५॥ तमपरस्मिन् कलश उन्नेताऽऽनयति ॥५६॥ समीचीनमुखान् ग्राव्णः[5] स्थापयित्वर्जीषमेभ्यो व्यपोहन्ति[6] ॥५७॥ उद्गातार एषु द्रोणकलशमध्यूहन्ति ॥५८॥ आदित्यमुद्यन्तं प्रतीक्षतेऽन्तर्यामेण ॥५९॥ उदित आदित्ये संप्रेष्यति उदीचीनदशं[7] (दशा-)पवित्रं[8] वितनु सन्ततꣳ[9] शुक्रं पवय यजमानग्रहान् ग्रहीष्यामः इति ॥६०॥ उपरि द्रोणकलश उदञ्चो निग्राभ्यासु पवते[10] ॥६१॥ अपरस्मात् कलशादाहृता[11] निग्राभ्याः पवित्रे[12] द्रोणकलशे सन्ततः शुक्रः पवते ॥६२॥ अन्तर्यामपात्रमादत्ते ॥६३॥ तस्मिन् गृह्णाति उपयामगृहीतोऽस्यन्तर्यच्छ मघवन् पाहि=मघवन् मादयस्व इति ॥६४॥ स्वाङ्कृतोऽसि इत्यपयच्छति । °मधुमतीर्न इषस्कृधि इति ॥६५॥

---

१. MHP om text before सृजति [M °जन्ति]. २. MHP add स. ३–३. P oms. ४. M °प्यायन्ति. ५. MHP ग्राविण्णः. ६. P व्यूहन्ति. ७. MHP °दशः. ८. MHP om दशा. ९. MHP सन्तत. १०. P पर्वते. ११. MHP °दाहृतो. १२. MHP add पवित्रं.

दशापवित्रेण परिमार्ष्टि[1] ॥६६॥ [2]मनस्त्वाष्टु इत्युत्तिष्ठति[2] ॥६७॥ उर्वन्तरिक्षमन्विहि इति दक्षिणेन होतारं व्रजति । [3]विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यः इति ॥६८॥ स्वाहा त्वा[3] सुभवः[4] सूर्याय इति जुहोति ॥६९॥ धूरसि श्रेष्ठो रश्मीनाम् इति हुतमन्वपानिति । [5]अपानपा अपानं मे पाहि इति ॥७०॥ देवेभ्यस्त्वा[5] मरीचिपेभ्यः इति प्रत्यञ्चꣳ हस्तं परिधौ निमार्ष्टि ॥७१॥ उत्तरेण [6]होतारमागत्य एष[6] ते योनिः इत्याग्रयण-स्थाल्याꣳ सꣳ स्रावमवनयति ॥७२॥ अपानाय त्वा इति पात्रꣳ सादयति ॥७३॥ व्यानाय त्वा इत्युपाꣳशुसवनमभिमृशति ॥७४॥ मनसा ग्रहा गृह्यन्त [7]आऽऽग्रयणाद् ॥७५॥ उपयाममैन्द्रवायवं[7] गृह्णाति ॥७६॥ आ वायो[8] ॥७७॥ [५] [ इति प्रथमोऽनुवाकः ।

## [ ग्रहग्रहणम् ]

आ वायो भूष शुचिपा=पूर्वपेयम् । उपयामगृहीतोऽसि वायवे त्वा इत्यप-यच्छति ॥१॥ उप(-यामं प्र-)[9]गृह्णाति इन्द्रवायू इमे=शन्ति हि । उपयाम-गृहीतोऽसीन्द्रवायुभ्यां[10] त्वा जुष्टं गृह्णाम्येष ते योनिः सजोषाभ्यां त्वा इति ॥२॥ दशापवित्रेण परिमृज्य सादयति ॥३॥ हिरण्येन श्रीणाति ॥४॥ मैत्रावरुणपात्रमादत्ते ॥५॥ तस्मिन् गृह्णाति अयं वां[11] मित्रावरुणा सु=हवम् । उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वा जुष्टं गृह्णाम्येष ते योनिर्ऋता-युभ्यां त्वा इति ॥६॥ दशापवित्रेण (परिमृज्य)[12] सादयति ॥७॥ पयसा श्रीणाति ॥८॥ उत्सृप्याश्विन[13]ꣳ शुक्रपात्रमादत्ते ॥९॥ तस्मिन् गृह्णाति अयं वेन=रिहन्ति । उपयामगृहीतोऽसि शण्डाय त्वा जुष्टं गृह्णाम्येष ते योनि-र्वी(-रतां पाहि इति ॥१०॥ दशापवित्रे-)ण परिमृज्य सादयति ॥११॥ हिरण्येन श्रीणाति ॥१२॥ मन्थिपात्रमादत्ते ॥१३॥ तस्मिन् गृह्णाति तं प्रत्नथा पूर्वथा=वर्धसे । उपयामगृहीतोऽसि मर्काय त्वा जुष्टं गृह्णाम्येष ते योनिः [14]प्रजाः पाहि इति[14] ॥१४॥ दशापवित्रेण परिमृज्य सादयति ॥१५॥ सक्तुभिः श्रीणाति ॥१६॥ द्वयोर्धारयोराग्रयणं गृह्णाति ॥१७॥ प्रस्थाप-

१. P संमार्ष्टि. २–२. MHP मनस्त्वाष्ट्वित्युत्ति°. ३. P oms. ४. MHP सुभगः. ५. MHP देवस्त्वा. ६–६. MHP °मागतैष. ७–७. MH °ग्रयणा-प्युप; P °ग्रयागप्युप°. ८. HP वयो. ९. MHP om. १०. P इन्द्राय°. ११. MHP वा. १२. MHP om. १३. MHP °त्सृज्या°. १४–१४. MHP प्रजाहीति=.

यन्त्य(-ग्रयणम् ॥१८॥ (ये देवा) दिव्येकादश स्थ इति गृह्णाति। °पृथिव्यामध्ये[1]=जुषध्वम्। उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्यो जुष्टं गृह्णामि। आग्रयणोऽसि=विशं[2] त्वं पाहीन्द्रियेण वीर्येण इति ॥१९॥ प्रागावृत्तो दक्षिणं जान्वाच्याग्रयणमभि हिंकरोति ॥२०॥ हिꣳ हिꣳ इत्याह। °सोमः प(-वते सोमः पवते सोमः पवतेऽस्मै ब्रह्मणे पवतेऽ)स्मै क्षत्राय[3] (पव-)तेऽस्मै[4] विशे[4] पवत इषे पवत[5] ऊर्जे पवते[6]=सुभूताय पवते[6] ब्रह्मवर्चसाय पवते इति ॥२१॥ अष्टौकृत्वः पवयित्वा एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः इति दशापवित्रेण परिमृज्य सादयति ॥२२॥ हिरण्येन श्रीणाति[7] ॥२३॥ वाचात ऊर्ध्वं ग्रहा गृह्यन्ते ॥२४॥ अतिग्राह्यान् गृह्णाति ॥२५॥ (उक्थ्यस्थाली-)मादत्ते ॥२६॥ तस्यां गृह्णाति उपयागृहीतोऽसीन्द्राय त्वा बृहद्वते=विष्णवे त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वोक्थायुवे इति ॥२७॥ दशापवित्रेण परिमृज्य सादयति ॥२८॥ हिरण्येन श्रीणाति ॥२९॥ अपरेणात्मानं ध्रुवस्थालीमाहृत्य तस्यां गृह्णाति मूर्धानं दिवो अरतिं=देवाः। उपयामगृहीतोऽस्यग्नये त्वा (वैश्वा-)नराय त्वा[8] जुष्टं गृह्णामि। ध्रुवोऽसि ध्रुवक्षिति=क्षित्तम इति ॥३०॥ एतस्मिन् काल उदङ्कमुन्नेता पर्यस्यति निग्राभ्या यजमानः ॥३१॥ एष ते योनिर्ध्रुव वैश्वानराभ्यां त्वा इति दशापवित्रेण परिमृज्य सादयन्ति ॥३२॥ हिरण्येन श्रीणाति ॥३३॥ आ माऽस्कान् इति द्रप्सानास्कन्नानभिमन्त्रयते ॥३४॥ [६]

आ माऽस्कान् इति द्रप्सानास्कन्नानभि मन्त्रयते। °सह प्रजया सहरायस्पोषेणेन्द्रियं मे वीर्यं मा निर्वधीः इति ॥१॥ द्रप्सश्चस्कन्द इति दशापवित्रेण हस्तौ प्रमृष्टे। °पृथिवीमनु द्या=होत्राः इति ॥२॥ अप उपस्पृश्य प्रस्तरमादाय पवमानꣳ सन्तनोति ॥३॥ उपयामगृहीतोऽसि प्रजापतये त्वा इति द्रोणकलशमभिमृशति ॥४॥ इन्द्राय त्वा इत्याधवनीयम्[9] ॥५॥ विश्वेभ्यस्त्वा देवेभ्यः इति पूतभृतम् ॥६॥ निष्क्रामति ॥७॥ अन्वारभन्त एनं प्रस्तोता[10] प्रस्तोतारं प्रतिहर्ता प्रतिहर्तारमुद्गातोद्गातारं ब्रह्मा ब्रह्माणं (यजमानो)[11] यजमानमन्ये ॥८॥ निष्क्रम्य विप्रुषाꣳ होमं जुहोति

---

१. MHP पृथिव्यां मध्ये. २. MHP विश्वं. ३. MHP क्षत्राणि. ४–४. MHP तस्मै विश्वे. ५. P वपते. ६. MP वपते. ७. MHP श्रीणा. ८. MH om. ९. MHP हव°. १०. MHP add एनमन्वारभन्ते. ११. MH om.

यस्ते द्रप्सः स्कन्दति = तं जुहोमि स्वाहा इति ॥९॥ ऋचा स्तोमꣳ समर्धय इत्यनुचरीम् । [1]गायत्रेण = वर्तनि स्वाहा इति ॥१०॥ सप्तहोतारं मनसानुद्रुत्य स्रुवाहुतिं जुहोति ॥११॥ वागग्रेगा अग्र एतु इत्युदञ्च आस्तावाय सर्पन्ति । ऋजुगा देवेभ्यो = माने च इति ॥१२॥ ऋक्सामयोरुपस्तरणमसि इत्यास्तावे बर्हिरुपास्यति । मिथुनस्य प्रजात्यै इति ॥१३॥ उपविशन् प्रस्तोत्रे प्रस्तरं प्रयच्छति ॥१४. वायुर्हिङ्कर्ता इत्युपाकरणं जपति । अग्निः प्रस्तोता=प्राणं मयि दधतु मयि प्राणा हुꣳ सोमः पवते इति ॥१५॥ ब्रह्मन् स्तोष्यामः ॥१६॥ प्रशास्तः इत्याह प्रस्तोता ॥१७॥ देव सवितरेतत्ते प्राह इति प्रसवं जपति ब्रह्मा । तद् प्र च=सवितुः प्रसवे (इति)[2] ॥१८॥ इन्द्रवन्त स्तुत इति निराह ॥१९॥ सामनुद्द्रते[3] प्राञ्चꣳ राजानमुन्नेता संपवयति पूतभृति ॥२०॥ न रिच्यादाधवनीयं[4] ग्रहावकाशेभ्यः ॥२१॥ दशहोतारमध्वर्युर्व्याचष्टे ॥२२॥ यदा पञ्चम्या प्रस्तौत्यथान्वारोहं वाचयति श्येनोऽसि गायत्र[5]=पारय इति ॥२३॥ स्तुते संप्रेष्यति अग्नीदग्नीन् विहर बर्हिस्तृणाहि पुरोडाशाँ[6] अलंकुरु प्रतिप्रस्थातः पशुमुपावर्तय इति ॥२४॥ आगत्य [7]विष्णो त्वं नो अन्तमः इति राजानमुपतिष्ठते । शर्म यच्छ=अक्षितम् इति ॥२५॥ अग्न आ याहि वीतये इत्याग्नीध्रं यज्ञोपचारेण यज्ञमुपचरति । गृणानो=बर्हिषि इति [7]॥२६॥ विष्णो त्वं नो अन्तमः इत्येव हविर्धाने । शर्म यच्छ = अक्षितम् इति ॥२७॥ अग्निर्मूर्धा इति स्रुचोऽभिमृशति । दिवः = [8]जिन्वति इति[8] ॥२८॥ वायो शतꣳ हरीणाम् इति वायव्यानि । युवस्व = [9]पाजसा इति ॥२९॥ इन्द्रं विश्वा अवीवृधन् इति [9]सदः । समु = सत्पतिं पतिम् इति ॥३०॥ एहि यजमान इत्युक्त्वाऽध्वर्युः प्रपद्य हविर्धाने [10]या वां[10] कशा मधुमती इत्याश्विनं द्रोणकलशाद्[11] गृह्णाति । अश्विना = मिमिक्षितम्[12] । उपयामगृहीतोऽस्यश्विभ्यां त्वा जुष्टं गृह्णाम्येष ते योनिर्माध्वीभ्यां त्वा इति ॥३१॥ दशापवित्रेण परिमृज्य सादयति ॥३२॥ हिरण्येन श्रीणाति ॥३३॥ ग्रहावकाशैश्चरति[13] ॥३४.। प्राणाय मे इत्युपाꣳशुमवेक्षते[14] ॥३५॥ [७]

१. MHP °व्युपक. २. MHP om. ३. MHP नुदुते. ४. MHP रिञ्च्यादा.° ५. MHP गायत्रः. ६. HP °डाशं. ७–७. P repeats. ८–८. MHP जिन्वतेति. ९–९. H oms; M वाजसा. १०–१०. MP यवां; H यावा. ११. MHP कलशोद्. १२. MH मिमिक्षत; P मिमित. १३. MHP गृहाव°. १४. MP °मपेक्षते.

प्राणाय मे इत्युपांशुमवेक्षते । °वर्चोदा = तस्य त इदमुन्मृजे ब्रह्मवर्चसाय इति यत्कामो वा भवति ॥१॥ अपानाय मे इत्यन्तर्यामम् ॥२॥ व्यानाय मे इत्युपांशुसवनम् ॥३॥ वाचे मे इत्यैन्द्रवायवम् ॥४॥ दक्षक्रतुभ्यां मे इति मैत्रावरुणम् ॥५॥ श्रोत्राय मे इत्याश्विनम्[१] ॥६॥ चक्षुर्भ्यां मे इति शुक्रामन्थिनौ ॥७॥ आत्मने इत्याग्रयणम् ॥८॥ वीर्याय मे इति यदि कश्चिदतिग्राह्यो भवति ॥९॥ अङ्गेभ्यो मे इत्युक्थ्यम् ॥१०॥ आयुषे मे इति ध्रुवम् ॥११॥ प्रतिष्ठायै[२] मे इत्यृतुपात्रे ॥१२॥ विष्णोर्जठरमसि इत्याहवनीयम् ॥१३॥ इन्द्र(-स्य जठरमसि इ-)ति द्रोणकलशम् ॥१४॥ इन्द्रस्य जठरमसि इत्याधवनीयम् ॥१५॥ विश्वेषां देवानां जठरमसि इति पूतभृतम् ॥१६॥ सोम त्वामारमामहे[३] इति द्रोणकलशम् । °उद्गातारं नृचक्षसं पारयान्नः स्वस्तये इति ॥१७॥ कोऽसि को नाम इत्यत एवाहवनीयं परेक्षते । °कस्मै त्वा काय त्वा=(पोषैः इति ॥१८॥ विश्वेभ्यो मे रूपेभ्यः) इति पृषदाज्यमवेक्षते । °वर्चोदा वर्चसे पवस्व तस्य मे रास्व तस्य ते भक्षीय तस्य त इदमुन्मृजे पशुभ्यः इति यत्कामो वा भवति ॥१९॥ स्रुक्षु च ग्रहेषु च दशहोतारमध्वर्युर्व्याचष्टे ॥२०॥ अप उपस्पृश्य निष्क्रम्य परिवीयमाणायानुवाच आहुः[४] ॥२१॥ आग्नेयः पशुः सवनीयः ॥२२॥ (समानं) कर्माऽऽ[५] प्रवरेभ्यः ॥२३॥ प्रवरं प्रवृणीते ॥२४॥ आश्रावयति[६] ॥२५॥ ओ श्रावय इत्याह ॥२६॥ अग्निर्देवो होता[७]=होतुर्नाम भवति ॥२७॥ जुहुते होता प्रवृताहुतिम् जुष्टो वाचो भूयासम् इति ॥२८॥ अथाध्वर्युर्जुहोति अग्निं युनज्मि प्रातर्यावाणमुषाबुधं[८] स्वाहा इति ॥२९॥ ओ श्रावय इत्याह ॥३०॥ मित्रावरुणौ प्रशास्तारौ प्रशास्त्रादित्यसौ मानुषः[९] इत्येव शकलं प्रास्यति यथा तस्य नाम भवति ॥३१॥ जुहुते मैत्रावरुणः प्रवृताहुतिम् जुष्टो वाचो भूयासम् इति ॥३२॥ अथाध्वर्युर्जुहोति मित्रावरुणौ युनज्मि प्रातर्यावाणावुषाबुधौ स्वाहा इति ॥३३॥ ओ श्रावय इत्याह ॥३४॥ इन्द्रो[१०] ब्राह्मणादित्यसौ मानुषः इत्येव शकलं प्रास्यति यथा तस्य नाम भवति ॥३५॥ जुहुते ब्राह्मणाच्छंसी प्रवृताहुतिम् जुष्टो वाचो भूयासम् इति ॥३६॥

---

१. MHP °त्यश्वि°. २. MHP °ष्ठाया. ३. H रमाय. ४–४. MHP वाचाह. ५. MHP कर्म. ६. MHP °श्रावये°. ७. MHP abr; see supra V.4.27–30. ८. MHP प्रातर्यवणावुषाबुधौ. ९. P मनुषः. १०. MH इन्द्रा.

अथाध्वर्युर्जुहोति इन्द्रं[1] युनज्मि प्रातर्यावाणमुषाबुधꣳ स्वाहा इति ॥३७॥ ओ श्रावय इत्याह ॥३८॥ मरुतः पोत्रादित्यसौ[2] मानुषः इत्येव शकलं प्रास्यति यथा तस्य नाम भवति ॥३९॥ जुहुते पोता प्रवृताहुतिम् जुष्टो वाचो भूयासम् इति ॥४०॥ अथाध्वर्युर्जुहोति मरुतो युनज्मि प्रातर्याव्णः[3] उषाबुधः स्वाहा इति ॥४१॥ ओ श्रावय इत्याह ॥४२॥ ग्नावो[4] नेष्ट्रादित्यसौ मानुषः इत्येव शकलं प्रास्यति यथा तस्य नाम भवति ॥४३॥ जुहुते नेष्टा प्रवृताहुतिम्[5] जुष्टो वाचो भूयासम् इति ॥४४। अथाध्वर्युर्जुहोति ग्ना[6] युनज्मि प्रातर्यावा[7] उषाबुधः स्वाहा इति ॥४५॥ ओ श्रावय इत्याह ॥४६॥ अग्निराग्नीध्रादित्यसौ मानुषः इत्येव शकलं प्रास्यति यथा तस्य नाम भवति ॥४७॥ जुहुतेऽग्नीत्प्रवृताहुतिम् जुष्टो वाचो भूयासम् इति ॥४८॥ अथाध्वर्युर्जुहोति अग्निं युनज्मि प्रातर्यावाणमुषाबुधꣳ स्वाहा इति ॥४९॥ अथैता आहुतीर्जुहोति ॥५०॥ बृहस्पतिं युनज्मि प्रातर्यावाणमुषाबुधꣳ स्वाहा इति ब्रह्मणः प्रति ॥५१॥[8]सूर्यं युनज्मि[8] प्रातर्यावाणमुषाबुधꣳ स्वाहा इति सर्वस्मात्सदसः प्रत्युद्गातुः प्रति ॥५२॥ प्रजापतिं युनज्मि[9] प्रातर्यावाणमुषाबुधꣳ स्वाहा इति सर्वस्मात्सदसः प्रति ॥५३॥ विष्णुं युनज्मि प्रातर्यावाणमुषाबुधꣳ स्वाहा इत्यच्छावाकात्प्रति ॥५४॥ ब्रह्म युनज्मि प्रातर्यावाणमुषाबुधꣳ[10] स्वाहा इति सुब्रह्मण्यात्प्रति ॥५५॥ पर्जन्यं युनज्मि प्रातर्यावाणमुषाबुधꣳ स्वाहा इत्युन्नेतुः प्रति ॥५६॥ एतावन्त एवर्त्विजः ॥५७॥ अत्याश्रावयत्येत्रातः ॥५८॥ ओ श्रावय इत्याह । अग्निर्हं दैवीनां विशां पुर एताऽयꣳ सुन्वन् यजमानो मनुष्याणां तयोरस्थूरि=तनुवः इति ॥५९॥ प्रसिध्यति कर्म ॥६०॥ अपाव्यानां यजूꣳष्यनु द्विर्दशहोतुराहुतिं[11] जुहोति ॥६१॥ पञ्च[12] पवमाने व्याचष्टे ॥६२॥ स्रुवं च स्रुक्षु ॥६३॥ प्रसिध्यत्येव कर्म ॥६४॥ वपया प्रचर्य आपो हि ष्ठा मयोभुवः इति तृचेन मार्जयन्ते चात्वाले ॥६५॥ संप्रसर्पन्त्येवातः ॥६६॥ [८]

[संप्रसर्पणम्]

संप्रसर्पन्त्येवातः ॥१॥ स्फ्यः स्वस्तिः इत्युत्करमुपतिष्ठन्ते । विघनः स्वस्तिः=उप ह्वयध्वम् इति ॥२॥ उप मा द्यावापृथिवी ह्वयेताम् इति

१. MHP इन्द्रो. २. MHP पात्रादि°. ३. MHP °र्याविण्ण. ४. MHP नावो. ५. MH प्रावृता°. ६. MHP अग्नावो. ७. MHP °र्याविण्ण. ८–८. MHP twice. ९. H oms. १०. MHP प्रातर्यविोषाभूव. ११. P oms आहुतिं. १२. MHP यञ्च.

द्यावापृथिवी ॥३॥ (उपाऽऽस्ताव: इ-)त्यास्तावम् ॥४॥ उप कलश: इति कलशम् ॥५॥ उप सोम: इति सोमम् ॥६॥ उपाग्नि: इत्यग्निम् ॥७॥ उप देवा: इति देवान् ॥८॥ उप यज्ञ: इति यज्ञम् ॥९॥ उप मा होत्रा उपहवे ह्वयन्ताम् इति होत्रा: ॥१०॥ नमोऽग्नये मखघ्ने मखस्य मा यशोऽर्याद् इत्याहवनीयमुपतिष्ठन्ते ॥११॥ नमो रुद्र(-।य मखघ्ने नमस्कृत्या मा पाहि इत्याग्नीध्रम् ॥१२॥ नम इन्द्राय) मखघ्न [1]इन्द्रियं मे वीर्यं मा निर्वधी:[1] इति मार्जालीयम् ॥१३॥ दृढे स्थ: शिशिरे इतीमे एव । [2]समीची माऽꣳहसस्पातꣳ सूर्यो मा देवो दिव्यादꣳहसस्पातु वायुरन्तरिक्षादग्नि: पृथिव्या यम: पितृभ्य: सरस्वती मनुष्येभ्य: इति ॥१४॥ देवी द्वारौ (मा मा संताप्तम् इति सदस: संमृशति ॥१५॥ नम: सदसे इति सद: प्रे-)क्षते[2] ॥१६॥ नम: सदसस्पतये इति यजमानम् ॥१७॥ नम: सखीनां पुरोगाणां चक्षुषे इति पूर्वप्रसृप्तानामक्षिणीक्षते ।[3] [2]नमो दिवे नम: पृथिव्यै इति ॥१८॥ अहे दैधिषव्य इत्यतस्तृणमादत्ते यत्रोपवेक्ष्यन् भवति ॥१९॥ [4]उदतस्ति(-ष्ठान्यस्य सदने सीद योऽस्मत्पाक-) [5]तर: इति[5] तृणं निरस्यति ॥२०॥ इदमहमायुष: सदने [6]सीदे इति[6] पूर्वेण होतुर्धिष्णियं प्रत्यगावृत्त उपस्थं[7] कृत्वोपविशति ॥२१॥ उपविश्य जपति उन्निवत उद्व:=द्वाह्न: इति ॥२२॥ आगन्त पितर: सोम्या: इति सदसो दक्षिणार्धं परेक्षते ॥२३॥ पितृमानहं युष्माभिर्भूयासम् इत्यञ्जलिं करोति सुप्रजसो मया यूयं ( भूयास्त इति ॥२४॥ अध्वर्युश्च प्रतिप्रस्थाता च ) चमसान्वा[8] पुरोडाशानभ्येत:[9] ॥२५॥ प्रात: प्रात:सवनस्येन्द्राय[10] पुरोडाशानामवदीयमानानामनुब्रूहि इत्याहाद्रवन्नध्वर्यु:[11] ॥२६॥ द्वयो: प्रतिप्रस्थातोपस्तृणीते ॥२७॥ द्विर्धानानां जुह्वामवद्यति, द्वि: करम्भस्य, द्वि: परिवापस्य,[12] द्वि: पुरोडाशस्य, द्वि: पयस्याया: ॥२८॥ अभिघारयति ॥२९॥ प्रत्यनक्ति ॥३०॥ सकृदुत्तरार्धादुपभृत्यवद्यति ॥३१॥ द्विरभिघारयति ॥३२॥ प्रत्यनक्ति ॥३३॥ सन्धायाध्वर्यव आदधाति ॥३४॥ ओ श्रावय

---

१–१. MHP मखस्य मा यशोर्यादिति [ MP यशोर्योदिति ] repeated instead of इन्द्रियं मे वीर्यं मा निर्वधी:. २. Cf. BaudhŚS VII.10:215. 17–18; P क्षाते. Cf. infra.VII.14.27. ३. H °क्षिणीक्षते. ४. MH °त्युदतस्ति; P त्युदव्रतस्ति. ५–५. MHP वसुरिति. ६–६. MHP सीदेति. ७. H उपस्थ. ८. MP °चमसान्नान्. ९. P पुरोशान°. १०. P सवस्ये°. ११. P °हाद्रवन्न° १२. MHP परिवास्य.

इत्याह ॥३५॥ प्रातः प्रातःसवनस्येन्द्राय[1] पुरोडाशान् प्रस्थितान् [2]प्रेष्य इति[2] ॥३६॥ वषट्कृते जुहोति ॥३७॥ अग्नयेऽनुब्रूहि इत्याह पुरोडाशानाँ स्विष्टकृतँ समानयमानः ॥३८॥ ओ[3] श्रावय इत्याह ॥३९॥ अग्नये [2]प्रेष्य इति[2] ॥४०॥ वषट्कृते जुहोति ॥४१॥ अत्याक्रम्य[4] यथायतनँ स्रुचौ सादयित्वैतान् पुरोडाशाँस्तान् होत्र उपनिधायाद्रवन्नाह वायव इन्द्रवायुभ्यामनुब्रूहि इति ॥४२॥ ऐन्द्रवायवं ग्रहमादत्ते[5]ऽध्वर्युः ॥४३॥ [ ९ ] [ इति द्वितीयोऽनुवाकः ]

## [ द्विदेवत्यग्रहाः ]

( ऐन्द्र-)[6]वायवं=ध्वर्युः ॥१॥ उपयामगृहीतोऽसि इति प्रतिगृह्णीते प्रतिप्रस्थातौदुम्बरेणादित्यपात्रेण चतुःस्रक्तिना द्रोणकलशात् । [7]वाक्षदसि[7] वाक्पाभ्यां त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रुवस्याध्यक्षाभ्यां गृह्णामि इति ॥२॥ अध्वरो यज्ञोऽयमस्तु देवाः इति निष्क्रामते । [7]ओषधीभ्यः पशवे नो जनाय इति ॥३॥ निष्क्रम्याध्वर्युर्यजुर्जपति विश्वस्मै भूतायाध्वरोऽसि स पिन्वस्व घृतवद्देव सोम इति ॥४॥ ओ श्रावय इत्याह ॥५॥ वायव इन्द्रवायुभ्यां [2]प्रेष्य इति[2] ॥६॥ वषट्कृते जुहुतः ॥७॥ पुनर्वषट्कृते जुहुतः ॥८॥ द्विर्द्विरेतौ हूयेते ॥९॥ सकृत्सकृदुत्तरे द्विदेवत्याः ॥१०॥ यो न इन्द्रवायू अभिदासति इत्यनुमन्त्रयेते । [7]भ्रातृव्य उत्पिपीते शुभस्पती इदमहं तमधरं पादयामि यथेन्द्राहमुत्तमश्चेतयानि इति ॥११॥ प्रतिप्रस्थातुः पात्रे सँस्रावमवनयति ॥१२॥ तमु स आदित्यस्थाल्यां देवेभ्यस्त्वा इति ॥१३॥ द्रुत्वैतत्पात्रँ होत्र उपनिधायाद्रवन्नाह मित्रावरुणाभ्यामनुब्रूहि इति ॥१४॥ मैत्रावरुणं ग्रहमादत्तेऽध्वर्युः ॥१५॥ उपयामगृहीतोऽसि इत्येव प्रतिगृह्णीते[8] प्रतिप्रस्थाता । [7]ऋतसदसि चक्षुष्पाभ्यां त्वा क्रतुपाभ्यां=गृह्णामि इति ॥१६॥ निष्क्रामते ॥१७॥ ओ श्रावय इत्याह ॥१८॥ मित्रावरुणाभ्यां [2]प्रेष्य इति[2] ॥१९॥ वषट्कृते जुहुतः ॥२०॥ यो नो मित्रावरुणावभिदासति इत्यनुमन्त्रयेते[9] । [7]भ्रातृव्य उत=तयानि इति ॥२१॥ प्रतिप्रस्थातुः पात्रे सँस्रावमवनयति ॥२२॥ तमु स आदित्यस्थाल्यां विश्वे देवेभ्यस्त्वा इति ॥२३॥ द्रुत्वैतत्पात्रँ होत्र उपनिधा-

१. MP °सवस्ये°. २–२. MHP प्रेष्यति. ३. H आ. ४. MHP आक्रम्य. ५ MHP ग्रहणमा°. ६. MHP om. ७. MP वाक्षसदसी. ८. H पतिगृ°. ९. MHP मन्त्रयेत.

याद्रवन्नाह अश्विभ्यामनुब्रूहि इति ॥२४॥ आश्विनं ग्रहमादत्तेऽध्वर्युः ॥२५॥ उपयामगृहीतोऽसि इत्येत्र प्रतिनिगृह्णीते प्रतिप्रस्थाता । °श्रुतसदसि श्रोत्रपाभ्यां त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रुवस्याध्यक्षाभ्यां[1] गृह्णामि इति ॥२६॥ निष्क्रामते ॥२७॥ ओ श्रावय इत्याह ॥२८॥ अश्विभ्यां [2]प्रेष्य इति[2] ॥२९॥ वषट्कृते जुहुतः ॥३०॥ यो नोऽश्विनावभिदासति इत्यनुमन्त्रयेते । °भ्रातृव्य=तयानि इति ॥३१॥ प्रतिप्रस्थातुः पात्रे सꣳस्रावमवनयति ॥३२॥ तमु स आदित्यस्थाल्यां विश्वेभ्यस्त्वा देवेभ्यः इति ॥३३॥ विष्णवुरुक्रम इत्येनमेतेनैव पात्रेणापिदधाति । °एष ते सोमस्तꣳ रक्षस्व तं ते दुश्चक्षा[3] माऽवख्यद् इति ॥३४॥ द्रुत्वेतत्पात्रꣳ होत्र[4] उपनिधायाद्रवन्नाह उन्नीयमानेभ्यो[5]ऽनुब्रूहि होतुश्चमसमनून्नयध्वमुभयतः[6] शुक्रान् कुरुध्वमच्छावाकस्य चससाध्वर्यो मा त्वमुन्नेष्ठाः इति ॥३५॥ प्रोक्षिताप्रोक्षिताश्चत्वारः[7] शकला उपक्लृप्ता भवन्ति ॥३६॥ शुक्रौ प्रोक्षितौ, कृष्णावप्रोक्षितौ ॥३७॥ ( शुक्र-)मध्वर्यु-(-रादत्ते ) मन्थिनं प्रतिप्रस्थाता ॥३८॥ शुक्राभ्याꣳ शकलाभ्यामुपरिष्टादपिधत्तः, कृष्णाभ्यामुपयच्छतः ॥३९॥ स्तुतोऽसि जनधा देवास्त्वा शुक्रपाः प्रणयन्तु इत्यध्वर्युर्निष्क्रामति ॥४०॥ स्तुतोऽसि=स्त्वा मन्थिपाः प्रणयन्तु इति प्रतिप्रस्थाता ॥४१॥ पूर्वेण हविर्धाने अपरेणाहवनीयं प्रत्यङ्ङावर्तयति ॥४२॥ तस्य नाभ्यां ( ब्रह्म ) संधत्तम् इति ग्रहौ[8] संधत्तः । °तन्मे जिन्वतम्[9] ॥४३॥ [ १० ]

ब्रह्म संधत्तं तन्मे जिन्वतं, क्षत्रं=जिन्वतं, विशꣳ संधत्तं °तां मे[10] जिन्वतं, इषं=तां मे जिन्वतं, गौपत्यꣳ[11] संधत्तां तन्मे जिन्वतं, प्राणꣳ संधत्तां=वाचꣳ संधत्तां तां मे जिन्वतम् इति ॥१॥ सुवीराः प्रजाः प्रजनयन् परीहि इति दक्षिणेनाहवनीयमध्वर्यु(-रुत्तरवेदिं) परिक्रामति[12] । °शुक्रः शुक्रशोचिषा इति ॥२॥ सुप्रजाः प्रजाः प्रजनयन् परीहि इत्युत्तरेण प्रतिप्रस्थाता । ( °मन्थी मन्थिशोचिषा इति)[13] ॥३॥ तौ[14] संजग्मानौ दिव आ पृथिव्याः इत्यन्तरा यूपं चाहवनीयं च ग्रहौ समागमयतः[15] । °प्राणः स्थः प्राणं मयि धत्तं प्राणं यज्ञाय धत्तं प्राणं यज्ञपतये धत्तम् ॥ अपानः स्थोऽपानं मयि

---

१. MP ध्रुवाध्यक्षा°. २–२. MHP प्रेष्यति. ३. P दृश्चक्षा. ४. P adds प्रति. ५. MHP °हवनीयमा° ६. MHP °मुमवयः. ७. MH प्रोक्षिताः प्रो°. ८. P ग्रहो. ९. MHP जिन्वतः. १०-१०. H ता नो. ११. MHP गौवत्यं. १२. MHP °क्रामत. १३. MHP om. १४. H oms. १५. P °गमयथ.

धत्तमपानं यज्ञाय धत्तमपानं यज्ञपतये धत्तम् ॥ व्यानः स्थो व्यानं मयि धत्तं व्यानं यज्ञाय धत्तं व्यानं यज्ञपतये धत्तम् ॥ चक्षुः स्थश्चक्षुर्मयि धत्तं चक्षुर्यज्ञाय धत्तं चक्षुर्यज्ञपतये धत्तम् ॥ श्रोत्रꣳ स्थः श्रोत्रं मयि धत्तꣳ श्रोत्रं यज्ञाय धत्तꣳ श्रोत्रं यज्ञपतये धत्तम् ॥ मनः स्थो मनो मयि धत्तं मनो यज्ञाय धत्तं मनो यज्ञपतये धत्तम् ॥ वाक् स्थो वाचं मयि धत्तं वाचं यज्ञाय धत्तं वाचो यज्ञपतये धत्तम् ॥ तौ देवौ शुक्रामन्थिनौ=माने च इति ॥४॥ शुक्रस्याधिष्ठानमसि इति दक्षिणेन पदाऽध्वर्युरुत्तरवेदिमधितिष्ठति ॥५॥ मन्थिनोऽधिष्ठानमसि इत्युत्तरेण प्रतिप्रस्थाता ॥६॥ निरस्तः शण्डः सहामुना इति कृष्णꣳ शकलमध्वर्युर्निरस्यति ॥७॥ यं द्वेष्टि यजमानस्तं ध्यायति ॥८॥ निरस्तो मर्कः इति प्रतिप्रस्थाता ॥९॥ यमेव द्वेष्टि यजमानस्तं ध्यायति ॥१०॥ अप उपस्पृश्य शुक्रैषा ते समित्तया समिध्यस्व स्वाहा इति शुक्रꣳ शकलमध्वर्युराहवनीये प्रास्यति ॥११॥ मन्थिन्नेषा ते समित्तया [1]समिध्यस्व स्वाहा इति[1] प्रतिप्रस्थाता ॥१२॥ [2]आश्रावयति ॥१३॥ ओ श्रावय[2] इत्याह ॥१४॥ प्रातः प्रातःसावस्य शुक्रवतो मन्थिवतो मधुश्चुत इन्द्राय सोमान् प्रस्थितान् [3]प्रेष्य इति[3] ॥१५॥ वषट्कृते जुह्वति ॥१६॥ अनुवषट्कृते जुह्वति ॥१७॥ स प्रथमः संकृतिर्विश्वकर्मा इति तौ जुहुतः । [4]स प्रथमो [4]मित्रो वरुणो[4]=तस्मा इन्द्राय सुतमा जुहोमि (स्वाहा)[5] इत्यध्वर्युर्जुहोति, तस्मै सूर्याय सुतमा जुहोमि (स्वाहा)[6] इति प्रतिप्रस्थाता ॥१८॥ प्रैतु होतुश्चमसः इत्याह । [7]प्र ब्रह्मणः[7] प्रोद्गातुः प्र यजमानस्य प्र यन्तु सदस्यानामृत्विजां चमसाध्वर्यवः [8]सकृत् सकृच्छुक्रस्याभ्युन्नीयोपावर्तध्वम्[8] इति ॥१९॥ परिद्रुत्योभावाग्रयणेऽवनयतः[9] ॥२०॥ उभौ होतृचमसे ॥२१॥ तूष्णीमाग्रयणे ॥२२॥ हुतं त्वा हुतेऽवनयामि इति होतृचमसे सꣳस्रावमवनयति । ऊर्जस्वन्तं देवेभ्यः पयस्वन्तं मनुष्येभ्यः इति ॥२३॥ यजमानचमसं नान्तरितं[10] (निधायैतत् पात्रमायन्ति)[11] ॥२४॥ अथैतं मन्थिनः सꣳस्रावं जुहोति प्रतिप्रस्थातोत्तरस्य परिधेरनीकस्पृशमङ्गारं कृत्वा एष ते रुद्रभागो यं निरया=स्वस्तिꣳ स्वाहा

१–१. MHP समिध्यस्वाहेति. २–२. MHP आश्रावयेत्याश्रावयेत्याह. ३–३. MHP प्रेष्यति. ४–४. MHP मित्रावरुणो. ५. MHP om. ६. MHP om. ७. MHP ब्राह्मणः. ८–८. H सकृत् once; MP क्रस्योभ्युन्नीयो°; H °च्छक्रस्योन्नीयो°. ९. MP परिहृत्यो°; H °हृत्यो. १०. MHP °चमसन्नान्तरितो [P °सान्ना°]. ११. MHP om.

इति ॥२५॥ पात्रैर्मैत्रावरुणचमसमन्वारभ्याश्रावयति ॥२६॥ ओ श्रावय इत्याह ॥२७॥ प्रशास्तर्यज इति ॥२८॥ वषट्कृते जुहोति ॥२९॥ अनुवषट्कृते जुहोति ॥३०॥ उत्प्रदाय मैत्रावरुणचमसं ब्राह्मणाच्छꣳशिनश्चमसमन्वारभ्याश्रावयति ॥३१॥ ओ श्रावय इत्याह ॥३२॥ ब्रह्मन् यज इति ॥३३॥ वषट्कृते जुहोति ॥३४॥ अनुवषट्कृते जुहोति ॥३५॥ उत्प्रदाय ब्राह्मणाच्छꣳसिनश्चमसं पोतुश्चमसमन्वारभ्याश्रावयति ॥३६॥ ओ श्रावय इत्याह ॥३७॥ पोतर्यज इति ॥३८॥ वषट्कृते जुहोति ॥३९॥ अनुवषट्कृते जुहोति ॥४०॥ उत्प्रदाय पोतुश्चमसं नेष्टुश्चमसमन्वारभ्याश्रावयति ॥४१॥ ओ श्रावय इत्याह ॥४२॥ नेष्टर्यज इति ॥४३॥ वषट्कृते जुहोति ॥४४॥ अनुवषट्कृते जुहोति ॥४५॥ उत्प्रदाय नेष्टुश्चमसमग्नीधश्चमसमन्वारभ्याश्रावयति ॥४६॥ ओ श्रावय इत्याह ॥४७॥ अग्नीद्[1] यज इति ॥४८॥ वषट्कृते जुहोति ॥४९॥ अनुवषट्कृते जुहोति ॥५०॥ अग्नीदुपह्वयस्व यजमानम् इत्याह ॥५१॥ ये वषट्कुर्वन्ति ते यजमानमुपह्वयन्ते ॥५२॥ अयाडग्नीत् इत्याहाध्वर्युः ॥५३॥ सद आगत्य स मद्रम(-कः इत्याह होता) । ॰यो नः सोमं पाययिष्यति इति ॥५४॥ पुरस्तादिडायै द्विदेवत्यान् भक्षयतः ॥५५॥ [११]

## [ द्विदेवत्यभक्षः ]

पुरस्तादिडायै द्विदेवत्यान् भक्षयतः ॥१॥ प्रतिगृह्णात्यस्मा[2] ऐन्द्रवायवं पात्रꣳ होता ॥२॥ तदनुसृजन् प्रतिनुदते ॥३॥ मयि वसुः पुरो वसुः इति भक्षयति होता ॥४॥ अथाध्वर्युर्भक्षयति [3]वाक्पा वाचं मे पाहि इति ॥५॥ पुरोडाशशकलमस्मिन् प्रत्यस्योपस्थान एतत्कुरुते[3] ॥६॥ प्रतिगृह्णात्यस्मै मैत्रावरुणं[4] (पात्रꣳ होता ॥७॥ तदनुसृजन्नेव प्रतिनुदते ॥८॥ मयि वसुर्विददवसुः इति भक्षयति होता ॥९॥ अथाध्वर्युर्भक्षयति चक्षुष्पा चक्षुर्मे पाहि इति ॥१०॥ पुरोडाशशकलमस्मिन् प्रत्यस्योपस्थान एतत्कुरुते ॥११॥ प्रतिगृह्णात्यस्मा आश्विनं पात्रꣳ होता ॥१२॥ तदनुसृजन्नेव प्रतिनुदते ॥१३॥ मयि वसुः संयद्वसुः इति भक्षयति होता ॥१४॥ अथाध्वर्युर्भक्षयति श्रोत्रपाः श्रोत्रं मे पाहि इति ॥१५॥ अथेडोपहूताꣳश्चमसान् भक्षयति ॥१६॥

---

१. MHP अग्नीन्. २. MHP प्रगृ॰. ३-३. MHP broken, but the text from ऐन्द्रवायवं to एतत्कुरुते repeated thereafter on the basis of which this text has been emended. ४. MHP मैत्रावरुणाय.

भक्षेहि माऽऽविश इति पुरस्ताद् भक्षस्य जपति। °दीर्घायुत्वाय=वर्चसे इति ॥१७॥ वसुमद्गणस्य सोमदेव ते इति प्रतिदधते। °मतिविदः प्रातःसवनस्य गायत्रच्छन्दस इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि इति ॥१८॥ समुपहवमुच्छिषन्ति ॥१९॥ राजानमाप्याययन्ति आप्यायस्व समेतु=सङ्गथे इति ॥२०॥ सीदन्ति नाराशꣳसाः)[1] ॥२१॥ [ १२ ]

[इति तृतीयोऽनुवाकः]

## [ माध्यन्दिनसवनम् ]

[2](आ माऽस्कान् इति द्रप्सानास्कन्नानभिमन्त्रयते °सह प्रजया=निर्वधीः इति ॥१॥ द्रप्सश्च=प्रजा-)पतये[3] त्वा इति द्रोणकलश[4]=भन्त एनं येऽन्वारभन्ते ॥२॥ निष्क्रम्य विप्रुषाꣳ होमं जुहोति यो द्रप्सो अꣳशुः पतितः=जुहोमि स्वाहा इति ॥३॥ ऋचा स्तोमꣳ समर्धय इत्यनुचरीम्। °गायत्रेण=वर्तनि स्वाहा इति ॥४॥ सप्तहोतारं मनसाऽनुद्रुत्य स्रुवाहुतिं जुहोति ॥५॥ (वागग्रेगा अग्र ए-)तु इति प्रत्यञ्च आस्तावाय सर्पन्ति। °ऋजुगा[5]=मयि प्राणा हुꣳ सोमः पवते इति ॥६॥ ब्रह्मन् स्तोष्यामः ॥७॥ प्रशास्तः इत्या[6]=पूतभृति ॥८॥ चतुर्होतारमध्वर्युर्व्याचष्टे ॥९॥ यदाष्टम्या प्रस्तौत्यथान्वारोहं वाचयति सुपर्णोऽसि[7] त्रिष्टुप्छन्दा अनु त्वाऽऽरभे स्वस्ति मा संपारय इति ॥१०॥ स्तुते संप्रेष्यति अग्नीदग्नीन्विह(-र बर्हिः स्तृणीहि पुरोडाशाँ अलंकुरु प्रतिप्रस्थातर्दधिघर्मेणाद्रव होतर्वदस्व यत्ते वाद्यम्[8] इति ॥११॥ आगत्याग्नीध्रं यावती द्यावापृथिवी महित्वा इति तिरःपवित्रꣳ स्रुचि दध्यानयति। °यावच्च सप्त=स्तुतम्[9] इति ॥१२॥ श्रातꣳ[10] हविः

---

१. MHP broken. I have tried to reconstruct the broken text to some extent dealing with द्विदेवत्यभक्षः. The text dealing with the remaining rituals of the प्रातःसवन is broken. २. In the beginning some portion of the text ( equal to BaudhŚS VIII.1 dealing with the Mādhyandina savana is broken. Mss indicate the missing of the text with : अत्र ग्रन्थपातः. M adds चिह्नितकोष्ठस्थसंख्यायाभावः. ३. Cf supra VII.7.1–4. ४. MHP abr; see VII.7.4–8. ५. MHP abr; see VII.7.12–15. ६. MHP abr; see VII.7.17–20. ७. M सुवर्णो°; P स्रवेणासि. ८. MP पाद्यम्. ९. P सृतम्; H स्तृनम्. १०. HP श्रृतं.

इत्याहवनीयस्यार्धमाद्रवन्नध्वर्युः ॥१३॥ ओ श्रावय इत्याह ॥१४॥ दधिघर्मस्य इति ॥१५॥ वषट्कृते जुहोति ॥१६॥ [1]मयि त्यदिन्द्रियं[1] महत् इति स जुहोति । "मयि दक्षो मयि क्रतुः । मयि धायि सुवीर्यं घर्मस्त्रिशुग्वि-रोचते[2] ॥ आकूत्या मनसा सह विराजा ज्योतिषा सह । यज्ञेन पयसा सह= तस्य दोहमशीमहि=स्वाहा इति ॥१७॥ अनुवषट्कृते जुहोति ॥१८॥ सꣳ-सृप्यैतस्य महावीरस्यर्त्विजो भक्षयन्ति इन्द्रपीतस्य[3] वयꣳ शुक्रस्य रोचनावतः साहस्रस्य यशस्विनो धुक्षीमहि प्रजामिषम् इति ॥१९॥ होता प्रथमो भक्ष-यत्यथाध्वर्यु रथ ब्रह्माऽथ प्रतिप्रस्थाताऽथाग्नीदथ यजमानः[4] ॥२०॥ प्राणैस्ते भक्षयन्ति, प्रत्यक्षाद् भक्षो यजमानस्य ॥२१॥ माध्यन्दिनीयैः पुरोडाशैः प्रचरति ॥२२॥ तेषाꣳ स्विष्टकृता सह चतुर्होतुराहुतिं जुहोति ॥२३॥ पञ्च[5] पवमाने व्याचष्टे ॥२४॥ तान् होत्र उपनिधायाद्रवन्नाह[6] उन्नीयमानेभ्योऽनुब्रूहि[6] होतुश्चमसमनून्नयध्वमुभयतः शुक्रान् कुरुध्वमच्छावाकस्य चमसाध्वर्यो[7] त्वमुन्नयस्व इति ॥२५॥ प्रोक्षिताप्रोक्षिताश्चत्वारः[8] शकलाः[8]=ब्रह्म संधत्तम् इति ॥२६॥ प्रसिद्धꣳ संधत्तः ॥२७॥ प्रसिद्धं परिक्रमतः ॥२८॥ प्रसिद्धं चरणमा श्रावणात् ॥२९॥ ओ श्रावय इत्याह ॥३०॥ माध्यन्दिनस्य सवनस्य निष्केवल्यस्य भागधेयस्य शुक्रवतो[10] मन्थिवतो[11] मधुश्चुत इन्द्राय सोमान् प्रस्थितान् [12]प्रेष्य इति[12] ॥३१॥ वषट्कृते जुह्वति ॥३२॥ स प्रथमः संकृतिः[13]=श्रावय इत्याह ॥३३॥ ब्रह्मन् यज पोतर्यज नेष्टर्यजाच्छावाक यजाग्नीद् यज इति ॥३४॥ वषट्कृते जुहोति ॥३५॥ अग्नीदुपह्वयस्व यजमानम् इत्याह ॥३६॥ ये वषट्कुर्वन्ति ते यजमानमु-पह्वयन्ते ॥३७॥ अयाडग्नीद् इत्याहाध्वर्युः ॥३८॥ सद आगत्य स भद्रमकः इत्याह होता । [9]यो नः सोमꣳ पाययिष्यति इति ॥३९॥ इडोपहूताꣳश्चम-सान् भक्षयति ॥४०॥ भक्षेहि माऽऽविश इति पुरस्ताद् भक्षस्य जपति । "दीर्घायुत्वाय=वर्चसे इति ॥४१॥ रुद्रवद्गणस्य सोम देव ते इति प्रतिदधते ।

---

१–१ M मयि त्यतन्द्रि°, HP मयीत्यतीन्द्रियं. २. H °स्त्रिग्विरो°:. ३. MHP इन्द्रवीतस्य. ४. MHP °मानस्य. ५. MHP यञ्च. ६–६. MHP दवन्नाहवनीय; [ H °वहनी° ]. ७. MHP °ध्वर्योः. ८. MHP प्रोक्षिताः प्रोक्षि°. ९. MHP abr; see VII.10.36–43. १०. H °वन्तो; P शुक्रावतो. ११. P मन्थितो. १२–१२. MHP प्रेष्यति. १३. MHP abr; see VII.11.18–32.

°मतिविदो माध्यन्दिनस्य सवनस्य त्रिष्टुप्छन्दस इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि इति ॥४२॥ समुपहवमुच्छिषन्ति ॥४३॥ राजानमाप्याययन्ति सं ते पयाꣳसि=धिष्व इति ॥४४॥ सीदन्ति नाराशꣳसाः ॥४५॥ सन्नेषु नाराशꣳसेषूत्तरेणाग्नीध्रं परीत्य जुहोति दाक्षिणानि ॥४६॥ [१३]

उत्त[1]=दशहोमीये वाससि हिरण्यं प्रबध्नाति ॥१॥ तꣳ स्रुच्यवदधाति[2] ॥२॥ तस्यां चतुर्गृहीतं गृह्णीते ॥३॥ [3]तज्जुहोति उदु त्यं[3] जातवेदसम् इति गार्हपत्ये । °देवं वहन्ति=सूर्यꣳ स्वाहा इति ॥४॥ अपरं चतुर्गृहीतं गृह्णीते ॥५॥ तज्जुहोति चित्रं देवाना=नीकम् इति गार्हपत्य एव । °चक्षुर्मित्र=स्थुषश्च स्वाहा इति ॥६॥ आगत्याग्नीध्रं चतुर्गृहीतं गृह्णीते ॥७॥ तज्जुहोति अग्ने नय=विधेय स्वाहा इति ॥८॥ (दिवं गच्छ सुवः पत इ-)ति हिरण्यꣳ हुत्वोद्गृह्णाति ॥९॥ रूपेण वो रूपमभ्यैमि इति दक्षिणा अभ्येति । °वयसा वयः[4] इति ॥१०॥ तुथो वो विश्ववेदा वि भजतु इत्येना व्यपक्रामति । °वर्षिष्ठे अधि नाके इति ॥११॥ एतत्ते अग्ने[5] राध ऐति सोमच्युतम् इत्येना आ प्रच्यावयति । °तन्मित्रस्य पथा नयतंस्य[6] (पथा प्रेत चन्द्रदक्षिणा यज्ञस्य पथा सुविता नयन्तीः इति ॥१२॥ ब्राह्म-)णम् इत्यात्रेयमित्याह ॥१३॥ तस्मै नयत्येतच्चन्द्रम्[7] ॥१४॥ [8]एवमेवोन्नेत्रे ॥१५॥ एवमेवाग्नीधे[8] नयति ॥१६॥ एवं ब्रह्मणे ॥१७॥ एवꣳ होत्रे ॥१८॥ एवमुद्गात्रे ॥१९॥ एवमध्वर्यवे ॥२०॥ एवꣳ सदस्याय ॥२१॥ एवं प्रस्तोत्रे ॥२२॥ एवं प्रतिप्रस्थात्रे ॥२३॥ एवं मैत्रावरुणाय ॥२४॥ एवं ब्राह्मणाच्छꣳसिने ॥२५॥ (एवमेवाच्छावाकाय पोत्रे नेष्ट्रे) ध्रुवगोपाय ग्रावस्तुते सꣳस्रावयित्रे सुब्रह्मण्यायाभिघाराय प्रतिहर्त्रे उत्तमाय नयति ॥२६॥ वि सुवः पश्य व्यन्तरिक्षम् इति नीत्वा दक्षिणाः सदः प्रेक्षते । °यतस्व सदस्यैः इति ॥२७॥ अस्मद्दात्रा देवत्रा गच्छत इत्येना अनुमन्त्रयते । मधुमती=तन्नः सꣳस्कृतम् इति ॥२८॥ अत्र (जुहोति यज्ञ-)पतिमृषय एनसाऽहुः

१. MHP abr; I doubt whether this abridged text refers to VII.13.46, or some other portion which is broken in the beginning of the Mādhyandina savana. २. MHP ध्रुवच्यव°. ३–३. M °होत्युदित्यं; HP °होत्यादित्यं. ४. MHP वयवः. ५. P अग्नी. ६. M नयत्तस्य, P. नत्तंस्य. ७. MHP नायत्ये°. ८–८. MP °न्त्रेत्येव. H °न्नेत्येव°.

इत्याग्नीध्रे[1] पञ्च स्रुवाहुतीः ॥२९॥ इन्द्रस्य योनिरसि मा मा हिँसीः इति नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यति ॥३०॥ एवमेव नस्कूजनीं[2] पत्नी ॥३१॥ इन्द्राय मरुत्वतेऽनुब्रूहि इत्याहाद्रवन्नध्वर्युः ॥३२॥ नानाश एवैतौ ग्रहावाददाते अध्वर्युश्च प्रतिप्रस्थाता चोभौ[3] ॥३३॥ (आश्रावयति ॥३४॥ ओ श्रावय इत्याह ॥३५॥ इ-)न्द्राय मरुत्वते [4]प्रेष्य इति[4] ॥३६॥ वषट्कृते जुहुतः ॥३७॥ अनुवषट्कृते जुहुतः ॥३८॥ यदि होताऽनुवषट्करोत्यध्वर्युः उपह्वयस्व इतीह ब्रूयात् ॥३९॥ प्रतिप्रस्थाता प्रतिप्रस्थातुः पात्रे सँस्रावमवनयति[5] ॥४०॥ तस्मादाददान आह ॥४१॥ स्वं पात्रं [6]प्रयच्छन्नाह अनेन[6] तृतीयं मरुत्वतीयं गृहाण इति ॥४२॥ तेन स गृह्णाति इन्द्र मरुत्वते (एष ते योनिरिन्द्राय त्वा मरुत्वते)[7] इति ॥४३॥ दशापवित्रेण परिमृज्य सादयति ॥४४॥ हिरण्येन श्रीणाति ॥४५॥ द्रुत्वैतस्या अध्वर्युर्होतारं प्रति भक्षयति वाग्जुषाणा सोमस्य तृप्यतु इति ॥४६॥ पराङावर्ततेऽध्वर्युः पुरस्ताद्धोतुः[8] सह पात्रेण इडा देवहूं= मदन्तु इति यावदेतस्य [10]यजुषोऽभ्याप्नोति ॥४७॥ अभ्याह्वयत एनम्[10] अध्वर्यो शोँसावो३म् इति ॥४८॥ [11]शोँ सामोदैव[11] इत्यध्वर्युः प्रत्युत्तिष्ठति ॥४९॥[12] आ त्वा रथं यथोतये[12] इत्यनुष्टुभँ होता प्रतिपद्यते ॥५०॥ तस्यै द्विर्न्यस्यति[13] प्रथमाभ्यां पदाभ्याम्॥५१॥ द्विरेवास्या अध्वर्युर्न्यस्यति[14] ॥५२॥ समस्योत्तराभ्याँ होता प्रणौति ॥५३॥ समस्यैवोत्तराभ्यामध्वर्युः प्रणौति ॥५४॥ प्रसिध्यति प्रतिगरः ॥५५॥ न्यासे चैव प्रणवे च प्रत्यागृणाति ॥५६॥ [15]एतन्मरुत्वतीयमुक्थम् उक्थं वाचि इत्युक्त्वा[15] द्रवति ॥५७॥ आदत्त एतं ग्रहम् ॥५८॥ अनूद्यच्छन्ते चममान् ॥५९॥ ओ श्रावय इत्याह ॥६०॥ उक्यशा यज सोमस्य इति ॥६१॥ वषट्कृते जुहोति ॥६२॥

---

१. MHP °ग्नीध्र. २. MHP जनीः. ३. MHP चोन्रा. ४–४. MHP प्रेष्यति. ५. MHP °वमानयति. ६–६. MP °च्छन्नाहोऽनेन; H °च्छन्नाहोनेन. ७. MHP om. ८. H परस्ता°. ९. MHP add इति. १०–१०. °म्यामोत्यम्याह्वयमेनम्. ११–११. P °सामादेव. १२–१२. MHP °त्याध्वारयथोदय. १३. MH द्विर्नस्य°; P. द्विर्वंस्य; thus Ao.II.158.11. १४. MHP अध्वयुर्न्त्यं. १५–१५. MHP मरुत्वदीयमुकधमुक्तं पाचीत्यु° [ M °मुकधमुकधमुकं ]; P corrected in red ink as मुक्थमुक्थमुक्थं.

( अनुवषट्कृते जुहोति ॥६३॥ )[१] अनुप्रकम्पयन्ति[२] चमसान् ॥६४॥ न जुह्वति ॥६५॥ हुतं त्वा भक्षितेऽवनयामि इति होतृचमसे[३] सꣳस्रावमवनयति । [४]ऊर्जस्वन्तं देवेभ्यः पयस्वन्तं मनुष्येभ्यः इति ॥६६॥ य[४]=यन्ति ॥६७॥ नाराशꣳसपीतस्य[५] सोम देव ते इति प्रतिदधते । [६]मतिविदो माध्यन्दिनस्य सवनस्य त्रिष्टुप्छन्दसः पितृपीतस्य मधुमत[६]=उत्तमानि धिष्व इति ॥६८॥ सीदन्ति नाराशꣳसाः ॥६९॥ सन्नेषु नाराशꣳसेषु संप्रेष्यति ॥७०॥ [ १४ ]

अभिषोतारः[७] परिविशतौलूखलानुद्वादयाग्नीदाशिरं[८] विनय[९] प्रतिपस्थातः सौम्यस्य[१०] वित्ताद् इति परोक्षात् संप्रैषः ॥१॥ एतत् कुर्वन्ति ॥२॥ ग्रावभिरभिषोतारोऽभिषवणचर्म पर्युपविशन्ते ॥३॥ पूर्वेण शालामपरेण सदो व्रीहियवौ[११] प्रास्यौलूखलमुसले उपकल्पयति[१२] ॥४॥ अस्मै देवासो वपुषे चिकित्सत[१३] [१४]इत्यग्नीदाशिरं विनयति[१४] । [१४]यमाशिरा=गृहे इति ॥५॥ प्रतिप्रस्थाताऽग्नीधमाह सौम्यमा वप इति ॥६॥ उन्नेतः इत्याहाद्रवन्नध्वर्युः । यदेमं[१५] ग्रहं गृह्णाम्यथ शुक्रं पूतभृत्यवनय इति ॥७॥ माहेन्द्रꣳ शुक्रपात्रेण गृह्णाति महाँ इन्द्रो य[१६] ओजसा इति गायत्रिया यदि रथन्तरसामा ॥८॥ महाँ इन्द्रो नृवदा[१७] इति त्रिष्टुभा यदि बृहत्सामा[१८] ॥९॥ उभाभ्यां गृह्णीयादुभयसामा[१९] ॥१०॥ एष ते योनिर्महेन्द्राय त्वा इति दशापवित्रेण परिमृज्य सादयति ॥११॥ हिरण्येन श्रीणाति ॥१२॥ शुक्रं पूतभृत्युन्नेताऽवनयति ॥१३॥ न्युब्जकलशं प्रस्तरमादाय स्तोत्रेण द्रवति ॥१४॥ [२०]वायुर्हिङ्कर्ता इत्युपाकरणं[२०] जपति ॥१५॥ मयि प्रा(-णा उपावर्त-)ध्वं यजमानाभिसर्प इति सामनुद्द्रुते[२१] संप्रेष्यति । [४]अभिषोतारोऽभिषुणुतौलूखलानुद्वादयाग्नीदाशिरं विनय प्रतिप्रस्थातः सौम्यस्य शृतस्य विद्धि इति प्रत्यक्षात्

१. MHP om. २. MH अनुकम्प°. ३. MHP चमसेति. ४–४. MHP abr; see VII.11.24. ५. H शंसद्वितीयस्य. ६. MHP abr; see VII.13. 42–44. ७. MHP °षोतारं. ८. MHP °खलानु च त्वयाग्नी°. ९. MHP विनह्य. १०. MHP सोमस्य. ११. MHP °यवेन. १२. MHP उपकल्पयति (twice). १३. P °त्सित. १४–१४. MHP इत्याग्नी° विनह्यति. १५. MHP यदीमं. १६. MHP put य before इन्द्रो. १७. MHP य ओजसा for नृवदा. १८. HP बृहत्सोमो. १९. MHP °साम्न. २०–२०. P °हिङ्कृतेत्यु°. २१. MHP °नुद्रुते.

संप्रैषः ॥१६॥ एतत्कुर्वन्ति ॥१७॥ ग्रावभिरभिषोतारोऽभिषवणचर्म (-न्नभिषुण्वन्ति) ॥१८॥ पूर्वेण शाला(-मपरेण सदो व्रीहिय-)वौ प्रास्यौलूखलमुसले उद्वादयति[1] य[2] उद्वादयति ॥१९॥ उपवाहन्ता[3] प्रतिहन्ता निहत इति ॥२०॥ औलूखलेषूद्वाद्यमानेष्वध्वर्युर्यजमानं वाचयति उत वा जघ्नुरुत[4] वा निजघ्नुरथो[5] अस्मै प्रददुर्दाशुषे गा न सज (इति ॥२१॥ आशीर्दाया दम्पती) वाममश्नुताम् इत्यग्नीदाशिरं विनयति। °अरिष्टो रायः = जहातु सः इति ॥२२॥ प्रतिप्रस्थाता सौम्यस्य शृतस्य वेद ॥२३॥ स्तुवानानुपास्ते ॥२४॥ एषोत्तमेति[6] ज्ञात्वा पराङावर्ततेऽध्वर्युः पुरस्ताद्धोतुः इडा देवहूः इति यावदेत[7] = प्रत्यागृणा(-ति ॥२५॥ एतन्मरुत्वतीयमुक्थम् उक्थं वाचि इत्युक्त्वा द्र[8] =) सोमस्य इति ॥२६॥ वषट्कृते जुहोति ॥२७॥ अनुवषट्कृते जुहोति ॥२८॥ अनुप्रकम्पयन्ति चमसान्॥२९॥ न जुह्वति॥३०॥ हुतं त्वा भक्षितेऽवनयामि इति होतृचमसे[9] = नान्तरितं निधायैतत् पात्रमायन्ति ॥३१॥ भक्षयन्ति नराशꣳसपीतस्य सोम देव ते इति ॥३२॥ [10]सर्वभक्षा अग्नीत्प्रसूता[10] मार्जयन्ते ॥३३॥ मैत्रावरुणस्य चमस(-मनून्नयध्वम् इत्याहाद्रवन् प्रतिप्रस्थाता)। ° उन्नेतः[11] सोमं प्रभावय इति ३४॥ गृह्णीत उक्थ्यस्थाल्या अध्युपशयेन पात्रेण उपयामगृहीतोऽसि देवेभ्यस्त्वा = युव इन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा इति ॥३५॥ दशापवित्रेण परिमृज्य सादयति ॥३६॥ हिरण्येन श्रीणाति॥३७॥ पुनर्हविरसि इति स्थालीमभिमृश्य प्रस्तरमादाय पात्रेण द्रवति ॥३८॥ (मयि)[12] प्राणा उपावर्तध्वं यजमानाभिसर्प इति ॥३९॥ स्तुवाना[13] = पुरस्तान्मैत्रावरुणस्य इडा देवहूः इति याव[14] = गृणाति[15] ॥४०॥ एतदुक्थम् उक्थं वाचि इत्युक्त्वा द्र[16] = सोमानाम् इति ॥४१॥ वषट्कृते जुह्वति ॥४२॥ अनुवषट्कृते जुह्वति ॥४३॥

---

१. H °द्वासयति. २. P oms. ३. M °पवहन्ता; HP पहन्ता. ४. HP जघ्नुकुत. ५. P. विजघ्नु°. ६. MH °त्तममेति; P °तममेति. ७. MHP abr; see VII.14.47–56. ८. See VII.14.57-61. ९. MHP abr; see VII.23-24. १०–१०. MHP °भक्ष्याग्नीत्प्रसूता इति. ११. MHP मुन्नेतः. १२. MHP om. १३. MHP abr; see above S. 24–25. १४. MHP abr; see VII.14.47--56. १५. HP शृणा°. १६. MHP abr; see VII.14.57--61.

हुतं त्वा हुतेऽवनयामि इति मैत्रावरुणचमसे सꣳ[1]=मनुष्येभ्यः इति ॥४४॥ होतृचमसं च यजमानचमसं च ना[2]=भक्षयन्ति रुद्रवद्गणस्य सोम देव ते इति ॥४५॥ [3]सर्वभक्षा अग्नीत्प्रसूता[3] मार्जयन्ते ॥४६॥ एहि यजमान इत्युक्त्वाऽध्वर्युः प्रपद्य हविर्धाने इदं तृतीयꣳ सवनं कवीनाम् इति वसतीवरीरवनयतेऽपरस्मिन्[4] कलशे[5]। °ऋतेन ये=नयन्तु इति ॥४७॥ तदन्वेकधनमानयन्ति ॥४८॥ प्रतिप्रस्थातरेते ते धुरौ इत्याहाध्वर्युः ॥४९॥ ब्राह्मणाच्छꣳसिनश्चमसमुन्नयध्वम्[6] इत्याहाद्रवन् प्रतिप्रस्थाता। °उन्नेतः सोमं प्रभावय इति ॥५०॥ सर्वा ऐन्द्रियो धुरः ॥५१॥ ब्रह्मन् सर्प प्रशास्त=यजमान इत्याह ॥५२॥ स्तुतस्य स्तुतमसि इति निःसर्पस्तुतशस्त्रयोर्दोहं[7] ब्रह्मा यजमानं वाचयति। °ऊर्जं मह्यं=प्रजामिषम् इति ॥५३॥ सन्तिष्ठते माध्यन्दिनꣳ सवनम् ॥५४॥ [ १५ ] [ इति चतुर्थोऽनुवाकः ]

## [ तृतीयसवनम् ]

चतुरो धिष्णियानुपस्थाय तृतीयसवनाय संप्रसर्पन्ति ॥१॥ एहि यजमान इत्युक्त्वाऽध्वर्युः प्रपद्य हविर्धाने सर्पिर्ग्रीवी पीवर्यस्य जाया इति तिसृभिराशिरमवनयतेऽपरस्मिन्[8] कलशे। °पीवानः[9] पुत्राः=सपत्नान् ऊर्जꣳ सुहुतिꣳ सविता दधातु नः॥ विश्वाहेन्द्रो अधिवक्ता नो अस्त्वपरिह्वृताः[10] सुनुयामेन्द्राय [11]सोमान् तन्नो[11] मित्रावरुणा मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः इति ॥२॥ उभयतः परिश्रयन्ति ॥३॥ आदित्येभ्योऽनुब्रूहि इत्याह। °प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्यो महः स्वसरस्य[12] पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्यः इति ॥४॥ कदा चन स्तरीरसि इति त्रियुपयाममादित्यग्रहं गृह्णात्यौदुम्बरेणादित्यपात्रेण चतुःस्रक्तिना सꣳस्रावाणाम्। °नेन्द्र सश्चसि=पृच्यते। उपयामगृहीतोऽस्यादित्येभ्यस्त्वा जुष्टं गृह्णामि इति ॥५॥ कदा चन प्रयच्छसि इति तिरःपवित्रं दध्नः। °उभे नि=तं दिवि। उपयामगृहीतोऽस्यादित्येभ्यस्त्वा जुष्टं गृह्णामि इति ॥६॥ यज्ञो देवानां प्रत्येति

---

१. MHP abr; see VII.11.23;14.66. २. MHP abr; see VII. 15.31–32. ३. MHP °भक्ष्याग्नीत्प्रसूता इति. ४. MHP °नयतोऽप°. ५. MH कलशः; P कलशं. ६. MHP °मसमरून्नय°. ७. MH °स्तुस्तुतश°; P °स्तुस्तुतसर्पयो°. ८. MHP °नयद्रोऽप°. ९. MHP पीवानं. १०. MHP °हूता. ११–११. MHP सीमान्नो for सोमान् तन्नो. Cf RV. I.100.19; MS IV.12.4. १२. MHP स्वरस्य.

सुम्नम्[1] इत्युपरिष्टात्सꣳस्रावाणामेव । [2]आदित्यासो = विस्तरासत । उपयामगृहीतोऽस्यादित्येभ्यस्त्वा जुष्टं गृह्णामि इति ॥७॥ विवस्व [2]आदित्य इत्यस्मिन्[2] ग्रावाणं परिप्लावयत्युपाꣳशुसवनम् । [3]एष ते सोमपीथस्तेन मन्दस्व = तर्पयितारः इति ॥८॥ उद्गृह्णाति ॥९॥ स्तोकः प्रश्चौति ॥१०॥ तेन श्रीणाति[3] या दिव्या वृष्टिस्तया त्वा श्रीणामि इति ॥११॥ आ समुद्रात् इत्यनेन[4] एतेनैव ग्राव्णा[5]ऽधस्तादुदाहरन्ति । [6]आन्तरिक्षात् प्र = हृतिम्[6] इति ॥१२॥ एतमनुग्राव्णा[7] आनय इत्याह ॥१३॥ तमनुग्राव्णो[8]ऽपरस्मिन् कलशे परिप्लावयति ॥१४॥ ओषधीरादाय कृष्णाजिनेन परिहितौ निष्क्रामतः ॥१५॥ ओ श्रावय इत्याह ॥१६॥ आदित्येभ्यः प्रेष्य[9] इति । [6]प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्यो महः स्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्यः इति ॥१७॥ वषट्कृत ओषधीरग्नौ प्रास्या(-दित्यं) जुहुतः ॥१८॥ मित्रो मा घर्मे-रवतु[10] इति पराङावृत्तावनुमन्त्रयेते । [6]वरुणो विधृत्य अर्यमा मा मित्रैरवतु जित्याकालो भगेनाꣳशः इति ॥१९॥ प्रपद्य चतसृणां धाराणामाग्रयणं गृह्णाति ॥२०॥ प्रस्थापयत्युदङ्कस्य चाग्रयणस्य चादित्यस्थाल्याश्चादित्यपात्रस्य च ॥२१॥ [11]एतान्दशा(-पवित्रेण परिमृज्य सादयति) ॥२२॥ ये देवा दिव्येकादश स्थ इति गृह्णाति । [6]पृथिव्या[12] = वनस्पतिभ्यः पवते द्यावापृथिवीभ्यां पवते सुभूताय पवते[13] ब्रह्मवर्चसाय पवते इति ॥२३॥ द्वादशकृत्वः [13] पवयित्वा एष ते[13] योनिर्विश्वेभ्यस्त्वा देवेभ्यः इति दशापवित्रेण परिमृज्य सादयति ॥२४॥ हिरण्येन श्रीणाति ॥२५॥ आ माऽस्कान् इति द्रप्सानास्कन्नानभिमन्त्रयते[14] ॥२६॥ इति । [ १६ ]

आ माऽस्कान् इति द्रप्सानास्कन्नानभिमन्त्रयते ॥१॥ द्रप्सश्च[15]=प्रजापतये त्वा इत्याग्रयणमभिमृशति ॥२॥ इन्द्राय[16] = न्वारभन्ते ॥३॥ निष्क्रम्य विप्रुषाꣳ होमं जुहोति । यस्ते द्रप्सो मधुमाँ इन्द्रियावान् = जुहोमि स्वाहा इति ॥४॥ ऋचा स्तोमꣳ समर्धय इत्यनुचरीम् । [6]गायत्रेण रथन्तरम् =

---

१. MHP सुम्नाम्. २–२. MHP आदित्येस्मिन्. ३. MH श्रृणा°. ४. MP इत्येन. ५. MHP ग्राविण्णा. ६–६. MHP °क्षात्प्रभृतिम्. ७. MHP ग्राविण्णा. ८. MHP ग्राविण्णो. ९. MHP प्रैष्यः. १०. H धैर्मे°. ११. MH चैकां दशा°; P चैकादश°. १२. MHP abr; see VII.6.19–21. १३-१३. MHP पवैषते. १४. HP द्रप्सानास्का···न्नानाभि. १५. MHP abr; see VII.7.2–4. १६. MHP abr; see VII.7.5–8.

गायत्रवर्तनि स्वाहा इति ॥५॥ सप्तहोतारं मनसाऽद्रुत्य स्रुवाहुतिं जुहोति ॥६॥ वागग्रेगा अग्र एतु इति प्रत्यञ्च[1]= मयि प्राणा हुꣳ सोमः पर्वते इति ॥७॥ ब्रह्मन् स्तोष्यामः[2]=पूतभृति ॥८॥ पञ्चहोतारमध्वर्युर्व्याचष्टे ॥९॥ यदा नवम्या प्रस्तौत्यथान्वारोहं वाचयति [3]स घाऽसि[3] जगतीछन्दा=संपारय इति ॥१०॥ स्तुते संप्रेष्यति अग्नीदग्नीन्विहर बर्हिः स्तृणाहि पुरोडाशाँ अलंकुरु प्रतिप्रस्थातः पशौ संवदस्व इति ॥११॥ पशुना प्रचरति ॥१२॥ तस्य दिशोऽनु द्विः पञ्चहोतुराहुतिं जुहोति ॥१३॥ पञ्च पवमाने व्याचष्टे ॥१४॥ अयं च पशाविडान्तेन पशुना प्रचर्य तृतीयसवनीयैः पुरोडाशैः प्रचरति ॥१५॥ [4]तान् होत्र[4] उपनिधायाद्रवन्नाह उन्नीयमानेभ्योऽनुब्रूहि, होतुश्चमसमनून्नयध्वं [5]तीव्राँ आशीर्वतः[5] कुरुध्वम् इति ॥१६॥ होतृचमसमन्वारभ्याश्रावयति ॥१७॥ ओ श्रावय इत्याह ॥१८॥ तृतीयस्य सवनस्यर्भुमतो[6] विभुमतः प्रभुमतो[7] वाजवतः [8]सवितृवतो बृहस्पतिवतो[8] विश्वदेव्यावतस्तीव्राँ आशीर्वत इन्द्राय सोमान् प्रस्थितान् [9]प्रेष्य इति[9] ॥१९॥ वषट्कृते जुह्वति ॥२०॥ अनुवषट्कृते जुह्वति ॥२१॥ श्येनाय पत्वने[10] स्वाहा इति ॥२२॥ हुतꣳ होतृचमसमनुमन्त्रयते वट्त्स्वयमभिगूर्ताय[11] नमः इति ॥२३॥ अनुवषट्कृतम् तृम्पन्ताꣳ होत्रा मधोर्घृतस्य इति ॥२४॥ प्रैतु होतुश्चमसः इत्याह । °प्र[12] व्र=सकृत्सकृदाशीर्वतोऽभ्युन्नीयोपावर्तध्वम् इति ॥२५॥ आश्राविते[13] प्रत्याश्राविते[14] होत्राः संयाजयन्ति[15] विष्टम्भाय=स्वाहा इति ॥२६॥ हुता होत्रा अनुमन्त्रयते वट्त्स्वयमभिगूर्ताय[16] नमः इति ॥२७॥ अनुवषट्कृतम् तृम्पन्ताꣳ होत्रा मधोर्घृतस्य इति[17] ॥२८॥ परिधये जनपथनाय=नमस्तृम्पन्तां= °तस्य ॥२९॥ ऊर्जे होत्राणां=नमस्तृम्पन्तां=घृतस्य ॥३०॥ पयसे=नमस्तृम्पन्तां=घृतस्य ॥३१॥ प्रजापतये=घृतस्य ॥३२॥ ऋतमृतपाः[18]=मधोर्घृतस्य इति ॥३३॥ अग्नीदुपह्वयस्व यजमानम्[19]=पाययिष्यति इति ॥३४॥इडोपहूताँ[20]=

---

१. MHP abr; see VII.7.12–15 २. MHP abr; see VII.7.16–20. ३–३. HP सखासि. ४–४. MHP तान्नोत्र. ५–५. MHP तीव्रामामीर्यतः. ६. MHP °नस्य भुमतो. ७. MHP प्रभुवतो. ८–८. H oms. ९–९. MHP प्रेष्यति. १०. MH तनत्वेन. ११. MH वषट्स्व°. १२. P oms. १३. MH °श्रावित. १४. P oms. १५. MHP संमादयन्ति. १६. MHP वषटस्व° गूर्तयेति. १७. M oms. १८. MH ऋतपाव्. १९. MHP abr; see VII. 13.36–39. २०. MHP abr; see VII.13.40–41.

वर्चसे इति ॥३५॥ आदित्यवद्गणस्य सोम देव ते इति प्रतिदधते। °मतिविद-स्तृतीयस्य सवनस्य जगतीछन्दस इन्द्रपीतस्य मधुमत=क्षयामि इति ॥३६॥ समुपहव[1]=नमाप्यापयन्ति[2] आ प्यायस्व [3]समेतु ते[3] इति द्विरेतया[4] ॥३७॥ सीदन्ति नाराशꣳसाः[5] ॥३८॥ तेभ्यः प्राशितानां पुरोडाशानामौपास-नान्युपकिरन्ति[6] ॥३९॥ [१७]

औपासनान्युपकिरन्ति स्वस्य स्वस्य चमसस्य अत्र पितरो यथाभागं मन्दध्वम् इति ॥१॥ देवाय सवित्रेऽनुब्रूहि इत्याह ॥२॥ अन्तर्यामपात्रेण सावित्रमाग्रयणाद्[7] गृह्णाति वाममद्य=जः स्याम। उपयामगृहीतोऽसि देवाय त्वा सवित्रे जुष्टं गृह्णामि[8] इति ॥३॥ निष्क्रामति ॥४॥ ओ श्रावय इत्याह ॥५॥ देवाय सवित्रे [9]प्रेष्य इति[9] ॥६॥ वषट्कृते जुहोति ॥७॥ नैतस्यानु-वषट्करोति ॥८॥ तेन सꣳस्रावेण[10] सवितृपात्रेण वैश्वदेवं[11] कलश(-ाद् गृह्णाति) उपयामगृहीतोऽसि सुशर्माऽसि सुप्र=दुक्षे[12] नमो विश्वेभ्यस्त्वा देवेभ्यो जुष्टं गृह्णाम्येष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः इति ॥९॥ दशापवित्रेण परिमृज्य सादयति ॥१०॥ हिरण्येन श्रीणाति ॥११॥ हस्तौ संमृज्य द्रवति ॥१२॥ नात्र प्रस्तर(-मादाय पात्रेण द्रवति ॥१३॥ मयि प्राणा उपावर्तध्वं यजमाना-भिसर्प इति ॥१४॥ स्तुवाना=पुरस्तान्मैत्रावरुणस्य इडा देवहूः इ-)ति[13] यावदेतस्य यजुषोऽभ्याप्नोति ॥१४॥ अभ्याह्वयत एनम् अध्वर्यो शोꣳ सा-[14] वो३म् इति ॥१५॥ शोꣳसा मोदैव[15] इत्यध्वर्युः प्रत्युत्तिष्ठति ॥१६॥ तत्सवितुर्वृणीमहे इत्यनुष्टुभꣳ होता प्रतिपद्यते ॥१७॥ तस्यै द्विर्न्यंस्यति[16] प्रथमाभ्यां पदाभ्याम् ॥१८॥ द्विरेव(-ास्या अध्वर्युर्न्यंस्यति ॥१९॥ समस्योत्त-राभ्याꣳ होता प्र-)[17]णौति ॥२०॥ सम(-स्यै-)वोत्तराभ्यामध्वर्युः प्रणौति ॥२१॥ प्रसिध्यति प्रतिगरः ॥२२॥ यदा जानाति[18] एकया च दशभिश्च स्वभूते इत्यथ पात्राणि प्रतिमीवति विमोचनाय ॥२३॥ यदा जानाति

---

१. MHP °हाव; abr; see VII.13.43-44. २. MHP M नेमाप्या°; H °न्तमाप्या°; P °नोमाप्या°. ३—३. MHP समक्रत. ४. HP द्विरेत्र्या. ५. MH नाराशंसान्. ६. MHP °नामुपासनमुप°. ७. MHP अपवित्र°. ८. MHP जुहोमि. ९—९. MHP प्रेष्यति. १०. MHP °स्रावे. ११. MHP विश्वेदेवपात्रं. १२. P दक्षे. १३. Cf. VII.15.38-40. १४. MP शोशोंसा. १५. MHP मोदेव. १६. MH °नंस्यति. १७. See VII.14.52—53; MHP न्नौति for णौति. १८. MHP जानाम्ये°.

प्र द्यावा यज्ञैः पृथिवी ऋतावृधा इत्यथ [१]प्रतिगृह्णा(-ति मदा मो-)द[२] इव ओथा मोद इव इति[२] न्यासेन ॥२४॥ निविदं प्रत्यागीर्यैकस्या[३] ऋच उपरिष्टान्निविद्धानीयं[४] प्रत्यागृणाति तद्राधो अद्य सवितुर्वरेण्यम् इत्येतस्याम् ॥२५॥ प्रसिध्यति प्रतिगरः ॥२६॥ न्यासे[५] चैव प्रणवे च प्रत्यागृणाति ॥२७॥ एतन्म(-रुत्वतीयमुक्थम् उक्थं वाचीन्द्राय इत्युक्त्वा द्रवति ॥२८॥ आदत्त एतं)[६] वैश्वदेवं[७] (ग्रहम् ॥२९॥ अनूद्यच्छन्ते चमसान् ॥३०॥ ओ श्रावय इत्याह ॥३१॥ उक्थ-)शा[८] यज सोमस्य इति ॥३२॥ वषट्कृते जुहोति ॥३३॥ अनुवषट्कृते जुहोति ॥३४॥ अनुप्रकम्पयन्ति[९]=भक्षितेऽवनयामि इति होतृचमसे[१०]=भक्षयन्ति आदित्यवद्गणस्य सोम देवते इति ॥३५॥ [११]सर्वंभक्षा अग्नीत्प्रसूता[११] मार्जयन्ते ॥३६॥ मार्जिताश्चमसाः सीदन्ति ॥३७॥ अग्नीच्छालाकानुपकल्पय[१२] इति संप्रेष्यति। प्रतिपस्थात(-रुपांशुपात्रा-)भ्यामाद्रव इति ॥३८॥ घृतेन सौम्यं परियजति ॥३९॥ घृतस्य चतुर्गृहीतं गृह्णीते[१३] ॥४०॥ ओ श्रावय इत्याह ॥४१॥ अग्निम्[१४] इत्युपांशूक्त्वा घृतस्य यज इत्युच्चैः ॥४२॥ वषट्कृते जुहोति ॥४३॥ सौम्यस्योपस्तीर्णाभिघारितमादत्ते ॥४४॥ ओ श्रावय इत्याह ॥४५॥ सौम्यस्य यज इति ॥४६॥ वषट्कृते जुहोति ॥४७॥ घृतस्यैव चतुर्गृहीतं गृह्णीते ॥४८॥ (ओ श्रा-)वय इत्याह ॥४९॥ विष्णुम् इत्युपांशूक्त्वा घृतस्यैव यज इत्युच्चैः ॥५०॥ वषट्करोति ॥५१॥ उद्गातृभ्य एनं प्रहिणोति ॥५२॥ नवकृत्वः प्रचरण्यां गृहीत्वा संप्रेष्यति अग्नीच्छालाकानादीपय प्रतिप्रस्थातरुपांशुपात्रे[१५] पात्नीवतमाग्रयणाद् गृहाण मा सीषदः इति ॥५३॥ एतत् कुर्वन्ति[१६] ॥५४॥ अग्नीच्छालाकानादीपयति ॥५५॥ प्रतिप्रस्थातोपांशुपात्रेण पात्नीवतमाग्रयणाद् गृह्णाति उपयामगृहीतोऽसि बृहस्पतिसुतस्य त इन्दो इन्द्रियावतः पत्नीवन्तं ग्रहं गृह्णामि इति ॥५६॥ गृहीत्वाऽऽघारयति[१७] न सादयति ॥५७॥ द्रुत्वाऽध्वर्युः[१८] प्रत्यङ्ङतिष्ठन्नासीनो [१९]धिष्णियान् व्याघारयति[१९] ॥५८॥

१. MHP चतसृणा. २–२. MHP देवोथामोदैवेति. ३. MHP °कस्य. ४. MHP °रिष्टा निष्ठुरोयं. ५. MHP स्यासे. ६. Cf VII.14.57–58. ७. MHP विश्वेदेव. ८. Cf VII.14.58-61; MHP स्या दत्तः for °शा यज. ९. MHP abr; see VII.15.29–31. १०. MHP abr; see VII.15.31-32. ११–११. MHP °भक्ष्याग्नीत्प्रसूता इति. १२. MHP °च्छालानुपकत्वय. १३. MHP गृहीत. १४. P अग्नौ. १५. MHP प्रस्थातुरुपां°. १६. MHP repeat अग्नीच्छा=कुर्वन्ति. १७. MHP धारयति. १८. MHP °ध्वर्यु. १९--१९. P oms धिष्णियान् व्या; H व्याधार

विभूरसि प्रवाहणः इत्याग्नीध्रीये धिष्णिये प्रथमं प्रास्त७ शालाकमभिजुहोति । °रौद्रेण = हि७सीः[1] इति ॥५९॥ वह्निरसि हव्यवाहनः इति होतुर्धिष्णिये ॥६०॥ श्वात्रोऽसि प्रचेताः[2] इति मैत्रावरुणस्य ॥६१॥ तुथोऽसि विश्ववेदाः इति ब्राह्मणाच्छ७सिनः ॥६२॥ उशिगसि कविः इति पोतुः[3] ॥६३॥ अङ्घारिरसि वम्भारिः[4] इति नेष्टुः ॥६४॥ अवस्युरसि दुवस्वान् इत्यच्छावाकस्य ॥६५॥ शुन्ध्यूरसि[5] मार्जालीयः इति मार्जालीये ॥६६॥ रौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा मा मा[6] हि७सीः इति सर्वेष्वनीकमनुवर्तयति ॥६७॥ सप्त ते अग्ने समिधः सप्त जिह्वाः इति नवमं प्रास्त७ शालाकमभि जुहोति । °सप्तर्षयः = घृतेन °स्वाहा इति ॥६८॥ अहं[7] परस्तादहमवस्ताद् इति बर्हिषा अन्तर्धाय प्रचरेण्यैतं ग्रह७ समनक्ति । °अहं ज्योतिषा = समानानाम् इति ॥६९॥ अप उपस्पृश्यादत्त एतम् ॥७०॥ प्रतिप्रस्थातरुध्याश्रावय[8] इत्याह ॥७१॥ अग्नीत् पात्नीवतस्य यज इति ॥७२॥ अग्ना = पिव स्वाहा इत्युपा७शु ॥७३॥ एतस्याग्नीदनुवषट्करोति ॥७४॥ हुत्वैतस्या अध्वर्युरग्नीधं प्रति भक्षयति वाग्जुषाणा सोमस्य तृप्यतु इति ॥७५॥ उत्तिष्ठन् संप्रेष्यति ॥७६॥ [ १८ ] [ इति पञ्चमोऽनुवाकः ]

अग्नीन्नेष्टुरुपस्थमासीद[9] नेष्टः[10] पत्नीमुदानयोद्गात्रा[11] [12]संख्याप्याप उपप्रवर्तय[12] होतुश्चमसमनून्नयध्वमुन्नेतः[13] सोमं मातिरीरिचः इति ॥१॥ यदग्निष्टोम एतदेवान्त्यम् ॥२॥ प्रभावय इति यदुक्थ्यो वाऽतिरात्रो वा ॥३॥ निर्णिज्यैतत् पात्रमपो अस्मिन् कुरुतादेहि यजमान इत्युक्त्वाऽध्वर्युः प्रपद्य हविर्धाने[14] भूतमसि भूते मा[15] धाः इति ध्रुवमवेक्षते[16] । °मुखमसि मुखं भूयासम् । आयुरस्यायुर्मे दाः इति ॥४॥ अप उपस्पृश्य प्रस्तरमादाय [17]°कुप्रावृत एव यज्ञायज्ञियस्य स्तोत्रेण [17] द्रवति ॥५॥ वायुर्हिङ्कर्ता इत्युपाकरणं जपति ॥६॥ मयि प्राणा उपावर्तध्वं यजमानामिसर्प इति ॥७॥ सामनुद्द्रुते[18] सप्तहोतारमध्वर्युर्व्याचष्टे ॥८॥ आनयति नेष्टा पत्नी७ सह पान्नेजनेन[19] ॥९॥ तस्यै विश्वस्य ते विश्वावतः इति दक्षिणं नग्नमूरुं

---

१. MP हंसी°. २. MHP °चेतामि. ३. P पीतुः. ४. P बम्बारि. ५. M शुध्यू°; P शुध्यु°. ६. H oms. ७–७. MH स्वाहेत्याहत्याहं. ८. MHP °प्रस्थातुरध्या° ९. MHP °न्नेष्टरुप°; MP °रुपस्थ twice. १०. MHP नेष्टं. ११. MH योगयित्रा; P योर्गीयत्रा. १२–१२. MP संख्यापयानुपप्र°; H संख्यापयानुप्र°. १३. M चमसमरुन्न°; P चममरुन्न°. १४. M कुरुत एहि; HP कुरुतरगहि. १५. H मे. १६. MHP °वेक्षसे. १७–१७. MHP कुप्रावृतैव यज्ञाय त्रिस्यन्तोत्रेण. १८. MHP °नुद्रुते. १९. MHP वान्ने°.

कृत्वाऽपः प्रवर्तयत्युद्गात्रा संख्यापयꣳस्त्रिर्निधनमनु[1] । °वृष्णियावतस्तवाग्ने=[2]धिषीय इति ॥१०॥ अगन्[2] देवान् यज्ञः इति निनीता[3] अपोऽनुमन्त्रयते । °नि देवीर्देवेभ्यो यज्ञ[4]=समुद्रे[5]ष्ठा[5] गन्धर्वमा तिष्ठतानु वातस्य पत्मन्निड ईडिताः इति ॥११॥ यज्ञे जागृत इति स्तुवानानुपास्ते ॥१२॥ एषो(-त्तमेति ज्ञात्वा पराङावर्ततेऽध्वर्युः) पुरस्ताद्धोतुः इडा देवहूः इति यावदेतस्य यजुषोऽभ्याप्नोति[6] ॥१३॥ अभ्याह्वयत एनम्[7] ॥१४॥ [8]प्रत्यागृणात्येतदाग्निमारुतमुक्थमपो निषिञ्चन्[8] ॥१५॥ यदा जानाति आपो हि ष्ठा मयोभुवः इत्यथ भूयिष्ठा अपाꣳ[9] स्रावयति ॥१६॥ यदा जानाति स्वादुष्किलायं मधुमाँ उतायम् (तदुभयतोमो-)दं प्रत्यागृणात्यो व्याहावात् ॥१७॥ प्रसिध्यति प्रतिगरः ॥१८॥ न्यासे[11] चैव [12]प्रणवे चैव[12] प्रत्यागृणाति ॥१९॥ एतदुक्थम् उक्थं वाचीन्द्राय इत्युक्त्वा द्रवति ॥२०॥ एहि यजमान इत्युक्त्वाऽध्वर्युः प्रपद्य हविर्धाने द्यावपृथिवीभ्यां त्वा[13] परिगृह्णामि इति ध्रुवं परिगृह्णाति ॥२१॥ अन्तरिक्षेण त्वो(-पयच्छामि इत्येते-)नोपयच्छति ॥२२॥ विश्वे त्वा देवा वैश्वानरा [14]प्र च्यावयन्तु इत्येनमाच्यावयति[14] । °दिवि देवान् दृꣳहान्तरिक्षे वयाꣳसि पृथिव्यां पार्थिवान् (इति)[15] ॥२३॥ ध्रुवं ध्रुवेण हविषाऽव सोमं नयामसि इति होतृचमसे ध्रुवमवनयति । °यथा नः सर्वमिज्जगदयक्ष्मꣳ सुमना असत् इति वैश्यस्य । । °यथा न इन्द्र इद्विशः केवलीः सर्वाः समनसः करत् इति राजन्यस्य । °यथा नः सर्वा इद्दिशोऽस्माकं केवलीरसन् इति ब्राह्मणस्य ॥२४॥ सर्वेणैव सहावनयति ब्राह्मणस्य ॥२५॥ यजुर्मुख्यं करोति ॥२६॥ दशहोतारमस्मिन् व्याचष्टे ॥२७॥ होतृचमसमन्वारभ्याश्रावयति[16] ॥२८॥ ओ श्रावय इत्याह ॥२९॥ उक्थशा यज सोमानाम्[17] इति ॥३०॥ वषट्कृते जुहोति ॥३१॥ अनुवषट्कृते जुहोति ॥३२॥ होतुराहुत्या स जुहोति ॥३३॥ आयन्ति ॥३४॥ भक्षयन्ति आदित्यवद्गणस्य सोम देव ते इति ॥३५॥ [18]सर्वभक्षा अग्नीत्प्रसूता[18] मार्जयन्ते ॥३६॥

---

१. MHP संख्या वयंस्त्रि. २–२. H धिषीयेयुगन्. ३. H विनीता. ४. MHP यज्ञः. ५. MHP add यज्ञा. ६. P °षोप्याप्नो°. ७. H एवं. ८–८. MH °मुक्थमुपोविषि; P °मुक्तमुक्थमुपोविषि°. ९. HP उपाग्.° १०. P °त्यान्याहा°. ११. H व्यासे. १२–१२. H oms. १३. MHP च for त्वा. १४–१४. MHP प्रच्यावयश्चित्येन° १५. MHP om. १६. MHP °श्रावयेत्या°. १७. MHP सोमानम्. १८–१८. MHP °भक्ष्याग्नीत्प्रसूता इति.

हिन्व मे गात्रा हरिवः इत्यात्मानं प्रत्यभिमृशन्ते। °पुनर्मे अश्विना युवं चक्षुरा धत्तमक्ष्योः इति ॥३७॥ अग्नीदौपयजानङ्गारानाहर इति संप्रेष्यति। °उपयष्टरु[1] = संमृड्ढि इति ॥३८॥ आग्नीध्रादग्नीदौपयजानङ्गारानाहृत्य[2] होतुर्धिष्णिये निवपति ॥३९॥ गुदेनो[3] = पयष्टोपयजति समुद्रं गच्छ स्वाहा इति गुदस्य प्रच्छेदं[4] = प्राणान् मनो मे हार्दि यच्छ इति[5] = अनूयाजानिष्ट्वोपरिक्रम्य स्वरुं[6] = पृण स्वाहा इति ॥४०॥ स्वरुमनु सप्तहोतुराहुतिं जुहोति ॥४१॥ यज्ञायज्ञियस्य[7] स्तोत्रेण[8] व्याचष्टे ॥४२॥ आगत्य वाजवतीभ्याꣳ स्रुचौ व्यूहति ॥४३॥ शंयुना प्रस्तरपरिधि संप्रकिरति ॥४४॥ हार्योजनं गृह्णीत उन्नेता ॥४५॥ [ १९ ]

हार्योजनं गृह्णीत उन्नेता य आग्रयणस्थाल्याꣳ राजातिशिष्यते तं द्रोणकलशे पर्यस्य[9] उपयामगृहीतोऽसि हरिरसि हारियोजनो[10] = शस्तोक्थस्य हरिवन्तं ग्रहं गृह्णामि इति ॥१॥ हरीः[11] स्थ हर्योर्धानाः इत्यस्मिन् धानाः प्रकिरति ॥२॥ शीर्षन्नधिनिधाय निष्क्रामति ॥३॥ धानासोमेभ्योऽनुब्रूहि इति ॥४॥ [12]विक्रम्याश्रावयति ॥५॥ ओ श्रावय इत्याह ॥६॥ धानासोमान्[12] प्रस्थितान् [13]प्रेष्य इति[13] ॥७॥ वषट्कृते जुहोति सह सोमा इन्द्राय स्वाहा इति ॥८॥ अनुवषट्कृते जुहोति ॥९॥ द्रुत्वैतस्योन्नेता होतारं प्रति भक्षयति वाग्जुषाणा सोमस्य तृप्यतु इति ॥१०॥ उन्नेतर्युपहवमिच्छन्ते ॥११॥ या धाना अतिशिष्यन्ते[14] ता विमथ्नते[15] ॥१२॥ स या लभते ता उभयोर्हस्तयोः कुरुते ॥१३॥ या अस्य दक्षिणे भवन्ति [16]ता मनसा संबाधते ॥१४॥ तामां भक्षयति इष्टयजुषस्ते देव सोम स्तुतस्तोमस्य श= वत इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि इति प्राणेन ॥१५॥ आपूर्याः स्थाऽऽ मा पूरयत इत्येना उत्तरवेद्य(-ाꣳ संनिवप-)न्ति। °प्रजया च धनेन[17] च इति ॥१६॥ या अस्य सव्ये भवन्ति[18] ताभिरुत्परायन्ति ॥१७॥

---

१. MHP abr; see V.9.27. २. H °नाहूत्य. ३. MHP abr; see V.9.29–36. ४. MHP abr; see V.9.36–39. ५. MHP abr; see V.9.39–40. ६. MHP abr; see V.9.40–42 ७. MH यं यज्ञाय यज्ञियस्थ. ८. MHP स्तोत्रे. ९. MP °स्यति. १०. H हार्योजनीः. ११.P हरि. १२–१२. MHP विक्रम्य श्रावयत्यो श्रावयेत्याधाना [H °श्रावत्यो°]. १३–१३. MHP प्रेष्यति. १४. MHP °शिष्यते. १५. H विमश्नते. १६. MHP add ता मनसा संबोधते between भवन्ति and ता. १७. MHP धनौ. १८. MHP भवति.

मार्जालीयस्यार्धं प्राचीनावीतानि कुर्वते ॥१८॥ तद् बर्हिषो व्यूह्य मार्जयन्तां पितरः इति त्रिग्रु[1]मुष्टिना[2]ऽवोक्षति । °मार्जयन्तां पितामहा मार्जयन्तां प्रपितामहाः इति ॥१९॥ त्रीन्राशीन् ददाति एत(-त्ते तत याँश्च त्वमन्वसि ये च त्वामनु=)क्षितिः इति ॥२०॥ द्वितीयम् एतत्ते पितामह याँश्च=हरीः इति ॥२१॥ स घा तं वृषणँ रथम् इति मार्जालीयम् । °अधितिष्ठति गोविदम् । यः[2] पात्रँ हारियोजनं पूर्णमिन्द्र चिकेतति योजा न्विन्द्र ते हरी इति ॥२२॥ अमीमदन्त पितरः सौम्याः इत्यभिपर्यावर्तते[3] ॥२३॥ य(-त् स्था-)-ल्यामति[4](-शिष्यते तत् त्रिरवजिघ्रति) ये सजाताः समनसो जीवा[5]=मार्जयन्तां पितरः इत्येव त्रिग्रु[1]मुष्टिनाऽवोक्षति । °मार्जयन्तां पितामहा मार्जयन्तां प्रपितामहाः इति ॥२४॥ दशाङ्छि[6]=वयँ स्याम पतयो रयीणाम् इति ॥२५॥ आगत्याप उपस्पृश्य षट्छाकलानादत्ते[7] ॥२६॥ षट् गृही(-त्वा देवकृतस्यैनसोऽवयजनमसि इत्येना-)नाहवनीये प्रास्यति । [8]मनुष्यकृतस्यैनसोऽवयजनमसि, [8]पितृकृतस्यैनसोऽवयजनमसि[8], ऋषिकृतस्यैनसोऽवयजनमसि, आत्मकृतस्यैनसोऽवयजनमसि[9], एनस एनसोऽवयजनमसि इति ॥२७॥ ? आगच्छन्त्यामग्निं नयत्य (······) ? दूत्तरे वेद्यन्तरे पूर्वमायत्तान् ॥२८॥ अप्सुधौतस्य सोम देव ते इत्यप्सुषोमाणां पूर्वेषां भक्षयन्ति । °नृभिः सुतस्येष्टयजु=कृतस्योपहूतस्योपहूतो भक्षयामि इति प्राणेन ॥२९॥ अच्छायं वो मरुतः श्लोक [10]एतु इत्यप्सुषोमं[10] नयन्ति । (°अच्छा विष्णुं निषिक्तपामवोभिः । उत प्र-)जायै गृणते वयो धा[11] यूयं पात स्वस्तिभिः सदा नः इति ॥३०॥ समुद्रं वः प्र हिणोमि इति निनीता अपोऽनुमन्त्रयते । °स्वां योनिमपिगच्छत । अरिष्टा अस्माकं वीरा मा परा[12] सेचि [13]नः स्वम्[13] इति ॥३१॥ यदत्र शिष्टँ रसिनः सुतस्य इति समुपह्वावं दधिषोमान् । °यदिन्द्रो=भक्षयामि इति ॥३२॥ परेत्य विष्कल्या[14] (पत्नीः संयाज-)यन्ति ॥३३॥ श्रप्यत[15] एप वारुणो दशकपालोऽवभृथपुरोडाशः ॥३४॥ तमलङ्कृतमाहरन्ति ॥३५॥ स्रुवँ

१. MHP त्रिमुष्टिना. २. MHP यं. ३. MP वर्तन्ते; H वर्तने. ४. MH णावति. ५. MHP abr; see II.2.28–30. ६. MHP abr; see II.2.31–38. ७. MH च्छाकवाना°. ८–८. MHP twice. ९. MH repeat एनसोऽवयजयनमसि. १०–१०. H एवर्त्वित्यप्सु. ११. Cf BV. VII.36.9 : वयो धुः. १२. H पूरा. १३–१३. MHP नस्त्वम्. १४. H विकल्प्या. १५. MH श्रव्यत.

स्रुचमाज्यस्थाल्या(-मा-)ज्यं[1] वारुणं दशकपालं प्रतिप्रस्थाताऽवभृथꣳ[2] सꣳसादयति ॥३६॥ उत्तरेण हविर्धाने दक्षिणेनाग्नीध्रꣳ राजासन्दीं निदधाति ॥३७॥ तस्यामधिषवणचर्मास्तृणाति, अ(-धिषव-)णचर्मे द्रोणकलशं, द्रोणकलशे स्थालीग्रावि्णो[3] वायव्यानि ॥३८॥ दशापवित्रे द्रोणकलशे समवदधति ॥३९॥ उच्छिष्टानि[4] फलके[5] आदधाति ॥४०॥ उद्बृꣳहयन्नेत्यौदुम्बरीम्[6] ॥४१॥ तामवश्रयन्ति[7] ॥४२॥ एवꣳ संक्लृप्तेऽध्वर्युः प्रपद्य हविर्धाने चतुर्गृहीतं गृह्णीते ॥४३॥ तज्जुहोति उदाह्यागुः[8] प्रतिकूलमिव मद्राः इति विमोचनीयाम् । °प्रजानन्तः पथिभिर्देवयानैयु̐क्तास[9] ऋत्विजो देवयोक्त्रैर्विमुञ्चामि ब्रह्मणा देवयज्यायै स्वाहा इति ॥४४॥ धाता रातिः सवितेदं जुषन्ताम् इति नव समिष्टयजूꣳषि जुहोति । °प्रजापतिर्नि=दधातु स्वाहा; समिन्द्र=नाꣳ स्वाहा; सं वर्चसा=ष्टꣳ स्वाहा; यदद्य=द्वान् स्वाहा; स्वगा वो=सूनि स्वाहा; यानाऽवह=तानु[10] स्वाहा इति षड् ऋङ्मयाण्यहौषीत्[11] ॥४५॥ त्रीणि यजूꣳषि जुहोति ॥४६॥ यज्ञ यज्ञं गच्छ=सुवीरः स्वाहा इति स्रुवेण हुत्वा ध्रुवामाप्याय्य देवा गातुविदः इति स्रुचा जुहोति । °गातुं वित्त्वा=वाते धाः इति ॥४७॥ आयुर्दा अग्ने हविषो जुषाणः इत्यासां दशमीं जुहोति ॥४८॥ [ २० ]

आसां दशमीं जुहोति । °घृतप्रतीको=दिमꣳ स्वाहा इति ॥१॥ अत्र नैष्ययनानि जुहोति ॥२॥ आददतेऽवभृथम् ॥३॥ अन्तरा चात्वालं चोत्करं च गत्वा वेद्यन्ते स्थित्वाऽऽह साम ब्रूहि इति ॥४॥ अवभृथसामाह प्रस्तोता ॥५॥ त्रिर्निधनमुपयन्ति ॥६॥ पुरुषःपुरुषो निधनमुपयन्ति ॥७॥ पुरुषःपुरुषो निधनमुपैति[12] ( इति ब्राह्मणम् )[13] ॥८॥ उरुꣳ हि राजा इत्यवयन्ति । °वरुणश्च=विधश्चित् इति ॥९॥ [14]स्थित्वैवाह साम ब्रूहि इति ॥१०॥ अवभृथसामैवाह प्रस्तोता ॥११॥ त्रिरेव निधनमुपयन्ति ॥१२॥ पुरुषःपुरुषो निधनमुपैति ॥१३॥ उरुꣳ हि राजा इत्यवयन्ति । °वरुणश्च=विधश्चित् इति[14] ॥१४॥ शतं ते राजन् भिषजः इति यतोऽपः[15] परापश्यति

१. MHP °स्थाल्याज्यं. २. MHP अवभृथ. ३. ग्राविण्णो. ४. MHP उच्छिन्दन्ति. ५. MP पलके. ६. HP °बृहन्ने°. ७. P °श्रयति. ८. P °ह्यायुः. ९. MHP °यानोर्यु°. १०. MHP तानि. ११. MHP °ण्यहौषी. १२. MHP °मुपेति. १३. MHP om. १४-१४. H oms; M repeats स्थित्वैवाह=°वयन्ति. १५. MHP यतो वः.

तद्वाचयति । °सहस्रमुर्वी[१] = पर्बर्हिषश्चतुरः प्रयाजान् यजति ॥१५॥ आज्यभागौ यजति ॥१६॥ अग्नयेऽनुब्रूहि इत्याहाज्यस्य गृह्णानश्चतुः ॥१७॥ ओ श्रावय इत्याह ॥१८॥ अग्निं यज इति ॥१९॥ वषट्कृते जुहोति ॥२०॥ सोमायानुब्रूहि इत्याहाज्यस्यैव गृह्णानश्चतुः ॥२१॥ ओ श्रावय इत्याह ॥२२॥ सोमं यज इति ॥२३॥ वषट्कृते जुहोति ॥२४॥ वरुणायाऽनुब्रूहि[२] इत्याहोपस्तृणानोऽवद्यन् ॥२५॥ पश्चाच्च पुरस्ताच्च पुरोडाशस्यावद्यति[३] ॥२६॥ अभिघारयति ॥२७॥ प्रत्यनक्ति ॥२८॥ ओ श्रावय इत्याह ॥२९॥ वरुणं यज इति ॥३०॥ वषट्कृते जुहोति ॥३१॥ अग्नीवरुणाभ्यामनुब्रूहि इत्याहोपस्तीर्णाभिघारितं पुरोडाशमादधानः ॥३२॥ ओ श्रावय इत्याह ॥३३॥ अग्नीवरुणौ यज इति ॥३४॥ वषट्कृते जुहोति ॥३५॥ चतुर्गृहीतं गृह्णीते ॥३६॥ अप(-बर्हिषौ) द्वावनूयाजौ[४] यजति ॥३७॥ अवभृथ[५] = उदुत्तमं वरुण पाशमस्मद् इति मेखले विस्रꣳसयेते । °अवाधमं = स्याम इति ॥३८॥ अभ्यवेत्यान्योऽन्यस्य पृष्टीर्धावतस्तौ[६] ॥३९॥ उद्वयं तमसस्परि इत्युन्नेतोन्नयति । °पश्यन्तो = त्तमम् इति ॥४०॥ एधोऽस्येधिषीमहि इत्यौदुम्बरीः समिधः कुर्वति[७] = वर्चं(-सा इति ॥४१॥ आगत्य विसृजति पूर्वमग्निमपरस्मिन्नाहवनीये ॥४२॥ सꣳस्थामनु हविषो निवर्तयते ॥४३॥)[८] प्रतिप्रस्थातारमाह उदयनीयं [९]निर्वप इति[९] ॥४४॥ अपरेण गार्हपत्यं यज्ञायुधानि सꣳसाद्यापः प्रणीय प्रतिप्रस्थातोदयनीयं निर्वपति देवस्य त्वा ॥४५॥ [२१] [ इति षष्ठोऽनुवाकः ]

देवस्य त्वा सवितुः प्र = हस्ताभ्यामदित्या अग्निवत्यै सोमवत्यै सवितृवत्यै पथ्यवत्यै निर्वपामि इति ॥१॥ चतु(-र्गृहीतं गृह्णीते ॥२॥ दशहोतारं) पृश्नीꣳ व्याचष्टे ॥३॥ तस्य हविष्कृता वाचं विसृज्यावोद्धरन्ति ॥४॥ एतदातिथ्यबर्हिरुपावहृत्य प्रायणीयबर्हिरावपन्निष्कासभाजस्तण्डुलानावपति[१०] ॥५॥ [११]यं चरुमावपति[११] शृतेऽस्मिन्नाज्यमानयति ॥६॥ येन प्रचरिष्यन् भवति तत्पु-

१. MHP abr; see IV. 8.2-5. २. P सोमाया°. ३. MHP °स्यावभृत्यभि°. ४. M द्वावरूयाजौ. ५. MHP abr; see IV.8.28–34. ६. MHP वृष्टिर्धा°. ७. MHP abr; see IV. 8.37-41. ८. Cf.IV.8.41-43. ९-९. MHP निर्वपति. १०. MHP °भाजनन्त°. ११-११. MHP यश्चरु° twice.

नराज्यस्थाल्यां कृत्वा स्तम्बयजु(-र्हरति ॥७॥ वेदिं परिगृह्णाति=)[१] आज्येनोदेहि इति ॥८॥ एतत् कु[२]=सर्वाणि षड् गृहीतानि ॥९॥ इध्मा[३]= बर्हिषीतरे ॥१०॥ समासन्नेऽपानग्रहाꣳश्च पृश्नीꣳश्च व्याचष्टे ॥११॥ ध्रु[४]=मृश्य षड्ढोतारं व्याचष्टे ॥१२॥ अग्नये=[५] क्रम्य यज्ञकृत्वो ध्रुवामभिधारयति हविः ॥१३॥ '[६]अथोपभृतमन्ततः ॥१४॥ आज्यभागा यजति[६] ॥१५॥ अग्नयेऽनुब्रूहि इत्याहाज्यस्य गृह्णानश्चतुः ॥१६॥ ओ श्रावय इत्याह ॥१७॥अग्निं यज इति ॥१८॥ वषट्कृते दक्षिणार्धे जुहोति ॥१९॥ सोमायानुब्रूहि इत्याहाज्यस्यैव गृह्णानश्चतुः ॥२०॥ ओ श्रावय इत्याह ॥२१॥ सोमं यज [७]इति ॥२२॥ वषट्कृतेऽपरार्धे जुहोति ॥२३॥ सवित्रेऽनुब्रूहि इत्याहाज्यस्यैव गृह्णानश्चतुः ॥२४॥ ओ श्रावय इत्याह ॥२५॥ सवितारं यज इति ॥२६॥ वषट्कृते उत्तरार्धे जुहोति ॥२७॥ पथ्यायै स्वस्त्या अनुब्रूहि इत्याहाज्यस्यैव[७] गृह्णानश्चतुः ॥२८॥ ओ श्रावय इत्याह ॥२९॥ पथ्याꣳ स्वस्ति यज इति ॥३०॥ वषट्कृते पूर्वार्धे [८]जुहोति ॥३१॥ अदित्या[८] अनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥३२॥ पश्चाच्च पुरस्ताच्च चरोरवद्यति ॥३३॥ अभिघारयति ॥३४॥ प्रत्यनक्ति ॥३५॥ ओ श्रावय इत्याह ॥३६॥ अदितिं यज इति ॥३७॥ वषट्कृते मध्ये जुहोति ॥३८॥ अग्नये स्विष्टकृतेऽनुब्रूहि इत्याह पञ्चकृत्व उपस्तृणान[९]=आहुतीर्जुहोति ॥३९॥ अनुप्रहरत्यग्नीन्मेक्षणम् ॥४०॥ तत्सꣳस्रावेणाभिजुहोति ॥४१॥ अत्याक्रम्य[१०] = अप उपस्पृश्य नवकृत्व इडाया उपस्तृणोते[११]=शंयुना प्रस्तरपरिधि संप्रकिरति ॥४२॥ चतुर्गृहीतं गृह्णीते ॥४३॥ तज्जुहोति[१२] यास्ते विश्वाः समिधः सन्त्यग्ने इत्यग्निम् । 'याः पृथिव्यां=शर्म[१३] स्वाहा इति ॥४४॥ अपरं चतुर्गृहीतं गृह्णीते ॥४५॥ ध्रुवामाप्याय्य स्वेन यजुषा जुहोति ॥४६॥ तूष्णीमन्तर्वेदि प्रणीता निनयति ॥४७॥ सन्तिष्ठत उदयनीयः ॥४८॥ द्रुत्वा[१४] प्रतिप्रस्था-

---

१. Cf. VI.6.5-9. २. MHP abr; see VI. 6.10-11; M भत्कु, H उत्कु for एतत्कु. ३. MHP abr; see VI. 6.12; MHP गृहीतानीडा for गृहीतानि इध्मा. ४. MHP abr; see VI.6.14. ५. MHP abr; see VI.6.15-22 ६-६. MHP अथोपभृथमनादृत्याज्यभागाव°. ७. MHP °त्याज्य°. ८-८. MP जहोत्यादित्या. ९. MHP abr; see VI.6. 48-56. १०. MHP abr; see VI.6.59-60. ११. MHP abr; see VI.6.60-72. १२. MHP om तत्. १३. MHP शमु. १४. MHP भूत्वा.

ताऽग्नीध्रो[1] वाऽपरेणाहवनीयꣳ स्रुचः संमृज्याज्यानि गृह्णीते पृषदाज्यवन्ति प्रसिद्धम् ॥४९॥ जुहूपभृतोर्गृहीत्वा महीनां पयोऽसि इति पृषदाज्यायो[2]=ज्यस्थालीमुपोद्यच्छति[3] ॥५०॥ इध्माबर्हिः प्रोक्षति[4]=परिधीन्[5] कार्ष्मर्यमयान् समिधावा[6]=युनक्ति ॥५१॥ आगत्य तिरश्ची[7]=बर्हिषीतरे ॥५२॥ समासाद्य ध्रुवा असदन्, यन्मे अग्ने इति समभिमृश्य दशहोतारं व्याचष्टे ॥५३॥ अप उपस्पृश्य निष्क्रम्य परिवीयमाणायानुवाच आह ॥५४॥ मैत्रावरुणः[8] पशुरनूबन्ध्यो हृदयशूलवानेकादशकपालोऽस्य पुरोडाशः ॥५५॥ तस्य प्रसिध्यति कर्माऽऽ समिष्टयजुर्भ्यः[9] ॥५६॥ समिष्टयजूꣳषि हुत्वा अयं ते योनिर्ऋत्वियः इत्यरण्योरग्निꣳ समारोहयते[10] ॥५७॥ [२२]

अयं ते[11]=रोहयते। यतो जातो=रयिम् इति[12]=यत्कुसीदमप्रतीत्तं मयि इत्युत्तरां वेद्यै श्रोणिमुपोषति[13]। येन यमस्य बलिना[14]=पुरः इत्यादित्यमुपतिष्ठते। सꣳस्फानो[15] अभि=असन् इति ॥१॥ स त्वं नो नभसस्पते इति वायुम्[16]=यजमानाय [17]तिष्ठ इति[17] ॥२॥ स्फ्यमादायोदपात्रं च हृदयशूलेनोत्परायन्ति ॥३॥ अन्तरा[18]=वयं द्विष्मः इति ॥४॥ उत्परायन्त्यग्निभिः ॥५॥ अन्तरा चात्वालं चोत्करं च गत्वा त्रीण्युद्धतान्यायन्ति ॥६॥ प्रोक्ष्य अग्नेर्जनित्रमसि इति शकल[19]=दशहोतारमरण्योर्व्याचष्टे ॥७॥ मन्थन्त्यग्निम् ॥८॥ प्रहरत्याहवनीयम् ॥९॥ निदधात्यन्वाहार्यपचनम्[20] ॥१०॥ चतुर्गृहीतं (गृह्णीते ॥११॥ दश-)होतारं[21] गार्हपत्ये जुहुयात् ॥१२॥ सप्तहोतारमाहवनीये ॥१३॥ षड्ढोतारमन्वाहार्यपचने ॥१४॥ पञ्चहोतारमामात्ये

१. MHP °ग्नीध्रे. २. MHP abr; see V.2.37–43. ३. MHP °लीमपो°. ४. MHP abr; see V.3.1–6. ५. MHP परिदधाति. ६. MHP abr; see V.3.6-7. ७. MHP abr; see V.3.8–11. ८. MHP °वरुणं. ९. MHP °यजुर्भ्यः. १०. MP °रोहते. ११. MHP abr; see V.10.1. १२. MHP abr; see V.10.1–3. १३. MH °पौषति. १४. MHP abr; see V.10.3–6. १५. MHP °स्थानो for °स्फानो and add यजमानाय तिष्ठति thereafter. १६. MHP abr; see V.10.7–9. MHP वायुः. १७–१७. MHP तिष्ठति. १८. MHP abr; see V.10.12–13. १९. MHP abr; see I.3.9–14; MHP शकलः. २०. MH °वचनं. २१. MHP तामु°.

॥१५॥ चतुर्होतारꣳ सभायाम् ॥१६॥ आगत्य द्विराज्यस्योपस्तृणीते ॥१७॥ दध्यानयति[1] = विश्वतस्परि[2] स्वाहा इति ॥१८॥ समुद्रादूर्मिर्मधुमाँ उदानद् इत्यप्सु तण्डुलान् जुहोति । उपाꣳशु(-ना = तस्य नाभिः) स्वाहा इति ॥१९॥ आपो हि ष्ठा मयोभुवः इति दर्भस्तम्ब[3] उदपात्रं जुहोति । °ता न ऊर्जे दधातन । महे रणाय चक्षसे स्वाहा इति ॥२०॥ वनस्पते शतवल्शो वि रोह स्वाहा इति पालाशे हिरण्यमुपास्य जुहोति ॥२१॥ पूर्णाहुतिमेवातो (जुहोति ॥२२॥ परिश्रित्याहवनीयं चतुर्गृहीतं गृह्णीते ॥२३॥ अभिपूर्य) सप्तहोतारं व्याचष्टे ॥२४॥ सप्त ते इत्येतामृचं मध्यतो दधाति ॥२५॥ समिधमाधाय होतुराहुत्या जुहोति ॥२६॥ वरमस्मे[4] ददाति ॥२७॥ सन्तिष्ठतेऽग्निष्टोमः सन्तिष्ठतेऽग्निष्टोमः ॥२८॥ [२३]
[ इति सप्तमोऽनुवाकः ]

॥ इत्यग्निष्टोमः समाप्तः ॥

[ इति सप्तमः प्रपाठकः ]



१. MHP abr; see V.10.19–23. २. MHP विश्वतरि. ३. MHP स्तंभ. ४. MHP परस्मै.

# [ अथाष्टमः प्रपाठकः ]

## [ अथाग्निकल्पः ]

(अग्निञ्चेष्यमाणः संभारान् संभरते ॥१॥ स्रुचश्चाज्यस्थालो चोदकुम्भश्च शतमानं च वल्मोकवपा च करणीया[1] चमृद्योक्त्रं च कृष्णाजिनं च द्वे च पुष्करपर्णे[2] कृष्णाजिनस्य (च लोमान्य-) [3]जलोमानि च शर्कराश्चार्मकपालानि च पर्ण(-कषायश्च वेणुकाण्डं च) ॥२॥ चरूनिर्वपति ॥३॥ (-निरु-)प्ते प्राणग्रहाꣳश्च पृश्नीꣳश्च [4]व्याचष्टे ॥४॥ रामासन्ने[4]ऽपानग्रहाꣳश्च पृश्नीꣳ=दशहोतारं व्याचष्टे ॥५॥ वार्त्रघ्नावाज्यभागौ ॥६॥ द्वौ समुद्रौ इति हविषः पुरोनुवाक्या । [5]विततावजूर्यौ पर्यावर्तेते= सेतुनाऽतियन्त्यन्य(-म् इति ॥७॥ द्वे द्रधसी इति याज्या । [5]सतती वस्त जा-)यैं इति । ८॥ वषट्कृते जुहोति ॥९॥ त्रिष्टुभौ संयाज्ये ॥१०॥ सन्ततिमनुहोतुराहुतिं जुहोति ॥११॥ प्रसिध्यति कर्म ॥१२॥ सन्तिष्ठत एषेष्टिः ॥१३॥ तस्याꣳ सꣳस्थितायां तदानीमेव ब्रह्मणे चरुं निर्वपति ॥१४॥ तस्या एषैवेष्टिक्लृप्तिर्या पूर्वस्यै ॥१५॥ दशहोत्रैव[6] होता ॥१६॥ ब्रह्मजज्ञानम् इति हविषः[7] (पुरोनुवाक्या) । [5]प्रथमं=सतश्च विवः इति ॥१७॥ वत्सो विराजः[8] इति याज्या । [5]ऋषभो रयीणामन्तरिक्षं विश्वरूप आ विवेश तमर्कैरभ्यर्चन्ति वत्सं ब्रह्म सन्तं ब्रह्मणा वर्धयन्तः इति ॥१८॥ चतस्र आशाः प्रचरन्त्वग्नये[9] इत्युपवेवेष्टि[10]। [5]इमं नो यज्ञं नयतु=त्याहुतीनाम् इति ॥१९॥ वषट्कृते जुहोति ॥२०॥ त्रिष्टुभौ संयाज्ये[11] ॥२१॥ (सन्तति-)मनुहोतुराहुतिं जुहोति ॥२२॥ प्रसिध्यति कर्म ॥२३॥ सन्तिष्ठत एषेष्टिः ॥२४॥ एतस्यै सꣳस्थामनूत्तरवेद्यै काले कूपं खनन्ति ॥२५॥ तस्मिन् करणीयां[12] मृदमवदधति ॥२६॥ दक्षिणतोऽस्या उदकुम्भं विमिन्वन्ति[13] ॥२७॥ वल्मीकवपां निदधाति ॥२८॥ तमपरेण पुरुषः सꣳशिष्टस्तिष्ठति ॥२९॥ मयि गृह्णाम्यग्रे अग्निम् इति द्वाभ्यामात्मन्नग्निं गृह्णीतेऽध्वर्युः । [5]रायस्पोषाय=परा गात्[14] इति ॥३०॥ यास्ते अग्ने समिधः इति स्त्रयंञ्चिति

१. MHP करुणी. २. H °वर्णे. ३. MHP om. ४–४. H °चष्टेऽसमा°. ५. MHP abr; see I.7.5–6. ६. P होतेव. ७. MHP हविषा. ८. MH विराजाम्; H विराजम्. ९. MHP °चरन्त्यग्न°. १०. MHP उपवशि. ११. MH सा याज्ये. १२. MHP करुणी°. १३. MP निमन्व°. १४. MHP गाः.

जपति। °यानि धाम=प्रजानन् इति ॥३१॥ चतुर्गृहीतं गृह्णीते ॥३२॥ तज्जुहोति शृणोत्वग्निः समिधा हवं मे इत्यनुवित्तिमाहवनीये। °शृण्वन्त्वापो =हवं मे स्वाहा इति ॥३३॥ अपरं चतुर्गृहीतं गृह्णीते ॥३४॥ तज्जुहोति युञ्जानः प्रथमं मनः इत्यष्टौ सावित्राणि निगद्य ऋचा स्तोमꣳ समर्धय इति यजुरन्त्यं कृत्वा। °गायत्रेण रथन्तरम्। बृहद् गायत्रवर्तनि स्वाहा इति ॥३५॥ देवस्य त्वा सवितुः प्रसवे इति चतुर्भिरभ्रिमादत्ते ॥३६॥ [१]

चतुर्भिरभ्रिमादत्ते। °अश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां गायत्रेण छन्दसाऽऽददेऽङ्गिरस्वदभ्रिरसि नारिरसि पृथिव्याः=आनुष्टुभेन त्वा छन्दसाऽऽददेऽङ्गिरस्वद् इति ॥१॥ इमामगृभ्णन् रशनामृतस्य इत्यश्वस्य रशनामादत्ते, तूष्णीं गर्दभस्य। °पूर्वं आयुषि=सरमारपन्ती[१] इति ॥२॥ प्रतूर्तं वाजिन्ना द्रव इत्यश्वमभिदधाति। °वरिष्ठा[२]=योनिः इति ॥३॥ युञ्जाथाꣳ रासभं युवम् इति गर्दभम्। °अस्मिन् यामे वृषण्वसू अ=इन्द्रमूतये इति ॥४॥ रशने समावृङ्क्ते ॥५॥ प्रतूर्वंन्नेह्यवक्रामन्[३] इत्यश्वेन पूर्वेण प्रयन्ति[४], तूष्णीमपरेण गर्दभेन। °अशस्ती[५] रुद्रस्य=ङ्गिरस्वदच्छेहि इति ॥६॥ क्वेथ[६] इति पुरुषः सꣳशिष्टः पृच्छति ॥७॥ अग्निं पुरीष्यमङ्गिरस्वदच्छेमः[७] इत्याह ॥८॥ वाजं ते वृञ्जे इति ॥९॥ अग्निं पुरीष्यमङ्गिरस्वद् भरिष्यामः इति वल्मीकवपामुपतिष्ठते ॥१०॥ अन्वग्निरुषसामग्रमख्यद् इति यतः करणीयां मृदं परापश्यति तद्वाचयति। °अन्वहानि[८]=आ ततान इति[९] ॥११॥ आगत्य वाज्यध्वनः इति प्राञ्चमश्वमाक्रमयति दक्षिणस्येमस्य पदा करणीयां[१०] मृदम्। °सर्वा मृधो=नि चिकीषते इति ॥१२॥ आक्रम्य वाजिन् पृथिवीम् इति पुनः प्रत्यञ्चं तेनैव। °अग्निमिच्छ=तं वयम् इति ॥१३॥ द्यौस्ते पृष्ठम् इत्यस्य पृष्ठꣳ संमार्ष्टि। °पृथिवी सधस्थ=पृतन्यतो[११]ऽधरे सन्तु शत्रवोऽधरे[१२] ऽसौ इति यं द्वेष्टि यजमानस्तं ध्यायति ॥१४॥ उत्क्राम इति द्वाभ्यामुत्क्रमयति ॥१५॥ [२]

उत्क्राम इति द्वाभ्यामुत्क्रमयति[१३]। (°महते)[१४] सौमगाया=उत्तमे इति ॥१॥ अपो देवीरुप सृज इत्यप[१५] उपसृजति। °मधुमती=पिप्पलाः इति ॥२॥ चतुर्गृहीतं गृह्णीते ॥३॥ तस्मा अन्वाह अग्निं घृतेन हविषा जुह्वदेवमुपासदम्। तस्य मानुरजस्र[१६] इच्छुक्रो देवेषु रोचते इति ॥४॥ (जिघर्म्यग्निं मनसा घृ-)तेन

१. MHP °मारवन्ती. २. P विरिष्टा. ३. MHP °तूर्तंन्नह्य° [H °न्नेह्य°] ४. H यान्ति. ५. MHP °शास्ति. ६. H क्वोथ. ७. MHP पुरीपम°. ८. P °हानि. ९. MHP add आह. १०. MHP कङ्किणी° ११. MHP दवृतन्यन्यतो. १२. MHP °धरो. १३. MHP °माक्रम° १४. MHP om. १५. P °त्य उप°. १६. MHP मानुदज°.

  

इति पदे हिरण्यमुपास्य जुहोति प्राङासीनः। [1]प्रतिक्ष्यन्तं = विदानꣳ स्वाहा इति ।।५।। अपरं चतुर्गृहीतं गृह्णीते ।।६।। तस्मा अन्वाह उप त्वा नमसा वयꣳ सदेम जुह्वतो घृतैः । शोचिष्केशममर्त्यंꣳ शुक्रजुह्व[2] मरिभ्रजम्[3] इति ।।७।। आ त्वा जिघर्मि वचसा [4]घृतेन इति[4] पदे हिरण्य(-मुपास्य जुहोति । [5]अरक्षसा = जहृषाणः स्वाहा इति ।।८।। परि वाजपतिः कविः इति तिसृभिः [5]परिलिखत्यभ्रिया करणीयां[5] मृदम् । [6]अग्निर्हव्या = दाशुषे इ ति गायत्रिया; परि त्वाऽग्ने-पुरं = गुरावतः इत्यनुष्टुभा; त्वमग्ने द्युभि = जायसे शुचिः इति त्रिष्टुभा ।।९।। देवस्य त्वा सवितुः प्रसवे इति द्वाभ्यां खनत्यभ्रिया करणीयां[6] मृदम् । ([7]अश्विनोर्बाहुभ्यां पूष्णो) हस्ताभ्यां पृथिव्याः = मङ्गिरस्वत् खनामि; ज्योतिष्मन्तं त्वाऽग्ने = खनामि इति ।।१०।। अपां पृष्ठमसि इति पुष्करपर्णमादत्ते । [7]सप्रथा[7] उर्वग्नि भरिष्यदपरावपिष्ठम् इति ।।११।। वर्धमानम् इत्येनद्विसारयति । [8]मह आ च = वरिणा प्रथस्व इति ।।१२।। तत् शर्म च स्थो वर्म च स्थः इति कृष्णाजिनेन सꣳस्तृणाति प्राचीनग्रीवेणोत्तरलोम्ना । [8]अच्छिद्रे बहुले = पुरीष्यम् इति ।।१३।। पुरीष्योऽसि विश्वभराः इति प्रथमं पिण्डं हरत्यभ्रिया कृष्णाजिनस्यार्धम् । [9]अथर्वा त्वा[9] = मन्थदग्ने इति ।।१४।। त्वामग्ने पुष्करादधि इति द्वितीयम् । [9]अथर्वा निरमन्थत[9] । मूर्ध्नो[10] विश्वस्य वाघतः इति ।।१५।। तमु त्वा दध्यङ् ऋषिः इति तृतीयम् । [9]पुत्र[11] ईधे = पुरन्दरम् इति ।।१६।। तमु त्वा पाथ्यो वृषा इति चतुर्थम् । [9]समीधे[12] दस्युहन्तमं = रणेरणे इति ।।१७।। सीद [13]होतः इति[13] चतस्र उत्तरास्त्रिष्टुभः ।।१८।। ताभिर्हरति वाऽनुमन्त्रयते ।।१९।। गायत्रीभिः पूर्वाभिर्ब्राह्मणस्य संभरेत्[14] त्रिष्टुग्भी राजन्यस्य ।।२०।। संवसाथाꣳ सुवर्विदा इत्युपरिष्टात्पुष्करपर्णेन प्रोर्णोति । [9]समीची उरसा = मजस्रमित् इति ।।२१।। उन्नम्भय पृथिवीम् इत्येतस्मिन् कूप उदकुम्भं निनयति । [9]भिन्द्धीदं = वि सृजा दृतिम् इति ।।२२।। [३]

[ इति प्रथमोनुऽवाकः ]

सं ते वायुः इत्येनꣳ संकिरति । [9]मातरिश्वा = देवि वषडस्तु[15] तुभ्यम् इति ।।१।। सुजातो ज्योतिषा सह इति कृष्णाजिनमुपनह्यति । [9]शर्म वरु-

---

१. MHP प्रतीक्ष्य°. २. MHP °जुह्वां. ३. MHP °भ्रदम्. Caland conjectures मरिभ्रदम् as मरिभ्रजम् probably metrical shortening of मरिभ्राजम् (Ao IV.161:48.3–7). ४–४. MHP घृतेनन्ति. ५–५. MHP °त्यमिधा करुणो° ६. MHP करुणी. ७. P स प्रथमा. ८. MHP त्व. ९–९. MHP अथर्वागिरम°. १०. MP मूर्धो. ११. MHP पुत्रं. १२. MHP समिधे. १३–१३. MHP होतरि. १४. MHP संभरे. १५. MHP वडवस्तु.

थमा = विभावसो इति ॥२॥ उदु[1] तिष्ठ स्वध्वर इति[2] द्वाभ्यामुपतिष्ठति । अवा[3] नो देव्या = विह्वयामहे[4] इति ॥३॥ स जातो गर्भो असि रोदस्योः इत्येकया प्रक्रामति । °अग्ने चारुर्विभृतः = अधि कनिक्रदद् गाः इति ॥४॥ स्थिरो भव वीड्वङ्ग इति गर्दभमभिमृशति[5] ॥५॥ आशुर्भव वाज्यर्वन् इत्यश्वम् ॥६॥ पृथुर्भव सुषदस्त्वम् इति गर्दभ आसादयति । °अग्नेः पुरीष-वाहनः इति ॥७॥ शिवो भव प्रजाभ्यः इत्यासन्नमुपतिष्ठते । °मानुषीभ्य = वनस्पतीन् इति ॥८॥ प्रैतु वाजी कनिक्रदत् इत्यश्वेन पूर्वेण प्रयन्ति ॥९॥ नानदद्रासभः पत्वा इत्यपरेण गर्दभम्[6] ॥१०॥ भरन्नग्निं पुरीष्यम् [7]इत्यनु-मन्त्रयते । °मा पतद्यायुषः[7] = समुद्रियम् । अग्न आ याहि वीतये । ऋतꣳ सत्यमृतꣳ सत्यम् इति ॥११॥ किं भरथ इति पुरुषः सꣳशिष्टः पृच्छति ॥१२॥ अग्निं पुरीष्यमङ्गिरस्वद् भरामहे[8] इत्याह ॥१३॥ वाजं ते वृञ्जे इति ॥१४॥ ओषधयः प्रतिगृह्णीताग्निमेतम् इत्युत्तरेणाहवनीयमोषधीः सꣳस्तीर्णा अनुमन्त्रयते । °शिवमायन्त हन्तव इति ॥१५॥ ओषधयः प्रतिमोदध्वमेनम् इत्युपावहरति । °पुष्पावतीः = माऽसदत् इति ॥१६॥ इन्द्रं विश्वा अवीवृधन् इत्युदञ्चमश्वमुत्सृजति[9] । °समुद्रव्यचसं गिरः । रथीतमꣳरथीनां वाजानाꣳ सत्पतिं पतिम् इति ॥१७॥ तमनु गर्दभम् ॥१८॥ आनयन्ति पत्नीम् ॥१९॥ [४]

आनयन्ति पत्नीम् ॥१॥ तस्यामागतायां वि पाजसा[10] इति विस्रꣳ-सयति । °पृथुना = णीतौ इति ॥२॥ आपो हि ष्ठा मयोभुवः इति तिसृभिः पर्णकषायेणावोक्षति । °ता न ऊर्जे = जनयथा च नः इति ॥३॥ मित्रः सꣳसृज्य पृथिवीम् इति शर्कराभिश्चार्मकपालैश्च सꣳसृजति । °भूमिं च = विभुम् इति ॥४॥ अयक्ष्माय त्वा सꣳसृजामि प्रजाभ्यः इतीतरैः[11] संभारैः । °विश्वे त्वा देवा वैश्वानराः सꣳसृजन्त्वानुष्टुभेन छन्दसाङ्गिरस्वत् इति ॥५॥ प्रभ्णाय मृदं मखस्य शिरोऽसि इति पिण्डं करोति ॥६॥ यज्ञस्य पदे[12] स्थः इत्यङ्गुष्ठाभ्यामवस्कभ्नाति ॥७॥ एवमेव चतुरः पिण्डान् करोति ॥८॥

१. MHP उद. २. MHP इरेति. ३. MHP अपा. ४. MHP ह्वयाम. ५. MHP °मृश्यति. ६. MHP गर्दभौ. ७–७. MHP मा पाद्यायुषा [H यतेऽमा पाद्या°]. ८. MP °द्वरमह. ९. MHP °मश्वमसृ°. १०. MHP वाज°. ११. MHP इतीतरे. १२. MH चदे.

रुद्राः सम्भृत्य पृथिवीम् इति प्रथमं पिण्डं पत्न्यै प्रयच्छति ॥९॥ तमुत्साय[1] उखां करोति तस्यै वृहज्ज्योतिः समीधिरे=रोचते इति ॥१०॥ वस(-वस्त्वा कृण्व-)न्तु इत्यनुमन्त्रयते। °गायत्रेण छन्दसाऽङ्गिरस्वद् पृथिव्यसि ध्रुवाऽसि धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान् यजमानाय इति ॥११॥ सꣳसृष्टां वसुभिः इति द्वितीयम्। °रुद्रै=करोतु ताम् इति ॥१२॥ रुद्रास्त्वा कृण्वन्तु इत्यनुमन्त्रयते[3]। °त्रैष्टुभेन छन्दसाऽङ्गिरस्वद(-न्तरिक्षमसि ध्रुवाऽसि) धारया=मानाय इति ॥१३॥ सिनीवाली सुकपर्दा इति तृतीयम्। °सुकुरीरा=हस्तयोः इति[4] ॥१४॥ आदित्यास्त्वा[5] कृण्वन्तु इत्यनुमन्त्रयते। °जागतेन छन्दसाऽङ्गिरस्वद् द्यौरसि ध्रुवाऽसि=मानाय इति ॥१५॥ उखां करोतु शक्त्या इति चतुर्थम्। °वाहुभ्या=गर्भं आ इति ॥१६॥ विश्वे त्वा देवा[6] वै(-श्वानराः कृण्वन्तु इत्यनुमन्त्रयते। °आनुष्टुभेन छन्दसाऽ-)ङ्गिरस्वद् दि(-शोऽसि) ध्रुवाऽसि धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान् यजमानाय इति ॥१७॥ तामेतामुखां त्र्युद्धिं नवाश्रिं चतुःस्तनां करोति ॥१८॥ त्रेधा विहितास्यै तिस्रास्तस्र ऊर्ध्वाश्रयो भवन्ति ॥१९॥ एकतमास्वश्रिषु [7]चतुःस्त(-नायाꣳ रास्नां पर्यस्यति अदित्यै रास्नाऽसि इ-)ति ॥२०॥ अ(-दितिस्ते विलं) गृह्णातु इति तत ऊर्ध्वं बिलं करोति। °पाङ्क्तेन छन्दसाऽङ्गिरस्वद् इति ॥२१॥ कृत्वाय सा महीमुखाम् इति निदधाति[8]। °मृन्मयीं=पयान् इति[9] ॥२२॥ तूष्णीमितरामुखां करोति ॥२३॥ उपवातयन्ति ॥२४॥ धावनाभिधावन्ति[10] ॥२५॥ क्लृप्तिकैर्वेणुकाण्डैः श्लक्ष्णैरश्मभिर्य(-दोपवातान्) मन्यते(ऽथ धूप-)यिष्यन् संभारान् संभरते [11]अश्वशकानि गोमयानि (वै-)ल्वानि [12]वृंवाणि परुतृणानि[12] दारूणि गोश्च क्षीरमजायै च ॥२६॥ उत्तरेण शालां चतुःस्रक्ति कूपं खनन्ति ॥२७॥ तत्परिश्रितेऽन्यतोऽग्निमाहृत्य सप्ताश्वशकानादीप्य[13] वसवस्त्वा धूपयन्तु इत्येकैकमुखायां[14] प्रत्यस्यति। °गायत्रेण छन्दसा[15]-

१. MHP तमु साय. २. MHP om. ३. MHP om इति. ४. MHP om. ५. MHP आदित्या twice. ६. MHP देवेभ्य वा. ७. MHP चतुरस्त; cf. BaudhŚS X.5 : 5.16 : चतुरङ्गुले. ८. MH विदवा' ९. MHP इति twice. १०. MHP उपपायन्निधा'. ११. MHP रश्वैश. MHP give the sign of abr. text=before अश्व. १२–१२. MHP वरुणानि. १३. MHP नादीच्य. १४. MHP om इति. १५. HP add ददे after छन्दसा.

ऽङ्गिरस्वद्द्रुद्रास्त्वा = वरुणस्त्वा धूपयन्त्वङ्गिरस्वद् इति ॥२८॥ तूष्णी(-मितरां प्र-)त्यस्य अदितिस्त्वा इति पुरैव खातं कूपमभ्रिया खनति। °देवी-र्विश्वदेव्यावती पृथिव्याः सधस्थे = त्ववट इति ॥२९॥ श्रपणैः[1] कूपमवस्तीर्य देवानां त्वा पत्नीः इत्युखामवदधाति। °देवीर्विश्व = दधत्तूखे इति ॥३०॥ तूष्णीमितरामवधाय श्रपणैरभिच्छाद्य[2] धिषणास्त्वा इत्यभीन्धे। °देवीर्विश्व= दभीन्ध(-तामुखे इ-)ति ॥३१॥ ग्नास्त्वा इति श्रपयति। ° देवीर्विश्व = च्छ्रपयन्तूखे इति ॥३२॥ वरुत्रयस्त्वा इति पचति। °देवीर्विश्व = पचन्तूखे इति ॥३३॥ मित्रैतामुखां पच इत्युपतिष्ठते। °एषा मा = द्युम्नं[3] चित्रश्रवस्तमम् इति ॥३४॥ नाभिप्राण्यान्नाभिच्छायां कुर्यात् ॥३५॥ अभीमां महिना दिवम् इत्येतयैव मंत्रियोपचरानीक्षते[4] ॥३६॥ यदा धूपिते मन्यतेऽथ देवस्त्वा [5]सवितोद्वपतु इत्यभ्रिया[5]ऽङ्गारानुद्वपति। °सुपाणिः स्वङ्गुरिः सु = शक्त्या इति ॥३७॥ अपद्यमाना पृथिवी[6] इत्येनामाह्वारयति[7]। °आशा दिश[8] आ पृण[9] इति ॥३८॥ उत्तिष्ठ[10] बृहती भव इत्युद्धरति। °ऊर्ध्वा तिष्ठ ध्रुवा त्वम् इति ॥३९॥ क्षेमाय त्वा इति दक्षिणतः कूपबिले सादयति ॥४०॥ तूष्णी-मितरामुद्धृत्य कूपबिल एव सादयति ॥४१॥ वसवस्त्वाऽऽछृन्दन्तु[11] इत्येनाम-जक्षीरेण छृणत्ति। °गायत्रेण छन्दसाऽङ्गि = आनुष्टुभेन छन्दसाऽङ्गिरस्वत् इति ॥४२॥ तूष्णीं गोक्षीरेण विष्यन्दयति ॥४३॥ तूष्णीमितरामजक्षी-रेणाच्छृद्य[12] गोक्षीरेणैव विष्यन्दयति ॥४४॥ धुतो चूर्णे उखे निदधाति ॥४५॥ [ ५ ] [ इति द्वितीयोऽनुवाकः ]

## [ त्रैधातवीयेष्टिः ]

त्रैधातवीयैवात इष्टिः ॥१॥ तस्यै संभारा हिरण्यं धेनुस्ताप्यं पुण्ड-रीके व्रीहियवा द्वादशकपालानि परीणद्धन्ति[13] ॥२॥ यज्ञायुधानि सꣳसा-द्यापः प्रणीय त्रैधातवीयामिष्टिं निर्वपति। °देवस्य त्वा = हस्ताभ्यामिन्द्रा-विष्णुभ्यां जुष्टं निर्वपामि इति चतुरो मुष्टीन् व्रीहीणाम् ॥३॥ एवमेव चतुरो मुष्टीन् यवानाम्[14] ॥१४॥ निरुप्ते प्राण[15] = ꣳश्च व्याचष्टे ॥५॥ तस्य

१. MHP श्रवणैः. २ MHP श्रवणैं°. ३. P द्युम्नश्चि°. ४. MHP °चारामीक्षते. ५–५. P °वपत्यभ्रिया°. ६. MHP पृथिवीम्. ७. P °माह्वर°. ८. MH °शां. ९. MP वृण. १०. M °त्तिष्ठन्. ११. MP छन्द°. १२. MHP °च्छिद्य. १३. M परिण°, H परिणदन्ति. १४. MHP repeat एवमेव चतुरो मुष्टीन् व्रीहीणाम् after यवानाम्. १५. MHP abr; see VI.1.14.

हविष्कृता वाचं विसृज्य द्वादशोक्तानि कपालान्युपदधाति[1] परीणद्धन्ति
॥६॥ सार्धं व्रीहीनवघ्नन्ति केवलान् यवान्[2] ॥७॥ सार्धं [3]व्रैहाणि
पिष्टानि[3] कुर्वन्ति केवलानां यवानाम् ॥८॥ व्रैहाणि पिष्टानि[4] संयूय
द्वौ पिण्डौ करोति ॥९॥ तयोरन्यतरमधिश्रयति ॥१०॥ त्वचं [5]ग्राहयति
॥११॥ एतस्मिन्[5] यवमयमधिश्रयति ॥१२॥ त्वचमेव ग्राहयति ॥१३॥
एतस्मिन् व्रैहमधिश्रयति ॥१४॥ त्वचमेव[6] ग्राहयति ॥१५॥ उत्तरमुत्तरं[7]
ज्यायाꣳसं करोति ॥१६॥ अभिवासयति[8] ॥१७॥ श्रप्यत[9] एष ऐन्द्रा-
वैष्णवो द्वादशकपालस्त्रिधातुः ॥१८॥ श्रृतेऽस्मिन् स्तम्बयजुर्हरति ॥१९॥
वेदिं परिगृह्णाति ॥२०॥ करणं जपति ॥२१॥ (प्रसिध्यति)[10] कर्माऽऽ[11] बर्हि-
षस्तरणात् ॥२२॥ स्तीर्णे बर्हिषि चतुरोऽन्तान् वासः सर्पिषा सन्तृप्य[12]
तच्चतुर्गुणं प्राचीनदशमुपरि बर्हिषि ताप्यं विच्छादयति ॥२३॥ तस्मिन्
परिधीन् परिदधाति ॥२४॥ समिधावादधाति ॥२५॥ परिधिषु वाच-
यित्वाऽग्निं युनक्ति ॥२६॥ आगत्य पुण्डरीके तिरश्ची सादयति ॥२७॥
तिरश्च्योः प्रस्तरम् ॥२८॥ प्रस्तरे जुहूम् ॥२९॥ वाससीतरे[13] ॥३०॥ अथ
स्रुवꣳ सादयेत् ॥३१॥ उपरिसंचार्यत्र स्रुवः ॥३२॥ समासन्नेऽपानग्रहाꣳ-
श्च[14]=दशहोतारं व्याचष्टे ॥३३॥ अग्नये समिध्यमानायानुवाच आह ॥३४॥
प्र सो अग्ने तवोतिभिः इत्युष्णिहककुभौ होता[15] धाय्ये करोति । °सुवीरा-
भिस्तरति वाजकर्मभिः । यस्य त्वꣳ संख्यमाविथ[16] इति ककुभम्[17]; प्र
होत्रे पूर्व्यं = [18]न वेधसे इत्युष्णिहम् ॥३५॥ आ जुहोत[18] दुवस्यत इत्यु-
त्सृजत्येताम्[19] ॥३६॥ अग्ने त्री ते वाजिना त्री षधस्था इति त्रिवत्या परिद-
धाति । °तिस्रस्ते = प्रयुच्छन् इति ॥३७॥ अनूक्तासु[20] समिधेनीषु स्रुवेणा-
घारमाघार्याह अग्नीदग्निं त्रिस्त्रिः[21] संमृड्ढि इति ॥३८॥ स्रुग्भ्यामुत्तरम्
॥३९॥ असꣳस्पर्शयन्नत्याक्रम्य ध्रुवाꣳ समज्य सादयित्वा प्रवरं प्रवृ-

१. MHP °न्युपदधाविति. २. MHP यावान्. ३–३. MHP प्रैहाणि विष्टानि. ४. MHP विष्टानि. ५-५. MHP ग्राहयत्यधितस्मिन्. ६. MHP स्वयमेव. ७. MHP °मुत्तर. ८. MH °वासति. ९. MHP श्रव्यत. १०. MHP om. ११. MHP कर्म. १२. HP सन्तप्य. १३. MHP °तरेण. १४. MHP abr. १५. P oms. १६. MH °माविशथ. १७. MHP ककुं. १८-१८. MHP नवे पात्रे उष्णिगा जु°. १९. MHP °त्युत्सजतेत्येताम् [H °त्सृज°]. २०. MHP उत्तरासु. २१. MHP तिस्रस्त्रिः.

णीते ॥४०॥ सीदति होता ॥४१॥ प्रसूतः (स्रुचावादत्ते ॥४२॥ प्रयाजान् यजति ॥४३॥ प्रया-)[१]जानिष्ट्वाऽत्याक्रम्य ध्रुवामभिघारयति हविः ॥४४॥ अथोपभृतम् ॥४५॥ आज्यभागौ यजति ॥४६॥ वार्त्रघ्नावाज्यभागौ ॥४७॥ इन्द्राविष्णुभ्यामनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥४८॥ पश्चाच्च पुरस्ताच्च सर्वेषां पुरोडाशानामभिगमयन्नवद्यति[२] ॥४९॥ अभिघारयति ॥५०॥ प्रत्यनक्ति ॥५१॥ [३]स वां कर्मणा[३] इत्यन्वा(-ह। °समिषा =) न परा जयेथे न = रयेथाम् इति ॥५२॥ वषट्कृते जुहोति ॥५३॥ अग्नये [४]स्विष्टकृतेऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन्[४] ॥५४॥ सकृदुत्तरार्धात् सर्वेषां पुरोडाशानामभिगमयन्नवद्यति ॥५५॥ द्विरभिघारयति ॥५६॥ न प्रत्यनक्ति ॥५७॥ त्रीण्यायूꣳषि इत्यन्वाह। °तव जात = शंयोः इति ॥५८॥ त्रिरस्य इति यजति। °ता परमा सन्ति[५] (सत्या स्पार्हा देवस्य जनि-) मान्यग्नेः। अनन्ते अन्तः परिवीत आगाच्छुचिः शुक्रो अर्यो रोरुचानः इति ॥५९॥ वषट्कृते जुहोति ॥६०॥ अत्याक्रम्य यथायतनꣳ[६] स्रुचौ सादयित्वा प्राशित्रमवद्यति ॥६१॥ अप उपस्पृश्येडामवद्यति[७] ॥६२॥ उपहूतायामिडायामग्नीध आदधाति ॥६३॥ प्राश्नन्ति ॥६४॥ मार्जयन्ते ॥६५॥ परिहरन्ति ब्रह्मणे ॥६६॥ प्राशिते प्राशित्रेऽग्नीदुदपात्रेणोत्कर उपनिदधाति[८] ॥६७॥ यदुपवर्तयन्ते तदग्नीधे ददाति ॥६८॥ हिरण्यं ब्रह्मणे[९], धेनुꣳ होत्रे, ताप्यंमध्वर्यवे ॥६९॥ सन्ततिमनु[१०] होतुराहुतिं जुहोति ॥७०॥ प्रमिद्यति कर्म ॥७१॥ सन्तिष्ठते त्रैधातवीयेष्टिः ॥७२॥ प्राजापत्यमेवातः पशुमालभते ॥७३॥ [६]

## [ प्राजापत्यपश्वालम्भनम् ]

प्राजापत्यमेवातः पशुमालभतेऽजं तूपरम् ॥१॥ तस्य प्रसिद्धं चरणमा सामिधेनीभ्यः ॥२॥ तस्य सामिधेनीनां मीमाꣳसा ॥३॥ एता [११]एव पञ्चदशैता[११] उ सप्तदश॥४॥स यद्येकविꣳशतिं पराचीः[१२] कुर्यादेता [१३]एवैकादश सामिधेन्यः समास्त्वाऽग्न ऋतवो वर्धयन्तु इति दश ॥५॥ एता एकविꣳशतिः पराच्यः ॥६॥ अथ यदि चतुर्विꣳशतिं पराचीः कुर्यादेता[१३] एवैक-

१. MHP thus VI.1.43-45. २. H गमन्नव°. ३-३. MHP सवाङ्करणे°. ४-४. MHP °कृते जुहोत्याहोप°. ५. MHP सतु. ६. MHP यथायथानगं. ७. MHP °स्पृश्येऽपाम°; H °वद्युपह°. ८. MP दधति. ९. MHP ब्राह्मणे. १०. MHP सन्ततिरनु, ११-११. MHP एवञ्चदशै°; thus Ao IV,164:58.3. १२. MHP पराचीं. १३-१३. H oms.

विᳬशतिः सामिधेन्यः, पृथुपाजवत्यौ[1] धाय्ये, स्वारुहा यस्य श्रियो दृशे इति चतुर्विᳬशीं धाय्यां[2] कुर्यात्। °रयिर्वीरवतो यथा अग्ने[3] यज्ञस्य चेतते इति ॥७॥ एता उ चतुर्विᳬशतिः पराच्यः ॥८॥ अथ यदि चतुर्विᳬशतिमपराचीः[4] [5]कुर्यादपोद्धरेदेतास्तिस्रो धाय्याः[5] आ जुहोत दुवस्यत इति एतामु[6] सामिधेनीनामपैवोद्धरेत्[7] ॥९॥ दशेतरा दशेतराः ॥१०॥ तासां त्रिः शस्ता[8] प्रथमा त्रिः शस्तोत्तमा[9] ॥११॥ एता उ चतुर्विᳬशतिरपराच्यः[10] ॥१२॥ सप्तदशैवानुब्रूयाद् [11]एतत् स्थितम्[11] ॥१३॥ अनूक्तासु सामिधेनीषु स्रुवेणाघारमाघारयति मनसा स्वयᳬसम्नन्नम् ॥१४॥ हिरण्यगर्भः समवर्तताग्रे इति स्रुग्भ्यामुत्तरम्। ° भूतस्य=विधेम इति ॥१५॥ प्रसिध्यति [12]कर्म ॥१६॥ ओ श्रावय इत्याश्रावयति[12] ॥१७॥ सीदति होता ॥१८॥ प्रसूतः स्रुचावादत्ते ॥१९॥ प्रयाजान् यजति ॥२०॥ ऊर्ध्वा अस्य समिधो भवन्ति इत्येता होताऽऽप्रीः करोत्येताभिर्यजति। °ऊर्ध्वा शुक्रा शोचीᳬ=सुनोः इति ॥२१॥ समिधो यजति ॥२२॥ तनूनपाद् इति तनूनपातं[13] यजति। °असुरो=घृतेन इति ॥२३॥ मध्वा यज्ञं नक्षसे प्रीणानः इत्युत्सृजत्येताम्। °नाराशᳬस [14]एष= विश्ववारः इति ॥२४॥ अच्छायमेति इतीडो[14] यजति। °शवसा घृतेनेडानो=प्रयत्सु इति ॥२५॥ स यक्षदस्य महिमानमग्ने इति बर्हिर्यजति। °स ई मन्द्रासु=धातमश्च इति ॥२६॥ द्वारो देवीः इति द्वारो[15] यजति। °अन्वस्य विश्वे=पत्यमानाः इति ॥२७॥ ते अस्य इत्युषासानक्ते[16] यजति। °योषणे दिव्ये=अध्वरं नः इति ॥२८॥ दैव्या होतारौ इति होतारौ यजति। °ऊर्ध्वमध्वरं=स्विष्टिम् इति ॥२९॥ तिस्रो देवीः इति ता यजति। °बर्हिरेदं=[17]गृणानाः इति[17] ॥३०॥ तन्नस्तुरीयम् इति त्वष्टारं यजति। °अद्भुतं पुरुक्षु त्वष्टा सु=मस्मे इति ॥३१॥ वनस्पते इति वनस्पतिं यजति। °अव[18] सृजा

---

१. MHP °र्वाज°. २. MHP धय्यां. ३. MHP अग्रे. ४. MHP °विंशतिपरा°, thus Ao IV.164:58.9. ५–५. H °द्धरेस्तिस्रो धारया. ६. MHP एतावु. ७. MHP °मपैवोर्धरेद्. ८. MHP त्रिशस्ता; thus Ao IV.164:58.11. ९. MH त्रिशस्तो°, १०. MHP °विंशतिमप°. ११-११. M एतत्त स्थि°, H एतत्तत्स्थि°. १२-१२. MHP कर्माश्रावयत्यत्याश्रा° [ H °त्ययाश्रा°; P P यत्याश्रा°]. १३. MP °नपादं. १४-१४. MHP एषोच्छायमतीवीडो. १५. MHP द्वारा. १६. MHP ते for क्ते omitting उषासन°. १७-१७ MHP गृणानेति. १८. MHP अप.

रराण = दयाति इति ॥३२॥ अग्ने स्वा(-हा कृ-)णुहि जातवेदः इति स्वाहाकृतिं[१] प्रैषणवपां परियजति । °इन्द्राय हव्यं = जुषन्ताम् इति ॥३३॥ प्रसिध्यति कर्म ॥३४॥ वपाया एवातः[२] ॥३५॥ प्रजापतये छागस्य वपाया मेदसोऽवदीयमानस्यानुब्रूहि इत्याह स्रुवेण वपाꣳ संप्रलुम्पन्॥३६॥ यः प्राणतः[३] इत्यन्वाह ।°निमिषतो=विधेम (इति ॥३७॥ प्रैषवा-) नेषः ॥३८॥ ओ श्रावय इत्याह ॥३९॥ प्रजापतये छागस्य वपां मेदः प्रस्थितं [४]प्रेष्य इति[४] ॥४०॥ प्रेष्यति मैत्रावरुणः[५] ॥४१॥ य आत्मदा इति यजति । °बलदा = विधेम इति ॥४२॥ वषट्कृते जुहोति ॥४३॥ वपया प्रचर्य आपो हि ष्ठा मयोभुवः इति तृचेन मार्जयन्ते चात्वाले[६] ॥४४॥ [७] [ इति तृतीयोनुवाकः ]

एकविꣳशतिञ्च[७] (माषान् पर्णशाखां च मृत्पिण्डं चोदपात्रं चोत्कुषीं चा-) दत्ते[८] ॥१॥ सप्तधा च वितृण्णां वल्मीकवपाम् ॥२॥ द्रुत्वा पशोरर्धमाह परिवासय पशोः शिरः इति ॥३॥ उभाभ्यां वल्मीकवपां प्रतिनिदधाति पुरुषशीर्षाय[९] पशवे च ॥४॥ एतत्त एतैः परिक्रीणामि इत्याह ॥५॥ सप्तभिर्माषैः[१०] पुरुषशीर्षं परिकिरति ॥६॥ योऽस्य कौष्ठ्य[११] जगतः इति य(-मगाथां गायति । °पार्थिवस्यैक इद्वशी यमं भङ्क्ष्व-)[१२] श्रवो गाय[१२] यां (राजाऽन-) परोध्यः[१३] इति ॥७॥ एतत्त एतैः परिक्रीणामि इत्याह ॥८॥ सप्तभिर्माषैः पुरुषशीर्षं परिकिरति ॥९॥ सप्तहोताऽस्य सवितुः ते इति यमगाथां [१४]गायति । °आलब्धो[१४] दशकक्ष्यः । वैवस्वतस्य सादने सप्तहोतर्यध्वरे इति ॥१०॥ एतत्त (एतैः परिक्रीणामि इत्याह ॥११॥ सप्तभिर्माषैः पुरुषशीर्षं परिकिरति)॥१२॥ अघ्यू त (……क्राति इति यमगाथां गायति । यमस्य गृहेऽध्वरः[१५] । तस्मिन्न कनिक्रदद् [१६]ग्रावोर्ध्वो नृत्यत्यꣳशुभिः इति ॥१३॥ एतदित्याह यमाह प्रतिवेशां कुम्भीमुद्धाय[१७] सुप्रम्रिक्तं प्रम्रिच्यापोदधृत्यास्य[१८] माꣳसानि निधूय मस्तिष्कं

१. MHP °कृति, २. MHP एवातं. ३. MHP प्रोणुंत. ४-४. MHP प्रेष्यति. ५. MHP °वरुणा. ६. MHP चत्वालः. ७. MHP °विशतिश्च. ८. Cf BaudhŚS X.9:9.1-2. ९. MHP पशुशीर्षाय; thus Ao IV.165 : 59.7–8. १०. MHP °र्मासैः. ११. MP कु कौष्ठ्य. १२-१२. MHP स्वतङ्गाय; Cf Ao IV.161:49.1 : स्व तं गाय; thus TĀ VI.5.6. १३. MHP, Ao IV.161:49.1 : °परुध्यते. १४-१४. MH गायत्र्याल°, P गाय तयाल°. १५. MHP गृहेण अध्व°.; thus Ao.IV.161;49.3. १६. H गावो. १७. MHP कुंमीमुघाय; thus Ao IV.165: 59.13. १८. MHP °च्यावोदधृ°.

मृदाऽभिलिप्य[1] [2]निधत्ताद् इति ॥१४॥ तत्तथा कुर्वन्ति ॥१५॥ उत्क्रम्याथा-स्यैते[2] प(-शवः कृता भवन्ति अश्वमि-)[3]वाश्वं[4] कुर्यादृषभमिवर्षभं[5] वृष्णिमिव वृष्णिं वस्तमिव बस्तम् ॥१६॥ त आत्मन्वन्तः सर्वाङ्गाः स्युरपि[6] हैषामाबधानानीव कुर्यात् ॥१७॥ तान् पाकपेष्याणां पिष्टानां[7] कृत्वा यथा प्रवर्तिकां पचन्त्येवं पचति[8] ॥१८॥ अमृदो हैनान् संवत्सरदीक्षायां कुर्याच्छर्कराणां वा ॥१९॥ तान् सहैतेन पशुना पर्यग्निकृत्वोत्सृजति[9] ॥२०॥ (पशु-)ना एव सꣳस्थापयेत्[10] ॥२१॥ अथैतान् पुरोडाशान्निर्वपन्ति प्राजापत्यं द्वादशकपालं वायव्यं चरुं वैश्वानरं द्वादशकपालमग्नये क्षत्र-वते पुरोडाशमष्टाकपालमग्नये क्षत्रभृते पुरोडाशमष्टाकपालमग्नये ब्रह्म-ण्वते पुरोडाशमष्टाकपालमग्नये (पुष्टिम-)ते पुरोडाशमष्टाकपालमि-ति ॥२२॥ तान् श्रपयित्वोपस्तीर्णाभिधारितानासादयन्ति ॥२३॥ पुरस्ता-देषामेतान् पशूनुपसादयन्ति पुरस्तात्प्रत्यगावृत्तमश्वं पश्चात्प्रागावृत्तमृषभं दक्षिणत उदगावृत्तं वृष्णिमुत्तरतो दक्षिणावृत्तं बस्तं मध्ये प्राजापत्यस्य शिरः ॥२४॥ प्रजापतये पुरोडाशस्यावदीयमानस्यानुब्रूहि इति ॥२५॥ पश्चा-च्च पुरस्ताच्च जुह्वामवद्यति ॥२६॥ अभिघारयति ॥२७॥ प्रत्यनक्ति ॥२८॥ सकृदुत्तरार्धादुपभृत्यवद्यति ॥२९॥ नाभिघारयति ॥३०॥ न प्रत्य-नक्ति ॥३१॥ एवमेवैतेषामवदायावदायैव स्विष्टकृते प्रत्यवद्यति ॥३२॥ नाभिघारयति ॥३३॥ न प्रत्यनक्ति ॥३४॥ यस्येमे हिमवन्तः इत्यन्वाह । °महित्वा = विधेम इति ॥३५॥ प्रैषवानेषः ॥३६॥ ओ श्रावय इत्याह ॥३७॥ प्रजापतये पुरोडाशं प्रस्थितं प्रेष्य इति ॥३८॥ प्रेष्यति [11]मैत्रावरुणः ॥३९॥ यं[11] क्रन्दसी इति यजति । °अवसा तस्तभाने[12]=विधेम इति ॥४०॥ वषट्कृते जुहोति ॥४१॥ उपविशति मैत्रावरुणः ॥४२॥ होतैवैतेषामन्वाह ॥४३॥ होता यजति ॥४४॥ [८]

---

१. MHP मृदाभिर्लिप्य; thus Ao IV.165 : 59.14. २-२. MHP °धत्तादितत्तथात्युत्क्र°; thus Ao, ibid. ३. Thus Ao ibid. ४. MHP पाश्वं. ५. MHP °षममवर्ष°. ६. MHP °रमि; thus Ao ibid. ७. MHP इष्टानां. ८. MHP पचेति; thus Ao ibid. ९. MHP °त्सृजेति. १०. MHP °पये. ११-११. MHP °वरुणोऽयं. १२. MHP तस्ताने.

वायवेऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥१॥ पीवोऽन्नाँ इत्यन्वाह । °रयिवृध=चक्रुः इति ॥२॥ [1]राये नु[1] यम् इति यजति । °जज्ञतू=निरेके इति ॥३॥ वषट्कृते जुहोति ॥४॥ वैश्वानरायानुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥५॥ वैश्वानराय पृथुपाजसे[2] इत्यन्वाह । °विपो[3] रत्ना[4]=महित्वा इति ॥६॥ वषट्कृते जुहोति[5] ॥७॥ प्राजापत्यस्य शिर एतेषाꣳ[6] सꣳस्रावेणाभिघारयति ॥८॥ अग्नये क्षत्रवतेऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥९॥ क्षत्रेणाग्ने[7] इत्यन्वाह । °स्वायुः सꣳ रमस्व[8]=दीदिहीह इति ॥१०॥ इहैवाग्ने इति यजति । °अधि धारया रयिं मा त्वा=अनिष्टृतः इति ॥११॥ वषट्कृते जुहोति ॥१२॥ अश्वमेतस्य सꣳस्रावेणाभिघारयति ॥१३॥ अग्नये क्षत्रभृतेऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥१४॥ अग्निः क्षत्रभृत् इत्यन्वाह । °अनिभृष्ट=दशं द्याम् इति ॥१५॥ अनाधृष्यः इति यजति । °जातवेदा=नो वृधे इति ॥१६॥ वषट्कृते जुहोति ॥१७॥ ऋषभमेतस्य सꣳस्रावेणाभिघारयति ॥१८॥ अग्नये ब्रह्मण्वते[9]ऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥१९॥ त्वामग्ने इत्यन्वाह । °वृणते ब्राह्मणा=प्रयुच्छन्[10] इति ॥२०॥ सं चेध्यस्वाग्ने इति यजति । °प्र च बोधयैन=माऽन्ये इति ॥२१॥ वषट्कृते जुहोति ॥२२॥ वृष्णिमेतस्य सꣳस्रावेणाभिघारयति ॥२३॥ अग्नये पुष्टिमतेऽनुब्रूहि इत्याहोपस्तृणानोऽवद्यन् ॥२४॥ अवदायात्र स्विष्टकृतं प्रत्यवद्यति ॥२५॥ द्विरभिघारयति ॥२६॥ न प्रत्यनक्ति ॥२७॥ नाभा पृथिव्याः इत्यन्वाह । °समिधान=सासहिम् इति ॥२८॥ अहरहः इति यजति । °अप्रयावं भरन्तोऽश्वा=रिषाम इति ॥२९॥ वषट्कृते जुहोति ॥३०॥ बस्तमेतस्य सꣳस्रावेणाभिघारयति ॥३१॥ अग्नयेऽनुब्रूहि इत्याह पुरोडाशानाꣳ स्विष्टकृतꣳ समनयमानः ॥३२॥ आपो ह[11] यत् इत्यन्वाह । °महतीर्विश्वमाय=ततो देवानां=विधेम इति ॥३३॥ प्रैषवानेषः ॥३४॥ ओ श्रावय इत्याह ॥३५॥ [12]अग्नये पुरोडाशं प्रस्थितं प्रेष्य इति[12] ॥३६॥ प्रेष्यति[13] मैत्रावरुणः ॥३७॥ यश्चिदापः इति यजति । °महिना[14]=विधेम इति ॥३८॥ वषट्कृते जुहोति ॥३९॥ अत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वाऽवदानानि संभिद्य होत्र इडामा-

---

१-१. MP रायेऽनु. २. MHP °वाजसे. ३. MHP विवो. ४. MHP abr; see IV.1. 32-33. ५. H oms. ६. MP एतैषां. ७. P °ग्नय. ८. MHP संभरस्व. ९. MHP ब्रह्मतेव. १०. MHP प्रयच्छन्. ११. MHP om. १२-१२. MHP अग्नयेऽनुब्रूहीति. १३. MHP प्रेष्यति. १४. MHP मग्निना.

दधाति ॥४०॥ उपहूतायामिडायामग्नीध आदधाति ॥४१॥ प्राश्नन्ति॥४२॥ मार्जयन्ते ॥४३॥प्रसिध्यति कर्म (वसाया)[1] एवातः ॥४४॥ प्रजापतये छागस्य हविषोऽनुब्रूहि इत्याहोत्तिष्ठन्नध्वर्युः ॥४५॥ वसाहोमं प्रतिप्रस्थाताऽऽदत्ते ॥४६॥ येन द्यौरुग्रा इत्यन्वाह । 'पृथिवी च दृढा = विधेम इति ॥४७॥ प्रैषवानेषः ॥४८॥ ओ श्रावय इत्याह ॥४९॥ प्रजापतये छागस्य ( हविषः प्रस्थितं प्रेष्य इति ॥५०॥ प्रेष्यति मैत्रावरुणः ॥५१॥··· ·········)दा इति यजति । 'पुत्रं पितरं=भवद् इति ॥५२॥ वषट्कृते जुहोति ॥५३॥ त्रिष्टुभौ संयाज्ये ॥५४॥ इतीतरा पशोर्मीमाꣳसा[2] ॥५५॥ अथेतरा ॥५६॥ अष्टौ वा एता ऋचः ॥५७॥ तासामाघारस्यैका वपायै द्वे, पुरोडाशस्य द्वे, हविषो द्वे ॥५८॥ उत्सृजत्यासामेकामिडाम् ॥५९॥ अग्नेः प्रकारवः इत्येव पुरोडाशानाꣳ[3] स(-न्तिष्ठते) । °[4]मनना = घृताची इति[4] ॥६०॥ प्रसिध्यति कर्म ॥६१॥ सन्तिष्ठते [5]प्राजापत्यः पशुः[5] ॥६२॥ प्रसिद्धा आग्निष्टोमिका दीक्षणीयाः संभाराः ॥६३॥ [९] [ इति चतुर्थोऽनुवाकः ]

अथेतरे द्वे उखे मुञ्जाश्च क्रुमुकश्चासन्दी[6] च शिक्यं च रुक्मश्च द्वौ कृष्णाजिनपरिकर्तौ[7] तयोरन्यतरस्मिन् विष्यत एकविꣳशति निर्बाधो रुक्मस्त्रोणि सावित्राणि द्वौ (पर्ण-)कपालौ[8] द्वादश समिधो वैकङ्कती शमीमयी[9] पञ्चौदुम्बर्य आश्वत्थी वैकङ्कती शमीमयी द्वे औदुम्बर्यौ ॥१॥ यज्ञायुधानि सꣳसाद्यापः प्रणीयाग्नावैष्णवमेकादशकपालं दीक्षणीयं निर्वपति वैश्वानरं द्वादशकपालम् आदित्यं चरुम् ॥२॥ निरुप्ते प्राणग्रहाꣳश्च पृश्नीꣳश्च व्याचष्टे ॥३॥ हविष्कृता वाचं विसृज्य चतुर्गृहीतेन सप्तहोतारमाहवनीये जुहोति द्वादशतूंन् मधवे स्वाहा, माधवाय स्वाहा इत्येतान्; त्रयस्त्रिꣳशद् यज्ञतनूः[10] प्रजापतिर्मनसाऽन्धो[11]ऽच्छेतः इत्येतान् ॥४॥ शृतेषु हविःषु स्तम्बयजुर्हरति ॥५॥ वेदिं परिगृह्णाति ॥६॥ करणं जपति ॥७॥ प्रसिध्यति [12]कर्माऽधीतस्य यजुषः[12] ॥८॥आकूत्यै प्रयुजेऽग्नये स्वाहा इति स्रुवेणा-

---

१. MHP om. २. MHP पशो मीमंसा. ३. MHP धुरोधाशानां. ४-४. MHP om here and give प्रकारवो मनना = घृताचीति after पशुः ( below S.62). ५-५. MHP °पत्यं पशुं. ६. MHP कमुक°. ७. MHP °परीक°. ८. MHP वकलौ. ९. MHP शमिमीय [ P °मीथ]. १०. MHP व्यञ्जतनूं. ११. P मनसोन्धो. १२-१२. MHP कर्मातीतस्य यजुयं.

धीतस्य यजूꣳषि जुहोति ध्रुवाया अधि । °मेधायै=हविषा वृधातु स्वाहा; आकूतिमग्निं प्रयुजꣳ स्वाहा, मनो=ग्नये वैश्वानराय स्वाहा इति ॥९॥ स्रुवेण हुत्वा ध्रुवामाप्याय्य जुह्वा विश्वे=पुष्यसे स्वाहा इति ॥१०॥ तूष्णीमन्तर्वेदि 'प्रणीता निनीयान्तर्वेदि' कृष्णाजिने आस्तृणाति ॥११॥ ते प्रसिद्धमासर्पंति ॥१२॥ प्रसिध्यति 'कर्माऽङ्गलिनिपेचनात् ॥१३॥ अङ्गुलीरेवातो निपिच्याथ' मा सु भित्था मा सु रिषः इति द्वाभ्यामाहवनीयस्याङ्गारेषूखां प्रवृणक्ति, तस्यां मुञ्जानवदधात्यश्वशकानि गोमयानि 'वैल्वानि पुरुतृणानि' दारूणि । °दꣳहस्व वीडयस्व'=अस्मिन् इति ॥१४॥ मित्रैतामुखां तप इत्युपतिष्ठते । °एषा=स्यभित्यैं' इति ॥१५॥ अवधून्वति' ॥१६॥ पुरस्ताद्वोत्तरतो वाऽग्निं जिजनिष्यन्ति ॥१७॥ द्रवन्नः 'सर्पिरासुतिः इति' जाते क्रुमुकमाज्यसंयुतं' जुहोति स्रुवेण । °प्रत्नो=अद्भुतः स्वाहा इति ॥१८॥ परस्या अधि संवतः इति वैकङ्कतीमादधाति । °अवरां=अव स्वाहा इति ॥१९॥ परमस्याः परावतः इति शमीमयीम् । °रोहिदश्व=त्वं तरा मृधः स्वाहा इति ॥२०॥ [१०]

सीद त्वं मातुरस्या उपस्थे इति तिसृभिर्जातमुपतिष्ठते । °विश्वान्यग्ने=स्वां योनिमिहाऽसदः इति ॥१॥ यदग्ने यानि कानि च इति पञ्चौदुम्बरीराद-धाति । °आ ते=दधाम्यास्ये' स्वाहा इति ॥२॥ दꣳष्ट्राभ्यां मलिम्लून् इत्याश्वत्थीम् । °जम्भ्यैस्तस्करां=मुखादितान् स्वाहा इति ॥३॥ ये जनेषु मलिम्लवः इति वैकङ्कतीम् । °स्तेनासस्तस्करा''=जम्भयो'' स्वाहा इति ॥४॥ ''यो अस्मभ्यमरातीयाद् इति शमीमयीम् । °यश्च नो=भस्मसा कुरु स्वाहा इति'' ॥५॥ सꣳशितं मे ब्रह्म इत्युत्तमे औदुम्बरी वाचयति । °सꣳशितं=स्वां अहꣳ स्वाहा इति ॥६॥ एतस्मिन् काले दक्षिणेनाहवनीयमौदुम्बर्यासन्द्युप-क्लृप्ता'' (भवति) ॥७॥ मातेव पुत्रं पृथिवी पुरीष्यम् इति पर्णकपालाभ्यामुखां परिगृह्णाति । °अग्निꣳ स्वे योनौ विभर्तूखा तां विश्वैर्देवै=प्रजापति

१. P oms २-२. MHP °लिना हि पेचनादङ्गुल एवा नि पिक्ना अथ. ३-३. MHP वृन्बानि परूत्तृणानि. ४. MHP वीधय°. ५. HP अदित्या. ६. MHP om अव. ७-७. MP °रास्तिरिति; H °रास्त्विरिति. ८. MHP कुमुक°. ९. MHP °धाम्यस्यै. १०. P °तस्कर. ११. p जंम्यो. १२-१२. H oms. १३. MHP °नीय औदुम्बर्यां सन्द्युपक्लृप्तां.

विश्वकर्मा वि[1] युनक्तु इति ॥८॥ मृदाभिलिप्ता चेच्छिक्य[2] आदधाति द्वादशोद्यामे ॥९॥ दृशानो रुक्मः इत्यासीनो रुक्मं प्रतिमुञ्चते । °उर्व्या= सुरेताः इति ॥१०॥ विश्वा रूपाणि इत्यग्निं (प्रतिमुञ्चते । °प्रतिमुञ्चते) कविः प्रा=वि राजति इति ॥११॥ नक्तोषासा इति कृष्णाजिनं परिकर्तम्[3] समनसा विरूपे=द्रविणोदाः इति ॥१२॥ सुपर्णोऽसि गरुत्मान् इत्युपतिष्ठते । °त्रिवृत् ते शिरो गायत्रं चक्षुः=यजूᳪषि नाम इति ॥१३॥ सुपर्णोऽसि गरुत्मान् दिवं गच्छ सुवः पत इत्युत्तिष्ठति ॥१४॥ विष्णोः क्रमोऽसि इति विष्णुक्रमान् क्रमते[4] । [5]अभिमातिहा गायत्रं छन्द आरोह='ह दिशोऽनु वि क्रमस्व निर्भक्तः स यं द्विष्मः इति ॥१५॥ [5]सᳪ हरन्त्येतस्मा एतमग्निम्[5] ॥१६॥ अक्रन्दत् इत्येकामन्वाह । °अग्निः स्तनय=भात्यन्तः इति ॥१७॥ अग्नेऽभ्यावर्तिन् इति चतसृभिरावर्तते । °अभि न आ वर्तस्वा=विश्वतस्परि इति ॥१८॥ उदुत्तमं वरुण पाशमस्मद् इत्येकयोन्मुञ्चते । °अवाधमं[6] वि=त(-वानागसो अदितये स्या-)म इति ॥१९॥ आ त्वाऽहा(-रिषम् इति द्वाभ्यामाहर-)ति । °अन्तरभू= विश्वा (सद्यान्या-)प्राः इति ॥२०॥ [११]

सीद त्वं मातुरस्या उपस्थे इति चतसृभिः सन्नमुपतिष्ठते । °विश्वान्यग्ने =ऋतं बृहत् इति ॥१॥ दिवस्परि प्रथमं जज्ञे अग्निः इति वात्सप्रेणोपतिष्ठत एतेनानुवाकेनाविहारम्[7] ॥२॥ मधुश्च माधवश्च इत्युभयैर्ऋतुभिरु(-पतिष्ठते ॥३॥ अहरहः), येन देवा=स्वस्ति स्वाहा, त्रीण्यायूᳪषि=शं योः स्वाहा इत्ये(-ताः समिध आदधाति)[8] ॥४॥ अङ्गुलीरेवातो निपिचति[9] ॥५॥ प्रसिध्यति कर्म ॥६॥ यदस्मै व्रतमाहरन्ति अन्नपतेऽन्नस्य नो देहि इति व्रतानुचर्यौ[10] समिधावादधाति । °अनमीवस्य=द्विपदे चतुष्पदे स्वाहा (इति ॥७॥ वात्सप्रस्यावसथीये[11] यदा कदा च व्रतं प्रदीयते ॥८॥ वसन्ति ॥९॥ प्रातरादित्येन वाचं विसृज्य दृशानो रुक्म इत्येवासीनो रुक्मं प्रतिमुञ्चते ॥१०॥ विश्वा रूपाणि इत्यग्निम् ॥११॥ नक्तोषासा इति कृष्णाजिनं परि-कर्तम् ॥१२॥ सुपर्णोऽसि गरुत्मान् इत्युपतिष्ठते । (त्रिवृत्ते शिरः=यजूᳪषि नाम

१. MHP om. २. MP °श्चे शि०. ३. MHP वरोक°. ४. MHP add इत्येतस्मा एतमग्निम् after क्रमते. ५–५. MHP put this sutra omitting सᳪहरन्ति after क्रमते in the preceding sutra. cf. VIII. 12.17. ६. MHP °तेवधमं. ७. MHP °विकारं; thus below S.27. ८. MHP om; cf. below S.24. ९. MH °पचति. १०. MH प्रतानु°; P oms. ११. MHP प्रास्याधीयेते.

इति)[१] ॥१३॥ सुपर्णोऽसि गरुत्मान् दि(-वं गच्छ सुवः प-)त इत्युत्तिष्ठति ॥१४॥ विष्णोः क्र(-मोऽसि इति विष्णु-)क्र(-मान् क्रम-)ते ॥१५॥ अनु स‌ँहरन्त्येवास्मा एतमग्निम् ॥१६॥ अक्रन्दद् इत्येवैकामन्वाह ॥१७॥ अग्नेऽभ्यावर्तिन् इत्येव चतसृभिरावर्तते ॥१८॥ उदुत्तमं वरुण पाशमस्मद् इत्येवैकयोन्मुञ्चति ॥१९॥ आ त्वाऽहारिषम् इति द्वाभ्यामाहरति ॥२०॥ सीद त्वं = ह‌ँसः शुचिषद् इति चतसृभिः सन्नमुपतिष्ठते ॥२१॥ मधुश्च माधवश्च इति षड्भिः पूर्वै(-र्ऋतुभिरुप-)तिष्ठते ॥२२॥ अहरहः, येन देवाः, त्रीण्यायू‌ँषि इत्येताः समिध आदधाति ॥२३॥ [२]विष्णुक्रमा हरेत ॥२४॥ सायमेतस्याह्नः रात्रि‌ँ रात्रिम्, येन देवाः, त्रीण्यायू‌ँषि इत्येताः समिध आदधाति[२] ॥२५॥ वसन्ति ॥२६॥ प्रातरादित्येन वाचं विसृज्य दिवस्परि प्रथमं जज्ञे अग्निः इत्येव वात्सप्रेणोपतिष्ठत एतेनानुवाकेनाविहारम् ॥२७॥ इषश्चोर्जश्च इति षड्भिरुत्तरैर्ऋतुभिरुपतिष्ठते[३] ॥२८॥ अहरहः, येन देवाः, त्रीण्यायू‌ँषि इत्येताः समिध आदधाति ॥२९॥ वात्सप्रा हरेत ॥३०॥ सायमेतस्याह्नः[४] रात्रि‌ँरात्रिम्, येन देवाः, त्रीण्यायू‌ँषि इत्येताः समिध आदधाति ॥३१॥ स एवमेवैताभ्यां योगाभ्यां पर्यायश एति ॥३२॥ विष्णुक्रमाणामेव पूर्वमहर्वात्सप्रस्योत्तरम्[५] ॥३३॥ स यदि विष्णुक्रमाणां[६] काले दीक्षितमयोग[७] उपेयात् क्रान्त्वैभियुञ्जीत ॥३४॥ [१२]

यदि वात्सप्रस्यावसथोय[८] उपतिष्ठते तप्त्वा व्रतानि वत्सान्[९] संबध्य[१०]=योगावसाने ॥१॥ उदु त्वा विश्वे देवाः इत्येकयाऽग्निमुद्यच्छते । °अग्ने भरन्तु= वसुः इति ॥२॥ कबन्ध आसादयति ॥३॥ सीद त्वं = ह‌ँसः शुचिषद् इति चतसृभिरासन्नमुपतिष्ठते ॥४॥ प्रेदग्ने[११] ज्योतिष्मान् याहि इत्येकया प्रयाति । °शिवेभिः = तनुवा प्रजाः इति ॥५॥ समिधाऽग्निं दुवस्यत इति घृतानुषिक्तामवसिते समिधमादधाति । °घृतैर्बोधयता = जुहोतन स्वाहा इति (ब्राह्मणस्य)[१२]

१. MHP om. २–२. H oms. ३. MHP °रुत्तरेऋतु°. ४. MHP °मेतस्यान्तो. ५. MHP वात्सप्रोस्यो°. ६. MP repeat एव पूर्वमहर्वात्सप्रोस्योत्तरं स यदि after विष्णुक्रमाणां. ७. MHP दीक्षितं योग. ८. MHP °प्रस्यावसयो° [P °प्रास्य°]. ९. MHP वंस्सान्. १०. MHP abr; see VI.4.33–35. ११. M प्रद; P प्रयद. १२. MHP om.

॥६॥ [१]प्रप्रायमग्निर्भरतस्य शृण्वे इति राजन्यस्य । वि य=शिवो नः स्वाहा इति[१] ॥७॥ गार्हपत्यचितेश्च[२] सन्निवापः[३] श्वो राज्ञः क्रय इति ॥८॥ आपो देवी प्रतिगृह्णीत भस्मैतद् इति तिसृभिरप्सूदपात्रे भस्म प्रवेशयति । °स्योनं कृणुध्वꣳ=गर्भो अपामसि इति ॥९॥ प्रसद्य भस्मना योनिम् इति द्वाभ्यामुख्यमभिमृशति[४] । °अपश्च पृथिवीमग्ने=शिवतमः इति ॥१०॥ पुनरूर्जा नि वर्तस्व इति द्वाभ्यामात्मानं विमृष्टे । °पुनरग्न=विश्वतस्परि इति ॥११॥ पुनस्त्वाऽऽदित्या रुद्रा वसवः समिन्धताम् इत्येकयोख्यꣳ समिन्धे । °पुनर्ब्रह्माणो=[५]यजमानस्य कामाः इति ॥१२॥ बोधा नो अस्य वचसो यविष्ठ इत्युपतिष्ठते । °मꣳहिष्ठस्य=द्वेषाꣳसि इति ॥१३॥ रथचक्रमात्रमाहवनीयं गार्हपत्यचित्यै परिखनन्ति ॥१४॥ परिखाय शर्कराभिः परिमिन्दन्ति ॥१५॥ निष्क्रम्य महावेदिं मित्वोत्तरवेद्यै काले सुपर्णं[६] मिमीते ॥१६॥ मित्वा परिखनन्ति ॥१७॥ परिखाय शर्कराभिः परिमिन्वन्ति ॥१८॥ परिमित्य शर्कराभिर्वसन्ति ॥१९॥ [१३] [ इति पञ्चमोऽनुवाकः ]

प्रातरादित्येन वाचं विसृज्य यदि विष्णुक्रमाणां कालो यदि वात्सप्रस्य, विष्णुक्रमानेव क्रमते वात्सप्रेरुपतिष्ठते ॥१॥ उभयैर्ऋतुभिरुपतिष्ठते ॥२॥ अहरहः, येन देवाः, त्रीण्यायूꣳषि समिधाऽग्निं दुवस्यत इत्येताः समिध आदधाति ॥३॥ संवपन्त्येतमग्निꣳ सते ॥४॥ अवोक्ष्यात्मन्नग्निं गृह्णीते ॥५॥ स्वयचितिं जपति ॥६॥ शक्तिरसि इति कार्ष्णीमुपानहमुपमुञ्चते ॥७॥ वाक्त्वा समुद्र [७]उपदधातु इति मध्ये गार्हपत्यचित्या उदपात्रमुपनिनीयोपदधाति । °सुप्रजावनिं रायस्पोषवनिं मह्यं[८] वाजिनाय तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद इति ॥८॥ असौ ध्रुवा सीद इत्युपरि तस्मिन्नमूमुपदधाति । °लोमशेष्टका ज्योतिष्मती तां त्वोपदधेऽस्मै लोकायामुष्मै लोकायाप्त्यै (व्याप्त्यै समाप्त्यै कामाय) सुवर्गाय लोकाय सा सुवर्गं लोकं प्रजानीहि । प्रजापतिस्त्वा सादयतु पृथिव्याः पृष्ठे तया देवतयाङ्गिरस्वद् ध्रुवा सीद इति ॥९॥ अग्नेर्भस्मासि[९] इति [१०]भस्म निवपति[१०] ॥१०॥ अग्नेः पुरीषमसि इति पुरीषम् ॥११॥ संज्ञानमसि कामधरणम् इति सिकता ॥१२॥ मयि ते कामधरणं (भूयात्)[११]

---

१–१. H oms. २. MHP °चितिश्च. ३. P °वापा. ४. MHP द्वाभ्यां मुख्यं. ५. MHP ins यं before यज°. ६. MHP सुवर्णं. ७. H उपधा°. ८. H twice. ९. MHP अग्निर्भ°. १०–१०. MP भस्मन्निव°; H अस्मन्निव. ११. MHP om.

इत्यू(-षान् ॥१३॥ सं या वः प्रियास्तनुवः इत्येनान् संप्र-)योति । °संप्रिया=मम इति संभारान् ॥१४॥ एषु होतॄन् व्याचष्टे॥१५॥ चित स्थ परिचितः इति परिमिता उपदधाति । °ऊर्ध्वश्रितो[1] यजमानाय श्रयध्वं तया देवतयाऽङ्गिरस्वद् [2]ध्रुवाः सीदत इत्यभ्याकारम्[2] ॥१६॥ आ प्यायस्व समेतु ते इति[3] सौम्या (ब्राह्मणस्य) सिकता व्यूहति । °विश्वत=सङ्गथे इति ॥१७॥ सं ते पयाꣳसि इति (राजन्यस्य । °समु=धिष्व) इति[4] ॥१८॥ चतस्रः प्राचीरिष्टका आयातयति ॥१९॥ मध्ये गार्हपत्यचित्यै हꣳसपातिनीः[5] ॥२०॥ उदीचीषु वाचयति अयꣳ सो अग्निः इति वैश्वामित्रेण सूक्तेन । °यस्मिन्त्सोममिन्द्र=जातवेदस्तया देवतया; अग्ने दिवो अर्ण[6]=आपस्तया देवतया; अग्ने यत्ते दिवि=नृचक्षास्तया देवतया; पुरीष्यासो अग्नयः=महीस्तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद इति ॥२१॥ इडामग्ने इति द्वे पुरस्तात् समीची उपदधाति । °पुरुदꣳसꣳ[7] सनिं गोः=मतिर्भूत्वस्मे तया देवतया; अयं ते योनिर्ऋत्वियः इतीतराम् । °यतो=रयिं तया=सीद इति ॥२२॥ चिदसि इति द्वे पश्चात् समीची उपदधाति । °तया देवतया; परिचिदसि इतीतराम् । °तया देव=सीद इति ॥२३॥ त्रयोदश लोकंपृणा आयातयति ॥२४॥ [१४]

अभित एताः लोकं पृण इत्यासां प्रसलैः प्रथमामुपदधाति । °छिद्रं पृणाथो सीद शिवा त्वम् । इन्द्राग्नी त्वा बृहस्पतिरस्मिन् योनावसीषदꣳस्तया देवतया[8] ॥१॥ ता अस्य सूददोहसः इति तामेव । °सोमꣳ श्रीणन्ति पृश्नयः=दिवस्तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद इति ॥२॥ एवमेवैता अनुचरवत्य एकैकामुपदधाति ॥३॥ चित्तिमचित्तिम् इति चितिक्लृप्त्याभिमृशति । °चिनवद्वि विद्वान् पृष्ठे=मुहृच्य तया[9] दे=सीद इति ॥४॥ अथ पृष्टो[10] दिवि इति पुरीषस्य चितिमुपदधाति । °पृष्टो अग्निः=पातु[11] नक्तं तया देवतया=सीद इति ॥५॥ चित्तिमचित्तिम् इत्येवाभिमृशति ।°तया दे=सीद इति ॥६॥ तद्वा एतत् पञ्चचितीकं त्रिचितीकमेकचितीकं चिन्वीतेति ब्राह्मणम् ॥७॥ स यदेवं कुर्यान्नेतद्वैश्वामित्रं सूक्तं प्रयुञ्जीत ॥८॥ लोकंपृणाश्चेकविꣳशतिमुपदध्यात् पुरीषं च ॥९॥ लोकंपृणाश्चैवैकविꣳशतिं पुरीषं चात्रावस्थितम ॥१०॥ अत्रैव

---

१. Thus MS II.7.11; KāthS XVI.11; cf.TS IV.2.7.11 : ऊर्ध्वंचितो. २–२. MHP ध्रुवा सीदेत्य°. ३. MHP om. ४. MHP चति. ५. MHP °वातिनीः. ६. MP अर्णु. ७. MHP पुरु सं°. ८. MHP twice. ९. P दया. १०. HP पृष्ठो. ११. MHP वातु.

समितम् इति चतसृभिः सं निवपतो[१]ऽन्यत्रेक्षमाणौ । °सं कल्पेथाꣳ[२] संप्रियौ रोचिष्णू सुमनस्यमानौ = शिवौ भवतमद्य नः इति ॥११॥ आज्यस्तोकं दधिस्तोकम् इत्युखामानयति[३] ॥१२॥ सिकताभिरेनां पूरयति ॥१३॥ एवमेवोपरिष्टादानयति[४] ॥१४॥ एवमेवेतरामुखां करोति ॥१५॥ अथ मातेव पुत्रं पृथिवी पुरीष्यम् इति पर्णशकलाभ्यामुखां[५] परिगृह्णाति ।°अग्निꣳ स्वे योनावभारु = विश्वकर्मा वि मुञ्चतु इति ॥१६॥ खारीषु शिक्यꣳ सं प्रखनन्ति ॥१७॥ रुक्मं पाशात् प्रमुञ्चन्ति ॥१८॥ नैर्ऋतीः कृष्णास्तिस्रस्तुषपक्वा भवन्ति ॥१९॥ तां[६] दिशं दक्षिणां प्रतीचीꣳ स्वकृतं वैरिणꣳ स्पाशयन्ते प्रदरं वोदपात्रं च ॥२०॥ नैर्ऋतीरुत्परायन्ति ॥२१॥ यदस्य पारे रजसः इति गत्वा शिक्यपाशमादत्ते[७] । °शुक्रं ज्योतिः = वैश्वानर द्युमद् इति ॥२२॥ तं नमः सु ते निर्ऋते (विश्वरूपे)[८] इति स्वकृत इरिणे पराचीनतूलं[९] न्यस्यति, प्रदरे वा । °अयस्मयं = रोहयेमम् इति ॥२३॥ यत्ते देवी निर्ऋतिराबबन्ध इत्युपरि तस्मिन् नैर्ऋतीः[१०] पराचीरसꣳस्पृष्टा उपदधाति नात्र[११] (तया-) देवतं करोति । °दाम ग्रीवा = नमो देवि निर्ऋते तुभ्यमस्तु इति ॥२४॥ उपनिवपति मृदम् ॥२५॥ अनुन्यस्यति रुक्मपाशम् ॥२६॥ यावती द्यावापृथिवी महित्वा इत्युपतिष्ठन्ते । °यावच्च सप्त सिन्धवो वितस्थुः । तावती देवी निर्ऋतिर्विश्वरूपी ॥ विश्वस्य या जायमानस्य[१२] वेद । देवीमहं [१३]निर्ऋतिं वन्दमानः[१३] पिते(-व पुत्रं = वि चष्टे इति ॥२७॥ अ-)पः परिषिच्याप्रतीक्षमायन्ति[१४] ॥२८॥ अभिप्रपद्य शालां मार्जयित्वा निवेशनः सङ्गमनो वसूनाम् इत्याहवनीयं (च)[१५] गार्हपत्यचितिं चोपतिष्ठन्ते । °विश्वा रूपाऽभि चष्टे = पथीनाम् इति ॥२९॥ अथ यज्ञायुधानि सꣳसाद्यापः प्रणीय प्रायणीयं निर्वपति ॥३०॥ प्रा(-यणीयेन चरित्वा पदेन प्रचरति ॥३१॥ पदेन प्रचर्य) राजानं क्रीणाति ॥३२॥ (राजानमुदूह्यातिथ्य-)मस्मै निर्वपति ॥३३॥ आतिथ्येन प्रचर्य प्रवर्ग्योपसद्भ्यां प्रचरति ॥३४॥ [१५] [ इति षष्ठोऽनुवाकः ]

---

१. MH °वपते. २. MP °कल्वेथां; H °कल्वेभ्यां. ३. MP °खायामान°. ४. P oms. ५. MHP पर्णवक°. ६. MHP मां. ७. MHP शिक्यपारम्; Cf. BaudhŚS X.22 : 20.13. ८. MHP om. ९. MP तूल. १०. MHP नैर्ऋतीं. ११. MHP नास. १२. MP याजमानस्य. १३–१३. MHP निर्ऋतिं वन्मानः. १४. MHP परीच्या°. १५. MHP om.

अथैतत्कर्मं सञ्चष्टे—स्तम्बयजुश्च वेद्यै च परिग्राहः करणं चाग्निग्रहश्च स्चयंचितिश्चोपानट् च सीरं चानड्वाहश्च प्रासङ्गश्च[1] कृषि(-वलश्च हिरण्य-)ञ्चोदपात्रञ्च सर्वौषधं चोदपात्रं चोत्तरवेदिश्च दिशां[2] च वेलाष्टा[3] वज्रिणीश्च ॥१॥ सिकता व्यूहति ॥२॥ एतदस्य कार्यं भवति ॥३॥ स्तम्वयजुर्हरति ॥४॥ वेदिं परिगृह्णाति ॥५॥ करणं जपति ॥६॥ आत्मन्नग्निं गृह्णीते ॥७॥ स्व(-यं चितिं जपति ॥८॥ सं वरत्रा दधातन इति द्वाभ्याꣳ) सीरलाङ्गलꣳ सꣳसजति[4] । °निराहा[5]=सिञ्चे अक्षितम्[6] इति ॥९॥ सीरा युञ्जन्ति[7] इति द्वाभ्याꣳ संयुनक्ति । °कवयो युगा=पक्वमाऽयत् इति ॥१०॥ लाङ्गलं पवीरवम् इति द्वाभ्यां कृषति । °सुशेवꣳ सु=मस्मासु धत्ताम् इति ॥११॥ तिस्रः प्राचीः सीताः कृषति ॥१२॥ एवमेव तिस्र उदीचीः [8]पक्षावनु॥१३॥ एवमेवोत्तरस्यै[8] श्रोण्यै[9] (दक्षिणमꣳसमभ्युत्तरा पर्यावर्तन्ते ॥१४॥ एव-)मेव दक्षिणायै श्रोण्या उत्तरमꣳसमभि दक्षिणा पर्यावर्तन्ते ॥१५॥ तान् उत्सृजध्वमघ्निया देवयाना इत्यपरेणाग्निमुदीच उत्सृजति । °अतारिष्म तमसस्पारे अस्यानुज्योतिरपाम[10] इति ॥१६॥कामं कामदुघे धुक्ष्व इति सीताशीर्षण्यभिमन्त्रयते । °[11]मित्राय वरुणा[11]=प्रजाभ्यः इति ॥१७॥ घृतेन सी(-ता मधुना समक्ता इति चतुर्गृहीतौ सीतासमरे[12] हिरण्यमुपास्य जुहोति । °विश्वैर्देवै=पयसाऽभ्यावबृत्स्व[13] स्वाहा इति ॥१८॥ वाक्त्वा [14]समुद्र उपदधातु[14] इति मध्ये सीतासमर उदपात्रमुपनिनीयोपदधाति । °सुप्रजावनिं=वाजिनाय तया=सीद इति ॥१९॥ असौ [15]ध्रुवा सीद[15] इत्युपरि तस्मिन्ननमूमुपदधाति । °सलिलेष्टका ज्योतिष्मती तां त्वोपदधेऽमुष्मै लोकायास्मै लोकायाप्त्यै व्याप्त्यै समाप्त्यै कामाय सुवर्गाय लोकाय सा सुवर्गं लोकं प्रजानीहि । प्रजापतिस्त्वा सादयतु दिवः पृष्ठे तया=सीद इति ॥२०॥ [१६]

त्रीन् महावीरान् कुर्यादग्निचित्याम्[16] ॥१॥ तेषां यमुपधास्यात्तेन प्रथमेन प्रचरेत् ॥२॥ तद् दध्ना संपूर्यं मयि त्यदिन्द्रियं[17] महत् इत्युत्तरतः

---

१. MP ससंगश्च; H मसंगच्छ. २. H देशां. ३. P वेला वेलाष्टा. ४. HP °सृजति. ५. H निराहारा, P निष्क्रताहारा, M निराहारा but corrected as निष्कृताद्वा with question mark. ६. MHP अक्षिम्. ७. P युञ्जन्तीम्. ८–८. MHP पक्षावन्मेव°. ९. MH श्रोत्यै. १०. HP om ज्योति. ११–११. MHP मित्रावरुणा. १२. MHP °समये. १३. MHP °वबृत्स्वाहा. १४–१४. MHP समुद्रमुप°. १५–१५. MHP om; thus supra VIII.14.9. १६. MHP °चित्यायां. १७. HP °दिन्द्रं.

पुरस्तात् स्वयमातृण्णाकालस्यास्पृष्टां घर्मेष्टकामुपदधाति । °मयि दक्षो=सुवीर्यं घर्मस्त्रिषुग्विरोचत=दोहमशीमहि तया=सीद इति ॥३॥ स्वयमातृण्णाकाले दशहोतारमुपदधाति तया=सीद इति ॥४॥ पुष्टिच्छन्दः इत्युत्तरतः पुरस्तात् स्वयमातृण्णाकालस्यास्पृष्टं दर्भस्तम्बमुपदधाति । °तया=सीद इति ॥५॥ तं सजूरब्दो[1]ऽयावभिः स्वाहा इति पञ्चभिः पञ्चगृहीतान् जुहोति । °सजूरुषा अरुणीभिः स्वाहा; सजूः सूर्य एतशेन स्वाहा; सजोषावश्विना दँसोभिः स्वाहा; सजूरग्निर्वैश्वानर इडाभिघृतेन स्वाहा इति ॥६॥ दध्ना सर्वौषधं संयौति ॥७॥ पर्जन्याय प्र गायत इति पुरस्तात् सर्वौषधस्योदपात्रेणाग्निमवोक्षति[2] । °दिवस्पुत्राय=यवसमिच्छतु इति ॥८॥ या जाता ओषधयः इति तिसृभिस्तिस्रः प्राचीः [3]सिकता निवपति[3] । °देवेभ्यः=पारयिष्णवः इति ॥९॥ ओषधीरिति मातरः इति तिसृभिरुदीची पक्षावनु । °तद्वो देवीरुप ब्रुवे । रपाँसि=गृभो यथा इति ॥१०॥ यदोषधयः संगच्छन्ते इति तिसृभिरुत्तरस्यै श्रोण्यै दक्षिणमँसमभि । °राजानः=प्रावता[4] वचः इति ॥११॥ उच्छुष्मा ओषधीनाम् इति तिसृभिर्दक्षिणायै श्रोण्या उत्तरमँसमभि । °गावो गोष्ठा=मध्यमशीरिव इति ॥१२॥ साकं यक्ष्म प्र पत इति द्वाभ्यामन्ताननु वियातयति । °श्येनेन किकिदीविना[5]=अरिष्टतातये इति ॥१३॥ याः फलिनीर्या अफलाः इति द्वाभ्यामात्मानं विमृष्टे । °अपुष्पा याश्च=जीवातवे सुव इति ॥१४॥ अच्छा वद तवसम्[6] इत्युपरिष्टात् सर्वौषधस्योदपात्रेणाग्निमवोक्षति । °गीर्भिरुक्षैः स्तुहि पर्जन्यं[7]=अभिक्रन्दन् वृषभो वाजिनीवान्रेतो दधात्वोषधीषु गर्भम् इति ॥१५॥ उत्तरवेद्या आवृत्तोत्तरवेदिं निवपति ॥१६॥ दिग्भ्यो लोष्टान् समस्यति ॥१७॥ मा नो हिँसीत् इति पुरस्ताल्लोष्टमाहरति ॥१८॥ [१७]

मा नो[8]=हरति । °जनिता यः पृथिव्या=हविषा विधेम इति ॥१॥ सोऽपरेणाधिरुह्य[9] पूर्वेण स्वयमातृण्णाकालमुपदधाति । °तया देवतयाङ्गिरस्वद् ध्रुवा सीद इति ॥२॥ अभ्यावर्तस्व पृथिवि इति दक्षिणतः । °यज्ञेन (पयसा=सर्पतु इति)[10] ॥३॥ सोऽपरेणैवाधिरुह्य दक्षिणेन स्वयमातृण्णाकालमुपदधाति । °तया=सीद इति ॥४॥ अग्ने यत्ते शुक्रम् इति पश्चात् । °यच्चन्द्रं [11]यत् पूतं[11] यद्यज्ञियं=मरामसि इति ॥५॥ सोऽपरेणैवाधिरुह्यापरेण

---

१. P °रब्धो. २. P सर्वौषधोदपा°. ३–३. M सिता वपति, P वपति. ४. MHP प्रापता. ५. MH किनकि दी°. ६. MHP तपसम्. ७. MHP पर्जन्य. ८. MHP abr; see VIII.17.18. ९. H °रेणाभिरु°. १०. MHP om. ११–११. MH यद्घूतं.

स्वयमातृण्णाकालमुपदधाति तया=सीद इति ॥६॥ इषमूर्जमहमि(-त आ ददे इत्य-)स्योत्तरस्यै दिशो लोष्टमाहरेद्, 'यं द्विष्याद् यत्र स[1] स्यात्तेनोत्तरतः सꣳस्थापयेत्। °ऋतस्य धाम्नो=ममीवाम् इति ॥७॥ मोऽपरेणैवाधिरुह्योत्तरतः स्वयमातृण्णाकालमुपदधाति। °तया देवतया=सीद इति ॥८॥ अथ वज्रिणीरुपदधाति ॥९॥ पुरैवास्य चत्वारोऽश्मान उपक्लृप्ता भव(-न्ति ॥१०॥ इन्द्रस्य वज्रोऽसि) वार्त्रघ्नः इति पूर्वेणाग्निं तिष्ठन् प्राचीनोऽस्यति बहिर्वेदि। °तनूपा नः प्रतिस्पशः इति ॥११॥ यत्रैषु रवैति ततः पाꣳसूनादत्ते ॥१२॥ तदश्मानं निदधाति यो नः पुरस्तादघायुरभिदासत्येतꣳ सोऽश्मानमृच्छतु इति ॥१३॥ सोऽपरेणाधिरुह्य पूर्वेण स्वयमातृण्णाकालमुपदधाति। (°तया=सी-)द इति ॥१४॥ इन्द्रस्य=घ्नः इति दक्षिणेनाग्निं तिष्ठन् दक्षिणोऽस्यति बहिर्वेदि[2]। °तनूपा[3]=निदधाति यो नो दक्षिणतोऽघायुरभिदासत्येतꣳ सो[4]=रेणैवाधिरुह्य दक्षिणेन स्वयमातृण्णाकालमुपदधाति। तया=सीद इति ॥१५॥ इन्द्रस्य=त्रघ्नः इत्यपरेणाग्निं तिष्ठन् प्रतीचीनोऽस्यति बहि[5]=दधाति यो नः [6]पश्चादघायुरभिदासत्येतꣳ सोऽश्मानमृच्छ[7]=णैवाधिरुह्यापरेण स्वयमातृण्णाकालमुपदधाति। [8]तया=सीद इति ॥१६॥ इन्द्रस्य वज्रोऽसि वार्त्रघ्नः इत्युत्तरेणाग्निं तिष्ठन्नुदीचीनोऽस्यति बहिर्वेदि=निदधाति यो न उत्तरतोऽघायुरभिदासत्येतꣳ सोऽश्मानमृच्छतु इति ॥१७॥ सोऽपरेणैवाधिरुह्योत्तरेण स्वयमातृण्णाकालमुपदधाति[8]। तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद इति ॥१८॥ अग्ने तव श्रवो वयः इति षड्भिः सिकता निवपति। (°महि भ्राजन्त्यर्चयो सानसिꣳ रयिम् इति)[9] ॥१९॥ चित स्थ परिचितः इति परिमिता उपदधाति। °ऊर्ध्वंश्रितो यजमानाय श्रयध्वं[10] तया=सीदत[11] इत्यभ्याकारम् ॥२०॥ आ प्यायस्व समेतु ते इति सौम्या[12] (ब्राह्मणस्य)[13] सिकता व्यूहति। °विश्वतः सोम=सङ्गथे इति ॥२१॥ सं ते पयाꣳसि [14]इत्येव राजन्यस्य[14] ॥२२॥

[१८] [इति सप्तमोऽनुवाकः]

---

१. MHP यदि ततो यदु; thus ĀpŚS XVI-20.6. २. MHP बर्हि°. ३. MHP abr; see VIII.18.11–13. ४. MHP abr; see above S.4. ५. MHP abr; see above S.11–13; बर्हिः. ६. MH पश्चान्मघा°, P पश्चात् मघा°. ७. MHP abr; see above S.4. ८–८. H oms; MP °रुह्योत्तरतः. ९. MHP om. १०. MHP त्रर्ध्वं. ११. MHP सीद. १२. MHP सौम्याः. १३. MHP om. १४–१४. MHP इत्यवराजस्य.

## [प्रथमा चितिः]

पूर्वेण [1]शालां महाचितिमेताꣳ[1] सꣳसादयन्त्युत्तरलोम्नि चर्मन्[3] ॥१॥ तस्यै संख्यानमश्वश्चोत्तरवेद्यै च संभाराः प्रोक्षण्यश्चाग्निग्रहश्च[4] स्वयंचितिश्चोपानट् चाक्रमणेष्टका चाधिरोहणं च व्याघारश्चाश्वस्य च पदमपां[5] च ग्रहा विभक्तिश्च कुम्भेष्टकाश्च बार्हस्पत्यश्च [6]चरुस्त्रयोदश च हिरण्यशल्काः पुष्करपर्णं च रुक्मश्च पुरुषश्च द्वे स्रुचावाज्यस्य पूर्णा[7] कार्ष्मर्यमयी[8] दध्नः पूर्णौदुम्बरी[9] सर्पयजूꣳषि च स्वयमातृण्णा च हिरण्येष्टका च मण्डलेष्टका च दूर्वेष्टके च द्वे स्थाल्याश्चानूप्या[10] वामभृच्च विराट् च रेतःसिक्[11] च विश्वज्योतिश्च त्रियालिखिता च द्वे चतंव्ये अवकाष्टौ संयान्य एका सयुङ् नव शीर्षण्याः कूर्मश्च दधि च मधुमिश्रमुलूखलं च मुसलं च व्रीहियवौ च द्वे उखे पञ्च पुरुषशीर्षाणि[12] द्वया हिरण्यशल्काः सप्तान्ये पञ्चान्ये पञ्चदशापस्याः पञ्च छन्दस्याः पञ्चाशत् प्राणभृतः पञ्चाशदपानभृतो[13] द्वादश योनयोऽग्नेरङ्गानि प्राजापत्या चर्षभश्च सामचितिरृक्सामयो[14] रूपं नव लोकंपृणा एका च लोकंपृणा बह्व्यश्च सन्धिश्चाभीमर्शश्च गायत्री च होतुश्चाहुतिरवरोहणं चोपस्थानं च ॥२॥ एतदस्य कार्यं भवति ॥३॥ एवꣳ संक्लृप्तेऽध्वर्युः प्रपद्य शालां[15] चतुर्गृहीतं गृह्णीते ॥४॥ तज्जुहोति अग्नि वो देवमग्निभिः इत्याहवनीये । [16]सजोषा यजिष्ठं[16] दूतमध्वरे कृणुध्वम् । यो [17]मर्तेषु न्यधाय्यृतावा तपन्मूर्धा घृतान्नः[17] पावक स्वाहा इति ॥५॥ अपरं चतुर्गृहीतं गृह्णीते ॥६॥ तज्जुहोति (उत यासि) सवितस्त्रीणि[18] रोचना दिव उत रात्रिमुभयतः परीयसे । उत सूर्यस्य रश्मिभिः समुच्यस्युत मित्रो भवसि देवधर्मभिः स्वाहा इति ॥७॥ प्रोक्षणीरादाय निष्क्रामति ॥८॥ अग्नीन् वोऽग्निभ्यो जुष्टान् प्रोक्षामि इति चितिꣳ सꣳसन्नान्[19] प्रोक्षति ॥९॥ अग्नयेऽग्निभ्यः प्रणीयमानेभ्योऽनुब्रूहि[20] इत्याह ॥१०॥ अश्वप्रथमाः[21]

---

१–१. MHP शालांमाहचिति°. २. P oms सं. ३. H चर्मं. ४. MHP °चाधिग्र. ५. MHP पदमपरं. ६. MP चरू°. ७. H पूर्णं. ८. H °मयौ. ९. H दुम्बरीं. १०. MHP स्थल्याच्चारुप्यान्या. ११. M °सिक्त, HP °सिक्तं. १२. MHP पशुशी°. १३. MHP पञ्चदशपा° [M पञ्चा°]. १४. MHP °चितिरूत्सा°. १५. MP शावां; H शाखां. १६. Cf. RV. VII. 3. 1 : यविष्ठं. १७–१७. MHP °धाय्यतावतपन्मूर्धा कृतानः. १८. MHP सवितुस्त्री°. १९. MHP °सन्ना. २०. MP °मानेऽभ्यो°. २१. Cf. अग्निप्रथमाः BaudhŚS X·27 : 26.12; VaikhŚS XVIII. 16 : 269.14.

प्रयन्ति ॥११॥ अतिद्रुत्य इन्द्र(-स्त्वा प्रोक्ष-)तु इत्युत्तरनाभिं प्रोक्षति ॥१२॥ यत्प्रोक्षणीनामुच्छिष्यते तद्दक्षिणतो महावेद्यै बहिः परिचितᳩ स्फ्यस्य वर्त्मन्नुपनिनयति[1] ॥१३॥ यं द्वेष्टि यजमानस्तं ध्यायति ॥१४॥ अप उपस्पृश्यात्मन्नग्निं[2]=मुपमुञ्चते ॥१५॥ इन्द्रं विश्वा अवीवृधन् इत्या-क्रमणे(-ष्टकामुप-)दधाति[3] । (°समुद्रव्यचसं=पतिम्) तया=सीद इति ॥१६॥ अपामिदं न्ययनम् इत्यधिरोहणेनाधिरोहति । °समुद्रस्य निवेशनं=शिवो भव; नमस्ते हरसे=शिवो [4]भव; वाङ् म[4] आस=ऊरुवोरोजोऽरिष्टा विश्वान्यङ्गानि तनूस्तनुवा[5] मे सह; नमस्ते अस्तु; मा मा हिᳩसीः; तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते (यजमानो हविर्भिः । अहेडमानो वरुणेह बोध्युरुशᳩस मा न आयुः प्र मोषीः इति ॥१७॥ व्या-)धारयति[6] ॥१८॥ पौतुद्रवान् परिधीन् परिधाय संभारान् न्युप्य स्तुगाहुतिं जुहोति ॥१९॥ अभ्यस्थाद्विश्वाः पृतना अरातीः इति प्राञ्चमश्वमाक्रमयति दक्षिणस्येर्मस्य पदा । °तदग्नि=लोके इति ॥२०॥ यदक्रन्दः प्रथमं जायमानः इति पुनः [7]प्रत्यञ्चं तेनैव[7] । °उद्यत्स-मुद्रादुत वा पुरीषात्=तव ते अर्वन् इति ॥२१॥ इन्द्रं विश्वा अवीवृधन् इत्याक्रमणं प्रतीष्टकामुपदध्यात् ॥२२॥ तं पुरस्तात् प्र(-ङ्गा-)वृत्तं यूपस्य काले धारयति ॥२३॥ [ १९ ]

अपां ग्रहान्[8] गृह्णात्यध्वर्युरुत्तरस्यै श्रोण्यै बहिः परिमितम् ॥१॥ त[9] आपो भवन्ति ॥२॥ तामाम् अर्येतः[10] स्थाध्वगतः इति द्वाभ्यां द्वाभ्यां कुम्भेष्ट-कानां मिथुनाभ्यां गृह्णाति । °अग्नेर्वस्तेजसा देवताभ्यो गृह्णामि; मन्द्रा स्थाभिभुव आदित्या(नां) वो देवानां देव(-ताभ्यो गृह्णामि); शुक्राः स्थ वीर्यवती-रिन्द्रस्य व इन्द्रियावतो देवताभ्यो गृह्णामि; [11]क्षत्रभृत स्थौजस्वतीर्मित्रावरुणयोर्वो देवयोर्देवताभ्यो गृह्णामि[11]; व्रजक्षित स्थोर्ध्वश्रितो विश्वेषां वो[12] देवानां देवताभ्यो गृह्णामि; अधिपतिरूर्जस्वान् बृहस्पतेर्वो ब्रह्मणा देवताभ्यो गृह्णामि इति ॥३॥ ता यथागृहीता[13] धारयति ॥४॥ (दशहोतारमुपधाय) अग्ने इति विभक्ति-माह ॥५॥ शर्म[14] च स्थो वर्म च स्थः इत्येतस्यामेव श्रोण्यां द्वे आसामुपद-

१. MP वर्मन्नु°. २. MHP abr; see VIII.14.5–6. ३. MHP add इमामेव after दधाति. ४–४. MHP भवात्म. ५. MHP तनू तनुवा. ६. MHP पार°. ७–७. MHP प्रत्यञ्चस्ते°. ८. MHP ग्रहां. ९. MHP स. १०. Cf. VaikhŚS XVIII. 16 : 270.9 : अर्येतः. ११–११. HP om; M क्षतभृत. १२. MHP om. १३. MHP °गृहीत्वा°. १४. MHP चर्म.

धाति । °देवस्य वां[1] सवितुः प्रसवे मधुमती सादयामि तया देवतयाऽङ्गिरस्वद् ध्रुवे[2] सीदतम् इति ॥६॥ ऋतं च स्थः सत्यं च स्थः[3] इति दक्षिणेंऽसे द्वे । °देवस्य = वे सीदतम् इति ॥७॥ सपत्नघ्नी[4] च स्थोऽभिमातिघ्नी[5] च स्थः इति दक्षिणा(-याᳲ) श्रोण्यां द्वे । °देवस्य = सीदतम् इति ॥८॥ रक्षोघ्नी च स्थोऽरातिघ्नी च स्थः[6] इत्युत्तरेंऽसे[7] द्वे । °देवस्य = सीदतम् इति ॥९॥ भूतं च स्थो भव्यं च इति दक्षिणेन स्वयमातृण्णाकालं द्वे । °देवस्य=सीदतम् इति ॥१०॥ वसु च स्थो वामं च स्थः इत्युत्तरेण ते द्वे । °देवस्य = ध्रुवे सीदतम् इति ॥११॥ दिवि श्रयस्वान्तरिक्षे यतस्व इत्येतासामेव चतसृणां मध्ये बार्हस्पत्यं[8] चरुमुपदधाति । °पृथिव्या संभव तया=सीद इति ॥१२॥ तासु यथोपहितᳲ हिरण्यशलान्न प्रत्यस्यति[9] तेजसे वां[10] ज्योतिषे वांᳲ रेतसे वां वर्चसे वामायुषे वां प्रजाभ्यो वाम् इति ॥१३॥ ब्रह्मवर्चसमसि इति बार्हस्पत्ये चरौ प्रत्यस्यति ॥१४॥ हिरण्यवर्णाः शुचयः पावकाः इत्यपरेण स्वयमातृण्णाकालं पुच्छस्य सन्धौ तिष्ठन्नपाᳲस्तोत्रेणोपतिष्ठते एतेनानुवाकेनाविहारम् ॥१५॥ उत्क्रम्य ब्रह्मवर्चसाय त्वा इति बार्हस्पत्यं चरुमवेक्षते ॥१६॥ अपां पृष्ठमसि इति पुष्करपर्णमादत्ते[11] । °योनिरग्नेः समुद्रमभितः पिन्वमानम् इति ॥१७॥ वर्धमानम् इत्येनद्विमारयति । °मह आ च = प्रथस्व इति ॥१८॥ तद् ऋतमसि तपसो योनिः इति स्वयमातृण्णाकाले प्राचीनमुत्तानमुपदधाति । °तया=सीद इति ॥१९॥ ब्रह्म जज्ञानम् इत्युपरि तस्मिन्रुक्ममुपदधात्युत्तरनिर्बाधम्[12] । °प्रथमं पुरस्ता = विवस्तया=सीद इति ॥२०॥ तं कृणुष्व पाजः प्रसितिं न पृथिवीम् इति पञ्चभिः पञ्चगृहीतेनाक्ष्णया व्याघारयति ॥२१॥ हिरण्यगर्भः समवर्तताग्रे इत्युपरि तस्मिन् हिरण्मयं पुरुषमुपदधाति दक्षिणतः प्राञ्चमुत्तानम् ।° भूतस्य जातः पति=र्हविषा विधेम तया = सीद इति ॥२२॥ द्रप्सश्चस्कन्द इत्येनमभिमृशति । °पृथिवीमनु द्या = सप्त होत्रास्तया = सीद इति ॥२३॥ प्रजापतिश्चरति गर्भे अन्तः इत्यस्य मुखे चतुर्गृहीतं जुहोति । अजायमानो[13] बहुधा विजायते । तं धीरासः कवयः परिपश्यन्ति धीतिभिः स्वाहा इति ॥२४॥ साम ब्रूहि इत्याह ॥२५॥ पुरुषसाम आह प्रस्तोता ॥२६॥ [२०]

१. MHP पां. २. MHP ध्रुवा. ३. MHP om. ४. HP सपत्नी. ५. MHP °मातिघ्ने. ६. MHP om. ७. MHP °त्तरंसे. ८. °स्पद्यं. ९. MP प्रस्यति. १०. MP वा; H oms. ११. MHP add ते after आदत्ते. १२. M तस्मिन्द्रुक्म°; P °स्मिनुद्रुक्म°. १३. MHP विजाय°.

त्रिवृत्तो अग्ने शिरः इत्येनमुपनिष्ठते । °तन्मे अग्ने शिरः पञ्चदशस्ते अग्ने पक्षः स मे अग्ने पक्षः सप्तदशस्ते अग्ने पक्षः स मे अग्ने पक्ष एकविंꣳशस्ते अग्ने पुच्छस्तन्मे[1] अग्ने पुच्छः पञ्चविꣳशस्ते अग्न आत्मा स मे अग्न आत्मा त्रिणवौ ते अग्न ऊरू तौ मे अग्न ऊरू त्रयस्त्रिꣳशी ते अग्ने प्रतिष्ठा सा मे अग्ने प्रतिष्ठा इति ॥१॥ अरत्निमात्रे दक्षिणेन स्वयमातृण्णामाज्यस्य पूर्णां कार्ष्मर्यमयीमायातयति ॥२॥ अग्नेस्त्वा तेजसोपदधामि इति[2] मनसोपदधाति । °तया=सीद इति ॥३॥ अग्निर्मूर्धा इति गायत्रियाऽभिमृशति । °दिवः= जिन्वति तया=सीद इति ॥४॥ अरत्निमात्र एवोत्तरेण स्वयमातृण्णाकालं दध्नः पूर्णामौदुम्बरीमायातयति ॥५॥ उपहिता कार्ष्मर्यमय्युपहितौदुम्बरी[3] ॥६॥ अथाध्वर्युरर्कं विहरति ॥७॥ सप्तहोतारं कार्ष्मर्यमय्यां व्याख्याय सप्तहोतुराहुत्या स्रुवेण कार्ष्मर्यमय्यामध्यौ(-दुम्बरीꣳ ह-)रति ॥८॥ तदौदुम्बर्यामानयति ॥९॥ दशहोतारमौदुम्बर्यां व्याख्याय दशहोतुराहुत्या स्रुवेणौदुम्बर्यामधि[4] कार्ष्मर्यमयीꣳ हरति ॥१०॥ कार्ष्मर्यमय्यामानयति ॥११॥ अयुजः कृत्वो हरति ॥१२॥ उदीचीनꣳ सꣳस्थापयति ॥१३॥ इयतीः समाः सुषमं[5] भविष्यतीति ह ब्रूयात् ॥१४॥ अध्वर्युरर्कं प्रहृत्य यथाऽर्कं विहरे(-त् ॥१५॥ इ-)न्द्रस्य त्वेन्द्रियेणोपदधामि इति मनसोपदधाति । °तया= सीद इति ॥१६॥ भुवः इति त्रिष्टुभाऽभिमृशति । °यज्ञस्य=हव्यवाहं तया= सीद इति ॥१७। नमो अस्तु सर्पेभ्यः इत्यत्रैव सर्पयजूꣳषि जपति । °ये के च=शेरते तेभ्यः सर्पेभ्यो नमः इति ॥१८॥ मूर्धागायुः इति स्वयमातृण्णामादत्ते ॥१९॥ (तां दध्ना-)मुपघ्रापयति । °सुमनस्यमानोऽग्निनाऽग्निः प्रजनसे समागन्तो रत्नधौ मिथुनौ धेनू म इषुं दुहातामनपस्फुरन्तौ[6] इति ॥२०॥ तां ब्रह्मणे प्रयच्छति ॥२१॥ आ मे ददातु इत्येनां ब्रह्मा प्रतिगृह्णाति । °इन्द्रियꣳ सह ओजो यशो महद् त्रयस्त्रिꣳशद्वीर्याणि तान्यग्निः[7] प्रददातु मे इति ॥२२॥ आत्मन्नग्निं गृह्णीते ॥२३॥ 'स्व(-यं चितिं जपति ॥२४॥ शक्तिरसि इति) कार्ष्णीमुपानहमुपमुञ्चते ॥२५॥ अधिरोहणेनाधिरोहति[8] सहैनया ॥२६॥ ताꣳ [9]समारभ्योपदधाति इतीदम्[10] ॥२७॥ ध्रुवाऽसि धरुणाऽ[11]स्तृता इत्यध्वर्युश्च[11] यजमानश्च यजुर्वदतः । °विश्वकर्मणा=छर्दिषा शन्तमेन तया=सीद

---

१. MHP पुच्छं. २. MHP add मनसोपदधामीति after इति. ३. MHP °मयीत्युप°. ४. MHP °म्बर्या अधि. ५ H सुषूमं. ६. MH °मनचस्फुरन्ताविन्त्रि, P °मनचस्फुर°. ७. MHP कान्य°. ८. MHP बा. ९. P ऽतिरोहणे°. १०–१०. MHP °दधाती वा इदं. ११–११. MHP °स्तृतेऽध्व°.

इति ॥२८॥ भूः इत्येनामुपधायानुप्राणिति ॥२९॥ वरमध्वर्यवे यजमानो ददाति, अध्वर्युः प्रतिप्रस्थात्रे, प्रतिप्रस्थाता[1] यस्मै कामयते[2] ॥३०॥ पृथिवीमाक्रमिषम् इत्येनामङ्गुष्ठाभ्यामाक्रमते । °प्राणो मा मा हासीद् इति ॥३१॥ चित्तिं जुहोमि इत्यस्यां चतुर्गृहीतं जुहोति । °मनसा घृतेन = हविः स्वाहा इति ॥३२॥ साम ब्रूहि इत्याह ॥३३॥ स्वयमातृण्णासामाह प्रस्तोता ॥३४॥ तेजोऽसि इत्यस्यामुपरि हिरण्येष्टकामुपदधाति । °तेजो मे यच्छ= पृथिव्यै मा पाहि[3] तया देवतयाङ्गिरस्वद् ध्रुवा सीद इति ॥३५॥ ( पृथिव्युदपुरमन्नेन विष्टा इत्यपरेण स्वयमातृण्णामास्पृष्टां मण्डलेष्टकामुपदधाति । °मनुष्यास्ते गोप्तारोऽग्निः = वर्म चास्तु तया = सीद इति)[4] ॥३६॥ [२१]

काण्डात्काण्डात् प्ररोहन्ती इति पूर्वेण स्वयमातृण्णामास्पृष्टे दूर्वेष्टके उपदधाति । °पुरुषः = शतेन च तया देवत(-या = सीदतम् इति ॥१॥ या)[5] शतेन प्रतनोषि[6] इत्युत्तरतोऽनूप्याम् । °सहस्रं = हविषा वयं[7] तया = सीद इति ॥२॥ यास्ते अग्ने[8] सूर्ये रुचः इत्युपरि तयोर्वामभृतमुपदधाति द्वियजुषं[9] हिरण्यमूर्ध्नीम्[10] । ° उद्यतो=स्कृधि[11] तया देवतया; या वो [12]देवाः=धत्त[12] बृहस्पते तया देवतया = सीद इति ॥३॥ विराड् ज्योतिरधारयत् इति पूर्वेण[13] तां विराजमुपदधाति । °तया = सीद इति ॥४॥ विराडसि रेतःसिक् इति दक्षिणतोऽस्यै रेतःसिचमुपदधाति । °[14]सा मे[14] रेतः सिञ्च सा मे रेतो धेहि सा मे रेतः प्रजनय त्वयेमं लोकं जेषं तया = सीद इति ॥५॥ बृहस्पतिस्त्वा सादयतु इति पूर्वेणैते[15] विश्वज्योतिषमुपदधाति । °पृथिव्याः पृष्ठे[16] ज्योतिष्मतीं विश्वस्मै प्राणायापानाय विश्वं ज्योतिर्यच्छाग्निस्तेऽधिपतिस्तया = सीद इति ॥६॥ अषाढासि सहमाना इति पूर्वेण तां त्रियालिखितामुपदधात्युत्तरलक्ष्माणम् । °सहस्वारातीः सहस्वारा = जिन्व तया = सीद इति ॥७॥ मधुश्च माधवश्च इति पूर्वेण ते ऋतव्ये उपदधाति । °वासन्तिकावृतू अग्नेरन्तः श्लेषोऽसि = द्यावापृथिवी वासन्तिकावृतू अभिकल्पमाना[17] इन्द्रमिव देवा अभि सं विशन्तु तया देवतया-

---

१. MHP °प्रस्थातो. २. MHP कामाय. ३. MHP चाहि. ४. MHP om. ५. MHP om. ६. MHP व्रतेनो°. ७. MHP मयं. ८. MHP om. ९. P यजूंषि. १०. MHP हिरण्य हिरण्यंमूर्ध्नीम्. ११. MHP स्कुधि. १२-१२. MHP देवान्धत्त. १३. MHP ins विराजमुपदधाति between पूर्वेण and तां. १४-१४. MHP साम here and for following सा मे also. १५. M पूर्वेणेते.; १६. MHP पृष्ठं. १७. MHP कल्पमाना.

ङ्गिरस्वद् ध्रुवे[1] सीदतम् इति ॥८॥ यास्ते अग्न आर्द्रया योनयः[2] इत्यवकामनूपदधाति । °याः कुलायिनीस्ताभिः सर्वाभिः संविदानः[3] प्रजानꣳ स्तनुवेह सीद तया=सीद इति ॥९॥ अष्टौ संयानीरायातयति पूर्वेण स्वयमातृण्णाꣳ हꣳसपतिनीः ॥१०॥ उदीचीषु[4] वाचयति अग्नेर्यान्यसि तया देवतया; देवानामग्ने यान्यसि तया देवतया; वायोर्यान्यसि तया देवतया; देवानां वायो यान्यसि तया देवतया; अन्तरिक्षस्य यान्यसि तया देवतया; देवानामन्तरिक्ष यान्यसि तया देवतया; अन्तरिक्षमसि तया देवतया; अन्तरिक्षाय त्वा तया=सीद इति ॥११॥ पूर्वेण ताः सयुजमुपदधाति इन्द्राग्निभ्यां त्वा सयुजा युजा युनज्मि तया =सीद इति ॥१२॥ नव शीर्षण्या आयातयति पूर्वेण स्वयमातृण्णां तिस्रस्तिस्रः प्रतीचीः ॥१३॥ प्रतीचीष्वेव वाचयति ॥१४॥ उदीचीः सꣳस्थापयति इन्द्रो दधीचो अस्थभिः=नव तया देवतया; इच्छन्नश्वस्य=णावति तया देवतया; अत्राह गो=गृहे तया=सीद इति तिस्रः ॥१५॥ इन्द्रमिद्=रनूषत तया देवतया; इन्द्र इद्धर्योः=हिरण्ययः तया देवतया; इन्द्र वाजेषु=ऊ(-तिभिस्तया=)सीद इति तिस्र ॥१६॥ तमिन्द्रं वाजयामसि=भो भुवव् तया देवतया; इन्द्रः स दामने=सौम्यस्तया देवतया; गिरा वज्रो=अस्तृतस्तया=सीद इति तिस्रः ॥१७॥ एतत् सूददोहसान्वचारीत् ता अस्य सूददोहसः[5]=दिवस्तया= सीद (इति ॥१८॥ तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद)[6] इत्येकामुपधायाधिवदेत् ॥१९॥ तया देवतयाऽङ्गिरस्वद् ध्रुवे सीदतम् इति द्वे ॥२०॥ तया देवतयाऽङ्गिरस्वद् ध्रुवाः सीदत इति बह्वीः[7] ॥२१॥ [२२] [ इत्यष्टमोऽनुवाकः ]

कूर्ममादत्ते ॥१॥ तं मधु वाता ऋतायते इति तिसृभिर्दध्ना मधुमिश्रेणाभ्यनक्ति । °मधु क्षरन्ति=गावो भवन्तु[8] नः इति ॥२॥ मही द्यौः पृथिवी च नः इत्यस्य पार्श्वे संमार्ष्टि । °इमं यज्ञं=भरीमभिः इति ॥३॥ अपां त्वा [9]गह्मन् सादयामि[9] इत्युत्तरतः पुरस्तात् स्वयमातृण्णायै प्रत्यगावृत्ते कूर्मे यजुर्जपति । °मा त्वा सूर्योऽभिता(-प्सीन्मो अग्निर्वैश्वा-)नरः । अच्छिन्नपत्राः[10] प्र(-जा अनु)वीक्षस्वानु[11] त्वा दिव्या [12]वृष्टिः सिषक्तु; त्रीन्समुद्रान् समसृपत्सुवर्ग्यानपां[12] पतिर्वृषभ इष्टकानाम् तत्र गच्छ[13] यत्र पूर्वे परेताः[14] पुरीषं वसानः

१. MHP ध्रुवा. २. MHP योन. ३. MHP °वदानः ४. P चीनेषु. ५. M स्थददो°. ६. MHP om. ७. MHP बह्वीम्. ८. MHP भवस्तु. ९–९. MH गम्भन्°, P भस्मन्त्सा°. १०. MHP °पत्र उप. ११. MHP वीक्षस्यानु. १२–१२. MHP पृष्टिः सिषक्त्री व समुद्रात्समु तृपत्सु वर्ग्यान्. १३. MHP यच्छ. १४. MHP परेतां.

सुकृतस्य[1] लोकम् इति ॥४॥ तां प्राञ्चमावृत्योपदधाति तया=सीद इति ॥५॥ चतस्र आशाः प्रचरन्त्वग्नयः इत्यौदुम्बरी-(मुपदधाति । °इमं नो यज्ञं= हुतीनाꣳ) स्वाहा इति ॥६॥ श(-ङ्कुभिरेनं) परिदृꣳहन्ति[2] ॥७॥ सृप्तोष-धीषमूर्जमन्नमक्षितिः[3] इत्यपरेण कूर्ममौदुम्बरमुलूखलं निधाय व्रीहियवौ प्रास्यावहन्ति ॥८॥ ऊर्जो भागोऽसि इत्येनत्तदेवोपदधाति । °ऊर्जो जनित्रमूर्जं मह्यं यजमानाय धेहि तया=सीद इति ॥९॥ ( निष्कृताहावमवटम् इति लोकंपृ-)[4]ण(-ामुत्तरतो ) मुसलमनूपदधाति । (सुवरत्र=सि-)च्चे अक्षितं तया देवतया=सीद इति ॥१०॥ स्यूता देवेभिरमृतेनाऽऽगाः[5] इत्यपरेणो-लूखलमुखामुपदधाति[6] । °उखां स्वसारमधि वेदिमस्थात् । सत्यं पूर्वैर्ऋषिभि-श्चाकुपानो[7] अग्निः[8] प्र विद्वानिह तत्करोतु । पृथिवि पृथिव्याꣳ सीद पृष्ठे मातरि माता ॥ ध्रुवाऽसि पृथिवि[9] सहस्व पृतन्यतः स्यूता[10] देवे-(भिरमृतेनाऽऽगास्) तया=सीद इति ॥११॥ अग्ने युक्ष्वा हि ये तव इत्यस्यां प्राङ् तिष्ठꣳश्च-तुर्गृहीतेनाभिजुहोति । °अश्वासो=त्याशवः[11] स्वाहा इति ॥१२॥ युक्ष्वा हि देवहूतमान् इत्यपरं चतुर्गृहीतं प्रत्यङ्ङासीनः । °[12]अश्वाँ अग्ने[12]=सदः स्वाहा इति ॥१३॥ पुरुषशीर्षमादत्ते ॥१४॥ तस्य द्रप्सश्चस्कन्द इति मुखे हिरण्यशल्कं प्रत्य(-स्यति । °पृथि-)वीमनु[13]=होत्राः इति ॥१५॥ अभूदिदं[14] विश्वस्य भुवनस्य वाजिनम् इति दक्षिणे प्राणे ॥१६॥ अग्नेर्विश्वानरस्य[15] च इत्युत्तरे ॥१७॥ अग्निर्ज्योतिषा ज्योतिष्मान् इति दक्षिणेऽक्षिकटे ॥१८॥ रुक्मो वर्चसा वर्चस्वान् इत्युत्तरे ॥१९॥ ऋचे त्वा इति दक्षिणे श्रोत्रे[16] ॥२०॥ रुचे त्वा इत्युत्तरे ॥२१॥ समित् स्रवन्ति सरितो न धेनाः इत्येतद्दध्ना मधुमिश्रेण संपूरयति । °अन्तर्हृदा=अमृतस्य धाराम् इति ॥२२॥ [ २३ ]

१. MHP सुकृतामु. २. Cf. BaudhŚS X.33 : 30.8 : परिणिहन्ति; VaikhŚS XVIII.17 : 274.21 : परिनिहन्ति. ३. MHP सृप्तो धीषमूर्ज°. ४. H oms; MP Text in bracket broken. ५. MHP देव्यमृ°. ६. MHP खलमुप°. ७. MHP पूर्वमृषि° Caland suggests the original reading चावल्पानो for चाकुपानो (VaikhŚS XVIII.19 : 276.2 fn[1]). ८. MHP °ग्नि. ९. MHP पृथिवी°. १०. MHP सूता देव्ये. ११. MHP °श्वाशवः. १२–१२. MH °श्वां अग्ने; P श्वामग्ने. १३. MHP °विमनु. १४. MHP °त्यमिमू°. १५. Cf. TS IV.2.9.19 : °वैश्वान°. १६. MHP श्रोणे.

तद् आदित्यं गर्भं पयसा समञ्जन् इति प्राचीनमुत्तानमुखामुपदधाति । °सहस्रस्य=चीयमानः इति ॥१॥ इमं मा हिᳲसीः इत्यस्य शुचमुत्सृजति । द्विपादं=नि षीद तया=सीद इति ॥२॥ उदु त्यं जातवेदसम् इत्येनद् द्वाभ्यां चतुर्गृहीताभ्यां द्विः समान्याभिजुहोति । °देवं वहन्ति=सूर्यᳲ स्वाहा इति ॥३॥ विश्वकर्मा दिशां पतिः इत्यस्मिन् हिरण्यशल्कमुद्दधाति । °स नः पशून्=तस्मै नमस्तया=सीद इति ॥४॥ वातस्य भ्राजि वरुणस्य नाभिम् इति पुरस्तात् प्रत्यगावृत्तमश्वस्य शिर उपदधात्यात्मनोऽन्ते । ° 'अश्वं जज्ञानᳲ[1] सरिरस्य=व्योमन् इति ॥५॥ आदित्यं गर्भम् इति पुरुषशीर्षमभिमृश्य[2] इमं मा हिᳲसीः इत्यस्य शुचमुत्सृजति । °एकशफं पशूनां क=गौरमारण्य=नि षीद तया=सीद इति ॥६॥ प्रजापतिर्दिशां पतिः इत्यस्मिन् हिरण्यशल्कमुद्दधाति । °स न=नमस्तया=सीद इति ॥७॥ अजस्रमिन्दुमरुषं भुरण्युम् इति पश्चात् प्रागावृत्तमृषभस्य शिर उपदधात्यात्मनोऽन्ते । °अग्निमीडे पूर्वं=विराजम् इति ॥८॥ आदित्यं गर्भम् इत्येव पुरुषशीर्षमभिमृश्य इमᳲ समुद्रम् इत्यस्य शुचमुत्सृजति । °शतधार=व्योमन् गवय=नि षीद तया=सीद इति ॥९॥ रुद्रो दिशां[3] पतिः इत्यस्मिन् हिरण्यशल्कमुद्दधाति । °स नः पशून् पातु=नमस्तया=सीद इति ॥१०॥ वरूत्रिं त्वष्टुर्वरुणस्य नाभिम् इति दक्षिणत उदगावृत्तं वृष्णेः शिर उपदधात्यात्मनोऽन्ते । ° [4]अवि जज्ञानाᳲ[4] रजसः=व्योमन् इति ॥११॥ आदित्यं[5]=मभिमृश्य इमामूर्णायुम् इत्यस्य शुचमुत्सृजति । °वरुणस्य=व्योमन् । उष्ट्रमारण्यम=नि षीद तया=सीद इति ॥१२॥ वरुणो दिशां पतिः इत्यस्मिन् हिरण्यशल्कमुद्दधाति । °स नः पशून्=नमस्तया=सीद इति ॥१३॥ यो अग्निरग्नेस्तपसोऽधि जातः इत्युत्तरतो दक्षिणावृत्तं बस्तस्य शिर उपदधात्यात्मनोऽन्ते । °शोचात् पृथिव्या=वृणक्तु इति ॥१४॥ आदित्यं गर्भम् इत्येव पुरुषशीर्षमभिमृश्य अजा ह्यग्नेः इत्यस्य [6]शुचमुत्सृजति । °अजनिष्ट[6]=मग्न[7] आयन् शरममारण्य=नि षीद तया=सीद इति ॥१५॥ अग्निर्दिशां पतिः इत्यस्मिन् हिरण्यमुद्दधाति । °स नः=नमस्तया=सीद इति ॥१६॥ [ २४ ]

पञ्चदशापस्या आयातयत्यभितः स्वयमातृण्णां पञ्च पुरस्तात् पञ्च दक्षिणतः पञ्च पश्चात् ॥१॥ पञ्चोत्तरतश्छन्दस्याः ॥२॥ तासामेकैका

१–१. MHP °ऽश्वज्ञानं. २. MP पृष्ठं°. ३. MHP शिवां. ४–४. MHP विज्ञानं. ५. MHP abr; see above S.9. ६–६. MHP °मुत्सृजनिष्ट. ७. P अग्न.

स्वयमातृण्णामास्पृष्टाक्ष्णयोपधीयन्ते[1] ॥३॥ समीचीषु वाचयति ॥४॥ अपां त्वेमन्त्सादयामि इति पुरस्तादुपदधाति । °तया देवतया; अपां त्वोद्मन्त्सादयामि तया देवतया; अपां त्वा भस्मन्त्सादयामि तया देवतया; अपां त्वा ज्योतिषि सादयामि तया देवतया; अपां त्वाऽयने सादयामि तया = सीद इति ॥५॥ अपां त्वा सदने सादयामि इति पश्चात् । °तया देवतया; अपां त्वा सधस्थे सादयामि तया देवतया; अपां त्वा पुरीषे सादयामि तया देवतया, अपां त्वा योनौ सादयामि तया देवतया; अपां त्वा पाथसि सादयामि तया = सीद इति ॥६॥ अर्णवे सदने सीद इति दक्षिणतः । °तया देवतया; समुद्रे सदने सीद तया देवतया; सलिले सदने सीद तया देवतया; (अपां क्षये सीद तया देवतया; अपाँ सधिषि सीद तया = सीद इ-)ति ॥७॥ गायत्री छन्दः इत्युत्तरतः । °तया देवतया; त्रिष्टुप् छन्दस्तया देवतया; जगती छन्दस्तया देवतया; अनुष्टुप् छन्दस्तया देवतया; पङ्क्तिश्छन्दस्तया देवतया=सीद इति ॥८॥

पञ्चाशत् प्राणभृत आयातयत्यभितः स्वयमातृण्णां दशदश दिक्षु दशासां दक्षिणेन ॥९॥ स्वयमातृण्णां[2] परियन्ति॥१०॥ता(-सामेकैका स्वयमातृण्णमा-) स्पृष्टाक्ष्णयोपधीयन्ते ॥११॥ समीचीषु वाचयति ॥१२॥ अयं पुरो भुवः इति पुरस्तादुपदधाति । °तया देवतया; तस्य प्राणो भौवायनस्तया देवतया; वसन्तः प्राणायनस्त=या; गायत्री वासन्ती तया = या; गायत्रियै गायत्रं त = या[3]; गायत्रादुपाँ(शु तया[4]=तया; उपाँशोस्त्रिवृत्=या; त्रिवृ(-तो रथन्त-)रं त=या; रथन्तराद्वसिष्ठ ऋषिस्तया=या; प्रजापतिगृहीतया[5] त्वया प्राणं गृह्णामि प्रजाभ्यस्तया = सीद इति ॥१३॥ अयं पश्चाद् विश्वव्यचाः इति पश्चात् । °तया=या; तस्य चक्षुर्वैश्वव्यचसं त=या; वर्षाणि चाक्षुषाणि तया दे=या; जगती वार्षी त = या; जगत्या ऋक्षमं[6] त = या; ऋक्षमाच्छुक्रस्तया = या; शुक्रात्सप्तदशस्त = या; सप्तदशाद्वैरूपं त = या; वैरूपाद्विश्वामित्र ऋषिस्त = या; प्रजापतिगृहीतया त्वया चक्षुर्गृह्णामि प्रजाभ्यस्तया = सीद इति ॥१४॥ अयं दक्षिणा विश्वकर्मा इति दक्षिणतः । °त = या; तस्य मनो[7] वैश्वकर्मणं त = या; ग्रीष्मो मानसस्त[8] = या; त्रिष्टुग्ग्रैष्मी त = या; त्रिष्टुभ ऐड[9] स्त = या; [10]°ऐडादन्तर्यामस्त = या; अन्तर्यामात् पञ्चदशस्त = या; पञ्चदशाद् बृहत्तया = या; बृहतो भरद्वाज ऋषिस्तश्वया; प्रजापति-

१. MHP °मासृष्टा. २. MHP °तृण्णा. ३. MHP om. ४. MHP °शुस्तया. ५. MHP गृह्णीत°. ६. MH ऋषभं. ७. H मना. ८. MHP मानस्त. ९. M ऐधं; H रोधं. १०. H रोडाद°.

गृहीतया त्वया मनो गृह्णामि प्रजाभ्यस्त=सीद इति ॥१५॥ इदमुत्तरात्सुवः इत्युत्तरतः । °तया देवतया; तस्य श्रोत्रᳬ सौवं तया देवतया; शरच्छ्रौत्री[1] त=या; अनुष्टुप्छारदी त=या; अनुष्टुभः स्वारं त=या; स्वारामन्थी त=या; मन्थिन एकविᳬशस्त[2]=या; एकविᳬशाद्वैराजं त=या; वैराजाज्जमदग्नि-ऋषिस्त=या; प्रजापतिगृहीतया त्वया श्रोत्रं गृह्णामि प्रजाभ्यस्तया देवतयाऽङ्गि-रस्वद् ध्रुवा सीद इति ॥१६॥ इयमुपरि[3] मतिः इति दक्षिणतः पर्यंतोषु वाचयति । °तया देवतया; तस्यै वाङ्माती त=या; हेमन्तो वाच्यायनस्त=या; पङ्क्तिर्हैमन्ती त=या; पङ्क्त्यै निधनवत् त=या; निधनवत आग्रयणस्त=या; आग्रयणात् त्रिणवत्रयस्त्रिᳬशौ त=या; त्रिणवत्रयस्त्रिᳬशाभ्याᳬ शाक्वररैवते तया=या; शाक्वररैवताभ्यां विश्वकर्मर्षिस्तया=या; प्रजापतिगृहीतया त्वया वाचं गृह्णामि प्रजाभ्यस्तया=सीद इति ॥१७॥

पञ्चाशदपानभृत आयातयति (अभितः स्वयमातृण्णां)[4] दशदश दिक्षु दशासाम् उत्तरेण ॥१८॥ स्वयमातृण्णां परियन्ति ॥१९॥ तासामेकैका स्वय-मातृण्णामास्पृष्टाक्ष्णयोपधीयन्ते ॥२०॥ विषूचीषु[5] वाचयति ॥२१॥ प्राची दिशाम् इति पुरस्तादुपदधाति । °तया देवतया; वसन्त ऋतूनां त=या; अग्नि-र्देवता तया=या; ब्रह्म द्रविणं त=या; त्रिवृत्स्तोमस्त=या; स उ पञ्चदशवर्तनिस्त[6]=(या)[7]; त्र्यविर्वयस्त=या; कृतमयानां[8] त=या; पुरो वातो वातस्तया=या; सानग[9] ऋषिस्तया=सीद इति ॥२२॥ पितरः पितामहाः इत्येना अधिवदति । °परेऽवरे[10]° ते नः पान्तु=देवहूत्यां तया=सीदत इति ॥२३॥ प्रतीची दिशाम् इति पश्चात् । °तया=या; वर्षा[11] ऋतूनां त=या; विश्वेदेवा देवता (त)[12]=या; विड्[13] द्रविणं तया=या; सप्तदशः स्तोमस्त=या; स उ एकविᳬशवर्तनिस्त=या; त्रिवत्सो वयो द्वापरोऽयानां त=या; पश्चा(-द्वातो वा-)तस्त=या; अहभून ऋषिस्तया=सीद इति ॥२४॥ पितरः[14] पितामहाः इत्यवैना अधिवदति ॥२५॥ दक्षिणा दिशाम् इति दक्षिणतः । °त=या; ग्रीष्म ऋतूनां त=या; इन्द्रो देवता त=या[15]; क्षत्रं द्रविणं त=या; पञ्चदशः स्तोमस्त=या; स उ

---

१. H छारच्छ्रौं; P शरच्छैत्री. २. MHP °विंशन्त. ३. MHP इयदुपरि. ४. MHP om. ५. P °चीषि. ६. M °वर्तिनस्त. ७. MHP om. ८. MHP कूतम°. ९. MHP साना. १०. M च अपरे; H च अवरे; P चापरे. ११. P वर्ष. १२. MHP om. १३. MHP विराट. १४. MHP पितरं. १५. MHP om.

  

सप्तदशवर्तनिस्त=या; [1]दित्यवाड् वयस्त[1] (=या; त्रेताऽया-)नां त=या; दक्षिणाद्वातो वातस्तया[2]=या; सनातन[3] ऋषिस्तया=सीद इति ॥२६॥ पितरः पितामहाः इत्येवैना अधिवदति ॥२७॥ उदीची दिशाम् [4]इत्युत्तरतः। [5]त[4]=या; शरदृतूनां त=या; मित्रावरुणौ देवता त=या; पुष्टं द्रविणं त=या; एकविंशः स्तोमस्त=या; [5]स उ त्रिण[5](-वव-)र्तनिस्त[6]=या; [7]तुर्य-(-वाड् वयस्त)=या; आस्कन्दोऽयानां (त=या); उत्तराद्वातो वातस्त=या; (प्रत्न)[8] ऋषिस्तया=सीद इति ॥२८॥ पितरः पितामहाः इत्येवैना अधिवदति ॥२९॥ ऊर्ध्वा दिशाम् [9]इत्युत्तरतः पर्यतीषु[9] वाचयति । [10]तयाः देवतया; हेमन्त-शिशिरावृतूनां त=या; बृहस्पतिर्देवता (त=या; वर्चो द्रविणं त=या; त्रिणवः स्तोमस्त=या; स उ त्रयस्त्रिं-)ंशवर्तनिस्त=या; पृष्ठवाड् वयस्त=या; अभि-भूरयानां त=या; विष्वग् वातो वातस्तया=या; सुपर्ण ऋषिस्तया देवतयाङ्गिर-स्वद् ध्रुवा सीद इति ॥३०॥ पितरः पितामहाः इत्येवैना अधिवदति। [10]परेऽवरे=देवहूत्यां तया=(सीद इति ॥३१॥ नदं व ओदती-)नां नदं यो-(-युवतीनां) पतिं वो अघ्नियानां धेनूनामिषुध्यसि तया देवतया(-ङ्गिरस्वद् ध्रुवा सीद इति ॥३२॥ ता)[10] अस्य सूददोहसः इति ता एव। [10]सोमं श्रीणन्ति=दिवस्तया=सीद ( इति ॥३३॥ तया देवतयाङ्गिरस्वद् ध्रुवा सीद)[11] इत्येकामुप-धायाधिवदेत् ॥३४॥ तया देवतयाऽङ्गिरस्वद् ध्रुवे[12] सीदतम् इति द्वे ॥३५॥ तया देवतयाऽङ्गिरस्वद् ध्रुवाः सीदत[13] इति बह्वीः ॥३६॥ [२५]

द्व(-ादश योनी-)रायातयत्यपरेण स्वयमातृण्णां पुच्छस्य सन्धौ हंसपा-तिनीः ॥१॥ उदीचीषु वाचयति धर्णसिस्तया[14] देवतया; द्रविणं त=या; प्रसवस्त=या; उपयामस्त=या[15]; काटस्त[16]=या; अर्णवस्त=या; सिन्धुस्त=या; समुद्रस्त[17]=या; सरस्वान्स्तया देवतया; विश्वव्यचास्त=या; सुभूतं त=या; (अन्तरिक्षं) तया=सीद इति ॥२॥ अग्नेरङ्गान्यायातयति सन्धिष्वेकां मध्ये ॥३॥ प्राच्या त्वा दिशा सादयामि इति पुरस्तादुपदधाति[18]। [19]गायत्रेण छन्दसाऽग्निना=शिर उप दधामि तया=[19]सीद इति[19] ॥४॥ दक्षिणया त्वा दिशा

---

१–१. MHP दित्यवध्वयन्त. २ MHP पात°. ३. P सनासनातम. ४–४. MHP °त्युत्तरस्ते. ५–५. MHP सा उदित. ६. MHP न्तर्हिस्त. ७. MHP तया. ८. MHP om. ९–९. MHP °त्तरतमरितयतीषु. १०. MHP om. ११. MHP om. १२. MHP ध्रुवा. १३. MHP सदत. १४. MHP धरणिसित्तया [P धरणी°]. १५. H यो. १६. MHP कोट°. १७. MHP समुद्रन्त. १८. H दधामि. १९–१९. P सीदतेति.

सादयामि इति दक्षिणतः । °त्रैष्टुभेन छन्दसेन्द्रेण=पक्षमुपदधामि तया=सीद इति ॥५॥ प्रतीच्या त्वा दिशा सादयामि इति पश्चात् । °जागतेन छन्दसा सवित्रा=पुच्छमुपदधामि तया=सीद इति ॥६॥ उदीच्या त्वा दिशा सादयामि इत्युत्तरतः । °आनुष्टुभेन छन्दसा मित्रावरुणाभ्यां=पक्षमुपदधामि तया=सीद इति ॥७॥ ऊर्ध्वया त्वा दिशा सादयामि इति मध्ये । °पाङ्क्तेन छन्दसा बृहस्पतिना देवतयाग्नेः पृष्ठेनाग्नेः पृष्ठमुपदधामि तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद इति ॥८॥ दक्षिणतोऽपरेण स्वयमातृण्णां प्राजापत्यां चर्षभं चोपदधाति ॥९॥ संवत्सरस्य प्रतिमाम् इति प्राजापत्याम् । °यां त्वा=व्यश्नवत्तया=सीद इति ॥१०॥ त्वामग्ने वृषभं चेकितानम् इत्युपरितया वाऽस्यामृषभमुपदधाति[1] । °पुनर्युवानं[2]=स॑शिशाधि तया=सीद इति ॥११॥ सामचितिमायातयत्यभितः स्वयमातृण्णां तिस्रस्तिस्रो दिक्षु तिस्रो मध्ये ॥१२॥ तासामेकैका[3] स्वयममातृण्णामास्पृष्टा ॥१३॥ समीचीषु वाचयति ॥१४॥ अग्न आ याहि वीतये इति गायत्रं पुरस्तादुपदधाति । °गृणानो=बर्हिषि तया देवतया; तं त्वा=यविष्ठय त=या; स[4] नः पृथुश्रवाः=सुवीर्यं तया=सीद इति ॥१५॥ अभि त्वा शूर नोनुमः इति रथन्तरं दक्षिणतः । °अदुग्धा इव=[5]तस्थुषस्त=या;[5] ईशानमिन्द्र तस्थुषो न=जनिष्यते तया[6]=या; न जातो=हवामहे तया=सीद इति ॥१६॥ त्वामिद्धि हवामहे इति बृहदुत्तरतः पक्षः सवीर्यं करोति । °सातां=स्वर्वतस्त[7]=या; त्वां काष्ठा=अद्रिवस्त=या; महःस्तवानो=जिग्युषे तया=सीद इति[8] ॥१७॥ [9]यज्ञायज्ञा वो[9] अग्नये इति यज्ञायज्ञियं[10] पश्चात् । °गिरागिरा च दक्षसे । प्रप्र वयममृतं जातवेदसं प्रियं मित्रं न श॑सिषं तया देवतया; प्रियं मित्रं न श॑सिषम् ऊर्जो नपात॑ स हि नायमस्मयुर्दाशेम हव्यदातये तया देवतया; दाशेम हव्यदातये भुवद्वाजेष्वविता [11]भुवद्वृध उत[11] त्राता तनूनां तया=सीद इति ॥१८॥ कया नश्चित्र आ भुवद् इति वामदेव्यं मध्ये । °ऊती

---

१. MHP °र्वास्या°. २. P °र्वानिमु. ३. MHP °मेकैता. ४. MHP सा. ५-५. M written but cut; P oms; thus H. ६. MHP या. ७. H सर्वतस्त. ८. MHP add....यश्चापो अग्न=नान्तरेति तया which is abridged form of यज्ञायज्ञा वो अग्नये=तनूनां तया=सीद इति ( S.18) which is wrongly given after कया नश्चित्र°=सीद इति(S.19). ९-९. MHP यज्ञाय यज्ञापो. १०. MHP यज्ञाय यज्ञियं. ११-११. M °वृधः उत, HP °वृधः=उत.

= शचिष्ठया वृता त=या; कस्त्वा सत्यो मदानां=वसु त=या; अभी षु णः सखीना =स्यूतिभिस्तया=सीद इति[1] ॥१९॥ उत्तरतोऽपरेण स्वयमातृण्णामृक्सामयो-रूपमुपदधाति[2] ॥२०॥ कया नश्चित्र आ भुवद् इति साम्नो रूपम् । °ऊती =वृता तया=सीद इति ॥२१॥ इन्द्रं विश्वा अवीवृधन् इत्यृचः । °समुद्र[4]=पतिं तया=सीद इति ॥२२॥ एवमेवैते पर्यायशश्चितोषूपधीयन्ते[5] ॥२३॥ [२६]

नव लोकंपृणा आयातयत्युत्तरस्यै श्रोण्यै स्वयमातृण्णामभि ॥१॥ समीचीषु वाचयति ॥२॥ लोकं पृण इत्यासां प्रथमामुपदधाति । °छिद्रं पृणाथो सीद = असीषदऽस्तया[6] देवतया; ता अस्य सूददोहस=दिवस्तया देवतया; नदं [7]व ओदतीनां[7] नदं=इषुध्यसि [8]तया देवतया;[8] ता अस्य सूददोहसो (=दिवस्तया देवतया;)[9] नदं व ओदतीनां (नदं = इषुध्यसि तया देवतया;)[10] लोकं पृण(=असीषदऽस्तया देवतया;)[11] नदं व ओदतीनां=(इषुध्यसि तया देवतया;)[12] लोकं पृण(=असीषदऽस्तया देवतया;)[13] ता(अस्य सूददोहस= दिवस्तया=सीद इति ॥३॥ लो-)कं पृण इत्यासां दशमीमुखामुपदधात्युत्तरत इतरस्या उखायाः । °छिद्रं पृणाथो=असीषदऽस्तया=सीद इति ॥४॥ [14]एतां नदवत्या अनुचरीम्[14] नदं व ओदतीनां=इषुध्यसि तया देवतया ॥५॥ ता अस्य सूददोहसः इति तामेव । °सोमऽ श्रीणन्ति=रोचने दि(-वस्तया) देव-(-तयाङ्गिरस्वद् ध्रुवा सीद इति ॥६॥ चितिऽ संछादयत इत्याह । °अन्ताऽ-श्चिनुत)[15] सुष्ठुमिष्टकोपकाशं कुरुत इति ॥७॥ चितिऽ संछादयन्ति ॥८॥ अन्ताऽश्चिन्वन्ति ॥९॥ सुष्ठुमिष्टकोपकाशं कुर्वन्ति लोकंपृणया च सूददोहसा च ॥१०॥ औदुम्बरोऽ शाखामादायाग्निमनुचरतो ध्वर्युश्च यजमानश्च लोकं पृणत छिद्रं पृणताथो सीदत[16] शिवा यूयम् । इन्द्राग्नी वो बृहस्पतिरस्मिन्(-योनावसीषदन् तया दे-)वतया ॥११॥ ता अस्य सूददोहसः इति ता एव । °सोमऽ श्रीणन्ति = दिवस्तया देवतयाऽङ्गिरस्वद् ध्रुवाः सीदत इत्यभ्या-

---

१. MHP wrongly add कया नश्चित्र आभुवदिति वामदेव्य [M वामे°] मध्व ऊती=तातः=तन्त्वा=भिस्त्वया [ M °भिस्तया ] सीदेति. २. MH °त्तातो. ३. MHP °तृण्णामृत्साम°. ४. MHP समुदं. ५. °धीयेत. ६. MHP °षदस्तया. ७–७. MHP वो अदतीनां. ८–८. H oms. ९. MHP om. १०. MHP om. ११. MHP om. १२. MHP om. १३. MHP om. १४–१४. MH एतन्नदवत्या अन्वचारी°, P एतन्नदवत्या=अन्वचारी°. १५. Cf. infra VIII.30.11. १६. MHP सीद.

कारम् ॥१२॥ दक्षिणतः शीर्षण्यानां 'प्रतिपद्यते दक्षिणं पक्षम्' ॥१३॥ अथोत्तरं पक्षमुत्तरतः शीर्षण्यानाꣳ मꣳस्थापयन्ने ॥१४॥ 'अग्ने इत्युत्क्ररे' शाखां न्यस्य आ याहि वीतये इति चितिमुपधाय संदधाति । °गृणानो=बर्हिषि तया=सीद इति ॥१५॥ चित्तिमचित्तिम् इति चितिक्लृप्त्याऽभिमृशति । °[2]चिनवद्वि=मुरुष्य तया=सीद इति ॥१६॥ अग्निमूर्धा इति गायत्रियाऽभिमृशति[3] । °दिवः ककुत्=जिन्वति तया=सीद इति ॥१७॥ दशहोतुराहुतिꣳ हुत्वा प्राणदा अपानदाः इत्यवरोहणेनावरोहति । °व्यानदा=शिवो भव; नमस्ते =शिवो भव; वाङ् म आसन्=हिꣳसीः; तत्त्वा=प्र मोषीः इति ॥१८॥ सुपर्णो लोकानुपशिश्रियाणः इत्यवरुह्य चितिमुपतिष्ठते । °श्येनः पतत्यत्नजो[4] हिरण्यया कंकं ज्योतिः सुवरुत्पतन्तं गायत्री पातु वृषभं सुवर्ग्यम् इति ॥१९॥ प्रवर्ग्योपसद्भ्यां प्रचर्य वसन्ति महाचित्यै ॥२०॥ [२७]
[इति नवमोऽनुवाकः]

## [महाचितिः]

प्रातरादित्येन वाचं विसृज्य प्रवर्ग्योपसद्भ्यां[5] प्रचरति ॥१॥ आत्मन्नग्नि[6]=मुपमुञ्चते ॥२॥ अधिरोहणेनाधिरोहति ॥३॥ अथ पृष्ठो दिवि इति पुरीषस्य चितिमुपदधाति । °तया=सीद इति ॥४॥ चित्तिमचित्तिम् इत्येवाभिमृशति । °तया=सीद इति ॥५॥ अवरोहणेनावरोहति ॥६॥ प्रवर्ग्योपसद्भ्यां प्रचर्य वसन्ति ॥७॥ प्रातरादित्येन वाचं विसृज्यात्मन्नग्नि[7] =धिरोहति[8] ॥८॥ अथ अग्न उदधे इति पुरीषस्याहुतिं जुहोति । °या त इषु=भूयास्म स्वाहा इति ॥९॥ तत्त्वा यामि इत्यनुचरीं जुहोति ॥१०॥ अवरोहणेनावरोहति[9] ॥११॥ प्रवर्ग्योपसद्भ्यां प्रचरति ॥१२॥ आत्मन्नग्निं गृ°=धिरोहति ॥१३॥ अथैतां चितिꣳ सꣳसादयति होता च विभक्तिश्च द्वे चर्तव्ये अवकाष्टौ संयान्यो[10] द्वे[11] सयुजौ नव शीर्षण्याः (पञ्चाश्विन्यः)[12] पञ्चर्तव्याः पञ्च प्राणभृतः पञ्च वृष्टिसनय

१–१. H oms. २–२. MHP om. ३–३. P oms; MH om चि of चिनवद्वि and मुरुष्य. ४. MHP पतत्र्यलजो. ५. MP °पसण्यां, °पसरण्यां. ६. MHP abr; see VIII 14.5–7. ७. See above S.2–3. ८. MHP °धिरोहेत्या°. ९. MH °रोहेणाव, P °रोहणाव. १०. MHP यान्यौ. ११. H द्वौ. १२. MHP om.

ऊनविꣳशतिर्वयस्या एकविꣳशतिरिन्द्रतनुवो[1]ऽन्त्या द्वादशयोनयोऽग्नेरङ्गानि प्राजापत्या चर्षभश्च सामचितिर्ऋक्सामयो[2] रूपं नव[3] लोकंपृणा एका च लोकंपृणा बह्वृचश्च[4] सन्धिश्चाभीमर्शश्च[5] त्रिष्टुप् च होतुश्चाहुतिरवरोहणं चोपस्थानं[6] च ॥१४॥ एतदस्य कार्यं भवति ॥१५॥ चतुर्होतारमुपधाय अग्निम् इति विभक्तिमाह ॥१६॥ शुक्रश्च शुचिश्च इति पूर्वेण स्वयमातृण्णामास्पृष्टे ऋतव्ये[7] उपदधाति । अग्नेरन्तः=पृथिवी ग्रैष्मावृतू अभिकल्पमाना[8]=विशन्तु तया=ध्रुवे सीदतम् इति ॥१७॥ यास्ते अग्न आर्द्रा[9] योनयः इत्यवकामनूपदधाति । °याः कुलायिनीः=तनुवेह सीद तया=सीद इति ॥१८॥ पूर्वेण ता अष्टौ संयानीरुपदधाति ॥१९॥ द्वे सयुजौ आघाराभ्यां त्वा सयुजा युजा युनज्मि तया देवतया; तेजसा त्वा सयुजा युजा युनज्मि तया=सीद इति ॥२०॥ शीर्ष्णः काले नव शीर्षण्या उपदधाति ॥२१॥ [२८]

पञ्चाश्विनीरायातयत्यभितः स्वयमातृण्णामेकैकां दिक्ष्वेकां[10] मध्ये ॥१॥ अन्तिकमिवैता अनास्पृष्टा भवन्ति ॥२॥ ध्रुवक्षितिः इति पुरस्तादुपदधाति । °ध्रुवयोनिः=मिह त्वा तया=सीद इति ॥३॥ स्वे दक्षे इति दक्षिणतः[11] । °दक्षपितेह सीद=इह (त्वा तया=)सीद इति ॥४॥ कुलायिनी इति पश्चात् । °वसुमती=इह त्वा तया=सीद इति ॥५॥ अग्नेः पुरीषमसि इत्युत्तरतः । °देवयानी=इह त्वा तया=सीद इति ॥६॥ दिवो मूर्धाऽसि इति मध्ये । °पृथिव्या नाभि=इह त्वा तया=सीद इति ॥७॥ पञ्चर्तव्या आयातयत्यभितः स्वयमातृण्णामेकैकां दिक्ष्वेकां[12] मध्ये ॥८॥ अन्तिकमिवैता (अना-)स्पृष्टा भव(-न्ति ॥९॥ सजूरृ्तु-)भिः इति पुरस्तादुपदधाति । °सजूर्विधाभिः[13] सजूर्वसुभिः सजूर्देवैर्वयोनाधैरग्नये[14] त्वा वैश्वानरायाश्विनाऽध्वर्यू[15] सादयतामिह त्वा तया=सीद इति ॥१०॥ सजूरृतुभिः इति दक्षिणतः । °सजू रुद्रैः सजूर्देवैर्वयोना=(इह त्वा तया)[16]=सीद इति ॥११॥ सजू(-रृतुभिः इति पश्चात् । सजूरादित्यैः) सजूर्देवै(-र्वयोना=इह त्वा तया=)सीद इति ॥१२॥ सजूरृतुभिः

---

१. MHP °शतिमिन्द्र°. २. MHP °चितिरुत्सा°. ३. MHP नप. ४. P °वट्च. ५. P °मिमर्श°. ६. P °स्थानश्च. ७. MHP ऋतवे. ८–८. MP ग्रैष्मावृता अभिकत्व°. ९. MH आर्द्रं, P आर्द्रे. १०. MHP दिक्ष्वेतां. ११. P दक्षिणो. १२. MHP दिक्ष्वेकं. १३. MHP सजूर्विधाभिः twice. १४. P °दैवयोना°. १५. M °ध्वयु°. १६. MHP om.

इत्युत्तरतः । °सजूर्विश्वेदेवैः सजूर्देवैर्वयोनाधै[1]=(इह त्वा तया)[2]=सीद इति ॥१३॥ सजूॠतुभिः इति मध्ये । °सजूर्विधाभिः सजूर्देवैर्वयोनाधै=मिह त्वा तया देव=सीद इति ॥१४॥ पञ्च प्राण(-भृत आयातयत्यभितः स्वयमातृण्णामे-)कै[3]=स्पृष्टा भवन्ति ॥१५॥ (प्राणं) मे पाहि इति पुरस्तादुपदधाति । °तया=सीद इति ॥१६॥ अपानं मे पाहि इति दक्षिणतः । °तया=सीद इति ॥१७॥ व्यानं मे पाहि इति पश्चात् । °तया=सीद इति ॥१८॥ चक्षुर्मे उर्व्या[4] वि माहि[5] इत्युत्तरतः । °तया=सीद इति ॥१९॥ श्रोत्रं मे [6]श्लोकया इति[6] मध्ये । °तया=सीद इति ॥२०॥ पञ्च वृष्टिसनीरायातय(-त्यभितः स्वयमातृण्णामे)कै[3]=स्पृष्टा[7] भवन्ति ॥२१॥ अपस्पिन्व[8] इति पुरस्तादुपदधाति । °तया=सीद इति ॥२२॥ ओषधीर्जिन्व इति दक्षिणतः । °तया=सीद इति ॥२३॥ द्विपाद् पाहि इति पश्चात् । °तया=सीद इति ॥२४॥ चतुष्पादव इत्युत्तरतः । °तया=सीद इति ॥२५॥ दिवो [9]वृष्टिमेरय इति[9] मध्ये । °तया=सीद इति ॥२६॥ चतस्रो वयस्यानामायातयति पू(-र्वेण) स्वयमातृण्णाꣳ हꣳसपातिनीः ॥२७॥ उदीचीषु वाचयति विष्टम्भो वयोऽधिपतिश्छन्दस्तया=या; क्षत्रं वयो मयन्दं छन्दस्त=या; विश्वकर्मा वयः[10] परमेष्ठी छन्दस्त=या; मूर्धा वयः[11] प्रजापतिश्छन्दस्तया=सीद इति ॥२८॥ पञ्चासां दक्षिणायाꣳ श्रोण्यामायातयति पञ्चोत्तरस्य(-ꣳ श्रोण्यां प्रा-)ङ् स्वयमातृण्णामभि ॥२९॥ समीचीषु वाचयति ॥३०॥ त्र्यविर्वयः[12] इति दक्षिणत उपदधाति । °त्रिष्टुप् छन्दस्त=या; दित्यवाड् वयो विराट् छन्दस्त=या; पञ्चाविर्वयो[13] गायत्री छन्दस्त=या; त्रिवत्सो वय उष्णिहा छन्दस्त=या; तुर्यवाड् वयोऽनुष्टुप् छन्दस्तया=सीद इति ॥३१॥ पष्ठवाड् वयः इत्युत्तरतः । °बृहती[14] छन्दस्त=या; उक्षा वयः सतोबृहती[15] छन्दस्त=या; ऋषभो वयः ककुप्छन्दस्त[16]=या; धेनुर्वयो जगती छन्दस्त=या; [17]अनड्वान् वयः[17] पङ्क्तिश्छन्दस्तया=सीद इति ॥३२॥ बस्तो वयः इति दक्षिणेंऽस उपदधाति । °विवलं छन्दस्तया=सीद

१. M °र्देवैर्योना; P °र्देवयोनाधै. २. MHP om. ३. MHP abr; see above S.1–2. ४. M उर्वा. ५. MP विमाति. ६–६. MHP श्लोकयन्ति. ७. M सृष्टा, H स्पष्टा, P सृषा. ८. MHP अपःपिन्व. ९–९. MH °मोयेति. १०. M वयं. ११. MHP वयं. १२. MP त्रिविवय, H त्रिविर्वय. १३. MP पञ्चापिर्यो. १४. MHP बृहस्पती. १५. M बृहस्पति. १६. MP ककुमच्छस्त; H ककुच्छ°. १७–१७. MP अनड्वा स्वयं.

इति ॥३३॥ वृष्णिर्वयः इत्युत्तरे। [1]विशालं छन्दस्तया=सीद इति ॥३४॥ व्याघ्रो वयः इति दक्षिणे पक्ष उपदधाति। [1]अनाधृष्टं छन्दस्तया=सीद इति ॥३५॥ सिꣳहो वयः इत्युत्तरे। [1]छदिश्छन्दस्तया=सीद इति ॥३६॥ पुरुषो वयः इति [1]मध्ये। [1]तन्द्रं[1] छन्दस्तया=सीद इति ॥३७॥ [ २९ ]

[2]एकविꣳशतिमिन्द्रतनूरायातयत्यभितः स्त्रयमातृण्णां पञ्च पञ्च दिक्ष्वेकां मध्ये ॥१॥ तासामेकैका स्वयमातृण्णामास्पृष्टा ॥२॥ समीचोषु वाचयति ॥३॥ अग्निना विश्वाषाट् इति पुरस्तादुपदधाति। [1]त=या; सूर्येण[3] स्वराट् त=या; क्रत्वा शचीपतिस्त=या; ऋषभेण त्वष्टा त=या; यज्ञेन मघवान् तया=सीद इति ॥४॥ दक्षिणया सुवर्गः इति दक्षिणतः। [1]तया देवतया; मन्युना वृत्रहा त=या; सौहार्द्येन तनूधास्त=या; [4]अन्नेन गयस्त[4]=या; पृथिव्याऽसनात्तया=सीद इति ॥५॥ ऋग्भिरन्नादः[5] इति पश्चात्। [1]तया देवतया; वषट्कारेणर्धस्त=या; साम्ना तनूपास्त=या; विराजा ज्योतिष्मान् त=या; ब्रह्मणा सोमपास्तया=सीद इति ॥६॥ गोभिर्यज्ञं दाधार इत्युत्तरतः। [1]त=या; क्षत्रेण मनुष्यान् त=या; अश्वेन च रथेन च वज्री तया=या; ऋतुभिः प्रभुस्त=या; संवत्सरेण परिभूस्तया=सीद इति ॥७॥ तपसाऽनाधृष्टः, सूर्यः सन् तनूभिः, सत्येन ज्येष्ठः परीयाय इति त्रिभिरेकां[6] मध्य उपदधाति। [1]तया=सीद इति ॥८॥ द्वादश योनीरुपदधाति ॥९॥ अग्नेरङ्गानि प्राजापत्यां चर्षभं च सामचितिमृक्सामयो[7] रूपं नव [8]लोकंपृणा एकां च लोकंपृणां[8] बह्वीश्च[9] ॥१०॥ चितिꣳ सञ्छादयत इत्याह। [1]अन्ताꣳ[10]=ता अस्य सूददोहस[11]=इत्यभ्याकारम् ॥११॥ उत्सृ(-जति ॥१२॥ अग्निम्)[12] इत्यु(-त्करे शाखां) [13]न्यस्य दूतं[13] वृणीमहे इति चितिमुपधाय संदधाति। [1]होतारं=सुक्रतुं तया=(सीद इति)[14] ॥१३॥ चित्तिमचित्तिम्[15] इत्येवाभिमृशति। [1]तया=सीद इति ॥१४॥ भुवः इति त्रिष्टुभाऽभिमृशति। [1]यज्ञस्य हव्यवाहं तया=सीद इति ॥१५॥ चतुर्होतुराहुतिꣳ हुत्वा प्राणदा अपानदा; नमस्ते हरसे; शोचिषे; वाङ्म आसन्; (त-)त्त्वा यामि (इत्यवरोहणेनावरोहति) ॥१६॥ सुपर्णो लोकानुप शिश्रियाणः इत्यवरुह्य चितिमुपतिष्ठते। [1]श्येनः पतत्य[16]=

१–१. MH मध्येन्द्र. २. P °शतिरिन्द्र. ३. MHP सूर्यां. ४–४. MHP अग्नेनयस्त. ५. MHP ऋनुभिर्. ६ MHP °रेतां ७. MHP °तिमुत्साम°. ८–८. MH °पृणामेतां°, P oms एकां च लोकं पृणां. ९. MHP बह्वीश्च. १०. MHP abr; see supra VIII 27.7–11. ११. MHP abr; see supra VIII.27.12. १२. MHP om. १३–१३. MHP न्यास्य मृतं. १४. MHP om. १५. MHP om अचित्तिम्. १६. MH पतत्र्यः P पतंत्यः.

सुवर्ग्यम् इति ॥१७॥ प्रवर्ग्योपसद्भ्यां प्रचर्य वसन्ति द्वितीयायै चित्यै ॥१८॥ [३०] [ इति दशमोऽनुवाकः ]

## [ द्वितीया चितिः ]

प्रातरादित्येन वाचं विसृज्य प्रवर्ग्योपसद्भ्यां प्रचरति ॥१॥ आत्म[1]=प्रचर्य वसन्ति ॥२॥ प्रातरादित्ये(-न वाचं विसृज्यात्मन्नग्निं=धिरोहति ॥३॥ अथ अग्ने दुध्र इति)[2] पुरीषस्याहुतिं जुहोति। °या त इषुर्यु[3]=भूयास्म स्वाहा इति ॥४॥ तत्त्वा यामि इत्यनुचरौं[4]=स७ँसादयति होता च विभक्तिश्च स्वयमातृण्णा च[5] हिरण्येष्टका च मण्डलेष्टका च[5] सम्राट् च रेतःसिक्च विश्वज्योतिश्च चतस्र ऋतव्या द्वे अवके अष्टौ संयान्य एका[6] सयुङ् नव (शीर्षण्या पञ्च दिश्या दश प्राण-)भृतः[7] षट्त्रि७ँशद्बृहत्यश्चतुर्दश वालखिल्यास्त्रयस्त्रि७ँशद्यज्ञतनुवो[8]ऽन्त्या द्वादश योन्योऽग्नेरङ्गानि[9]=मर्शश्च जगती च हो[10]=कार्यं भवति ॥५॥ पञ्चहोतारमुपधाय अग्निना इति विभक्तिमाह ॥६॥ भुवो विश्वायुः इति स्वयमातृण्णामादत्ते ॥७॥ तां दध्ना[11]=समारभ्योपदधाति इतीदम् ॥८॥ इन्द्राग्नी अव्यथमा-(-नाम् इत्यध्व-)युश्च यजमानश्च यजुर्वदतः। °इष्टकां=शन्तमेन तया=सीद इति ॥९॥ भुवः इत्येनामुपधायानुव्यनिति ॥१०॥ वरमध्व[12]=अन्तरिक्षमाक्रमिषम् इत्येनामङ्गुष्ठाभ्यामाक्रमते। °प्रजा मा मा हासीद् इति ॥११॥ चित्ति जु[13]=प्रस्नोता ॥१२॥ ज्योतिरसि इत्यस्यामुपरि हिरण्येष्टकामुपदधाति। °ज्योतिर्मे यच्छान्तरिक्षं यच्छान्तरिक्षान्मा पाहि तया=सीद इति ॥१३॥ अधि द्यौरन्तरिक्षं ब्रह्मणा विष्टा इत्यपरेण स्वयमातृण्णामास्पृष्टां मण्डलेष्टकामुपदधाति। °मरुतस्ते गोप्तारो वायु=वर्म चास्तु तया=सीद इति ॥१४॥ सम्राड् ज्योतिरधारयत् इति पूर्वेण स्वयमातृण्णामास्पृष्टा७ँ सम्राजमुपदधाति। °तया=सीद इति ॥१५॥ सम्राडसि [14]रेतःसिक् इति[15] दक्षिणतोऽस्यै रेतःसिचमुप-

---

१. MHP abr; see supra VIII.28.2–7. २. See supra VIII. 28.8–9. ३. MHP इषु भू. ४. MHP abr; see supra VIII. 28.10–14. ५. H oms. ६. MHP एनां. ७. MHP घृतः. ८. MHP °तनवो. ९. MHP abr; see supra VIII.28.14. १०. MHP see supra VIII.28.14–15. ११. MHP abr, see supra VIII.21. 20–27. १२. MHP abr; see supra VIII.21.30–31. १३. MHP abr; see supra VIII.21.31–34. १४–१४. MHP रेतसिरिति.

दधाति । °सा मे = त्वयाऽन्तरिक्षं जेषं तया = सीद इति ॥१६॥ विश्वकर्मा त्वा सादयतु इति विश्वज्योतिषमुपदधाति । °अन्तरिक्षस्य = वायुस्तेऽधिपति-स्तया = सीद इति ॥१७॥ नभश्च नभस्यश्च इति पूर्वेण स्वयमातृण्णामा-स्पृष्टे ऋतव्ये उपदधाति । °वार्षिकावृतू = अग्नि = ध्रुवे सीदतम् इति ॥१८॥ यास्ते अग्न आर्द्रा योनयः इत्यवकामनूपदधाति । °याः = ध्रुवा सीद इति ॥१९॥ इषश्चोर्जश्च इति पूर्वेण ते ऋतव्ये उपदधाति । °शारदावृतू अग्ने = द्यावापृथिवी शारदावृतू अग्नि = सीदतम् इति ॥२०॥ यास्ते अग्न आर्द्रा[1] = सीद इति ॥२१॥ पूर्वेण ता अष्टौ संयानीरायातयति ॥२२॥ एकाꣳ सयुजम् वर्चसा त्वा सयुजा युजा युनज्मि तया = सीद इति ॥२३॥ शीर्ष्णः काले नव शीर्षण्या उपदधाति ॥२४॥ [३१]

पञ्च दिश्या आयातयत्यभितः स्वयमातृण्णामेकैकां दिक्ष्वेकां मध्ये ॥१॥ अन्तिकमिवैता अनास्पृष्टा भवन्ति ॥२॥ राज्ञ्यसि प्राची दिक् इति पुरस्ता-दुपदधाति । °तया = सीद इति ॥३॥ विराडसि दक्षिणा दिक् इति दक्षिणतः । °तया = सीद इति ॥४॥ सम्राडसि प्रतीची दिक् इति पश्चात् । °तया = सीद इति ॥५॥ स्वराडस्युदीची दिक् इत्युत्तरतः । °तया = सीद इति ॥६॥ अधिपत्न्यसि बृहती दिक् इति मध्ये । °तया सीद इति ॥७॥ दश प्राणभृत आयातयति पूर्वेण स्वयमातृण्णाꣳ हꣳसपातिनोः ॥८॥ उदीचीषु वाचयति आयुर्मे पाहि तया देवतया; प्राणं मे पाहि त = या; (अपानं मे पाहि त = या)[2]; व्यानं मे पाहि त = या; चक्षुर्मे पाहि त = या; श्रोत्रं मे पाहि त = या; मनो मे जिन्व त = या; वाचं मे जिन्व त = या; आत्मानं मे पाहि त = या; ज्योतिर्मे यच्छ तया = सीद इति ॥९॥ षट्त्रिꣳशद्बृहतीरायात-यति द्वादश दक्षिणतो द्वादश पश्चाद् द्वादशोत्तरतः ॥१०॥ तासामेकैका स्वयमातृण्णामास्पृष्टा ॥११॥ समीचीषु वाचयति ॥१२॥ मा छन्दः इति दक्षिणत उपदधाति । °तया = या; प्रमा छन्दस्तया = या; प्रतिमा छन्दस्तया = या; अस्त्रीविश्छन्दस्त = या; पङ्क्तिश्छन्दस्त = या; उष्णिक् छन्दस्त = या; बृहती छन्दस्त = या; अनुष्टुप्(छन्दस्त = )या; विराट् छन्दस्त = या; गायत्री छन्दस्त = या; (त्रिष्टुप् छन्दस्त = या);[3] जगती छन्दस्तया = सीद इति ॥१३॥ पृथिवी छन्दः इति पश्चात् । °तया = या; अन्तरिक्षं छन्दस्त = या; द्यौश्छन्दस्त = या; समा-श्छन्दस्त = या; नक्षत्राणि छन्दस्त = या; मनश्छन्दस्त = या; वाक्छन्दस्त = या;

---

१. MHP abr; see above S.19. २. MHP om. ३. MHP om.

कृषिश्छन्दस्त=या; हिरण्यं (-छन्दस्त)=या; (गौश्छन्दस्त=) या; अजाश्छन्दस्त=या; अश्वश्छन्दस्तया=सीद इति ॥१४॥ अग्निर्देवता इत्युत्तरतः। °तया=या; वातो देवता त=या; सूर्यो देवता त=या; चन्द्रमा देवता त=या; वसवो देवतास्त=या; रुद्रा[1] देवतास्त=या; आदित्या देवतास्त=या; विश्वेदेवा देवतास्त=या; म(-रुतो देवतास्त=या; बृहस्पतिर्देवता त=) या; इन्द्रो देवता त=या; वरुणो देवता तया=सीद इति ॥१५॥ चतुर्दश वालखिल्या आयातयन्त्यभितः स्वयमातृण्णाᳬ सप्त पुरस्तात् सप्त पश्चात् ॥१६॥ तासामेकैका स्वयमातृण्णामास्पृष्टाक्ष्णयोपधीयन्ते ॥१७॥ विषूचीषु वाचयतः प्र(-तिप्रस्थाता चाध्वर्युश्च ॥१८। मूर्धाऽ-)सि राड् इति पु(-रस्तादध्व-)र्युरुपदधाति । °तया देवतया; ध्रुवाऽसि धरुणा त=या; यन्त्र्यसि यमित्री त=या; इषे त्वा त=या; ऊर्जे त्वा त=या; कृष्यै त्वा त=या; क्षेमाय त्वा तया=सीद इति ॥१९॥ यन्त्री राड् इति पश्चात् प्रतिप्रस्थाता । °तया देवतया; ध्रुवाऽसि धरणी[2] तया=या; ध(-र्त्र्यसि धरित्री त=या;) आयु(-षे त्वा त=या;) वर्चसे त्वा त=या; [3]ओज(-से) त्वा त=या; बलाय त्वा तया=सीद इति ॥२०॥ [३२]

त्रयस्त्रिᳬशद्यज्ञतनूरायातयत्यष्टावष्टौ दिक्ष्वेकां मध्ये ॥१॥ तासामेकैका स्वयमातृण्णामास्पृष्टा ॥२॥ समीचीषु वाचयति ॥३॥ प्रजापतिर्मनसा इति पुरस्तादुपदधाति । तया देवतया; अन्धोऽच्छेतस्तया[4]=या; (धा-)ता दीक्षाय(-ाᳬस्त=या; स-)विता भृत्याᳬस्त[5]=या; पूषा सोमक्रयण्याᳬस्त[6]=या; वरुण उपनद्धस्त=या; असुरः क्रियमाणस्त=या; मित्रः क्रीतस्तया=सीद इति ॥४॥ शिपिविष्ट[7] आसादितः इति दक्षिणतः । °त=या; नरंधिषः प्रोह्यमाणस्त=या; अधिपतिरागतस्त=या; प्रजापतिः प्रणीयमानस्त=या; अग्निराग्नीध्रे त=या; (बृहस्पति-)राग्नीध्रात् प्रणीयमानस्त=या; इन्द्रो हविर्धाने त=या; अदितिरासादितस्तया=सीद इति ॥५॥ विष्णुरुपावह्रियमाणः इति पश्चात् । °तया देवतया; अथर्वोपोत्तस्त=या; यमोऽभिषुतस्त=या; अपूतपा आधूयमानस्त=या; वायुः पूयमानस्त[8]=या; मित्रः क्षीरश्रीस्त=या; मन्थी सक्तुश्रीस्त=या; वैश्वदेव उन्नीतस्तया=सीद इति ॥६॥ रुद्र आहुतः इत्युत्तरतः । °तया=या; वायुरावृत्तस्त=या; नृचक्षाः प्रतिख्यातस्त=या;

१. MHP रुद्रो. २. H धरिणी. ३. MHP नज for ओज. ४. MHP °च्छेदस्त°. ५. MHP भृश्यान्त. ६. MHP °यण्यास्त. ७. M शिवि°, P शिविनि. ८. MP पूयमिनतस्त.

भक्ष आगतस्त = या; पितृणां नराश*ँ*सस्त=या; असुरात्तस्त=या; सिन्धुरवभृथमवप्रयन् त = या; समुद्रोऽवगतस्तया = सीद इति ।।७ । सलिलः प्रप्लुतः, सुवरुद्गच्चं गतः इति द्वाभ्यामेकां मध्य उपदधाति । [1]तया = सीद इति ।।८।। द्वादशयोनीरुपदधाति ।।९।। अग्ने[1] = (अग्निना इत्युत्करे)[2] शाखां न्यस्य अग्निः समिध्यते इति चितिमुपधाय संदधाति । [1]कविर्गृहपतिः = जुह्वास्यस्तया=सीद इति ।।१०।। चित्तिमचित्तिम् इत्येवाभिमृशति । [1]तया = सीद इति ।।११।। जनस्य गोपा अजनिष्ट जागृविः इति जगत्याऽभिमृशति । [1]अग्निः सुदक्षः = [3]भरतेभ्य शुचिस्तया[3] = सीद इति ।।१२।। पञ्चहोतुराहुति*ँ* हुत्वा प्राणदा[4] = प्रचर्यं वसन्ति मध्यमायै चित्यै ।।१३।। [३३] [इत्येकादशोऽनुवाकः ]

## [मध्यमा चितिः]

प्रातरादित्येन वाचं विसृज्य प्रवर्ग्योप[5] = [6]प्रचर्य वसन्ति[6] ।।१।। प्रातरादित्येन वाचं विसृज्यात्मन्नग्निं[7]=धिरोहति ।।२।। अथ अग्ने गह्य इति पुरीषस्याहुतिं जुहोति । [8]या त इषुः = भूयास्म स्वाहा इति ।।३।। तत्त्वा यामि इत्यनुचरीं जुहोति ।।४।। अ[8]=अधिगेहति ।।५।। अथैता*ँ*श्चिति*ँ* स*ँ*सादयति । होता च विभक्तिश्च द्वे चर्तव्ये अवकाष्टौ संयान्यो[9] द्वे सयुजौ नव शीर्षण्या [10]अनुब्राह्मणमक्षणया स्तोमीयाः[10] सृष्टयो व्युष्टयो द्वादशेन्द्रौजसान्यन्त्या द्वादश योन्यो[11] = अभीमर्शश्चानुष्टुप् च होतुः [12] = कार्यं भवति ।।६।। षड्ढोतारमुपधाय अग्निः इति विभक्तिमाह ।।७।। सहश्च सहस्यश्च इति पूर्वेण स्वयमातृण्णामास्पृष्टे ऋतव्ये उपदधाति । [1]हैमन्तिकावृतू अग्ने = ध्रुवे[13] सीदतम् इति ।।८।। यास्ते अग्न आर्द्राः[14] = सीद इति ।।९।। पूर्वेण (त्ता)[15] अष्टौ संयानीरुपदधाति ।।१०।। द्वे सयुजौ उक्थेभिस्त्वा =

---

१. MHP abr; see supra VIII.30.10–12. २. MHP om. ३–३. MHP भरतेद्वश्शुचि. ४. MHP abr; see supra VIII.30.16–18. ५. MHP abr; see supra VIII.28.1–7. ६–६. MHP प्रसवन्ति. ७. MHP abr; see supra; VIII.14.6–7; 28.8. ८. MHP abr; see supra VIII.28.11–13. ९. P संयान्यौ. १०–१० MH °यान्तोमी°, P °क्षण्यान्तोमी°. ११. MHP abr; see supra VIII.28.14;31 5. १२. MHP abr; see VIII.28.14–15. १३. MHP ध्रुवा. १४. MHP abr; see VIII.28.18. १५. MHP om.

युनज्मि = तया = या; स्तोमेभिस्त्वा सयु = युनज्मि तया = सीद इति ॥११॥ शोर्ष्णः काले नव शीर्षण्या उपदधाति ॥१२॥ अनुब्राह्मणमक्ष्णया स्तोमीया आयातयति ॥१३॥ [३४]

अभितः स्वयमातृण्णां सप्तसप्त दिक्षु हꣳसपातिनीः ॥१॥ प्राचीषु चोदीचीषु च [1](वाच-)यति ॥२॥ आशुस्त्रिवृद् इति पुरस्तादुपदधाति। °तया = सीद इति ॥३॥ व्योम सप्तदशः इति दक्षिणतः । °तया = सीद इति ॥४॥ धरुण एकविꣳशः इति पश्चात् । °तया=सीद इति ॥५॥ भ्रान्तः पञ्चदशः इत्युत्तरतः। °तया = सीद इति ॥६॥ प्रतूर्तिरष्टादशः इति पुरस्तादुपदधाति। °त = सीद इति ॥७॥ अभिवर्तः सविꣳशः इति दक्षिणतः। °तया = सीद इति ॥८॥ वर्चो द्वाविꣳशः इति पश्चात्। °तया = सीद इति ॥९॥ [2]तपो नवदशः इत्युत्तरतः[2] । °तया=सीद इति ॥१०॥ योनिश्चतुर्विꣳशः इति पुरस्तादुपदधाति । °तया=सीद इति ॥११॥ गर्भाः पञ्चविꣳशः इति दक्षिणतः। °तया = सीद इति ॥१२॥ [3]ओजस्त्रिणवः इति पश्चात्। °तया= सीद इति[3] ॥१३॥ संभरणस्त्रयोविꣳशः इत्युत्तरत-। °तया=सीद इति ॥१४॥ क्रतुरेकत्रिꣳशः[4] इति पुरस्तादुपदधाति। °तया=सीद इति ॥१५॥ ब्रध्नस्य वि(-ष्टपं) चतुस्त्रिꣳशः इति (-दक्षिणतः। °तया = सीद इति ॥१६॥ प्रति-)ष्ठा त्रयस्त्रिꣳशः इति पश्चात् । °तया=सीद इति ॥१७॥ नाकः षट्त्रिꣳशः इत्युत्तरतः। °तया = सीद इति ॥१८॥ अग्नेर्भागोऽसि इति पुरस्तादुपदधाति । °दीक्षाया = त्रिवृत्स्तोमस्तया = सीद इति ॥१९॥ नृचक्षसां भागोऽसि इति दक्षिणतः । °धातु = स्तोमस्तया=सीद इति ॥२०॥ मित्रस्य भागोऽसि इति (पश्चात्। °वरुणस्या = स्तोमस्तया=सीद इति ॥२१॥ इन्द्रस्य भागोऽसि इत्युत्तर-)तः। °विष्णो=सीद इति ॥२२॥ वसूनां भागोऽसि इति पुरस्तादुपदधाति। °रुद्राणा=सीद इति ॥२३॥ आदित्यानां भागोऽसि इति दक्षिणतः। मरुता[5] = सीद इति ॥२४॥ अदित्यै भागोऽसि इति पश्चात्। °पूष्ण = सीद इति ॥२५॥ देवस्य सवितुर्भागोऽसि इत्युत्तरतः। °ब्रह्मस्पतेराधि = सीद इति ॥२६॥ (धत्रंश-)चतुष्टोमः (इति पुरस्तादुपदधाति। °तया=)सीद इति ॥२७॥ यावानां भागोऽसि इति दक्षिणतः। अयावाना = सीद इति ॥२८॥ ऋभूणां भागोऽसि इति पश्चात्। °विश्वेषां देवानां = स्तोमस्तया

१. MHP om. २–२. MP तपोन्नवदशोत्तर°, H °दशोत्तर°. ३–३. P oms. ४. MH एकस्त्रिंशः, P °रेकविंश. ५. P मरुतो.

देवतयाऽङ्गिरस्वद् ध्रुवा सीद इति ॥२९॥ विवर्तोऽष्टाचत्वारिंशः इत्युत्तरतः। [1]तया=सीद इति ॥३०॥ [ ३५ ]

सृष्टीरायातयत्यभितः स्वयमातृण्णां चतस्रश्चतस्रो दिक्ष्वेकां मध्ये ॥१॥ तासामेकैका स्त्रयमातृण्णामास्पृष्टा ॥२॥ [1]यथासृष्टमु हैना एक[1] उपदधति[2] ॥३॥ एकयाऽस्तुवत इति पुरस्तात् स्वयमातृण्णामास्पृष्टामुपदधाति[3]। [4]प्रजा अधीय=आसीत्तया=सीद इति ॥४॥ सप्तभिरस्तुवत इति पुरस्तादन्त्याम्। [4]सप्तर्षयो=रासीत्तया=सीद इति ॥५॥ तिसृभिरस्तुवत इति तस्यान्तराम्। [4]ब्रह्मा=सीद इति ॥६॥ पञ्चभिरस्तुवत इति तस्यान्तराम्। [4]भूतान्य=सीद इति ॥७॥ नवभिरस्तुवत इति दक्षिणतः स्वयमातृण्णामास्पृष्टामुपदधाति। [4]पितरो=सीद इति ॥८॥ पञ्चदशभिरस्तुवत इति दक्षिणोऽन्त्याम्। [4]क्षत्रमसृ=सीद इति ॥९॥ एकादशभिरस्तुवत इति तस्यान्तराम्। [4]ऋतवो=सीद इति ॥१०॥ त्रयोदशभिरस्तुवत इति तस्यान्तराम्। [4]मासा असृ=सीद इति ॥११॥ सप्तदशभिरस्तुवत इति पश्चात् स्वयमातृण्णामास्पृष्टामुपदधाति। [4]पशवो=सीद इति ॥१२॥ त्रयोविंशत्याऽस्तुवत इति पश्चादन्त्याम्। [4]क्षुदा:=सीद इति ॥१३॥ नवदशभिरस्तुवत इति तस्यान्तराम्। शूद्रार्या=सीद इति ॥१४॥ एकविंशत्याऽस्तुवत इति तस्यान्तराम्। [4]एकशफाः पशवो=सीद इति ॥१५॥ पञ्चविंशत्याऽस्तुवत इत्युत्तरतः स्वमातृण्णामास्पृष्टामुपदधाति। [4]आरण्या पशवोऽसृज्यन्त=सीद इति ॥१६॥ एकत्रिंशताऽस्तुवत इत्युत्तरतोऽन्त्याम्। [4]प्रजा असृज्यन्त यावानां चायावानां=सीद इति ॥१७॥ सप्तविंशत्याऽस्तुवत इति [4]तस्यान्तराम्। [4]द्यावापृथिवी[4]=सीद इति ॥१८॥ नवविंशत्याऽस्तुवत इति तस्यान्तराम्। [4]वनस्पतयो=सीद इति ॥१९॥ त्रयत्रिंशताऽस्तुवत इति मध्ये। [5]भूतान्यशाम्यन्[5] प्रजापतिः परमेष्ठ्यधिपतिरासीत्तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद इति ॥२०॥ [ ३६ ]

व्युष्टीरायातयति पूर्वेण स्वयमातृण्णां हंसपातिनीः ॥१॥ उदीचीषु वाचयति ॥२॥ प्रतीचोर्हैना एक उपदधति[6] प्रतीची वै व्युच्छति

---

१–१. H oms. २. MHP °दधाति. ३. MHP °पृष्टा उप°. ४–४. MP तस्यान्द्यावा, H तस्यान्तरा°. ५. M °न्याशाम्य प्र°, P °शाम्य प्र°. ६. H दधाति.

इति वदन्तः ॥३॥ सर्वतो हैना एक उपदधति सर्वतो वै व्युच्छति इति वदन्तः ॥४॥ प्रतीचीष्वेत्र वाचयति ॥५॥ उदीचीः सꣳस्थापयति इयमेव सा या=महिमानः सचन्ते तया देवतया; ऋतूनां पत्नी प्रथमेय=सर्वमन्यत् तया=सीद इति ॥६॥ द्वादशेन्द्रौजसान्यायातयत्यभितः स्त्रयमातृण्णां तिस्रस्तिस्रो[1] दिक्षु ॥७॥ तासामेकैका स्वयमातृण्णामास्पृष्टा ॥८॥ समीचीषु वाचयति ॥९॥ सवयसे त्वा इति पुरस्तादुपदधाति । [2]तया=या; अधिवयसे त्वा त=या; ऊर्ध्ववयसे त्वा तया=सीद इति ॥१०॥ बृहद्वयसे त्वा इति दक्षिणतः । °तया=या; सासहे त्वा त=या; सहीयसी त्वा तया=सीद इति ॥११॥ सहमानाय त्वा इति पश्चात् । °तया=या; सासहे त्वा त=या; अभीषाचे त्वा तया=सीद इति ॥१२॥ अभिभुवे त्वा इत्युत्तरतः । °त=या; अभिमातिषाचे [2]त्वा त[3]=या; अभिमातिजि(-त् त्वा तया)=सीद इति ॥१३॥ द्वादशयोनीरुपदधाति ॥१४॥ अग्ने[4]=(अग्निः इत्युत्करे) शाखां न्यस्य वृत्राणि जङ्घनद् इति चितिमुपधाय संदधाति । °द्रविणस्यु=आहुतस्तया= सीद इति ॥१५॥ चित्तिमचित्तिम् इत्येवाभिमृशति । °तया=सीद इति ॥१६॥ त्वां चित्रश्रवस्तम इत्यनुष्टुभाऽभिमृशति । °हवन्ते=वोढवे (तया=सीद इति) ॥१७॥ षड्ढोतु(-राहुतिꣳ हुत्वा) प्राणदा अपानदा[5]=सुवर्ग्यम् इति ॥१८॥ प्रवर्ग्योपसद्भ्यां प्रचर्य वमन्ति चतुर्थ्यै चित्यै ॥१९॥ [३७]
[इति द्वादशोऽनुवाकः ]

## [ चतुर्थी चितिः ]

प्रातरादित्येन वाचं विसृज्य प्रवर्ग्योपसद्भ्यां[6]=अधिरोहति ॥१॥ अथ अग्ने (किꣳ-)शिल इति[6] पुरीषस्याहुतिं जुहोति । [7]या त इषुः[7]=अधि-रोहति ॥२॥ अथैतां[8] चितिꣳ (सꣳसादयति होता च विभक्तिश्च द्वे चर्तव्ये अव-)काष्टौ[9] संयान्यो[10] द्वे सयुजौ नव शीर्षण्या पञ्चासपत्नाश्च-त्वारिꣳशद्विराज[11] एकत्रिꣳशत् स्तोमभागाः[12] पञ्च नाकसदः पञ्च पञ्चचोडा

१. P तिस्रः once. २-२. MHP त्वान्त. ३. MHP abr; see VIII.30.10-12. ४. MHP abr; see VIII. 30.16-17. ५. MHP abr; see VIII. 28.1-8. ६. MHP शिवेति. ७. MHP abr; see VIII.28.9-13. ८. MHP अथैकां. ९. M कोष्टौ, HP कोष्ठौ. १०. MHP wrorgly give sign of broken text between संयान्यो [Mss संयानी] and द्वे [Mss वर्चा]. ११. MH °रिंश वि°. १२. MHP °त्रिशस्तो°.

अष्टाविꣳशतिश्छन्दाꣳसि पञ्च [1]वृष्टिसनयोऽष्टावादित्येष्टकाः पञ्च (घृतेष्टकाः पञ्च यशोदाः पञ्च भूयस्कृतः पञ्चाग्ने रूपाणि पञ्च द्रविणोदाः) सप्तायु(-ष्याः सप्त ऋतुनामा-)नि पञ्चाज्यान्यश्चतस्रो राष्ट्रभृतो द्वादश भूतेष्टकास्तिस्रो वेदरूपमन्त्या द्वादश योन्यो[2]=सन्धिश्चाभीमर्शश्च ॥३॥ एतदस्य कार्यं भवति ॥४॥ सप्त होतारमुपधाय अग्निः इति विभक्तिमाह ॥५॥ तपश्च तपस्यश्च इति (पूर्वेण स्वयमातृण्णामास्पृष्टे ऋतव्ये उपदधाति)। °शैशिरावृतू अ(=ध्रुवे सीद-)तम् इति ॥६॥ यास्ते अग्न[3]=सीद इति ॥७॥ पूर्वेण ता अष्टौ संयानीरुपदधाति ॥८॥ द्वे सयुजौ छन्दोभिस्त्वा सयु=देवतया; रय्यै पोषाय सजातानां मध्यमस्थेयाय मया त्वा सयुजा युजा युनज्मि तया=सीद इति ॥९॥ शीर्ष्णः (काले नव शीर्षण्या उपदधा-)ति[4] ॥१०॥

[ ३८ ]

(पञ्चासपत्ना आयातयति)[5] अभितः स्वयमातृण्णामेकैकां दिक्षु पुरीषवतीं मध्ये ॥१॥ अन्तिकमिवैता अनास्पृष्टा भवन्ति ॥२॥ अग्ने जातान् इति पुरस्तादुपदधाति। °प्र णुदा नः=उद्भित्तया[6]=सीद इति ॥३॥ सहसा जातान् इति पश्चात्। °प्र णुदा नः=सपत्नान् तया=सीद इति ॥४॥ चतुश्चत्वारिꣳशः[7] स्तोमः इति दक्षिणतः। °[8]वर्चो द्रविणं तया[8]=सीद इति ॥५॥ षोडशः स्तोमः इत्युत्तरतः। °ओजो द्रविणं तया=सीद इति ॥६॥ पृथिव्याः पुरीषमस्यप्सो नाम इति पुरीषवतीं मध्य उपदधाति। °तया=सीद इति ॥७॥ चत्वारिꣳशद्विराज आयातयत्यभितः स्वयमातृण्णां दशदश दिक्षु ॥८॥ तासामेकैका स्वयमातृण्णामास्पृष्टाक्ष्णयोपधीयन्ते ॥९॥ समीचीषु वाचयति ॥१०॥ एवश्छन्दः इति पुरस्तादुपदधाति। °तया=या; वरिवश्छन्दस्तया=या; शम्भूश्छन्दस्त=या; परिभूश्छन्दस्त=या; आच्छच्छन्दस्त=या; मनश्छन्दस्त=या; व्यचश्छन्दस्त=या; सिन्धुश्छन्दस्त=या; समुद्रं छन्दस्त=या; सलिलं छन्दस्तया=सीद इति ॥११॥ ककुच्छन्दः इति पश्चात्। °तया=या; त्रिककुच्छन्दस्तया=या; काव्यं छन्दस्तया=या; अङ्कुपं छन्दस्त=या; पदपङ्क्तिश्छन्दस्त=या; अक्षरपङ्क्तिश्छन्दस्त=या; विष्टारपङ्क्तिश्छन्दस्त=या; क्षुरो भृज्वान्

---

१. MHP सृष्टि°. २. MHP abr; see VIII.28.14. ३. MHP abr; see VIII.28.18. ४. See. VIII.28.21. ५. MHP om. ६. MH उजित्नया, P अजिलया. ७. MHP °रिंशत्. ८–८. MHP पक्षे श्रवणयो [ P °ण्यो ].

छन्दस्त=या; प्रच्छच्छन्दस्त=या; पक्षश्छन्दस्तया=सीद इति ॥१२॥ संयच्छन्दः इति दक्षिणतः । °तया=या; वियच्छन्दस्त=या; बृहच्छन्दस्त=या; रथन्तरं छन्दस्त=या; निकायश्छन्दस्त=या; विवधश्छन्दस्त=या; गिरश्छन्दस्त=या; भ्रजश्छन्दस्त=या; सष्टुप् छन्दस्त=या; अनुष्टुप् छन्दस्तया=सीद इति ॥१३॥ एवश्छन्दः इत्युत्तरतः । °तया=या; वरिवश्छन्दस्त=या; वयश्छन्दस्त=या; वयस्कृच्छन्दस्त[1]=या; विशालं छन्दस्त=या; विष्पर्धाश्छन्दस्त=या; छदिश्छन्दस्त=या; दूरोहणं छन्दस्त=या; तन्द्रं छन्दस्त=या; अङ्काङ्कं छन्दस्तया=सीद इति ॥१४॥ एकत्रिंशत्स्तोमभागा आयातयत्यभितः स्वयमातृण्णां सप्तसप्त दिक्षु तिस्रो मध्ये ॥१५॥ तासामेकैका स्वयमातृण्णामास्पृष्टा ॥१६॥ समीचीषु वाचयति ॥१७॥ रश्मिरसि इति पुरस्तादुपदधाति । °क्षमाय त्वा क्षत्रं जिन्व तया=या; [2]प्रेतिरसि धर्माय त्वा धर्मं जिन्व तया=या; अन्वितिरसि दिवे त्वा दिवं जिन्व त=या; सन्धिरस्य=रिक्षं जिन्व त=या[2]; प्रतिधिरसि पृथिव्यै=(जिन्व त)=या; विष्टम्भोऽसि विष्टयै[3] त्वा=(जिन्व त)[3]=या; प्रवाऽस्यह्ने[4] त्वाऽहर्जिन्व तया=सीद इति ॥१८॥ अनुवाऽसि इति दक्षिणतः । °रात्रियै त्वा=या; उशिगसि=या; प्रकेतोऽसि=या; सुदीतिरस्या=या; ओजोऽसि[5] पितृ=या[6]; तन्तुरसि प्रजाभ्य=या; पृतनाषाडसि=या देवतया=सीद इति ॥१९॥ रेवदसि इति पश्चात् । °ओषधी=या; अभिजिदसि=या; अधिपतिरसि=या; यन्ताऽस्यपानाय त्वा=या; संसर्पोऽसि=या; वयोधा असि=या; त्रिवृदसि तया=सीद इति ॥२०॥ प्रवृदसि इत्युत्तरतः । °तया देवतया; संवृदसि त=या; विवृदसि त=या; संरोहोऽसि त=या; नीरोहोऽसि त=या; प्ररोहोऽसि त=या; अनुरोहोऽसि तया=सीद इति ॥२१॥ वसुकोऽसि इति मध्ये । °तया=या; वेषश्रिरसि त=या; वस्यष्टिरसि तया=सीद इति ॥२२॥ पञ्च नाक(-सद)[7] आयातयत्यभितः स्वयमातृण्णामेकैकां दिक्षु पुरीषवतीः सन्धिष्वेकां मध्ये ॥२३॥ राज्ञ्यसि प्राची दिक् इति पुरस्तादुपदधाति । °वसवस्ते=रथन्तरं साम प्रतिष्ठित्या अन्तरिक्षाय=सादयन्तु[8] तया=सीद इति ॥२४॥ विराडसि दक्षिणा दिक् इति दक्षिणतः । °रुद्रास्ते=बृहत्साम प्रतिष्ठित्या (अन्तरिक्षाय°

---

१. MP वयस्कृश्छ°. २–२. MHP twice. ३. MHP om. ४. MHP °स्यन्ने. H gives the sign of abridged text after °ह्ने. ५. MHP ओजसि Mss give the sign of broken text after ओजोऽसि. ६. HP om. ७. MHP om. ८. MHP स्वदयन्तु.

इति समानम्) ॥२५॥ सम्राडसि प्रतीची दिक् इति पश्चात् । °आदित्यास्ते= वैरूपꣳ साम प्रतिष्ठित्या अन्तरिक्षाय° इति समानम् ॥२६॥ स्वराडस्युदीची दिक् इत्युत्तरतः । °विश्वे ते देवा अधिपतयो वरुणो=अन्तरिक्षाय° इति समानम् ॥२७॥ अधिपत्न्यसि बृहती दिक् इति मध्ये । °मरुतस्ते=सादयन्तु तया (=सीद इ-)ति ॥२८॥ (पञ्च पञ्चचोडा आयात-) यत्युपर्येताः ॥२९॥ पत्न्य[1] एनाः सर्वꣳ सुरभिणाऽलंकुर्वन्ति ॥३०॥ ताः परिश्रित्याहरन्ति ॥३१ अयं पुरो हरिकेशः सूर्यरश्मिः इति पुरस्तादुपदधाति °तस्य रथगृत्सश्च=प्रहेतिस्तेभ्यो नमस्ते नो मृडयन्तु=जम्भे दधामि तया=सीद इति ॥३२॥ अयं दक्षिणा वि(-श्वकर्मा इति दक्षिणतः । °तस्य) रथस्वनश्च= प्रहेतिस्तेभ्यो नमः° इति समानम् ॥३३॥ अयमुत्तराद्[2] संयद्वसुः इत्युत्तरतः । °तस्य[3] सेनजिच्च=तेभ्यो नमः° इति [4]समानम् ॥३४॥ अयमुपर्यर्वाग्वसुः[4] इति मध्ये । °तस्य तार्क्ष्यश्चारिष्टनेमिश्च=(प्रहेतिस्तेभ्यो नमः)[5] इति समानम् ॥३५॥ अयं पश्चाद्विश्वव्यचाः[6] इति पश्चात् प्राचीमुत्तमामुपदधाति । °तस्य रथप्रोत-श्च[7]=प्रहेतिस्तेभ्यो नमस्ते नो मृडयन्तु=जम्भे दधामि तया=सीद इति ॥३६॥

[ ३९ ]

अष्टाविꣳशति छन्दाꣳस्यायातयत्यपरेण शीर्षण्यानां तिस्रस्तिस्रः प्रतीचीरेकामतिच्छन्दसम्[8] ॥१॥ द्विपदाभिः स्वयमातृण्णाꣳ स्पृशन्ति ॥२॥ प्रतीचीष्वेव वाचयति ॥३॥ उदीचीः सꣳस्थापयति ॥४॥ अग्निर्मूर्धा इति गायत्रिया ॥५॥ भुवः इति त्रिष्टुभा ॥६॥ जनस्य गोपा अजनिष्ट जागृविः इति [9]जगत्या ॥७॥ त्वां[9] चित्रश्रवस्तम इत्यनुष्टुभा[10] ॥८॥ एना वो अग्निं नमसा इति [11]बृहत्या ॥९॥ अग्ने[11] वाजस्य गोमतः इत्युष्णिहा[12] ॥१०॥ आ ते अग्न इधीमहि इति [13]पङ्क्त्या ॥११॥ अग्ने[13] तमद्य इत्युत्सृज-त्येताम् ॥१२॥ अधा ह्यग्ने [14]इत्यक्षरपङ्क्त्या ॥१३॥ अग्नि[14]ꣳ होतारं मन्ये दास्वन्तम् इत्यतिच्छन्दसा[15] ॥१४॥ अग्ने त्वं नो अन्तमः इति द्विपदा ॥१५॥

१. MHP पत्नय. २. MHP °त्तरा सं°. ३. MSS give the sign of broken text between तस्य and सेनजिच्च [MHP सनिजच्च]. ४–४. P °नमुपर्य°. ५. MHP om. ६. M °विश्वंव्य°. ७. M रथः प्रो°, P °पोत°. ८. MHP °तिच्छन्. ९–९. MHP जगत्यस्त्वां. १०. MHP °ष्टुभ. ११–११. MHP बृहत्योग्ने. १२. MHP °ष्णिह. १३–१३. M पङ्त्योग्ने, HP ज्योग्ने. १४–१४. MHP °पज्योर्ग्नि. १५. MHP °छन्दा.

पञ्च वृष्टिसनीरायातयत्यभितः स्वयमातृण्णामेकैकां दिक्ष्वेकां मध्ये ॥१६॥ अन्तिकमिवैता अनास्पृष्टा भवन्ति ॥१७॥ 'पुरोवातसनिरसि इति[1] पुरस्तादुपदधाति । °तया=सीद इति ।१८॥ 'अभ्रसनिरसि इति[2] दक्षिणतः । °तया=सीद इति ॥१९॥ विद्युन्सनिरसि[3] इति पश्चात् । °तया=सीद इति ॥२०॥ स्तनयित्नुसनिरसि इत्युत्तरतः । °तया=सीद इति ॥२१॥ वृष्टिसनिरसि इत्युत्तरतः । °तया=सीद इति ॥२२॥ अष्टावादित्येष्टका आयातयत्यभितः स्वयमातृणां द्वे द्वे दिक्षु ॥२३॥ अन्तिकमिव[4]=भवन्ति ॥२४॥ सलिलाय त्वा इति पुरस्तादुपदधाति । °त=या; सर्णीकाय त्वा तया=सीद इति ॥२५॥ सतीकाय त्वा इति दक्षिणतः । °त=या; केताय त्वा तया=सीद इति ॥२६॥ प्रचेतसे त्वा इति पश्चात् । °तया=या; विवस्वते त्वा तया=सीद इति ॥२७॥[5] दिवस्त्वा इत्युत्तरतः[5] °त=या; ज्योतिष आदित्येभ्यस्त्वा तया=सीद इति ॥२८॥ पञ्च घृतेष्टका आयातयत्यभितः स्वयमातृण्णामेकैकां दिक्ष्वेकां मध्ये ॥२९॥ आस्पृष्टा एता भवन्ति ॥३०॥ ऋचे त्वा इति पुरस्तादुपदधाति । °तया=सीद इति ॥३१॥ रुचे त्वा इति दक्षिणतः । °तया=सीद इति ॥३२॥ द्युते त्वा इति पश्चात् । °तया=सीद इति ॥३३॥ भासे त्वा इत्युत्तरतः । °तया=सीद इति ॥३४॥ ज्योतिषे त्वा इति मध्ये । °तया=सीद इति ॥३५॥ पञ्च यशोदा आयातयत्यभितः स्वयमातृण्णामेकैकां मध्ये ॥३६॥ अन्तिकमिवैता अनास्पृष्टा भवन्ति ॥३७॥ यशोदां त्वा इति पुरस्तादुपदधाति । 'यशसि सादयामि तेनर्षिणा तेन[6] ब्रह्मणा तया=सीद इति ॥३८॥ 'तेजोदां त्वा इति[7] दक्षिणतः । °तेजसि सादयामि तेनर्षिणा तेन ब्रह्मणा तया=सीद इति ॥३९॥ पयोदां[8] त्वा इति पश्चात् । °पयसि सादयामि तेनर्षिणा=सीद इति ॥४०॥ वर्चोदां त्वा इत्युत्तरतः । °वर्चसि सादयामि तेनर्षिणा=सीद इति ॥४१॥ द्रविणोदां त्वा इति मध्ये । °द्रविणे सादयामि तेनर्षिणा तेन ब्रह्मणा तया=सीद इति ॥४२॥ पञ्च भूयस्कृत[9] आयातयत्यभितः स्वयमातृण्णामेकै(-कां दिक्ष्वेकां मध्ये ॥४३॥ अन्तिकमिवैता अनास्पृष्टा भ-)वन्ति[10] ॥४४॥ भूयस्कृदसि इति[10]

---

१–१. MHP °सनिरिति. २–२. MHP °त्यभ्रिरसीति. ३. MHP द्युत्सनि°. ४. MHP abr; see above S.17. ५–५. MHP विवस्वतेत्यु°. ६–६. MHP ब्राह्मणस्त°. ७–७. MHP तेजोमान्त्वेति. ८. MHP पयोदा. ९. MHP भूतस्तुत. १०–१०. MHP °त्यप्सुषदसीति.

पुरस्तादुपदधाति । °तया = सीद इति ॥४५॥ वरिवस्कृदसि इति दक्षिणतः । °तया = सीद इति ॥४६॥ प्राच्यसि इति पश्चात् । °तया = सीद इति ॥४७॥ ऊर्ध्वाऽसि इत्युत्तरतः । °तया = सीद इति ॥४८॥ अन्तरिक्षसदस्यन्तरिक्षे[1] सीद इति मध्ये । °तया = सीद इति ॥४९॥ पञ्चाग्ने रूपमा(-यातयत्यभितः स्वयमातृण्णामेकैकां दिक्ष्वेकां मध्ये ॥५०॥ अन्तिकमिवैता अनास्पृष्टा भ-)वन्ति ॥५१॥ अप्सुषदसि इति पुरस्तादुपदधाति । °तया = सीद इति ॥५२॥ श्येनसदसि इति दक्षिणतः । °तया = सीद इति ॥५३॥ गृध्रसदसि इति पश्चात् । °तया=सीद इति ॥५४॥ सुपर्णसदसि[2] इत्युत्तरतः । °तया = सीद इति ॥५५॥ नाकसदसि इति मध्ये । °तया = सीद इति ॥५६॥ [3]पञ्च द्रविणोदा[3] आयातयत्यभितः स्वयमातृण्णामेकैकां (दिक्ष्वेकां मध्ये ॥५७॥ अन्तिकमिवैता अनास्पृष्टा भवन्ति ॥५८॥ पृथिव्यास्त्वा) द्रविणे सादयामि (इति पुरस्तादु-)पदधाति । °तया = सीद इति ॥५९॥ अन्तरिक्षस्य त्वा द्रविणे सादयामि इति दक्षिणतः । °तया=सीद इति ॥६०॥ दिवस्त्वा द्रविणे सादयामि इति पश्चात् । °तया=सीद इति ॥६१॥ दिशां त्वा द्रविणे सादयामि इत्युत्तरतः । °तया = सीद इति ॥६२॥ द्रविणोदां त्वा द्रविणे सादयामि (इति मध्ये । °तया = सीद इति ॥६३॥ सप्तायुष्या आयात-)यति पू(-र्वेण स्वयमा-)तृण्णाँ हँसपातिनीः ॥६४॥ उदीचीषु वाचयति प्राणं मे पाहि तया=या; अपानं मे पाहि तया=या; व्यानं मे पाहि तया = या; आयुर्मे पाहि तया = या; विश्वायुर्मे पाहि तया = या; सर्वायुर्मे पाहि त = या; अग्ने यत्ते (=ध्यग्ने तया=सीद इति ॥६५॥ सप्त ऋतुनामान्या-)यातयत्यभितः स्वयमातृण्णामेकैकां दिक्षु तिस्रो मध्ये ॥६६॥ अन्तिकमिवैता अनास्पृष्टा भवन्ति ॥६७॥ यावाः इति पुरस्तादुपदधाति । °तया = सीद इति ॥६८॥ अयावाः इति दक्षिणतः । °तया=सीद इति ॥६९॥ एवाः इति पश्चात् । °तया=सीद इति ॥७०॥ ऊमाः इत्युत्तरतः । °तया = सीद इ(-ति)[4] ॥७१॥ सन्दः[5] इति मध्ये । °त(=या; सगरस्त = या; सुमेकस्तया=सीद इति ॥७२॥ पञ्चा-)ज्यानीरायातयत्यभितः स्वयमातृण्णामेकैकां दिक्ष्वेकां मध्ये ॥७३॥ आस्पृष्टा एता भवन्ति ॥७४॥ राष्ट्रभृन्पूर्वा राजन्यस्योपदध्यात् ॥७५॥ शतायुधाय इति पुरस्तादुपदधाति । °शतवीर्याय शतो = विश्वा तया = सीद इति । ७६॥

---

१ MH repeat अन्तरिक्षसदसि. २. MHP सुवर्ण°. ३–३. MHP पञ्चद्रपञ्च द्रवि°. ४. MHP om. ५. MHP शब्द.

ये चत्वारः इति दक्षिणतः । °पथ(-यो = सर्वं तया=सीद इति ॥७७॥ ग्रीष्मो हेमन्तः) इति पश्चात् । °उत नो = अभये स्याम तया = सीद इति ॥७८॥ इदुवत्सराय इत्युत्तरतः[१] । °परिवत्सराय = अहताः स्याम तया=सीद इति ॥७९॥ भद्रान्नः श्रेयः समनैष्ट देवाः इति मध्ये । °त्वयाऽवसेन = स्योनस्तया= सीद इति ॥८०॥ चतस्रो राष्ट्रभृत आयातयत्यभितः स्वयमातृण्णामेकैकां दिक्षु ॥८१॥ अन्तिकमिवैता अनास्पृष्टा भवन्ति ॥८२॥ अग्ने यशस्विन् इति पुरस्तादुपदधाति । °यशसेममर्पयेन्द्रावती--उत्तमश्लोको अस्तु तया = सीद इति ॥८३॥ भद्रं पश्यन्तः इति दक्षिणतः । °उपसेदुरग्रे = सं नमन्तु तया = सीद इति ॥८४॥ धाता विधाता इति पश्चात् । °परमोत = [२]सं नमाम[२] तया= सीद इति ॥८५॥ अभ्यावर्तध्वम् इत्युत्तरतः । °उप मेत साक = सर्वं तया = सीद इति ॥८६॥ द्वादश भूतेष्टका आयातयत्यभितः [३]स्वयमातृण्णां तिस्रस्तिस्रो दिक्षु ॥८७॥ तामामेकैका[३] स्वयमातृण्णामास्पृष्टा ॥८८॥ आज्यमाज्यस्थाल्यामुपनिधत्ते स्रुवं च ॥८९॥ पृथिव्यै त्वा इति पुरस्तात् स्वयमातृण्णामास्पृष्टामुपदधाति । °तया देवतया; पृथिव्यै स्वाहा इति स्रुवेण स्वयमातृण्णायां जुहोति ॥९०॥ अन्तरिक्षाय त्वा त=या; अन्तरिक्षाय स्वाहा इति स्रुवेण स्वयमातृण्णायां[४] जुहोति ॥९१॥ दिवे त्वा तया = या, दिवे स्वाहा इति स्रुवेण स्वयमातृण्णायां जुहोति ॥९२॥ सूर्याय त्वा इति दक्षिणतः स्वयमातृण्णामास्पृष्टामुपदधाति । °त=या, सूर्याय स्वाहा इति स्रु[५]=जुहोति ॥९३॥ चन्द्रमसे त्वा त=या, चन्द्रमसे स्वाहा इति स्रु= जुहोति ॥९४॥ नक्षत्रेभ्यस्त्वा त=या, नक्षत्रेभ्यः स्वाहा इति स्रु=जुहोति ॥९५॥ अद्भ्यस्त्वा इति पश्चात् स्वयमातृण्णामास्पृष्टामुपदधाति । °त=या, अद्भ्यः स्वाहा इति स्रु[५]=होति ॥९६॥ (ओषधीभ्यस्त्वा त=या)[६], ओषधीभ्यः स्वाहा इति स्रु=होति ॥९७॥ वनस्पतिभ्यस्त्वा त=या; वनस्पतिभ्यः स्वाहा इति स्रु=होति ॥९८॥ चराचरेभ्यः स्वाहा इत्युत्तरतः स्वयमातृण्णा-मास्पृष्टामुपदधाति । °तया=या, चराचरेभ्यस्त्वा इति स्रु=होति ॥९९॥ [७]परिप्लवेभ्यस्त्वा त = या;[७] परिप्लवेभ्यः स्वाहा इति स्रु=होति ॥१००॥ सरीसृपेभ्यस्त्वा त=या, सरीसृपेभ्यः स्वाहा इति स्रुवेण स्वयमातृण्णायां जुहोति

---

१. P oms. २–२. M °न्नमस्त्युत, H P सन्नमस्तु. ३–३. P oms. ४. MHP °तृण्णां. ५. MHP abr; see above S.90. ६. MHP om. ७–७. H oms.

॥१०१॥ अत्रेत्याह यो ब्राह्मणो ब्राह्मणवतीमिष्टकां वेद स उपदधातु इति ॥१०२॥ 'ता एता' उपधीयन्ते सुरूपोर्ध्वंयज्ञीत्रीः संपास्वरितः पञ्चजनीनाः[२] सर्वतोमुखीः[३] ॥१०३॥ यथावेदं ब्राह्मण इष्टका उपदधाति ॥१०४॥ अथै-तास्तिस्रो वेदरूपमन्त्या आयातयत्युत्तरतः स्वयमातृण्णायै हꣳसपातिनीः ॥१०५॥ उदीचीषु वाचयति वषट्कारेण त्वर्चोपदधामि त=या; प्रतिगरेण त्वा यजुषोपदधामि त=या; हिंकारेण त्वा साम्नोपदधामि तया=सीद इति ॥१०६॥ द्वादश योनीरुपदधाति ॥१०७॥ अग्ने[४]=(अग्नेः इत्युत्करे)[५] शाखां न्यस्य स्तोमं मनामहे[६] इति चितिमुपधाय सन्दधाति । °सिध्रमद्य दिविस्पृशः देवस्य द्रविणस्यवस्तया[७]=सीद इति ॥१०८॥ चित्तिमचित्तिम् इत्येवाभिमृशति । °तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद इति ॥१०९॥ [ ४० ]

अत्रैवास्मै 'पुरीषवतीमु(-पदधाति) ॥१॥ तत् पृष्टो दिवि इत्यपराह्णे व्यूह्योपदधाति । °तया देव=सीद इति ॥२॥ चित्तिमचित्तिम् इत्येवाभि-मृशति । °तया=सीद इति ॥३॥ एतां[९] चितिꣳ सꣳसादयति विभक्तिश्च संयतश्च ज्योतिष्मत्यश्च नक्षत्रेष्टकाश्च (-द्वादश योन्यश्चा-)[१०]वपनं च (स्वयमातृण्णाश्च)[११] मण्डलेष्टका च हिरण्येष्टका च [१२]सन्धि(-श्चा-)भीमर्शश्च पङ्क्ति(-श्च) विकर्ण्य(-श्च) होतुश्चाहुतिरवरोहणं चोपस्थानं च ॥४॥ एतदस्य कार्यं भवति ॥५॥ अग्नौ इति विभक्तिमाह ॥६॥ अथैताः संयत आयातयत्यभित स्वयमातृण्णां द्वे द्वे दिक्षु द्वे मध्ये ॥७॥ अन्तिकमिवैता अनास्पृष्टा भवन्ति ॥८॥ संयच्च प्रचेताश्च[१३] इति पुरस्तादुपदधाति । अग्ने सोमस्य सूर्यस्य तेतेऽधिपतयस्तेभ्यो नमस्ते नो मृडयन्तु ते=ध्रुवे सीदतम् इति ॥९॥ उग्रा च भीमा च इति दक्षिणतः । °पितॄणां यमस्येन्द्रस्य तेतेऽधिपतयस्तेभ्यो नमः° इति समानम् ॥१०॥ ध्रुवा च पृथिवी च इति पश्चात् । °देवस्य सवितुर्मरुतां वरुणस्य, तेतेऽधि=पतयस्तेभ्यो नमः° इति समानम् ॥११॥ धर्त्री च धरित्री[१४] च इत्युत्तरतः । °मित्रावरुणयोर्मित्रस्य धातुः, तेतेऽधिपतयस्तेभ्यो नमः° इति समानम् ॥१२॥ प्राची च प्रतीची च इति मध्ये । °वसूनाꣳ रुद्राणामादित्यानां, तेतेऽधिपतय=जम्भे दधामि तया=सीदतम् इति ॥१३॥ ज्योतिष्मतीरायातयति पूर्वेण

१–१. MH तदेता. २. MH °जनिनाः. ३. HP °मुखः. ४. MHP abr; see VIII.30 10–12. ५. MHP om. ६. M P महामह. ७. MP °णस्यास्तया, H °विणः स्यात्तया. ८. MH °षमतिप्र°, P °षमसि प्र°. ९. MHP एकां. १०. MHP om. ११. MHP om. १२. MHP ससि for सन्धि. १३. MHP प्रयताश्च. १४. MH धमित्री.

स्वयमातृण्णाꣳ हꣳसपातिनीः ॥१४॥ उदीचीषु वाचयति ज्योतिष्मतीं त्वा सादयामि त=या; ज्योतिष्कृतं त्वा सादयामि त=या; ज्योतिर्विदं त्वा सादयामि त=या; भास्वतीं त्वा सादयामि त=या; ज्वलन्तीं त्वा सा=या; मल्मलाभवन्तीं त्वा सा=या; दीप्यमानां त्वा सा=या; रोचमानां त्वा सा[१]=या; अजस्रां त्वा साद=या; बृहज्ज्योतिषं त्वा सा=या; बोधयन्ती त्वा सा=या; जाग्रतीं त्वा सादयामि तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद इति ॥१५॥ नक्षत्रेष्टका आयातयत्यभितः स्वयमातृण्णाम् ॥१६॥ दक्षिणतः शीर्षण्यानां पौर्णमासीमायातयति ॥१७॥ तामपरेण सप्त कृत्तिकाः परिमण्डला राशिमिव कृत्वाऽसꣳस्पृष्टा एकां मध्ये ॥१८॥ तामपरेण रोहिणीमायातयति ॥१९॥ प्रतीचीरेता आयातयति मृगशीर्षमार्द्रां पुनर्वसू [२]तिष्यमाश्लेषां मघां-फल्गुनीफल्गुनी हस्तं चित्राꣳ स्वातीं विशाखे ॥२०॥ दक्षिणेन स्वमातृण्णामायातयति ॥२१॥ अपरेण स्वयमातृण्णामष्टकामायातयति ॥२२॥ उत्तरतोऽस्या अनूराधनायातयति ॥२३॥ प्राचीरेता आयातयति द्वे आग्नी(-विचृ-)तौ अषाढामषाढाꣳ[३] श्रोणांꣳ श्रविष्ठाꣳ शतभिषजं प्रोष्ठपदान् प्रोष्ठपदान्रेवतीमश्वयुजौ भरण्यः ॥२४॥ उत्तरतः शीर्षण्यानाम-मावास्यानामायातयति ॥२५॥ पूर्णा पश्चाद् इति पौर्णमासीमुपदधाति । °उत पूर्णा=मादयन्तां तया=सीद इति ॥२६॥ अम्बा नामाऽसि इति प्रसले सप्त कृत्तिकानां प्रथमामुपदधाति । °प्रजापतिना त्वा विश्वाभिर्धीभिरुपदधामि त=या; दुला नामासि प्रजापतिना त्वा=(या)[४], नितत्निर्नामासि प्रजा=(या)[४]; अभ्रयन्ती नामासि प्रजा=(या)[४]; मेघयन्ती नामासि प्रजा=(या)[४] वर्षयन्ती नामासि प्रजापतिना त्वा विश्वाभिर्धीभिरुपदधामि तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद इति ॥२७॥ चुपुणीका नामासि इति मध्ये । °प्रजापति=सीद इति ॥२८॥ कृत्तिका नक्षत्रम् इत्येनाः सर्वाः सहोपदधाति ॥२९॥[४१]

°अग्निर्देवताऽग्ने रुचः स्थ प्रजापतेर्धातुः सोमस्य तया=सीद इति ॥१॥ [५]ऋचे त्वा[५] इत्येना अधिवदति । (°रुचे त्वा द्युते त्वा भासे त्वा ज्योतिषे त्वा तया) देवतया[६]=ध्रुवाः सीदत इति ॥२॥ रोहिणी नक्षत्रम् इति रोहिणी-मादधाति । °प्रजापतिर्देवता=तया सीद इति ॥३॥ ऋचे त्वा इत्येनामधि-

---

१. MP om. २. MP °श्लेषमाघा°, H °श्लेषमाघ°. ३. MHP अषाढा once. ४. MHP om. ५-५. MH ऋचेव. ६. MHP देवस्तया.

वदति । °रुचे त्वा द्युते त्वा भासे त्वा ज्योतिषे त्वा तया=सीद इति ॥४॥ एवमेवैता अधिवदत्या विशाख(-नभ्याम् ॥५॥ मृगशीर्षं नक्षत्रम् इति मृगशीर्ष्ण उपदधाति । °सोमो देवता तया=या; आ-)र्द्रा=द्रो देवता तया=या; पुनर्वसू न=ता त=या; तिष्यो नक्षत्रं=ता त=या; आश्रेषा न=ता त=या; मघा न=ता त=या; फल्गुनी नक्षत्रमर्यमा देवता त=या; फल्गुनी न=ता त=या; हस्तो न=ता त=या; चित्रा नक्षत्रमिन्द्रो=ता त=या; स्व(-गती न=ता त=या; विशाखे नक्षत्रमिन्द्राग्नी देवता तया=) ध्रुवे[1] सीदतम् इति[2] ॥६॥ (ऋचे) वाम् इत्येना अधिवदति । °रुचे वां[3] द्युते वां भासे वां ज्योतिषे वां तया=ध्रुवे सीदतम् इति ॥७॥ [4]एकाष्टका इत्यष्टकामुपदधाति ।[4] °तपसा तप्यमाना=शचीभिस्तया=सीद इति ॥८॥ अनूराधा नक्षत्रम् इत्यनूराधानुपदधाति । °मित्रो देवता तया(=या; रोहिणी नक्षत्रमिन्द्रो देवता) तया=या; (विचृतौ नक्षत्रं पितरो देव-)ता त=या; अषाढा नक्षत्रं=ता त=या; अषाढा नक्षत्रं विश्वे देवा दे=ता त=या; श्रोणा न=ता त=या; श्रविष्ठा न=ता त=या; शतभिषङ् नक्षत्रमिन्द्रो=ता त=या; प्रोष्ठपदा न=ता त=या; (प्रोष्ठपदा न=ता त=या)[5] रेवती नक्षत्रं पूषा=(ता त=या; अश्वयुजौ न=ता त=या; अपभरणी नक्ष-)त्रं य(-मो देवता तया) देवतया=सीद इति ॥९॥ यत्ते देवा अदधुः इत्यमावास्यामुपदधाति । °भागधेयममावास्ये=[6]सुवीरं तया[6]=सीद इति ॥१०॥ अत्र सुरूपामुपदध्यात् ॥११॥ अतश्चेदतिप्रच्यवो द्वादशयोनीरुपदधाति ॥१२॥ अग्ने[7]=सुष्ठुमिष्टकोपक्राशङ्कु[8](-रुतेति) ॥१३॥ तेभ्यः[9]=पकाशं[10] कुर्व(-न्ति लोकं-)पृणया च[11]=शाखां न्यस्य ॥१४॥ [४२]

[12]अथैताश्चतस्रः स्वयमातृण्णा दिश्या दिक्षूपदधाति ॥१॥ प्राणाय त्वा इति (पुरस्तात्)[13] । °चक्षुषे त्वा तया=सीद इति ॥२॥ व्यानाय त्वा इति दक्षिणतः । °चक्षुषे त्वा तया=सीद इति ॥३॥ [14]अपानाय त्वा इति पश्चात् । °चक्षुषे त्वा तया=सीद इति[14] ॥४॥ वा(-चे त्वा इत्युत्तरतः ।

१. MHP ध्रुवा. २. MHP add ध्रुवे सीदेति after सीदतमिति. ३. MH वा, P त्वा. ४–४. MP °ष्टकेभ्येकाष्टकामु°, H °ष्टकेभ्येष्टकामु°. ५. MHP om. ६–६. MHP सुवीरस्तया. ७. MHP abr; see VIII–30.10-12. ८. MHP °मिष्टकोपशङ्कु. ९. MHP abr; see VIII. 27.7–9. १०. MHP आकाशान्. ११. MHP abr; see VIII. 27.9–14. १२. MHP अथैका°. १३. MHP om. १४–१४. P oms.

°चक्षुषे त्वा तया=सीद इति ॥५॥ द्यौरपराजिताऽमृ-)तेन विष्टा इत्यपरेण स्वयमातृण्णामास्पृष्टां मण्डलेष्टकामुपदधाति । °आदित्यास्ते गोप्तारः सूर्यो=चास्तु तया=सीद इति ॥६॥ सुवरसि इत्यस्यामुपरि हिरण्येष्टकामुपदधाति । °सुवर्मे यच्छ दिवं यच्छ दिवो मा पाहि तया=सीद इति ॥७॥ यो मर्तो दुवः इति चितिमुपधाय सन्दधाति । (°धियं) जुजोष[1] धी(-तिभिः । मस्मन्नु-)ष[2] प्र पूर्व्यं इषं वुरीतावसे[2] तया=सीद इति ॥८॥ चित्तिमचित्तिम् इत्येवाभिमृशति । °तया=सीद इति ॥९॥ अग्ने तमद्य इति पङ्क्त्याऽभिमृशति । °अश्वं न स्तोमैः=ओहैस्तया=सीद इति ॥१०॥ सुवः सर्वायुः इति स्वयमातृण्णामादत्ते ॥११॥ तां दध्ना[3]=इतीदम्[4] ॥१२॥ आयोस्त्वा सदने सादयामि इत्यध्वर्युश्च यजमानश्च यजुर्वदतः । °अवतश्छायायां[5]=छर्दिषा[6] शन्तमेन इति ॥१३॥ उपरमति प्रोथदश्वो न यवसे[7] अविष्यन् इत्युत्तरतः प्रतिप्रस्थाता विकर्णीमुपधाति । °यदा महः=कृष्णमस्ति इति ॥१४॥ उभौ सह तया देवतया कुरुतः तया=सीद इति ॥१५॥ 'सुवः इत्येनामुपधायान्वपानिति[8] ॥१६॥ वरमध्वर्यवे[9]=कामयते ॥१७॥ दिवमाक्रमिषम् इत्येनामङ्गुष्ठाभ्यामाक्रमते । °सुवरगन्म इति ॥१८॥ चित्तिं जुहोमि इत्यस्यां चतुर्गृहीतं जुहोति । °मनसा[10]=तृण्णासामाह[11] प्रस्तोता ॥१९॥ सप्तहोतुराहुनिं हुत्वा प्राणदा अपानदा; नमस्ते[12]=प्रचर्यं वसन्त्युत्तमायै चित्यै ॥२०॥

[४३] [ इति त्रयोदशोऽनुवाकः ]

## [ उत्तमा चितिः ]

प्रातरादित्येन वाचं विसृज्य प्रवर्ग्योप[13]=रोहति ॥१॥ अथ पृष्टो दिवि[14]=मुपदधाति ॥२॥ न तयादेवतं करोति ॥३॥ चित्तिमचित्तिम् इत्येवाभिमृशति ॥४॥ न[15] तयादेवतं करोति ॥५॥ अवरोहणेनावरो[16]=अधिरोहति ॥६॥ अथ अग्ने वन्य इति पुरीषस्याहुतिं जुहोति । °या त

१. MHP सुजोष. २–२. MHP षः प्रपूर्विषमुदिमासे. ३. MHP abr; see VIII.21.19–25. ४. M वा इदं, H वारदं. ५. MHP यच्छायायां. ६. MH छर्दिशषा. ७. MP वयसे. ८–८. MHP परित्येनामुपधाया च पानिति. ९. MHP abr; see VIII.21.28. १०. MHP abr; see VIII.21.30–32. ११. MHP समाह. १२. MHP abr; see VIII.30.16–18. १३. MHP abr; see VIII.28.1–3. १४. MHP .br; see VIII.28.4. १५. P नव. १६. MHP abr; see VIII.28.8–13.

इषु[1]=अत्ररोहति ॥७॥ सहस्रꣳ हिरण्यशल्कानुदपात्रे प्रकिरति ॥८॥ सहस्रस्य[2] प्रमा असि इत्यपरेणाग्निं तिष्ठन् सहस्रवता[3] प्रोक्षति। °सहस्रस्य प्रतिमा[4]=सहस्राय त्वा इति ॥९॥ इमा मे अग्न इष्टका धेनवः सन्तु इति दक्षिणेनाग्निं परीत्य या मध्यतः शीर्षण्या उद्घन्ति ता अभिमृशति ॥१०॥ एका च शतं च इति प्रति पथं[5] परियन्ति। °सहस्रं चा=परार्धश्च इति ॥११॥ इमा मे अग्न इष्टका धेनवः सन्तु इत्युत्तरेणाग्निं परीत्य ता अभिमृशति। °षष्टिः सहस्र=स्वधाविनीः इति ॥१२॥ ता मे अग्न इष्टका धेनवः सन्तु इत्युत्तरेणैव परीत्य ता एवाभिमृशति। °विराजो नाम=अमुष्मिंल्लोक इह च इति ॥१३॥ धेनूः कृत्वा सꣳहारविहाराभ्यामुपतिष्ठते। °संवत्सरोऽसि परिवत्सरोऽसि इदा=वत्सरोऽसि तस्य ते=मह आ वह धामच्छन्दसि वायुर्मूत्वा सर्वा दिश आ वाहि=कामꣳ समच इति ॥१४॥ सꣳहारविहाराभ्यामुपस्थाय प्रवर्ग्योपसद्भ्यां प्रचर्य दिवैवाभ्यां पुनः प्रचरति ॥१५॥ [४४]

## [ शतरुद्रीयम् ]

अथैतच्छतरुद्रीयं कर्म सञ्चष्टे ॥१॥ पर्णं चाजक्षीरं च जर्तिलसक्तवश्च गावीधुकश्च चरुर्धनुश्च तिस्रश्चेषव उदकुम्भश्चाश्मा चोदपात्रं[6] च वेतसशाखा चावका च मण्डूकश्च दीर्घश्च वꣳशः ॥२॥ अजक्षीरेण जर्तिलसक्तून् संयूयार्कपर्णे सव्ये हस्त आधत्ते[7] ॥३॥ नमस्ते रुद्र मन्यवः इत्युत्तरस्य पक्षस्य चरमायामिष्टकायां जानुदघ्ने धारयन् प्रतिपद्यते ॥४॥ नमः सेनाभ्यः सेनानिभ्यश्च वो नमः इत्यतो[8] निगद्य वड् इति करोति ॥५॥ नमः क्षत्तृभ्यः =श्च वो नमः इति नाभिदघ्ने धारयन् प्रतिपद्यते ॥६॥ नमः कूप्याय चावट्याय च इत्यतो[8] निगद्य वड् इति करोति ॥७॥ नमो वर्ष्याय चावर्ष्याय च इति ग्रीवदघ्ने धारयन् प्रतिपद्यते ॥८॥ य एतावन्तश्च=तन्मसि इत्यतो[9] निगद्य वड् इति करोति ॥९॥ एहि यजमान इत्युक्त्वाऽन्वारब्धे यजमानेऽविहारमुत्तमा[10] देवता वाचयति ॥१०॥ नमो रुद्रेभ्यो ये दिवि इति ग्रीवदघ्ने (धारयन् प्रतिपद्यते। °ये-)षां वर्षमिषवस्तेभ्यो दश प्राचीर्दश=जम्भे दधामि

---

१. MHP abr; see VIII.28.9–11. २. MHP सहस्र. ३. MHP सा सहस्रा°. ४. MHP प्रमा. ५. MHP पर्चं. ६. MHP °पात्रश्च. ७. P आदत्ते. ८. MHP इत्येतो. ९. MHP इत्यातो. १०. °वहारमुत्तममा.

इति ॥११॥ वड् इति करोति ॥१२॥ नमो रुद्रेभ्यो ये अन्तरिक्षे इति नाभि-दघ्ने धारयन् प्रतिपद्यते। °येषां वात इषवस्तेभ्यो=नमः° इति समानम् ॥१३॥ नमो रुद्रेभ्यो ये पृथिव्याम् इति जानुदघ्ने धारयन् प्रतिपद्यते। °[1]येषामन्नमिषवस्तेभ्यो=[2]नम(-स्ते नो मृडयन्तु=)जम्भे दधामि इति ॥१४॥ वड् इति करोति ॥१५॥ यो रुद्रो अग्नौ यो (अप्सु)[3] य ओषधीषु इत्येतस्यैव पक्षस्य चरमायामिष्टकायां गावीधुकं चरुं निदधाति। °यो रुद्रो विश्वा= नमो अस्तु इति ॥१६॥ वड् इति करोति ॥१७॥ तदेतद्यं द्विष्यात्तस्य सञ्चरे पशूनां[4] न्यस्ये[5]दर्कपर्णम्[6] ॥१८॥ यद्यु[6] (वै न द्वेष्ट्याग्नवटे) तन्न्य-स्यति[7] ॥१९॥ [४५]

धनुश्च तिस्रश्चेषूरादत्ते ॥१॥ यत्ते रुद्र पुरो धनुः इत्यपरेणाग्निं तिष्ठन् दिशोऽनुविदे दिश्यते। °तद्वातो=वत्सरेण नमस्करोमि इति ॥२॥ तदयाचितं ब्राह्मणाय ददाति ॥३॥ उदकुम्भमादाय परिषेक्ता त्रिः परिषिञ्चन् पर्येति ॥४॥ अश्मन्नूर्जम् इति परिषिञ्चति वाचयति। °पर्वते=रराणाः इति ॥५॥ अश्मꣳस्ते क्षुद् इत्यश्मना कुम्भꣳ सꣳस्पृश्य अमुं ते=द्विष्मः इत्यश्मनि कुम्भं प्रक्षिणोति ॥६॥ यं द्वेष्टि यजमानस्तं ध्यायति ॥७॥ अपः परिषि-च्याप्रतीक्षमाव्रजतः ॥८॥ वेतसशाखामवकां मण्डूकमिति दीर्घे वꣳशे प्रबध्नाति ॥९॥ समुद्रस्य त्वाऽवाकया इत्यपरेणाग्निं तिष्ठन्नष्टाभिर्विकर्षति। (°अग्ने परिव्ययामसि)[8]=उपयज्ञꣳ हविश्च नः इति ॥१०॥ दीर्घवꣳशस्य तमुपसञ्चरे एव शान्तोऽग्निर्विकृष्टः कामाधिरुह्योद्गातारमध्वर्युर्नेनीयते ॥११॥ सामभिरुपस्थाय[9] गायत्रेण पुरस्तादुपतिष्ठते ॥१२॥ रथन्तरेण दक्षिणं पक्षं बृहतोत्तरं पक्षꣳ सवीर्यं करोति ॥१३॥ यज्ञायज्ञियेन पुच्छम् ॥१४॥ ऋतुस्थाँ ह संवत्सरभृतः कुर्याद् ॥१५॥ वामदेव्येन मध्यम् ॥१६॥ वारव-न्तीयेन दक्षिणमꣳसꣳ श्यैतेनोत्तरम्[10] ॥१७॥ प्रजापतेर्हृदयेन दक्षिणमुप-[11] पक्षमग्नेरुक्थेनोत्तरम्[12] अग्नेरर्क्येण शिरः ॥१८॥ पिता मातरिश्वा इत्यपरेणा-ग्निमुपविश्य स्तुतꣳ होताऽनुशꣳसति। °अच्छिद्रा पदा=नेषद् इति ॥१९॥ इष्टो यज्ञो=वसुभिः इति स्तुतशस्त्रयोर्दोहं ब्रह्मा यजमानं वाचयति।

---

१. MHP येषा वर्षंमि°. २. MHP add इति after नमः. ३. MHP om. ४. MP पशूना. ५. MHP °स्येदित्यर्कपर्णस्य. ६. MHP ति द्व. ७. MHP मन्वस्यति. ८. MHP om. ९. MP °स्थायन्. १०. MHP श्यैते° ११. MHP दक्षिणमपि°. १२. MHP °ग्नेष्पूतेनो°.

°आशीर्दा=भक्षीय इति ॥२०॥ अधिरुह्य पञ्चगृहीतमादाय समीची नामासि प्राची दिग् इति पञ्चाशापालानामाहुतीर्जुहोति ॥२१॥ षडेता उत्सृजति ॥२२॥ आसामेकामाशापालानामाहुतिꣳ हुत्वा वसन्ति ॥२३॥ [४६]
[इति चतुर्दशोऽनुवाकः]

चतुरोऽस्य रौहिणान्छृतानभिव्युच्छति ॥१॥ पञ्चगृहीतमाज्यं द्वयं दधिमधुमिश्रं ग्रुमुष्टि[1] द्वे स्रुवाहुती द्वे चतुर्गृहीते तिस्रः समिध औदुम्बरीः पृश्निरश्माऽऽज्यप्रोक्षा दध्नः पूर्णौदुम्बरी तिस्रः समिध औदुम्बरी वैकङ्कती शमीमयो वैश्वकर्मणी[2] पङ्क्तिः पूर्णाहुतिर्द्वादशकपालो वैश्वानरः सप्तकपालो मारुत आज्यकुम्भो[3] दीर्घदण्डा स्रुक् सर्वौषधमौदुम्बरस्रुवश्चतुर्दंश वाजप्रसवीयानि षट् पार्थानि षड् भूतानामवेष्टयः कृष्णाजिनं चाभिषेकश्च षडेव पार्थानि षड् भूतानामवेष्टयः कृष्णायै श्वेतवत्सायै पयो राष्ट्रभृतो रथो वातनामानि पञ्चार्काहुतयो वारुणी रुचस्तिस्रोऽग्निहोत्राहुतयो नव समिष्टयजूꣳषि ॥२॥ एतदस्य कार्यं भवति ॥३॥ आदित्येन वाचं विसृज्य प्रवर्ग्योपसद्भ्यां प्रचर्य निष्क्रामन्नाह अर्घव्रतं प्रयच्छत इति ॥४॥ त्रिभिः कर्मभिराद्रवन्नध्वर्युर्व्रतयित्वा ॥५॥ एतं यजमानोऽनु समेति ॥६॥ तस्मिन्नागते[4] नृषदे वड् इति पङ्क्त्या पञ्चगृहीतेनाक्षणया स्वयमातृण्णां व्याघारयति । °अप्सुषदे वड्=पुर्वविदे वट् इति ।.७॥ [5]ये देवा देवानाम् इति[5] दध्ना मधुमिश्रेण द्वाभ्यां ग्रुमुष्टिना[6] अग्निमवोक्षति । (°यज्ञिया यज्ञियानाꣳ) °संवत्सरीण(-मुपभागमासते=अधि स्नु-)षु इति ॥८॥ कूर्मपृषन्तमग्निं[7] कृत्वोत्तरार्धे ग्रुमुष्टिं न्यस्य हेतयो नाम स्थ इतीतरेण दध्ना मधुमिश्रेण षडाशापालानामाहुतीर्जुहोति[8] ॥९॥ अवरुह्य प्रवर्ग्योपसद्भ्यां प्रचरति ॥१०॥ आवृत्या प्रवर्ग्यमुद्वासयति ॥११॥ सौरीꣳ[9] हुत्वेध्ममादीपयति ॥१२॥ (अथ गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं) [10] गृह्णीते ॥१३॥ अग्निस्तिग्मेन शोचिषा इति पुरस्ताच्चतुर्गृहीतस्य स्रुवाहुतिं जुहोति । °यꣳ सद्विश्वं=रयिꣳ स्वाहा इति ॥१४॥ इ इमा विश्वा भुवनानि जुह्वद् इति चतुर्गृहीतस्य[11] वैश्वकर्मणः प्रतिपद्यते ॥१५॥ विश्वकर्मा[12] ह्यजनिष्ट

१. MHP °मुष्टि. २. MHP कर्मणि. ३. MHP आज्यदण्डो. ४. MH °गमे. ५–५. H repeats. ६. P ग्रमु°. ७. MHP कूर्मपृष्ठन्तम°; Cf. BaudhŚS X.50:52.13–14. ८. MH °पाशाना°. ९. MHP सौरी. १०. Cf. BaudhŚS X.51:53.5. ११. MHP °गृहीताय. १२. MH °कर्मणा.

देव[1]=व्यदधात् पुरुत्रा स्वाहा इति पूर्वा(-र्धेन सूक्तस्य जुहोति ॥१६॥ अपरं चतुर्गृहीतं गृह्णी-)ते ॥१७॥ सैनाऽनीके(-न इति) पुरस्ताच्चतुर्गृहीतस्य[2] स्रुवाहुतिं जुहोति । °सुविदत्रो अस्मे=रेवद् दिदीहि स्वाहा इति ॥१८॥ चक्षुषः पिता मनसा हि धीरः इति चतुर्गृहीतस्य[2] वैश्वकर्मणः प्रतिपद्यते ॥१९॥ समुद्राय वयुनाय=हविः स्वाहा इत्युत्तरार्धेन सूक्तस्य हि (जुहोति ॥२०॥ उदेनमुत्तरां नय इति तिस्र औदुम्बरीः समिध आदधाति । °अग्ने घृ-)तेनाऽऽहुत=घनेन च स्वाहा इति ॥२१॥ उदु त्वा विश्वे देवाः इत्येकयाऽग्निमुद्यच्छते । °अग्ने भरन्तु=विभावसुः इति ॥२२॥ उद्यच्छन्त इध्मम् ॥२३॥ उपयच्छन्त्युपयमनीः ॥२४॥ अग्नये प्रह्रियमाणायानुब्रूहि इत्याह । °एकस्ययाऽनुद्रवाप्रतिरथमनु[3] व्रव (इति ॥२५॥ आदद्ध्यान्यादिदियंज्ञस्य=)पन्थाम् इत्यध्वर्युर्यजमानं वाचयति ॥२६॥ आशुः शिशानः इत्यप्रतिरथं ब्रह्मा प्रतिपद्यते ॥२७॥
[४७]

पञ्च दिशो[4] दैवीर्यज्ञमवन्तु देवीः इति षड्भिः प्रहरति । °अपामतिं[5]=ततः पावका आशिषो नो जुषन्ताम् इति ॥१॥ विमान एष दिवो मध्य आ(-स्ते इति द्वाभ्यां पृश्निमश्मानं निदधाति । °आपप्रि-)[6]वान् रोदसी=रजसः पात्यन्तौ इति ॥२॥ इन्द्रं विश्वा अवीवृधन् इति चतसृभिरा पुच्छादेति । °समुद्रव्यचसं[7]=विषूचीनान् व्यस्यताम् इति ॥३॥ आज्यप्रोक्षमादाय वसवस्त्वा रुद्रैः पुरस्तात्[8] पान्तु इत्यपरेणाग्निं तिष्ठन् प्रोक्षति । °पितरस्त्वा यमः=उपरिष्टा( च्च पान्तु इति ॥४॥ प्राचीमनु) प्रदिशं प्रेहि विद्वान् इति दध्नः पूर्णामौदुम्बरीमादाय पञ्चभिरधिक्रामति[9] । °अग्नेरग्ने[10]=प्लुवयंन्तु यजमानाः[11] स्वस्ति इति ॥५॥ नक्तोषासा इत्यौदुम्बर्यौ पुरानुवाक्यामन्वाह । °समनसा विरूपे=द्रविणोदाः इति ॥६॥ अग्ने सहस्राक्ष इति जुहोति । °शतमूर्धन्=वाजाय स्वाहा इति ॥७॥ धार्यमाण इध्मेऽप्तुँ हुत्वा स्वयमातृण्णायामवनयति[12] ॥८॥ सुपर्णोऽसि गरुत्मान् इति तिसृभिः सादयति । पृथिव्याँ सीद=

१. MP देवा. २. MHP गृहीतेस्य [ P °तेऽस्य ]. ३. MHP रथं तव [ M रथन्तव ]. ४. P oms. ५. MHP अपरमति for अपामतिं and given after इति at the end of the sutra. ६. Cf. BaudhŚS X.51:54.2. ७. MHP समुद्रस्य वचसं. ८. MHP पश्चात्. ९. MH °कामति, P °रभिक्रा°. १०. MHP om. ११. MH °मानः. १२. H °मातृण्णामव°.

यजमानश्च सीदत इति ॥९॥ सीद होतः इति तृतीया । °स्व उ लोके चि= वयोधाः इति ॥१०॥ उपनिवपत्युपयमनीः[1] ॥११॥ सादयत्यग्निम् ॥१२॥ प्रजापति[2]=तिर स्वाहा इति ॥१३॥ अवरुह्य स्फ्यगाददान आह व्युत्क्रामत मावोभिः[3] परिगृहीषं[4] ब्रह्मन्नुत्तरं परिग्राहं परिग्रहीष्यामि इति ॥१४॥ दक्षिणेनाग्निं ब्रह्मोपविशति ॥१५॥ प्रसूत उत्तर[5]=योयुपित्वाऽवस्कभ्य, पूर्वेण शालां तिष्ठन् संप्रेष्यति प्रोक्षणी[6]=पसादय इति ॥१६॥ आसादयन्त्यस्मै प्रोक्षणीः ॥१७॥ उपसादयतीध्माबर्हिः ॥१८॥ इध्माबर्हिः[7] प्रो[8]=प्रोक्षति[9] ॥१९॥ तृणकलापीं[10] (प्रोक्षति)[11] ॥२०॥ वृष्ट्याँ[11] स्तृणन्नेति ॥२१॥ आगच्छन्नेवाधिक्रामति ॥२२॥ [४८]

प्रेद्धो अग्ने दीदिहि पुरो नः इत्यौदुम्बरीमादधाति । °अजस्रया=वाजाः स्वाहा इति ॥१॥ विधेम ते परमे जन्मन्नग्ने इति वैकङ्कतीम् । °विधेम= समिद्धे[12] स्वाहा इति ॥२॥ (ताँ सवितुर्वरेण्यस्य चित्राम् इति)[13] शमीमयीम् । °आऽहं वृणे=महीं गाँ स्वाहा इति ॥३॥ चतुर्गृहीतं गृह्णीते ॥४॥ तज्जुहोति ॥५॥ चित्तिं जुहोमि इति वैश्वकर्मणीम् । °मनसा घृतेन=हविः स्वाहा इति ॥६॥ अपरं चतुर्गृहीतं गृह्णीते ॥७॥ अग्ने तमद्य इति पङ्क्त्या । °अश्वं न स्तोमैः=ओहैः[14] स्वाहा इति ॥८॥ अपरं चतुर्गृहीतं गृह्णीते ॥९॥ अभिपूर्य पूर्णाहुतिं जुहोति सप्त ते अग्ने=घृतेन स्वाहा इति ॥१०॥ [15]जुह्वन् मनसा[15] दिशो ध्यायति[16] ॥११॥ आहरन्त्यस्मा उपस्तीर्णाभिघारितान् वैश्वानरप्रथमान्मारुतान्[17] ॥१२॥ वैश्वानरायानुब्रूहि इत्याहोपस्तीर्णाभिघारितं वैश्वानरस्यादधानः ॥१३॥ होतैवैतस्यान्वाह ॥१४॥ होता यजति ॥१५॥ ओ श्रावय इत्याह ॥१६॥ वैश्वानरं यज इति ॥१७॥ वषट्कृते जुहोति ॥१८॥ उपविशति होता ॥१९॥ गणेन गणमनुद्रुत्याध्वर्युरुपांशु मारुताञ्जुहोति ॥२०॥ उपस्तीर्णाभिघारितमेषां प्रथममादत्ते ॥२१॥

---

१. MHP °त्युधयम°. २. MHP abr; see V.2.29–30; VI.14.13–14. ३. MHP आपोभिः. ४. MHP °ग्रहीषं. ५. MHP abr; see V.2.33–34. ६. MHP abr; see VI.14.28. ७. MP twice. ८. MHP abr; see VI.14.17–19. ९. H प्रोणक्षति. १०. MHP °कलापीः, Cf.VI.14.20. ११. MHP om १२. MHP समिन्धे. १३. MHP om. १४. H आहै. १५–१५. MP twice. १६. MHP ध्यायेति. १७. MHP °नरः प्रथमान्मारुता.

समरसः इत्यन्वाह ।° मरुतो यज्ञे अस्मिन्=अनुवर्त्मानो भवन्तु इति ॥२२॥ ईदृङ् च इति यजति ।°अन्यादृङ् चैतादृङ् च=समराः इति ॥२३॥ एतमन्वाह ॥२४॥ शुक्रज्योतिश्च इति यजति ।° चित्रज्योतिश्च=त्यꣳहाः इति ॥२५॥ एतमन्वाह ॥२६॥ ऋतजिच्च इति यजति । °सत्यजिच्च=दूरे अमित्रश्च गणः इति ॥२७॥ एतमन्वाह ॥२८॥ अरण्येऽनुवाक्येन यजति ॥२९॥ [1]अरण्येऽनुवाक्यमन्वाह ॥३०॥ ऋतश्च इति यजति । °सत्यश्च= विधारयः[2] इति ॥३१॥ एतमन्वाह ॥३२॥ ईदृक्षासः (इति)[3] यजति । °एतादृक्षास=ऊतये इति ॥३३॥ एतमन्वाह ॥३४॥ समरसः इति यजति । °मरुतो=अनुवर्त्मानो भवन्तु इति ॥३५॥ चतुर्गृहीतं गृह्णीते आज्यकुम्भाद्[4] दीर्घदण्डाꣳ स्रुचम् ॥३६॥ दक्षिणाꣳ श्रोणिमभितः स्थूणे निघ्नन्ति ॥३७॥ तिर्यञ्चमेनयोर्वंꣳशमुद्दधति, धारयन्ति वा ॥३८॥ तदेताꣳ स्रुचमुद्धाय अग्नाविष्णू सजोषसा इति वसोर्धारां जुहोति । °इमा वर्धन्तु =रा गतꣳ स्वाहा इति ॥३९॥ अभ्यानयन्ति ॥४०॥ आज्यकुम्भाद्दीर्घदण्डाया[5]ꣳ स्रुचि सन्तता वसोर्धारा स्रवति वाजश्च मे प्रसवश्च मे इति ॥४१॥ द्वादशं प्रतिपद्यते ॥४२॥ (जु-)होति द्वादशो द्वादशोऽनवानम् ॥४३॥ काममूर्ध्वम् ॥४४॥ ततोऽवानं कृत्वा वाजाय स्वाहा इति विग्रहमुत्तमं[6] द्वादशं जुहोति ॥४५॥

[४९]

°प्रसवाय स्वाहा, अपिजाय स्वाहा, क्रतवे स्वाहा, सुवाय स्वाहा, मूर्ध्ने स्वाहा, व्यश्नियाय[7] स्वाहा, आन्त्यायनाय स्वाहा, अन्त्याय स्वाहा, भौ(-वनाय स्वाहा, भुवनाय स्वाहा, अधिपतये स्वाहा, इति) ॥१॥ कुम्भं प्रत्यज्य सर्वौषधमभिघारयति ॥२॥ दध्ना सर्वौषधꣳ संयौति ।३॥ वाजस्येमं प्रसवः सुषुवे अग्रे इत्यौदुम्बरेण स्रुवेण चतुर्दश वाजप्रसवीयानि जुहोति ॥४॥ सं मा सृजामि इति पात्रिया चतुर्दशीं जुहोति स्रुवेणोपयच्छत्यभिषेचनाय । °पयसा घृतेन सं (मा) सृ(-जाम्यप ओषधीभिः सोऽहं वाजं सनेयमग्ने स्वाहा इति ॥५॥ जुहोति षट् पार्थानि ॥६॥ जुहोति षड् भूतानामवेष्टीः[8] ॥७॥ अग्नये स्वाहा इति पार्थानि, पृथिव्यै स्वाहा इति भूतानामवेष्टयः[9] ॥८॥ पूर्वेण हविर्धाने अपरेणाहवनीयं प्राचीनग्रीवमुत्तरलोम कृष्णाजिनमास्तृणाति

१. MHP अरण्योऽनु°. २. MHP विधेम. ३. MHP om. ४. MP °कुंभा, H आज्यं कुंभा. ५. MHP कुंभं दीर्घं°. ६. MH विग्रहामु°. ७. MP व्यश्नियिया°, H व्यश्रिया°. ८. MHP °वेष्टिः. ९. MHP °वेष्टि.

॥९॥ तस्मिन्नुपविशति यजमानः प्रागावृत्त उपस्थं कृत्वा ॥१०॥ तं देवस्य त्वा सवितुः प्रसवे इत्यौदुम्बरेण स्रुवेण पुरस्तात् प्रत्यञ्चं शीर्षतोऽभिषिञ्चति। °अश्विनो=सरस्वत्यै वाचो यन्तु='नाभिषिञ्चामि इति ब्राह्मणम्; °इन्द्रस्य त्वा साम्राज्येनाभिषिञ्चामि इति राजन्यम्; °बृहस्पतेस्त्वा=मि इति राजानम् ॥११॥ सर्वेणैव सहाभिषिञ्चेत्॥१२॥आमुखादन्ववस्रावयति॥१३॥ षडेव पार्थानि जुहोति षड् भूतानामवेष्टीः ॥१४॥ इन्द्राय स्वाहा इति पार्थानि, अदभ्यः स्वाहा इति भूतानामवेष्टयः ॥१५॥ नक्तोषासा इति कृष्णायै श्वेतवत्सायै² पयो जुहोति चमसेन। °समनसा विरूपे=द्रविणोदाः स्वाहा इति ॥१६॥ ऋताषाड् ऋतधामा इति षड् राष्ट्रभृतो जुहोति ॥१७॥ भुवनस्य पते इत्युपर्यग्नौ पुरस्ताल् प्रत्यगावृत्ते रथमुखे³ धार्यमाणाः समान्या पञ्चाहुतीर्जुहोति ॥१८॥ समुद्रोऽसि नभस्वान् इत्यञ्जलौ स्रुवमादाय त्रीणि वातनामानि जुहोति। °आर्द्रदानुः शम्भूः=वाहि स्वाहा इति ॥१९॥ सुवर्न घर्मः स्वाहा इति पञ्चार्काहुतीर्जुहोति। °सुवर्नार्कः=सूर्यः स्वाहा इति ॥२०॥ तत्त्वा यामि इति वारुणीं जुहोति। °ब्रह्मणा=प्र मोषीः स्वाहा इति ॥२१॥ यास्ते अग्ने सूर्ये रुचः इति तिस्रो रुचो जुहोति। °उद्यतो दिव=कृधि स्वाहा; या वो⁴ देवाः=बृहस्पते स्वाहा; रुचं नो धेहि=रुचा रुचँ स्वाहा इति ॥२२॥ अग्निर्ज्योतिः इति तिस्रोऽग्निहोत्राहुतीर्जुहोति। °ज्योतिरग्निः स्वाहा; इन्द्रो ज्योतिर्ज्योतिरिन्द्र स्वाहा; सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा इति ॥२३॥ (नव समिष्टयजूँषि जुहोति ॥२४॥) यदाकूतात् समसुस्रोद्⁵ इति दशैताः ॥२५॥ उत्सृजत्यासामेकाम् ॥२६॥ [५०]

हविर्धाने एवातः संवर्तयन्ति ॥१॥ प्रसिध्यति कर्माऽऽ धिष्णियात्⁶ ॥२॥ न्युप्तेषु धिष्णियेष्वात्मन्नग्निं गृह्णीते⁷=मुञ्चते ॥३॥ ममाग्ने वर्चो विहवेष्वस्तु इत्याग्नीध्रीये धिष्ण्य एकामिष्टकामुपदधाति। °वयं त्वेन्धाना⁸=पृतना⁸ जयेम तया=सीद इति ॥४॥ लोकं पृण इत्येकादश लोकंपृणा उपदधाति ॥५॥ ता अस्य सूददोहसः इति ॥६॥ चित्तिमचित्तिम् इत्यभिमृशति ॥७॥ पृष्टो दिवि इति पुरीषम् ॥८॥ चित्तिमचित्तम् इत्येवाभिमृशति। °तया=सीद इति ॥९॥ मम देवा विहवे सन्तु सर्वे इति होतुर्धिष्ण्य एकामिष्टकामुप-

१. MHP मभि°. २. MH twice. ३. MHP रथन्तरमुखे. ४. MHP वा. ५. M समस्रो°. ६. MHP °याना. ७. MHP abr; see VIII.28.2–4. ८. MHP चेडाना. ९. MHP वृतेन.

दधाति । [१]इन्द्रावन्तो = कामे अस्मिन् तया=सीद इति ॥१०॥ लोकं पृण इत्येकादश लोकंपृणा उपदधाति ॥११॥ ता अस्य सूददोहसः इति ॥१२॥ चित्तिमचितिम् इत्यभिमृशति ॥१३॥ पृष्टो दिवि इति पुरीषम् ॥१४॥ चित्तिमचित्तिम् इत्येवाभिमृशति । [१]तया = सीद इति ॥१५॥ मयि देवा द्रविणमा यजन्ताम् इति मैत्रावरुणस्य धिष्णिय एका(-मिष्टका-)[१]मुपदधाति । [१]मय्याशीरस्तु=सुवीरास्तया = सीद इति ॥१६॥ लोकं पृण इति सप्त[२]=सीद इति ॥१७॥ मह्यं यजन्तु मम यानि हव्या इति ब्राह्मणाच्छꣳसिनो धिष्णय एकामिष्टकामुपदधाति । [१] [३]आ(-कूतिः सत्या = अधिवोचता)मे तया= सीद इति ॥१८॥ लोकं पृण इति सप्त लो[४]=ध्रुवा सीद इति ॥१९॥ देवीः षडुर्वीः इति पोतुर्धिष्णिय एकामिष्टकामुपदधाति । [१]उरु णः कृणोत= सोम राजन् तया = सीद इति ॥२०॥ लोकं पृण इति सप्त[५]=सीद इति ॥२१॥ अग्निर्मन्युं प्रतिनुदन् इति नेष्टुर्धिष्णिय[६] = [१]पुरस्तादवद्यो = वि नेशत्तया = सीद इति ॥२२॥ (लोकं पृण इति सप्त[१]=सीद इति ॥२३॥ धाता धातॄणाम् इत्यच्छावा-)कस्य धिष्णिय (एकामिष्टकामुप-)दधाति । [१]भुवनस्य[७] यस्पति= [८]यजमानं त्यर्थाद्[८] तया = सीद इति ॥२४॥ लोकं[९] = सीद इति ॥२५॥ उरुव्यचा नो महिषः शर्म यꣳसद् इति मार्जालीये धिष्णिय एकामि[१०] = दधाति । अस्मिन् हवे = [११]मा परा[११] दास्तया=सीद इति ॥२६॥ (लोकं पृण इति)[१२] पञ्च लोकंपृणा उपदधाति । ता अस्य[१३] = सीद इति ॥२७॥ अ(-थाग्नीषोमौ प्रणयति) ॥२८॥ प्रसिध्यति कर्माऽऽग्नीषोमीयस्य पशुपुरोडाशाद् ॥२९॥ अग्नी(-षोमीयस्य पशुपुरोडाशेन सह देवसुवाꣳ हवीꣳषि निर्वपति अग्नये गृहपत-)ये[१४] इत्यष्टावेतानि ॥३०॥ पृष्ठ्यायै च हवीꣳषि अग्नये गायत्राय त्रिवृते राथन्तराय[१५] इति दश ॥३१॥ प्रैषवान् पशुपुरोडाशः[१६] ॥३२॥ अनुब्रूहि ॥३३॥ यजेतोतरेषाꣳ हविषामुपाꣳशु ॥३४॥ समानः प्रैषवान् स्विष्टकृत् समानीडा

---

१. MHP om. २. MHP abr; see above S.5–9. ३. MHP आरू. ४. MHP abr; see above S.5–9. ५. MHP ibid. ६. MHP abr; see above S.4. ७. M भवनस्य. ८–८. MHP °मान त्यस्थात्. ९. MHP abr; see above S.5–9. १०. MHP abr; see above S.4. ११–११. MP मा वरा, H ना परा. १२. MHP om. १३. MHP abr; see above. १४. Cf. BaudhŚS X.55 : 58.1–2. १५. MP रथ°. १६. MHP °डाशानु°.

॥३५॥ उपहूतायामिडायां सविता त्वा प्रसवानाꣳ सुवताम् (इत्येनमाह ब्रह्मा । °अग्निर्गृहपतीनाꣳ सोमो=पती-)नाम् इति ॥३६॥ ये (देवा देवसुवः) स्थ इत्यस्य दक्षिणꣳ हस्तं गृह्णाति । °त इममामुष्यायण=ब्राह्मणानाꣳ राजा इति ॥३७॥ विष्णोः क्रमोऽसि, (विष्णोः क्रान्तमसि)[1], विष्णोर्विक्रान्तमसि इति विष्णुक्रमान् प्रक्रम्य वसन्ति ॥३८॥ प्रसिध्यति कर्माऽऽ[2] परिधीनां परिधानात् ॥३९॥ परिधीन् परिदधात्यौदुम्ब(-रान् ॥४०॥ यज-)मानं यजुर्भिर्वाचयति ॥४१॥ औदुम्बर्यौ स्रुचावभि[3]मृशति ॥४२॥ अग्निं युनक्ति ॥४३॥ अग्निं युनज्मि शवसा घृतेन इति तिसृभिरध्वर्युर्मध्यमं परिधिमभिमृशति । °दिव्यꣳ सुपर्णं वयसा=मा मा हिꣳसीः इति ॥४४॥ प्रसिध्यति प्रातःसवनम् ॥४५॥ प्रसिध्यति माध्यन्दिनꣳ सवनमा य(-ज्ञायज्ञियस्य स्तोत्रात्)[4] ॥४६॥ सीदन्ति नाराशꣳसाः ॥४७॥ सन्नेषु नाराशꣳसे(-षु चित्रं देवा-)नामुदगादनीकम् इति हिरण्यपात्रं मधोः पूर्णं मध्यन्दिनेऽश्वमवघ्रापयति । °चक्षुर्मित्रस्य=तस्थुषश्च इति ॥४८॥ एतच्च हिरण्यपात्रमश्वं च ब्रह्मणे ददाति ॥४९॥ प्रसिध्यति माध्यन्दिनꣳ सवनम् ॥५०॥ प्रसिध्यति तृतीयसवनमा यज्ञायज्ञियस्य स्तोत्रात्[5] ॥५१॥ एकयाऽप्रस्तुतं भवति यज्ञायज्ञियस्य स्तोत्रम् ॥५२॥ अथ विश्वस्य मूर्धन्नधि तिष्ठसि श्रितः इति द्वाभ्यां प्रतिप्रस्थाता मध्यमं परिधिमभिमृशति । °समुद्रे ते हृदयं=नमस्पथे इति ॥५३॥ प्रसिध्यति कर्माऽऽ[6] समिष्टयजुर्भ्यः ॥५४॥ इमꣳ स्तनमूर्जस्वन्तं धयापाम् इति पुरस्तात्समिष्टयजुषामाज्यस्य पूर्णाꣳ स्रुचं जुहोति । °प्प्यातमग्ने=आ विशस्व स्वाहा इति ॥५५॥ प्रसिध्यति कर्माऽऽनूबन्ध्यस्य [7]पशुपुरोडाशात् ॥५६॥ अनूबन्ध्यस्य[7] पशुपुरोडाशेन सह मैत्रावरुणीमामिक्षां करोति तस्यै पुरोडाशेन ॥५७॥ समानः प्रैषवान् स्विष्टकृत् समानीडा ॥५८॥ परिधिषु संप्रकीर्णेषु वाजिनं तस्य भक्षो यद्वां रेतः प्रसिच्यते यत्र वां प्रति तिष्ठति तस्य वां वा जीवितस्य मधुमत उपप्रेतस्योपहूतो भक्षयामि इति ॥५९॥ प्रसिध्यति [8]कर्माऽऽ प्रव्रजनात् ॥६०॥ आसीभिरुपतिष्ठत[8] इत्याहुः प्रव्रजिष्यन् आपं त्वाऽग्ने मनसा इति ॥६१॥ येऽग्नयः पुरीष्या इत्यग्नेरेवोक्थमनुशस्य प्रव्रजति । °प्रविष्टा पृथिवीः=जीवातवे सुव इति ॥६२॥ यद्यग्निष्टोम एतदेवाहब्रह्मौदनं[9] निर्वपति ॥६३॥ यद्युक्थ्यो

१. MHP om. २. MHP कर्म. ३. MHP वाक्योभिः. ४. MHP om. ५. MHP स्तोत्रा. ६. MHP कर्म. ७–७. MHP °डाशानू°. ८–८. MHP कर्म प्र व्राजन्नाप्ती°.

वाऽतिरात्रो वा श्वोभूते ब्रह्मौदनं निर्वपति ॥६४॥ तं वसोर्धाराया उच्छेषणंनोपसिञ्चति ॥६५॥ तमेत एव चत्वारो महर्त्विजः प्राश्नन्ति ॥६६॥ तदेभ्यश्चतस्रो धेनूर्ददाति ॥६७॥ सन्तिष्ठतेऽग्निचित्या सन्तिष्ठतेऽग्निचित्या ॥६८॥ [ ५१ ] [ इति पञ्चदशोऽनुवाकः ]

इत्यग्निकल्पः समाप्तः

[ इत्यष्टमः प्रपाठकः ]



## [ अथ नवमः प्रपाठकः ]

### अथ वाजपेयः

वाजपेयेन यक्ष्यमाणः संभारान् संभरते सप्तदश गवां शतानि वयमो-वयमः[1] सप्तदश पुरुषान् सप्तदश हस्तिनः सप्तदशा(-नाꣳसि) युक्तानि सप्तदश रथान् सप्तदशारꣳ [2]रथचक्रमौदुम्बरꣳ सप्तदश निष्कान् सप्तदश हिरण्यशल्कान् सप्तदशोषपुटान् सप्तदश नीवारान् पात्रान् सप्तदश दुन्दुभीन् सप्तदश वायव्यानि सप्तदशोपयामान्, सप्तदश प्राजापत्यान् छागान् [3]श्यामानेकरूपान् सप्तदश वासाꣳसि सप्तदशारत्नि यूपं[4] सप्तदशप्रव्याध आजिपथ इति सप्तदशानि ॥१॥ अथेतरे गोधूमकलापी च दशाक्रमणा च श्रितिर्बस्ताजिनं च कृष्णाजिनं च [5]शतमानं चासन्दी[5] च ताप्यं चोष्णीषं च वारं च सतं[6] च नानादेवत्याः पशवः पञ्चैन्द्राणां पात्राणि षोडशिपात्रं च हिरण्यपात्रं च द्वावाखरावभितोऽक्षम् ॥२॥ एते[7]ऽस्य संभारा उपक्लृप्ता भवन्ति ॥३॥ दीक्षायै मीमाꣳसा ॥४॥ त्रयोदश दीक्षास्तिस्र उपसदः सप्तदशीं[8] प्रसुत[9] इति ॥५॥ इतरे[10] प्राजापत्यो वा एष यज्ञक्रतुः[11] इति वदन्तः सप्तदशैव दीक्षास्तिस्र उपसद एकविꣳशीं प्रसुत (इति)[12] प्रजापतिमेव दीक्षाभिरभि सꣳसादयन्ति ॥६॥ आदित्यमेकविꣳशेनैवोपतिष्ठमाना वैष्णवेन दीक्षन्ते[13] ॥७॥ तस्य हविष्कृता वाचं विसृज्य देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिम् इति चतुर्गृहीतेन सावित्रमाहवनीये जुहोति। °भगाय=स्वदाति नः स्वाहा इति ॥८॥ प्रायणीयस्य हविष्कृता वाचं विसृज्यातिथ्यस्य (हवि-)ष्कृता[14] वाचं विसृज्य तिसृणामुपसदां त्रीणि पुरस्तात् संप्रैषस्याग्नेः प्रहर्तुः पुरस्ताद् वैसर्जनस्य[15] पुरस्तात् पशोरुपाकर्तोः पुर-

---

१. MHP °वयः. २. MHP दशचक्र°. ३. P श्येमा°. ४. MHP रत्नियूपः. ५–५. MHP शमानश्चान्दी [ °नं चा° ]. ६. P शतं. ७. MHP एतद्. ८. Cf. BaudhŚS XI.1 : 64.1 : सप्तदश्यां; thus ĀpŚS XVIII. 1.6; VaikhŚS XVII.7:241.2. ९. MH प्रसुत्र, P प्रसूत. १०. MHP इतरं. ११. MHP °क्रतुम्. १२. MHP om. १३. MHP दीक्षते. १४. MHP षता. १५. P °संजनस्य.

स्तात्, त्रयाणाᳫं सवनानां त्रीणि विप्रुषाᳫं होममनु त्रयाणामुत्थानानां[1] त्रीणि पुरस्तात्, संप्रैषस्य षोडशिनः स्तोत्रस्य पुरस्तात् (सप्तदशिनः) स्तोत्रस्य (पुरस्ताद् दी-)क्षन्ते ॥९॥ [१]

सप्त=क्षन्ते[2] ॥१॥ त्र्यहे पुरस्तात् सुतस्याह्नः[3] सुरां[4] कुर्वन्ति ॥२॥ सा[5] सुत्येनाह्ना संपद्यते[6] ॥३॥ अग्नीषोमीयस्य पशुपुरोडाशेन सह देवसुवाᳫं हवीᳫंषि निर्वपति अग्नये गृहपतये इत्यष्टावेतानि ॥४॥ प्रैषवान् पशुपुरोडाशः ॥५॥ अनुब्रूहि ॥६॥ य(-ज इतीतरेषाᳫं ह-)[7]विषामु(-पाᳫंशु ॥७॥ समानः प्रैषवान्) स्विष्टकृत्, समानीडा ॥८॥ उपहूतायामिडायां सविता त्वा प्रसवानाᳫं सुवताम् इत्येनमाह । °अग्निर्गृहपतीनां=पतीनाम् इति ॥९॥ ये देवा देवसुवः[8] स्थ इत्यस्य दक्षिणᳫं हस्तं गृह्णाति । °त इममामुष्यायण=ब्राह्मणानाᳫं राजा इति ॥१०॥ विष्णोः क्रमोऽसि वि=(विक्रान्तमसि इति विष्णुक्रमान् प्रक्रम्य वसन्ति ॥११॥ प्रमिध्यति कर्म ॥१२॥ प्रातःसवनी-)यैः (पशु-)पुरोडाशैः[9] सह बार्हस्पत्यश्चरुः श्रप्यते ॥१३॥ ते नैवाराः[10] सप्तदश शरावाः क्षीरे ॥१४॥ यस्मिन् कालेऽध्वर्युरपामर्धमेति[11] तस्मिन् काले प्रतिप्रस्थाता [12]पुनातु मे[12] परिस्रुतम् इति दक्षिणस्य हविर्धानस्यापरेणाक्षं वारेण[13] सते सुरां परि पुनाति । °सोमᳫं (सूर्यस्य) दुहिता (वा-)रेण शश्वता[14] तना इति ॥१५॥ आगत्याप उपस्पृश्य राजानमभिषुण्वन्ति ॥१६॥ प्रसिद्धं ग्रहा गृह्यन्त आऽऽग्रयणात् ॥१७॥ आग्रयणं गृहीत्वाऽतिग्राह्यान् गृह्णाति उपयामगृहीतोऽसि इति [15]पञ्चैन्द्रान् । °नृषदं[15] त्वा द्रुषदं भुवनसदमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा; उपयामगृहीतोऽस्यप्सुषद=गृह्णाम्येष=न्द्राय त्वा; उपयामगृहीतोऽसि पृथि=गृह्णाम्येष ते=न्द्राय त्वा; ये ग्रहाः पञ्चजनीनां=गृह्णाम्येष ते योनिरिन्द्राय त्वा इति ॥१८॥ व्यतिसर्पतः ॥१९॥ (पूर्वेणाक्षमध्वर्यु र-)[16]परेणाक्षं प्रतिप्रस्थाता सर्पति ॥२०॥ सप्तदश वायव्यान्यध्वर्युरादत्ते ॥२१॥ [२]

---

१. MHP °मुत्थानां. २. MHP यन्ते. ३. MHP °स्यान्नः. ४. P सुतां. ५. P या. ६. MHP °द्यन्ते. ७. MHP विष्णु for °विषामु°. ८. P देवासुव. ९. MHP °डाशयैः. १०. MHP नैवारः. ११. P °रपामेति. १२--१२. MHP पुनाकृते. १३. MHP वारणे. १४. M शाश्वाता, H शाखाता P शाश्वता. १५--१५. MHP पञ्चेन्द्रं द्दषदं. १६. MHP om.

सप्त=दत्ते, सप्तदशोपयामान् प्रतिप्रस्थाता ॥१॥ सोमग्रहानध्वर्युर्गृह्णाति, सुराग्रहान् प्रतिप्रस्थाता ॥२॥ पुरोऽक्षꣳ सोमग्रहानध्वर्युः सादयति पश्चादक्षं प्रतिप्रस्थाता ॥३॥ अया विष्ठा जनयन् कर्वराणि[1] इत्येकयाऽध्वर्युः सोमग्रहान् गृह्णाति। °स हि घृणिरुरु=तनूमैरयत। उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामि इति ॥४॥ पूर्वेण स्रुचमस्पृष्टꣳ सादयति एष ते योनिः प्रजापतये त्वा इति ॥५॥ कुविदङ्ग इत्येकया सुराग्रहान् प्रतिप्रस्थाता।° यवमन्तो=न जग्मुः। उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामि (इति)[2] ॥६॥ एष ते योनिः प्रजापतये त्वा इति सादयति ॥७॥ बृहस्पतये इति वा ॥८॥ पर्यायश एतान् ग्रहान् गृह्णीतोऽध्वर्युश्च प्रतिप्रस्थाता च, सप्तदशेतरः सप्तदशेतरः ॥९॥ अप उपस्पृश्याऽऽद्रवति प्रातप्रस्थाता ॥१०॥ मधु वाता ऋतायते इति हिरण्यपात्रेण मधुग्रहमध्वर्युर्गृह्णाति। °मधु क्षरन्ति सिन्धवः=षधीः। उपयामगृहीतोऽस्यद्भ्यस्त्वौषधीभ्यस्त्वा जुष्टं गृह्णामि (इति)[2] ॥११॥ एष ते योनिरद्भ्यस्त्वौषधीभ्यस्त्वा इति सादयति ॥१२॥ उक्थ्यं गृह्णाति ॥१३॥ ध्रुवं गृह्णाति ॥१४॥ प्रसिध्यति कर्माऽऽ[3]यूपस्य परिव्ययणात् ॥१५॥ षड्रशना यूपे परिव्ययति ॥१६॥ षट् स्वरूनवगूहति[4] ॥१७॥ [5]अथ इषे[5] त्वा इति चतुश्चत्वारिꣳशतं बर्हीꣳष्यादायोपाकरणीये हुत्वा पशूनुपाकरोत्याग्नेयं[6] छागमैन्द्राग्नं छागमैन्द्रं छागꣳ सारस्वतीं[7] मेषीं मारुतीं पृश्निं पष्ठौहीमध्यृषभम्[8] ॥१८॥ एते अगर्भिण्यौ स्याताम् ॥१९॥ सप्तदश प्राजापत्याञ्छागाञ्छ्यामानेकरूपान् पशूनुपाकृत्य निर्मन्थ्येन चरति ॥२०॥ अथ देवस्य त्वा सवितुः प्रसवे इति द्वाविꣳशतीꣳ रशना आदायापिदधाति[9] पशूननुपूर्वं नानादेवत्यान्[10], यत्राधिकामं प्राजापत्यान् ॥२१॥ रशनासु युनक्ति ॥२२॥ समानस्यां प्राजापत्यान् ॥२३॥ प्रोक्ष्य [11]वाजयत्यनुपूर्वं नानादेवत्यान्, यत्राधिकामं प्राजापत्यान् ॥२४॥ निपाय्योपोक्ष्य[12] निधाय पात्रमग्नये समिध्यमानायानुवाच आह ॥२५॥ अनूक्तासु सामिधेनीषु स्रुवेणाघारमाघार्याऽऽह अग्नीदग्निं त्रिः[13] संमृड्ढि इति ॥२६॥ स्रुग्भ्यामुत्तरम् ॥२७॥ असꣳस्पर्शयन्नतयाक्रम्य पशून् समनक्त्यनु-

१. MHP कुर्व°. २. MHP om. ३. MHP कर्म. ४. MHP स्वरूपनव°. ५-५. MHP अथेषते. ६. P अग्नये. ७. P सस्वतीं. ८. M °हीं मयृषम, H °हीं मध्यृषम. ९. P ददाति. १०. P देवत्या. ११. MHP वायय°. १२. MHP निधाया पोक्ष्य. १३. P तिस्रः.

पूर्वं नानादेवत्यान्, यत्राधिकामं प्राजापत्यान्[१] ॥२८॥ ध्रुवाᳶ समज्य (स्रुचौ)[२] सादयित्वा प्र(-वरं प्रवृणीते ॥२९॥ सीदति हो-)ता ॥३०॥ प्रसूतः स्रुचावादत्ते ॥३१॥ [३]प्रयाजान् यजति ॥३२॥ ओ[३] श्रावय इत्याह ॥३३॥ समिद्भ्यः[४] प्रेष्य प्रेष्य इति ॥३४॥ एकादशानूयाजान् यजति ॥३५॥ चतुर्थाष्ट-मयोः सर्वᳶ समानयते ॥३६॥ उपभृतोऽधि स्रुच्येकादशं परिशिष्य दशेष्ट्वा-ऽत्याक्रामति[५]॥३७॥ [६]स्वरुस्वधितिहस्तान् इति[६]॥३८॥नानैव नानादेवत्यानाᳶ (समानाः) प्राजापत्यानाम् ॥३९॥ नानादेवत्य(-नां नानाऽ-)नु सञ्चरन्ति ॥४०॥ अवगूह्य स्वरून् यथायतनᳶ स्रुचौ सादयित्वा पर्यग्नयेऽनुब्रूहि इत्याह[७]—उल्मुकपाणिः परिद्रवति ॥४१॥ पञ्चापाव्यानां यजूᳶषि जुहोति[८]= होतुराहुतिᳶ षष्ठीं जुहोति[९]=बर्हीᳶष्यध्वर्युर्वपाश्रपण्यः प्रतिप्रस्थाता ॥४२॥ (उल्मुकप्रथमा उदञ्चा=प्रियधाऽऽ)[१०] विशत[११] (इति वपाश्रपणीभ्यां)[१२] पशूनन्वारभन्ते ॥४३॥ पृथिव्याः संपृचः पाहि इति द्वाविᳶशतिं[१३] बर्हीᳶ-ष्युपास्यति ॥४४॥ तेषूपरि पशून् निक्षिणन्ति ॥४५॥ [३]

आग्नेयं छागमैन्द्राग्नं छागमैन्द्रं छागᳶ सारस्वतीं[१४] मेषीं मारुतीं पृश्निं षष्ठौहीम् ॥१॥ सहैव प्राजापत्य(-न् ॥२॥ आग्नेयस्यैवाध्वर्युर्वपया प्रथमया प्रतिपद्यतेऽनूचीरितरा)[१५] वपा आहरन्ति ॥३॥ (प्रत्युष्टᳶ रक्षः प्रत्युष्टा अरातयः इत्याहवनीयस्यान्तमेऽङ्गारे वपां निकू-)[१६]ड्यान्तरा यूपं चाहवनीयं चातिहृत्य दक्षिणत उदगावृत्तः प्रतिप्रस्थाता वपाᳶ श्रपयति ॥४॥ ताभ्यः वायो वीहि स्तोकानाम् इत्यध्वर्युर्द्वाविᳶशतिं बर्हीᳶष्युपास्यति ॥५॥ त्वामु ते दधिरे हव्यवाहम् इत्याग्नेयीमुत्तमां कृत्वा स्रुवाहुत्या(-ऽभि-जुहोति)। [१७]शृतं क(-र्तार=जुषस्व स्वाहा इति॥६॥ उपेतरा यच्छन्ति ॥७॥

---

१. MHP °पत्या. २. MHP om. ३-३. MHP प्राजापत्यो. ४. MHP समिध्यः and add प्रेष्यति after it. ५. MHP दशेष्वात्या°. ६-६. Ao.IV.207.17 : कस्वधिति। हस्तानिति. ७. MHP abr; see supra V.5.17-19. ८. MHP abr; see supra V.5.20-21. ९. MHP abr; see supra V.5.21-23. १०. MHP broken; cf. supra V.5.24-26. ११. MHP रिंशत. १२. Cf. supra V.5.26. १३. MHP °विंशतं. १४. MH सरस्वतीं. १५. Cf. BaudhŚS XI.5 : 70·3. १६. Cf. supra V.7.9. १७. MHP शताव.

ता विप्रुषोऽ-)भि पतन्ति ॥८॥ स्तोकेभ्योऽनुब्रूहि इत्याह[१] = पृषदाज्यमभिघार्याग्नेयीमेवोत्तमां कृत्वा स्रुवाहुत्याऽभिजुहोति ॥९॥ उपेतरा यच्छन्ति ॥१०॥ ता विप्रुषोऽभिपतन्ति ॥११॥ स्तोकेभ्योऽनुब्रूहि इत्याहान्त्याम् ॥१२॥ आज्यं च हिरण्यशल्कं च वपाया उपस्तृणीते ॥१३॥ नानैव नानादेवत्या(-नां वपाभिः) प्रचरन्ति यथा(-दैवतम्)[२] एकयैव प्राजापत्यानाम् ॥१४॥ वपाभिः प्रचर्य आपो हि ष्ठा मयोभुवः इति तृचेन मार्जयन्ते चात्वाले ॥१५॥ सꣳसर्पन्त्येवातः ॥१६॥ प्रसिध्यति कर्म ॥१७॥ प्रातःसवनीयैः पुरोडाशैः सह बार्हस्पत्यं चरुमासादयति ॥१८॥ प्रातःसवनीयानां पुरोडाशानामिष्ट्वा बृहस्पतयेऽनुब्रूहि इत्याहोपस्तीर्णाभिघारितं बार्हस्पत्यस्यादधानः ॥१९॥ होतेव तस्या अन्वाह ॥२०॥ होता यजति ॥२१॥ ओ श्रावय इत्याह ॥२२॥ बृहस्पतिं यज इति ॥२३॥ वषट्कृते जुहोति ॥२४॥ अनिष्टस्विष्टकृतमेतं[३] बार्हस्पत्यं प्रतिपराहरन्त्याग्नीध्रम् ॥२५॥ शूला मारुत्या[४] अनवदानीयानि[५] श्रपयितवा आह ॥२६॥ प्रसिध्यति प्रातःसवनम् ॥२७॥ प्रसिध्यति माध्यन्दिनꣳ सवनमा पवमानात् ॥२८॥ पवमानेन चरित्वा संप्रेष्यति अग्नीदग्नीन्विहर, बर्हिः स्तृणाहि, पुरोडाशाँ अलङ्कुरु, प्रतिप्रस्थातर्दधिसम्राजाऽऽद्रव, होतर्वदस्व यत्ते वाचम् इति ॥२९॥ दधिसम्राजा प्रचर्य मारुत्या[७] प्रचरति ॥३०॥ तस्य[६] दिशोऽनु द्वे होतूराहुती[७] जुहोति ॥३१॥ पञ्च[८] पवमाने व्याचष्टे ॥३२॥ पञ्च[८] वशाऽपिवान्यै[९] ॥३३॥ तया प्रचर्यावदानीयानि सोमग्रहेभ्य उपनिदधात्यनवदानीयानि[१०] शूलानि सुराग्रहेभ्यः ॥३४॥ माध्यन्दिनीयैः पुरोडाशैः प्रचरति ॥३५॥ तेषाꣳ[११] स्विष्टकृता (सह)[१२] बार्हस्पत्यस्य स्विष्टकृतं[१३] जुहोति ॥३६॥ समानोडा ॥३७॥ प्रसिध्यति कर्म[१४] ॥३८॥ सीदन्ति नाराशꣳसाः ॥३९॥ [४]

[ इति प्रथमोऽनुवाकः ]

---

१. See supra V.7. 13--19. २. HMP om. ३. MHP अग्निस्विष्ट°; thus Ao IV.166 : 61.1. ४. MHP माद्रुत्य; thus Ao.IV.166: 61.2. ५. M अनवदनी°, H अनवदिनी°, P अननी; thus Ao ibid. ६. MHP तस्यै; thus Ao.IV.167 : 61.7. ७. MHP °हुतीजु°. ८. M Ao.IV.167 : 61.8 : यं च. ९. M Ao.IV. 167 : 61.8 विधान्यै, HP विधान्तयै. १०. MHP °दानवदानि [ P °दानी ]. ११. Ao.IV.167 : 61.10 : सैषां. १२. MHP om. १३. Ao.IV 167 : 61.11 : °कृता; cf. BaudhŚS XI.7 : 75.2. १४. MHP ins यत् after कर्म.

सीदन्ति नाराशꣳसाः ॥१॥ सन्नेषु नाराशꣳसेषु तार्प्यं यजमानः[1] परिधत्ते ॥२॥ क्षत्रस्य योनिरसि इत्युष्णीषं पर्यस्यते दर्भमयम् ॥३॥ एतस्मिन् काले पत्नीं परिधापयन्ति ॥४॥ इन्द्रस्य वज्रोऽसि वार्त्रघ्नः इति रथमुपावहरति[2]। °त्वयाऽयं वृत्रं वध्यात् इति ॥५॥ वाजस्य नु प्रसवे मातरं महीम् इति पुरस्तात्प्रत्यञ्चमावर्तयन्ति[3]। °अदितिं[3] नाम वचसा करामहे। यस्यामिदं=साविषत् इति ॥६॥ तमपरेण सदो दक्षिणेन शालां दक्षिणापथे प्राञ्चꣳ स्थापयन्ति ॥७॥ अप्स्वन्तरमृतमप्सु भेषजम् इति त्रीनश्वान् पल्पूलयति। °अपामुत[4]=भवथ वाजिनः इति ॥८॥ वायुर्वा त्वा मनुर्वा त्वा इति प्रष्टिवाहिनं युनक्त्युत्तरतः प्रष्टी स्यात्। °गन्धर्वाः सप्त=जवमा दधुः इति ॥९॥ अपां नपादाशुहेमन् इत्येनान् संमार्ष्टि। [5]य ऊर्मिः[5]=वाजꣳ सेत् इति ॥१०॥ एतमनु रथा युज्यन्ताम् इत्याह ॥११॥ तमनु रथा युज्यन्ते पूर्वेण यूपमाजिपथे षोडश ॥१२॥ एष एवैषाꣳ सप्तदशः ॥१३॥ उत्तरं वेद्यन्तमनु सप्तदश [6]दुन्दुभीनासजति पश्चादाग्नीध्रात्[6] ॥१४॥ नाभिदघ्ने चात्वालस्यान्ते रथचक्रं निमिन्वन्ति ॥१५॥ उत्तरेणाग्नीध्रं प्रष्टिवाहिनं युनक्ति यज्ञस्य योगेन इति ॥१६॥ उत्तरेणाग्नीध्रं परीत्य जुहोति दाक्षिणानि ॥१७॥ दक्षिणा नोत्वा विष्णोः क्रमोऽसि इति विष्णुक्रमे रथमभ्येतः। °विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमसि इति ॥१८॥ अङ्क्‌ौ न्यङ्क्‌ौ इत्यस्य चक्रे संमृशतः। °अभितो रथं=पारयन्तु इति ॥१९॥ देवस्याहꣳ सवितुः प्रसवे इति नमस्कृत्य रथमातिष्ठति। °बृहस्पतिना वाजजिता वाजं जेषम् इति ॥२०॥ देवस्याहꣳ सवितुः प्रसवे इति रथचक्रं ब्रह्मा(-ऽऽरोहति। बृहस्पतिना वाजजि-)ता[7] वर्षिष्ठं नाकꣳ रुहेयम् इति ॥२१॥ देवस्याहꣳ सवितुः प्रसवे[8] इति ब्रह्माणं परेक्षमाणमध्वर्युर्यजमानं वाचयति। °बृहस्पतिना वाजजिता ब्रह्मणा वर्षिष्ठं नाकꣳ रुहेयम् इति ॥२२॥ अश्वाजनि इत्यश्वाजनीमादत्ते[9]। °वाजिनि वा=जय इति ॥२३॥ अर्वाऽसि इत्यश्वान् आक्षिपति[10]। °हयोऽसि (सप्तिरसि वाज्यसि इति ॥२४॥ अ-)न्ये दुन्दुभीनुप-

१. MHP °मानं. २. MHP रथमपा°. ३--३. MHP °मावर्तयदितिं [ HP °ति ]. ४. MHP °मृत. ५-५. MHP या ऊर्मी. ६-६. MHP दुन्दुभीनात्वन्नाग्नी. ७. Cf. BaudhŚS XI.7 : 75.11. ८. M प्रसह. ९. MHP °श्वाजिनमा°. १०. MH क्षवति, P क्षवती.

तिष्ठन्ति[1] ।।२५।। तान्[2] इन्द्राय वाचं वदत [3]इत्याह । [3]इन्द्रं वाजं=वाज-मजयत् इति ।।२६।। एवमेवैनानोत्तमादध्नन्नेत्यनुनिवर्तते रथः अग्नि-रेकाक्षरेण [4]वाचमुदजयत् इति[4] ।।२७।। सप्तदश हिरण्यशल्कानाजिसृद्भ्यः प्रयच्छति उज्जयतामुज्जयतु इत्येतैः ।।२८।। वाजिनो वाजजितः इत्येतानेव त्रीनश्वान्[5] बार्हस्पत्यं चरुमवघ्रापयति । [6]वाजꣳ सरिष्यन्तो[6] वाजं जेष्यन्तो बृहस्पतेर्भागमवजिघ्रत इति ।।२९।। अत्योऽसि इति दक्षिणायोग्यस्य कर्णं आ जपति । हयोऽसि सप्तिरसि वाज्यसि इति ।।३०।। [५]

आजिसृत आजिं धावत इति संप्रेष्यति । [7]दुन्दुभिसमाघाता दुन्दुभीन् समाहत, ब्रह्मन् वाजिनाꣳ साम गाय इति ।।१।। एतत् कुर्वन्ति ।।२।। आजिसृत आजिं धावन्ति ।।३।। दुन्दुभिसमाघाता दुन्दुभीन् समाघ्नन्ति ।।४।। आवेष्ट्यमानो रथचक्रे [7]ब्रह्मा वाजिनाꣳ साम[7] गायते ।।५।। वाजिनो वाजं धावत इत्यनुमन्त्रयते ।।६।। मरुतां प्र=गच्छत इति काष्ठां गमयति ।।७।। वाजेवाजेऽवत वाजिनो नः इति चतसृभिरावर्तयति । [8]धनेषु विप्रा=आपनीफणत् इति ।।८।। उत स्मास्य द्रवतस्तुरण्यतः इति चतुर्गृहीतेनावच्छिन्नहोममाहवनीये जुहुयाद् यदि द्रवतामवच्छिद्यात्, उत स्मास्य द्रवतः इति यद्यद्रवताम् । [8]पर्णं न वे=तरित्रतः[8] स्वाहा इति ।।९।। आ मा वाजस्य प्रसवो जगम्याद् इति रथविमोचनीयां[9] जुहोति । [9]आ द्यावापृथिवी=गम्यात् स्वाहा इति ।।१०।। विमुञ्चन्त्यैतस्याꣳ हुतायाꣳ रथान् ।।११।। वाजिनो वाजजितः इत्येतेषामेव त्रयाणामश्वानां बार्हस्पत्यस्य चरोरुद्धृत्य दक्षिणेष्वक्षिकटेषु निमार्ष्टि । [10]वाजꣳ ससृ=निमृड्ढ्वम् इति ।।१२।। इयं वः सा सत्या [10]सन्धाभूद् इति[10] दुन्दुभीन् विमुञ्चन्ति[11] । [11]यामिन्द्रेण=वाजं[12] विमुञ्चध्वम् इति ।।१३।। समाहरन्त्यस्मै हिरण्यशल्कानाजिसृतः ।।१४।। तेषु समाह्रियमाणेषु अग्निरेकाक्षरेण वाचमुदजैषीत् इति सप्तदश स्रुवाहुतीर्जुहोति ।।१५।। उदङ्यिष्टामुदजयिषुः इत्येताः ।।१६।। अत्रैव यत्सतेऽतिशिष्यते तत्[13] सुरोपयामं कृत्वा वाजसृद्भ्यः[14] प्रयच्छति ।।१७।। यत्र वाजमुदजैष्टैतेन वस्तं

---

१. MHP दुन्दुभा भवतिष्ठति [ P भवति तिष्ठ]. २. MHP तम्. ३–३. MHP °त्याहतीन्द्रं. ४–४ MHP वाचमुच्चयत्विति [ M °मुञ्च° ]. ५. MHP क्रनश्वान्. ६. MHP सरिष्यता. ७–७. MHP ब्रह्मवादिनां समा. ८. MP तरित्रता, H °त्रते. ९. MH °नीया. १०–१०. MP सन्वाभूरदिति, H °भूरदि. ११. MHP °मुञ्चति. १२. P वाचं. १३. MHP तं. १४. MHP °सृद्भ्यां.

परिक्रीणामि इत्येतैश्च हिरण्यशल्कैर्मधुग्रहेण च चात्वालस्यान्तेऽवरूढं ब्रह्माणं यजमान उपसीदति ॥१८॥ [६]

तस्य ब्रह्मा भक्षयति मनसा त्वा वाचं भक्षयामि; प्राणेन चक्षुषा त्वा; श्रोत्रेण भक्षयाम्यायुषे इति ॥१॥ एतच्च हिरण्यꣳ स्वरथं च ब्रह्मणे ददाति ॥२॥ व्यादिशत्यैन्द्रात्रथान्[1] ऋत्विग्भ्यः ॥३॥ यजमानस्यैव हिरण्यशल्का भवन्ति यथा राजक्रयणानि ॥४॥ उत्तरं वेद्या अꣳसमृत्विजो व्रजन्ति दक्षिणाꣳ श्रोणिमाजिसृतः ॥५॥ आगत्याप उपस्पृश्य सोमग्रहाꣳश्चावदानीयानि चोपस्थापयतः[2]॥६॥तान् ऋत्विग्भ्य उपधत्ते संपृच स्थ सं मा भद्रेण पृङ्क्त इति ॥७॥ सुराग्रहाꣳश्चानवदानीयानि च वाजसृद्भ्यः वि पृच स्थ वि मा पाप्मना पृङ्क्त इति ॥८॥ आरभमाणा[3] ऋत्विज आयन्ति ॥९॥ न कतरेषाञ्चन भक्षयन्ति ॥१०॥ विमाथं कुर्वन्त आजिसृतः ॥११॥ ते[4] सुराग्रहाणां भक्षयेयुः मनुरिह देवानजनयन् मनुर्विश्वमिदं जगत् । मनुरिह ज्योतिरभवत्तापसः पृथिवीक्षितः इति ॥१२॥ यदि न भक्षयेयुरेव-मेवाभितो मार्जालीयं निनयेयुरिति ॥१३॥ एवमेवाभितो मार्जालीयं निनयन्ति ॥१४॥ जीवꣳ राजानं गायत इत्याह ॥१५॥ ते[5] ह मनुमेव[5] गायेयुः ॥१६॥ आगत्य वाजाय स्वाहा इति द्वादश वाजप्रसवीयानि जुहोति । (°प्रसवाय स्वाहा); अपिजाय = अधिपतये स्वाहा इति ॥१७॥ दध्ना सर्वौ-षधꣳ संयौति ॥१८॥ वाजस्येमं प्रसवः सुषुवे अग्रे इत्यौदुम्बरेण स्रुवेण सप्तान्नहोमान् जुहोति ॥१९॥ सोमꣳ राजानम् इति पात्रिया सप्तमीं जुहोति, स्रुवेणोपयच्छत्यभिषेनाय[6] । °वरुण( मग्निमन्वारभामहे = बृहस्पतिम् इति ॥२०॥ जुहोति षट् पार्थानि)[7] ॥२१॥ जुहोति षड्[8]भूता(-नाम-)वेष्टीः ॥२२॥ पूर्वेण हविर्धाने अपरेणाहवनीयं प्राचीनग्रीवमुत्तरलोम कृष्णाजिनमास्तृणाति ॥२३॥ तस्मिन्नुपविशति यजमानः[9] प्रागाधृत्त उपस्थं कृत्वा ॥२४॥ तं देवस्य त्वा सवितुः प्रसवे इत्यौदुम्बरेण स्रुवेण पुर(-स्तात् शीर्षतोऽभिषिञ्चति । °अश्विनो = )म्याꣳ[10] ° सरस्व(-त्यै वा-)चो = भिषिञ्चामि

१. MHP °शतीन्द्रात्र°. २. MHP चादावयतः ३. MHP आहरमाणा, Ao.IV.162 : 51.7 : आर(म)माणा. ४. MHP तेन. ५–५. MHP ते हनुमेव. ६. MHP स्रुवेणाप°. ७. See supra VIII. 50.5–6. ८. H वषट्. ९. MHP °मानं. १०. Cf.supra VIII.50.10.

इति ब्राह्मणम्; इन्द्रस्य त्वा साम्ना = षिञ्चामि इति राजन्यम्; बृहस्पतेस्त्वा सा = षिञ्चामि इति राजानम् ॥२५॥ सर्वेणैव सहाभिषिञ्चेत्[1] ॥२६॥ आमुखादन्ववस्रावयति ॥२७॥ षडेत्र पार्थानि जुहोति, षड् भूताना(-मवेष्टीः ॥२८॥॥ अथ यूपमायातयति यजमानायतनादु-)[2]दीचीम् ॥२९॥ सप्तदश-भिर्वासोभिर्यूपो वेष्टितो भवति ॥३०॥ तूपरं चतुरश्रितं गोधूमस्य चषालं पर्यस्तं भवति ॥३१॥ आनयन्ति[3] पत्नीम् ॥३२॥ तामु त्वाह यजमानः जाय एहि सुवो (रोहाव इति)[4] ॥३३॥ रोहावहि सुवः इति साऽऽह ॥३४॥ आ(-युर्यज्ञेन कल्पताम्) इति प्रतिप्रस्याताऽऽरोहयेदितीदम् । °प्राणो यज्ञेन = यज्ञो यज्ञेन कल्पताम् इति ॥३५॥ हꣳसः शुचिषद् इति चषालेनाभि-मिमीते[5] । °वसुरन्तरिक्षस=बृहत् इति ॥३६॥ सुवर्देवाँ अगन्म इत्येनां[6] वाचयति । °अमृता अभूम = राय(-स्पोषः इति ॥३७॥ ऊष-)पुटेन अन्नाय त्वा (इति पुरस्तादध्वर्युः) अन्नाद्याय त्वा इति दक्षिणतो ब्रह्मा वाजाय त्वा इति पश्चाद्धोता वाजजित्यायै त्वा इत्युत्तरत उद्गाता सं प्रविध्यन्ति ॥३८॥ ऋत्विजश्चानृत्विजश्चैतस्मिन् सरजस एतीत्याहुः ॥३९॥ यद्येति आयुर्यज्ञेना-क्लृपत् इति । °प्राणो यज्ञेन=यज्ञो यज्ञेना-)क्लृपत्[7] इत्येतैः ॥४०॥ अमृतमसि इति शतमाने प्रतितिष्ठति ॥४१॥ पुष्टिरसि इति बस्ताजिने ॥४२॥ प्रजननमसि इति पृथिव्याम् ॥४३॥ एतस्मिन् काले दक्षिणेनाहवनीयमौदुम्ब-र्यासन्द्युपक्लृप्ता भवत्येतेनैव कृष्णाजिनेनास्तीर्णा ॥४४॥ तामारोहति यजमानः ॥४५॥ तस्यामुपविशति प्राङावृत्त उपस्थं कृत्वाऽन्ततः ॥४६॥ कृष्यै त्वा इत्याददते[8] ॥४७॥ क्षेमाय त्वा इति पूर्वेण सदो बिलं निदधाति ॥४८॥ इन्द्राय मरुत्वतेऽनुब्रूहि इति ॥४९॥ प्रसिद्धम् त्रिभिर्मरुत्वतीयैश्च-रति ॥५०॥ दक्षो राजन् इति मरुत्वतीयस्य भक्षम् ॥५१॥ प्रत्यवरोहति ॥५२॥ माहेन्द्रमन्वतिग्राह्या हूयन्ते पञ्चैन्द्राः ॥५३॥ तेषां भक्षः अस्मासु वाचमिन्द्रो दधात्वस्मासु वाचं देव इन्दुर्दधात्वस्मान् राय उत यज्ञाः सुवीराः[9] सचन्तामुपहूतो भक्षो मधुमाँ इन्द्रियावान् इति ॥५४॥ प्रसिध्यति माध्यन्दिनꣳ सवनम् ॥५५॥ प्रसिध्यति तृतीयसवनमाऽऽग्रयणात् ॥५६॥

---

१. P. षिंचदा°; see VIII.50.12. २. Cf. BaudhŚS XI.11 : 80.1–2; VaikhŚS XVII.14 : 245.13–14. ३. MHP नयन्ती. ४. MHP om. ५. MHP °नाभिमतिमिमीते. ६. MHP इत्येनं. ७. MHP क्लृव°. ८. P °ददे. ९. H oms.

आग्रयणं गृहीत्वाऽऽयतने पशुभिः प्रचरति ॥५७॥ तेषां नाना मनोता नाना हवीꣳषि नाना प्रत्यभिमर्शा नानादेवत्यानाम् ॥५८॥ समानमेतत् प्राजापत्यानाम् ॥५९॥ सर्वꣳ समानमेषां वनस्पतिः स्विष्टकृद्दिश इडेति ॥६०॥ उक्थानि प्रणयन्ति ॥६१॥ प्रसिध्यन्त्युक्थानि ॥६२॥ षोडशिनं प्रणयति ॥६३॥ प्रसिध्यति षोडशी ॥६४॥ एवꣳ स होतुश्चमसमनून्नयध्वम्[1] इत्याहाद्रवन्नध्वर्युः । °उन्नेतः सोमं मातिरीरिचः इति ॥६५॥ चतुर्गृहीतेनोत्तमꣳ सावित्रꣳ हुत्वा प्र ते नामानि शिपिविष्ट वोचम् इत्यप उपस्पृश्य ग्रहानभिमृशतः[2] । °अद्य सुशिप्र सुदिनत्वे अह्नां[3] पिब सोमं बृहता संविदानो[4] वि विष्णो त्रीणि भुवना[5] क्रमस्व इति ॥६६॥ प्रस्तरमादाय स्तोत्रेण द्रवति ॥६७॥ बृहतान्त्येन स्तुवते छन्दोगाः[6] ॥६८॥ प्रत्यागृणाति ॥६९॥ एतदतिरिक्तमुक्थम् उक्थं वाचीन्द्राय त्वा (इति)[7] द्रवति ॥७०॥ एहि यजमान इत्युक्त्वाऽध्वर्युः प्रपद्य हविर्धाने एतान् ग्रहान् व्यपनयते[8] चमसेषु दशदशसु सप्त होतृचमसेषु[9] ॥७१॥ होतृचमनमन्वारभ्याश्रावयति ॥७२॥ ओ श्रावय इत्याह ॥७३॥ उक्थशा यज सोमानाम्[10] इति ॥७४॥ वषट्कृते जुह्वति ॥७५॥ अनुवषट्कृते जुह्वति ॥७६॥ होतुराहुत्या स जुहोति ॥७७॥ आयन्ति ॥७८॥ भक्षयन्ति अयं ते विष्णो मधुमान् देव भक्षो यं पीत्वा व्यक्रमथा[11] वरीयः[12] । त्रेधा पीत्वोरुगाय सोममात्मा पिता प्राणभृन्मेऽसि पीतः । वर्चोदां त्वा तनूदां पयोदां स्वदितं त्वा शिपिविष्टवन्तꣳ साम्राज्याय[13] प्रसुतं भक्षयामि इति ॥७९॥ [14]सर्वभक्षा अग्नीत्प्रसूता[15] मार्जयन्ते॥८०॥ हिन्व[15] मे गात्रा हरिवः इत्यात्मानं प्रत्यभिमृशन्ते ॥८१॥ पुनर्मे अश्विना युवं चक्षुराधत्तमक्ष्योः[16] इत्यग्नीदौपयजानङ्गाराना[17]=होतुर्धिष्णिये निवपति ॥८२॥ द्वाविꣳशत्या गुदैरुपयष्टोपसीदति ॥८३॥ द्वौ द्वावुपयजि प्रास्यति ॥८४॥ द्वाविꣳशत्या विष्कलीभिः पत्नीः संयाजयन्ति ॥८५॥ प्रसिध्यति कर्म ॥८६॥ सन्तिष्ठते वाजपेयः ॥८७॥ न कश्चन प्रत्यवरोहेदित्याहुः[18] साम्राज्यं नत्वेति ॥८८॥ [७] [ इति द्वितीयोऽनुवाकः ]

---

१. MP मरून्न°. २. MHP ग्रहा°. ३. MH अन्नां. ४. MHP °दाना. ५. MHP भुवनः. ६. MHP छन्दोगां. ७. MHP om. ८. MHP नयतः. ९. MHP °चमसे. १०. MHP सोमानम्. ११. P °क्रमावथा. १२. MHP वरीया. १३. M संम्राज्या°, H सम्राज्या°, P संराज्या°. १४-१५. MHP °भक्ष्याग्नोत्प्रसूता इति. १५. P पिन्व. १६. P °रादत्त°. १७. MHP abr; see V. 9.28. १८. MHP °रोहेत्या°.

तदाहुर्—न वाजपेययाजी कञ्चन प्रत्यवरोहेदप्रत्यवरोही हि भवति इति ॥१॥ 'तदु वा' आहुः–अपि वै स पुरुष आगच्छति यो न शक्योऽप्रत्यवरोहणाय भवत्याचार्यो वा दीक्षितो वा राजा वा पिता वा ॥२॥ तस्योपक्लृप्तं भवति परिमण्डलं चर्मकूर्चः षडुपानहो द्वाभ्यामन्तःशालं चरति, द्वाभ्यामग्नीन् परिचरति, द्वाभ्यामरण्यमुच्चरति ॥३॥ स यत्र (प्रत्यवरोहणा-)य भवति तदेतत् परिमण्डलं चर्म दक्षिणत आहवनीयस्योपविशति ॥४॥ काममुपमुच्यास्ते कामं निर्मुच्य ॥५॥ स एवमेव चरत्या प्रत्यवरोहणीयात् ॥६॥ स एतस्मिन्नेव पक्ष उत्तरे वा प्रत्यवरोहणीयेन यजते ॥७॥ जुष्टे[२] देवयजने शालां[३] मिन्वन्ति ॥८॥ तस्योपक्लृप्ता [४]भवन्त्यौदुम्बर्यासन्दो कशिपुकूर्चो[४] दीक्षणीयं[५] निर्मन्थ्यम् ॥९॥ दक्षिणेनाहवनीयमौदुम्बरीमासन्दीं निदधाति ॥१०॥ तस्यां कशिपुकूर्चमास्तृणाति ॥११॥ तामारोहति ॥१२॥ यजमानोऽन्वारभते ॥१३॥ अन्वारब्धे जुहोति पृथिव्या अधि वनस्पतिः वनस्पतेरन्तरिक्षमूर्ध्वमुत्सर्पंतारुह स्वाहा इति ॥१४॥ अपोद्धरन्त्यासन्दीम् ॥१५॥ कशिपावासीनोऽन्वारभते ॥१६॥ अन्वारब्धे जुहोति अन्तरिक्षाद्दिवमगन्दिवो नाकमगन्नधि दिवो नाकस्य पृष्ठात् सुवर्ज्योतिरगामहमूर्ध्वमुत्सर्पंतारुह स्वाहा इति ॥१७॥ अपोद्धरन्ति ॥१८॥ कशिपुकूर्चे आसीनोऽन्वारभते ॥१९॥ अन्वारब्धे जुहोति प्रेह्यभीहि धृष्णुहि न ते वज्रो नि यꣳसते इन्द्र नृम्णꣳ हि ते शव[६] ऊर्ध्वमुत्सर्पंतारुह स्वाहा इति ॥२०॥ प्रसिद्धं दीक्षते ॥२१॥ [८]

प्रसिद्धं दीक्षते ॥१॥ स यत्र राजानं प्रत्यपोर्णुते तदेते उपानहौ निर्मुच्येते ॥२॥ उत्करे[७] व्यस्यति ॥३॥ प्रसिद्धꣳ सन्तिष्ठत एष चतुष्टोमोऽग्निष्टोमः ॥४॥ तस्य द्वादशशतं दक्षिणाः ॥५॥ तासां यच्छतꣳ[८] शतायुः पुत्रः[९] शतेन्द्रिय आयुष्येवेन्द्रिये प्रतितिष्ठति ॥६॥ अथ यत् द्वादश (स्तोत्राणि)[१०] द्वादश मासाः संवत्सरः संवत्सर[११] एव प्रतितिष्ठति ॥७॥ तदाहुः प्र वा एषोऽस्माल्लोकाच्च्यवते यो वाजपेयेन

---

१–१ MHP तदुपा, Ao IV. 168:62.20: तद्. २. MHP जुष्ट॰ ३. MHP शाला. ४-. ४MHP भवत्यौदुम्बर्योसन्दीपक॰. ५. MHP ॰णीयां. ६. MHP शप. ७. H oms. ८. MHP यच्छतां. ९. P twice. १०. MHP om. ११. H oms.

यजते ॥८॥ आजिं धावन्ति ॥९॥ यूपं रोहति ॥१०॥ स यत्प्रत्यवरोहणीयेन न यजेत पराङमुं लोकमारोहेत् प्रमायुकः स्यात् ॥११॥ अथ यदेता आहुतीर्न जुहुयादपि ह तस्माल्लोकात् न प्रत्यवेयाद् योऽस्य वाजपेयाभिजितः ॥१२॥ स यत्प्रत्यवरोहणीयेन यजतेऽस्मिन्नेव तेन[१] लोके प्रतितिष्ठति, नार्तिमार्च्छति, सर्वमायुरेति ॥१३॥ अथ यदेता आहुतीर्जुहोति तेन तस्माल्लोकात्प्रत्यवैति योऽस्य वाजपेयाभिजितः ॥१४॥ तस्य द्वादश स्तोत्राणि द्वादश मासाः संवत्सरः, संवत्सर एव प्रतितिष्ठति ॥१५॥ तस्य चतुर्विᳬशतिः स्तुतशस्त्राणि चतुर्विᳬशतिरर्धमासाः संवत्सरः, संवत्सर एव प्रतितिष्ठति ॥१६॥ अथ यच्चतुष्टोमोऽग्निष्टोमश्चतस्रो दिशो दिक्ष्वेव प्रतितिष्ठति दिक्ष्वेव प्रतितिष्ठति ॥१७॥ [९] [ इति तृतोयोऽनुवाकः ]

इति वाजपेयः समाप्तः

[ इति नवमः प्रपाठकः ]

१. Ao IV. 169:62.13 oms.

## [ अथ दशमः प्रपाठकः ]

## [ अथ राजसूयः ]

शिशिरे कक्षमुपोषति[1] ॥१॥ ता वसन्ता प्रसुवो भवन्ति ॥२॥ पञ्चदशाह्नः[2] ॥३॥ फल्गुभिः पौर्णमासीति दीक्षते ॥४॥ एका दीक्षा, तिस्र उपसदः पञ्चम्यां प्रसुतः ॥५॥ सन्तिष्ठत एष त्रिवृदग्निष्टोमो हिरण्यदक्षिणः पवित्र दशाह्नः[3] ॥६॥ फल्गुभिः पौर्णमासीत्यनुमत्यै पुरोडाशमष्टाकपालं निर्वपति ॥७॥ ये प्रत्यञ्चः शम्याया अवशीयन्ते तान्नैर्ऋतमेककपालं करोति ॥८॥ यदि नावशीयेरन्नपोहेत् ॥९॥ कालायै वा काण्डे उपकल्पयते विस्रꣳसिकायै वा ॥१०॥ इमां दिशं दक्षिणां प्रतीचीꣳ स्वकृतं[4] वेरिण[5]ꣳ स्पाशयन्ते प्रदरं[6] वा ॥११॥ उदपात्रं च नैर्ऋतेनोत्परायन्ति ॥१२॥ स्वकृत इरिण एकोल्मुकꣳ सादयित्वोप समादधाति प्रदरे वा ॥१३॥ कालायै वा काण्डाभ्यां विस्रꣳसिकायै वा ॥१४॥ एष ते निर्ऋते भागः इत्यङ्गुष्ठयोराधाय जुहोति । भूते हविष्मत्यसि मुञ्चेमम्ꣳहसः स्वाहा इति ॥१५॥ कृष्णं वासः कृष्ण(-तूषं)[7] दक्षिणा ॥१६॥ (अपः) परिषिच्याप्रतीक्षमायन्ति ॥१७॥ स्वाहा (न-)मो य इदं [8]चकार इति[8] पुनरेत्य गार्हपत्ये स्रुवाहुतिं जुहोति ॥१८॥ आनुमतेन प्रचरति ॥१९॥ धेनुं ददाति ॥२०॥ सन्तिष्ठत एषेष्टिः ॥२१॥ वसन्ति ॥२२॥ प्रातरादित्यं चरुं निर्वपति ॥२३॥ वरं ददाति ॥२४॥ सन्तिष्ठत एषेष्टिः ॥२५॥ वसन्ति ॥२६॥ प्रातरा(-ग्नावैष्णवमेकादशकपालं निर्वपति ॥२७॥ वामनं)[9] वहीं द(-दाति ॥२८॥ सन्तिष्ठत) एषेष्टिः ॥२९॥ वसन्ति ॥३०॥ प्रातरग्नीषोमीयमेकादशकपालं निर्वपति ॥३१॥ हिरण्यं ददाति ॥३२॥ सन्तिष्ठत एषेष्टिः ॥३३॥ वसन्ति ॥३४॥ प्रातरैन्द्रमेकादशकपालं निर्वपति ॥३५॥ ऋषभं वहीं ददाति ॥३६॥ सन्तिष्ठत एषेष्टिः ॥३७॥ वसन्ति ॥३८॥ प्रातराग्नेयमष्टाकपालं निर्वप-

---

१. M °मुपौष°, H कक्षामुपौ°. २. MP दशाहुतं. ३. MHP दश इत्. ४. H twice. ५. MH वेरणं, P वैरणं. ६. MHP प्रभरं. ७. MHP om; cf BaudhŚS XII.1:86.3. ८–८. MHP च करोति. ९. Cf BaudhŚS XII. 2:86.9.

त्ये(-न्द्रं दधि ।।३९।। ऋषभं वहीं ददाति ॥४०।। सन्तिष्ठत एषेष्टिः ।।४१।। वसन्ति ।।४२।। प्रातरैन्द्राग्नं द्वादशकपालं निर्वपति)[१] वैश्वदेवं चरुम् ।।४३।। प्रथमजं वत्सं ददाति ।।४४।। स[२]=प्रातः सौम्यं श्यामाकं चरुं निर्वपति ।।४५।। वासो ददाति ।।४६।। सन्ति[३]=प्रातः सरस्वत्यै चरुं निर्वपति ।।४७।। वत्सतरीं ददाति।।४८।। सन्ति[४]=न्ति ।।४९।। प्रातः सरस्वते चरुं निर्वपति।।५०।। वत्सतरं ददाति।।५१।।सन्तिष्ठत ए(-षेष्टिः।।५२।। वसन्ति ।।५३।। चातुर्मास्या-)न्यधिगच्छेयुः ।।५४।। समानमहः[५] सारस्वताभ्यां यजते ।।५५।। आरम्भणीययेष्ट्या[६] यदि नाभिप्राप्नुयुरन्वहꣳ [७]सारस्वताभ्याभिष्ट्वोत्तरे द्युरारम्भणीययेष्ट्या[८] यजते ।।५६।। तदहः प्र(-चर्य) सन्ति-(ष्ठते) न यजते ।।५७।। वसन्ति ।।५८।। प्रातः पौर्णमासेन यजते ।।५९।। वसन्ति ।।६०।। प्रातरिन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं निर्वपति ।।६१।। तस्य प्रक्षतशकल इध्मः ।।६२।। वसन्ति ।।६३।। प्रातरिन्द्रायाꣳ-होमुचे पुरोडाशमेकादशकपालं निर्वपति ।।६४।। तस्याप्र(-क्षतशकल इध्मः ।।६५।। वसन्ति ।।६६।। एतान्यहानि वैश्वदेवेनेष्ट्वैताभ्यामेव हविर्भ्यां) [९]चतुरो मासो[९] यजते ।।६७।। अमावास्यायामेवामावास्यं यजते, पौर्णमास्यां पौर्णमासीम् ।।६८।। अधिगच्छति वरुणप्रधासान् ।।६९।। तैर्यजते ।।७०।। तैरिष्ट्वा श्वेतैर्युक्तꣳ श्वेताभिधानꣳ रथं ददाति सुत्राम्ण एषा दक्षिणा ।।७१।। एषा तस्य योनिर्निर्नयनस्या(-तिप्रैति ।।७२।। एता-)भ्यामे(-व हविर्भ्याꣳ सर्वमाश्विनं यजते ।।७३।। अधि-)गच्छ(-ति सा-)कमेधान् ।।७४।। तैर्यजते ।।७५।। तैरिष्ट्वा कृष्णैर्युक्तमनभिहितꣳ रथं ददात्यꣳहोमुच एषा दक्षिणा ।।७६।। एषा तस्य योनिर्निर्नयनस्यातिप्रैति ।।७७।। एताभ्यामेव हविर्भ्याꣳ सर्वं कार्तिकं यजते ।।७८।। अधिगच्छति शुनासीरीयम् ।।७९।। तेन यजते ।।८०।। तेनेष्ट्वा द्वादशगवꣳ (सीरं दक्षिणाऽध्वर्यं-)वे[१०] ददाति ।।८१।। (एषा तस्य योनिर्निर्नयनस्या-)[११]तिप्रैति ।।८२।। एताभ्यामेव हविर्भ्याꣳ

---

१. See TS I. 8.10–11. २. MHP abr; see above S 21–22. ३. MHP abr; ibid. ४. MHP abr; ibid. ५. MHP समागमहः. ६. MHP °णीययापेष्ठ्य. ७. MH सर°. ८. MHP °णीययष्ट्या. ९-९. MHP य्यापरो. १०. See TS I.8.7.1. ११. MHP om; मिप्रैति for तिप्रैति.

सर्वं च मार्गशीर्षं यजते तैषस्य च पञ्चविंꣳशतिꣳ रात्रीः ॥८३॥ अथेन्द्रतुरीयꣳ हविर्निर्वपत्याग्नेयमष्टाकपालम् ॥८४॥ [१]

रौद्रं गावीधुकं[1] चरुमैन्द्रं दधि वारुणं यवमयं चरुम् ॥१॥ वहिनीं धेनुं ददाति ॥२॥ सन्तिष्ठत एषेष्टिः ॥३॥ वसन्ति ॥४॥ प्रातर्यंतरस्यैतयोर्हविषः कालो भवति तस्य परिहिते प्राशित्र आहनीयस्य प्रथयित्वाऽङ्गारान् पञ्चेध्मानत्यादधाति पालाशं पुरस्तान्नैय्यग्रोधं[2] दक्षिणत आश्वत्थं पश्चादौदुम्बरमुत्तरतः प्लाक्षं[3] मध्ये ॥५॥ तान् ये देवाः पुरःसदः इति पञ्चभिः पञ्चगृहीतेनाभि जुहोति। ([4]अग्निनेत्रा दक्षिणसदो यमनेत्राः पश्चात्सदः सवितृनेत्रा उत्तरसदो वरुणनेत्रा उपरिसदो वृहस्पतिनेत्रा रक्षोहणस्ते नो पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा इति)[4] ॥६॥ समूढꣳ रक्षः इत्येनां मध्यममुपदधाति। [5]सन्दग्धꣳ रक्ष इदमहꣳ रक्षोऽभि[5] सं दहामि इति ॥७॥ अग्नये रक्षोघ्ने[6] स्वाहा इति पञ्च स्रुवाहुतीर्जुहोति। [7]यमाय रक्षोघ्ने स्वाहा, सवित्रे रक्षोघ्ने स्वाहा, वरुणाय "रक्षोघ्ने स्वाहा", वृहस्पतये रक्षोघ्ने स्वाहा, वृहस्पतये दुवस्वते रक्षोघ्ने स्वाहा इति ॥८॥ प्रष्टिवाहिनꣳ रथं ददाति ॥९॥ सन्तिष्ठत एषेष्टिः ॥१०॥ एतस्यै सꣳस्थामन्वपामार्गसक्तूꣳश्चोपकल्पयते पालाशं च स्रुवम्[8] ॥११॥ इमां दिशमुत्तरां प्रतीचीꣳ स्वकृतं वेरिण[9]ꣳ स्पाशयन्ते प्रदरं[10] वा ॥१२॥ उदपात्रं चापामार्गसक्तुभिरुत्परायन्ति ॥१३॥ स्वकृत इरिण[11] एकोल्मुक[12]ꣳ सादयित्वोपसमादधाति प्रदरे वा ॥१४॥ देवस्य त्वा सवितुः प्रसवे इति पालाशेन स्रुवेणापामार्गसक्तून् जुहोति। [13]अश्विना बाहुभ्यां—भ्याꣳ रक्षसो वधं जुहोमि स्वाहा इति ॥१५॥ हतꣳ रक्षोऽवधिष्म[13] रक्षः इति स्रुवं प्रक्षिणोति ॥१६॥ यद्धस्ते तद्ददाति ॥१७॥ अपः परिषिच्याप्रतीक्षमायन्ति ॥१८॥ एतावदेवैतदहः[14] कर्म भवति ॥१९॥ वसन्ति ॥२०॥ प्रातर्देविकाहवीꣳषि निर्वपति धात्रे पुरोडाशं द्वादशकपालम् अनुमत्यै चरुꣳ राकायै चरुꣳ सिनीवाल्यै चरुं कुह्वै चरुम् ॥२१॥ मिथुनौ गावौ

---

१. P गावीधुं. २. MP °न्नय°. ३. ३MH प्लाकं. ४. MHP om. ५. MHP रक्षोभिः. ६. MH रक्षो मेघ्न. ७–७. MHP om. ८. MHP ध्रुवम्. ९. M वैरिणं, H वैरणं, P वेरणं (corrected as वैरणं in red ink). १०. MHP प्रमरं. ११. P इरिणो. १२. MP एकोयुकं, P °मुकं. १३. MP वधिष्ट. १४. MHP तदहं.

 


ददाति ॥२२॥ सन्तिष्ठत एषेष्टिः ॥२३॥ वसन्ति ॥२४॥ प्रातस्त्रिषंयुक्तानां[1] प्रथमꣳ हविर्निर्वपति—आग्नावैष्णवमेकादशकपालमैन्द्रावैष्णवमेकादशकपालं वैष्णवं त्रिकपालम् ॥२५॥ वामनं वहीं ददाति ॥२६॥ सन्तिष्ठत एषेष्टिः ॥२७॥ वसन्ति ॥२८॥ प्रातस्त्रिषंयुक्तानां द्वितीयꣳ[2] हविर्निर्वपति——अग्नीषोमीयमेकादशकपालमिन्द्रासोमीयमेकादशकपालꣳ सौम्यं चरुम् ॥२९॥ बभ्रुं ददाति ॥३०॥ सन्तिष्ठत एषेष्टिः ॥३१॥ वसन्ति ॥३२॥ प्रातस्त्रिषंयुक्तानां तृतीयꣳ हविर्निर्वपति—सौमापौष्णं चरुमैन्द्रापौष्णं चरुं पौष्णं चरुम् ॥३३॥ श्यामं ददाति ॥३४॥ सन्तिष्ठत एषेष्टिः ॥३५॥ वसन्ति ॥३६॥ प्रातर्वैश्वानरं द्वादशकपालं निर्वपति ॥३७॥ हिरण्यं ददाति ॥३८॥ सन्तिष्ठत एषेष्टिः ॥३९॥ वसन्ति ॥४०॥ प्रातर्वारुणं यवमयं चरुं निर्वपति ॥४१॥ अश्वं ददाति ॥४२॥ सन्तिष्ठत एषेष्टिः ॥४३॥ [3]एतदहर्वारुणेनेष्ट्वा रत्निनः[3] समवस्यन्ति ॥४४॥ तेषामनाहिताग्नीनामग्न्याधेयस्य मीमाꣳसा ॥४५॥ सूतग्रामणीनां च क्षत्तसंग्रहीतॄणं च इतः प्रथमं जज्ञे अग्निः[4] इत्येवैषां मथित्वाऽग्नीन् विहरेत् । [5]स्वाद्योनेरधि[5] जातवेदाः=वहतु प्रजानन्न् इति ॥४६॥ अग्न्याधेयमेव ब्राह्मणस्य च राजन्यस्य (च ॥४७॥)[6] एतस्मिन् काल आहनीय आमात्यो[7] गार्हपत्ये भागदुघो रत्निनो[7]ऽन्वाहार्यपचने ॥४८॥ परिवृक्त्या अग्न्याधेयमीमाꣳसा ॥४९॥ सूतकाग्निमाहरेयुरिति तदेकम् ॥५०॥ [8]प्रदाव्यमाहरेयुरिति तदेकम् ॥५१॥ येन मृतं दहन्ति तमाहरेयुरिति तदेकम्[8] ॥५२॥ [9]येनैवैतत् स्त्रिय[9] उपस्थं कल्पयन्ते तमाहरेयुरिति तदेकम् ॥५३॥ यैव जातु न सुषुवे[10] तस्यै गृहादग्निमाहृत्य तमेकाग्निमेवेन्धीत ॥५४॥ वसन्ति[11] ॥५५॥ प्रातः ॥५६॥

[२]

बार्हस्पत्यं चरुं निर्वपति ब्रह्मणो गृहे ॥१॥ शितिपृष्ठं ददाति ॥२॥

---

१. H त्रिषं सुक्तानां २. H. तृतीयं. ३–३. MHP वारुणेनेष्ट-रहिनः. ४. MHP जग्नेरिति. ५. MHP °रधि. ६. MHP give रेवास्या after the broken text which is not clear. ७–७. MHP °पत्यो भागदुत्वाग्निर [ P °ग्नीर° ] ८–८. H oms. ९–९. HMH °वैतत्त्रिय, P वैनं त्रिय; thus Ao IV. 169:63.9. १०. MHP सुपुवत. ११. MHP वन्ति.

¹पालाश इध्मः¹ ॥३॥ अयं नो राजा वृत्रहा इत्याह सꣳस्थामनु हविषो ब्रह्मा । °राजा भूत्वा वृत्रं वध्याद् इति ॥४॥ आगत्येन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं निर्वपति स्वेष्वग्निषु ॥५॥ सन्तिष्ठत एषेष्टिः ॥६॥ वसन्ति ॥७॥ प्रातरैन्द्रमेकादशकपालं निर्वपति राजन्यस्य गृहे ॥८॥ ऋषभं ददाति ॥९॥ नैय्यग्रोध इध्मः ॥१०॥ अयं नो राजा वृत्रहा इत्याह सꣳस्थामनु हविषो² राजन्यः । °राजा=³वध्याद् इति ॥११॥ आगत्ये-न्द्राया³ꣳहोमुचे पुरोडाशमेकादशकपालं निर्वपति स्वेष्वग्निषु ॥१२॥ सन्तिष्ठत एषेष्टिः ॥१३॥ वसन्ति ॥१४॥ प्रातरादित्यं चरुं निर्वपति महिष्यै गृहे ॥१५॥ धेनुं ददाति ॥१६॥ फलग्रह्यै बदर्या इध्मः ॥१७॥ अयं नो राजा वृत्रहा इत्याह सꣳस्थामनु हविषो महिषी । °राजा=वध्याद् इति ॥१८॥ आगत्येन्द्राय सुत्राम्णे⁴=एषेष्टिः ॥१९॥ वसन्ति ॥२०॥ प्रातर्नैर्ऋतं चरुं निर्वपति परिवृक्त्यै गृहे कृष्णानां व्रीहीणां नखनिर्भिन्नम् ॥२१॥ तमेकस्मिन्नेवाग्नौ⁵ श्रपयित्वा नैर्ऋतीभ्यामृग्भ्यामुपस्तीर्णाभिघारितं दर्विहोमं जुहोति यत्ते देवी निर्ऋतिराबबन्ध, यस्यास्ते अस्याः क्रूर आसन्जुहोमि इति ॥२२॥ कृष्णां कूटां ददाति ॥२३॥ ⁶अपर्णायै शुष्काग्रायै⁶ बदर्या इध्मः ॥२४॥ अयं नो राजा वृत्रहा इत्याह सꣳस्थामनु हविषः परिवृक्ती । °राजा भूत्वा=ध्याद् इति ॥२५॥ आगत्येन्द्रायाꣳहोमुचे⁷=प्रातराग्नेयमष्टाकपालं निर्वपति सेनान्यो गृहे ॥२६॥ हिरण्यं ददाति ॥२७॥ खादिर इध्मः ॥२८॥ अयं नो राजा वृत्रहा इत्याह सꣳस्थामनु हविषः सेनानीः । °राजा⁸=आगत्येन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं नि⁹=प्रातर्वारुणं दशकपालं निर्वपति सूतस्य गृहे ॥२९॥ महानिरष्टं ददाति ॥३०॥ आश्वत्थ इध्मः ॥३१॥ अयं नो राजा वृत्रहा इत्याह सꣳस्थामनु हविषः सूतः । °राजा=गत्येन्द्रायाꣳहोमुचे=प्रातर्मारुतं सप्तकपालं निर्वपति ग्रामण्यो गृहे ॥३२॥ पृश्निं ददाति ॥३३॥ औदुम्बर इध्मः ॥३४॥ अयं

---

१–१ P पालाशमिध्मम्. २. MHP wrongly ins महिषो between हविषो and राजन्यः. ३-३. MHP वध्यादिगत्ये°. ४. MHP abr; see above S 12-13. ५. MHP °कस्मिन्नेकाग्नौ. ६-६. MHP शुष्काग्रां ये; Ao IV. 170:64.5 : पर्णायै शुष्का°. ७ MHP abr; see above S 12-13. ८. MHP abr; see above S 4. ९. MHP abr; see aboxe S 12-13

नो=हविषो ग्राणणी । °राजा=गत्येन्द्राय सुत्राम्णे=प्रातः सावित्रं द्वादशकपालं निर्वपति क्षत्तुर्गृहे ॥३५॥ उपध्वस्तं ददाति ॥३६॥ प्लाक्ष इध्मः ॥३७॥ अयं नो राजा=हविषः क्षत्ता। °राजा=गत्येन्द्रायाँऽहोमुचे=प्रातराश्विनं द्विकपालं निर्वपति संग्रहीतुर्गृहे ॥३८॥ सवात्यौ ददाति ॥३९॥ सँऽस्थापिनोर्धक्षयोरिध्मः[1] ॥४०॥ अयं नो=हविषः संग्रहीता । °राजा=गत्येन्द्राय सुत्राम्णे=प्रातः पौष्णं चरुं निर्वपति भागदुघस्य गृहे ॥४१॥ श्यामं ददाति ॥४२॥ क्षामापाकाष इध्मः ॥४३॥ अयं नो=हविषो भागदुघः । °राजा=गत्येन्द्रायाँऽहोमुचे=प्राता रौद्रं गावीधुकं चरुं निर्वपत्यक्षावापस्य गृहे ॥४४॥ शबलमुद्वारं ददाति ॥४५॥ रौहिषाण इध्मः ॥४६॥ अयं नो=हविषोऽक्षावापः । °राजा=गत्येन्द्राय सुत्राम्णं पुरोडाशमेकादशकपालं निर्वपति स्वेष्वग्निषु ॥४७॥ सन्तिष्ठत एषेष्टिः॥४८॥एतान्यहानि (प्रसिद्धमेवास्य)[2] श्वेताँऽ[3] श्वेतवत्साँऽ स्वयं दोग्धि, स्वयमातनक्ति स्वयं मथ्नाति[4] स्वयमश्वत्थस्यं शाखामववृश्च्य चतुःस्रक्तिचमसं करोति ॥४९॥ एतस्यै पयो निधातवा आह ॥५०॥ वसन्ति ॥५१॥ प्रातर्मैत्राबार्हस्पत्यँऽ हविर्निर्वपति ॥५२॥ श्वेतायै श्वेतवत्सायै दुग्धे स्वयमू-(र्ते स्वयं मथित आज्य आश्वत्थे पात्रे चतुःस्रक्तौ स्वयमवपन्नायै शाखायै कर्णाँऽश्चाकर्णाँऽश्च तण्डुलान्वि चिनोति । अथ वै भवति ये कर्णाः स पयसि बार्हस्पत्यो, येऽकर्णाः स आज्ये)[5] मैत्रः ॥५३॥ मैत्रेण बार्हस्पत्यमपिदधाति ॥५४॥ एतच्छृत[6] एव [7]मैत्रेण नैवारं[7] बार्हस्पत्यं मेक्षयति ॥५५॥ बार्हस्पत्येन पूर्वेण प्रचरति मैत्रेणोत्तरेण ॥५६॥ स्वयंकृता वेदिर्भवति स्वयदिनं बर्हिः स्वयंकृत इध्मः ॥५७॥ एतामेव श्वेताँऽ श्वेतवत्सां दक्षिणां ददाति ॥५८॥ (सन्तिष्ठत एषेष्टिः) ॥५९॥ एत-(ान्यहानि वैश्व-)देवेनेष्ट्वैताभ्यामेव हविर्भ्यां चतुरो मासो यजते ग्रैष्मान् ॥६०॥ अधिगच्छति वरुणप्रघासान् ॥६१॥ तैर्यजते ॥६२॥ तैरिष्ट्वैताभ्यामेव हविर्भ्यां चतुरो मासो यजते वार्षिकान् ॥६३॥ अधिगच्छति साक(-मेधान् ॥६४॥ तैर्यजते ॥६५॥ तैरिष्ट्वैताभ्यामेव हविर्भ्याँऽ) सर्वं का(-र्तिकं

---

१ MHP °नोघं क्षयो° thus Ao IV.170:64.7. २. Cf BaudhŚS XII. 5:72.9-10. ३. MHP न त्वेतागं. ४. MHP मथ्नन्ति. ५. Cf BaudhŚS XII. 6:92.12-14; 93.1-3. ६. MHP एतच्छप. ७-७ MHP मंत्रे वां वारं.

यज-)ते ॥६६॥ अधिगच्छति शुनासीरीयम् ॥६७॥ तेन यजते ॥६८॥ तेनेष्ट्वैताभ्यामेव हविर्भ्याꣳ, सर्वं च मार्गशीर्षं यजते, तैषस्य च पञ्चविꣳशतिꣳ रात्रीः ॥६९॥ इन्द्रतुरीयमेकं[1] पञ्चेध्ममेकं देविकाहविरेकं त्रिषंयुक्तानां[2] द्वे ॥७०॥ तस्य द्वा(-दश कपालं) वैश्वानरं वारुणं (यवमयं चरुमेका-)दश च रत्निनाꣳ हवीꣳषि ॥७१॥ तदस्य माघस्य परपक्ष इष्टो भवति ॥७२॥ अथास्य [3]दावानुमतप्रतिवल्कैर्दशभिर्हविर्भिरिष्टं भवति ॥७३॥ पञ्चाहान्युच्छिष्यन्ते ॥७४॥ तेषु सोमः ॥७५॥ वसन्ति ॥७६॥ प्रातर्दीक्षते ॥७७॥ वसन्ति ॥७८॥ प्राता राजानं क्रीणाति ॥७९॥ तं क्रीत्वाऽपो (निषिच्य तस्या-)र्धꣳ शार्दूलचर्मणोपनद्धं ब्रह्मणो गृहं नयन्ति ॥८०॥ प्रसिद्धमितरस्मा आतिथ्यं निर्वपति ॥८१॥ तमेतं त्र्यहमाप्यायनकाल आहरन्ति ॥८२॥ प्रसिध्यति कर्माऽऽग्नीषोमीयस्य पशुपुरोडाशात् ॥८३॥ अग्नीषोमीयस्य पशुपुरोडाशेन सह देवसुवाँ हवीꣳषि निर्वपति अग्नये गृहपतये (इत्य-)ष्टावेतानि ॥८४॥ प्रैषवान् पशुपुरोडाशः ॥८५॥ अनुब्रूहि ॥८६॥ यज इतीतरेषाꣳ हविषामुपाꣳशु ॥८७॥ समानः प्रैषवान् स्विष्टकृत् समानीडा ॥८८॥ उपहूतायामिडायां सविता त्वा प्रसवानाꣳ सुवताम् इत्येनमाह । [4]अग्निर्गृहपतीनां = धर्मपतीनाम् इति ॥८९॥ ये देवा देवसुवः स्थ इत्यस्य दक्षिणꣳ हस्तं गृह्णाति । [5]त[5] इममामुष्यायणमन = ब्राह्मणानाꣳ राजा इति ॥९०॥ प्रति त्यं नाम राज्यमधायि इति द्वाभ्यामाज्येन मुखं विमृष्टे । [6]स्वां तनुवं[6] = आनड् इति ॥९१॥ विष्णोः क्रमोऽसि विष्णोः = विक्रान्तमसि इति विष्णुक्रमान् प्रक्रम्य वसन्ति ॥९२॥ प्रसिध्यति कर्म ॥९३॥ प्रातःसवनीयैः पुरोडाशैः सह मारुत एकविꣳशतिकपालः श्रप्यते ॥९४॥ तस्य कपालानामुपधानम् ॥९५॥ इमं च शुक्रं ज्योतिश्च इत्येतौ गणावभितोऽरण्येऽनुवाक्यं गणं मध्यत उपदधाति ॥९६॥ अथास्यैता गृहीताः सपात्रा आपः ॥९७॥ वसन्ति ॥९८॥ या ऋत्विया[6] सतेषु[7] या आपस्ता[8] एव द्रुत्वौषसं प्रतिप्रस्थाता पूर्वेणानुखातान्[9] कूपान् खनति ॥९९॥ तदेता आप उवेका क्लिश्नाति, एका नयति, उवेका निधत्ते ॥१००॥ प्रसिद्धमेवाध्वर्युश्चतुर्गृहीतेनापामर्धमेति ॥१०१॥ प्रभ्वाज्यमाज्यस्थाल्यामाहरमाणा[10]

१. MP °मेतं, H °मेव. २. MHP त्रिषं युयुक्ता. ३. P दानुमत°. ४. MHP om. ५-५. MHP सान्तनवं. ६. MHP मृतलिया. ७. MHP सुतेषु. ८. MHP om ता. ९. MHP पूर्वोनुस्नातं. १०. MHP स्थाल्याहर°.

यन्ति ॥१०२॥ स्रुवं चोन्नयन्ते ॥१०३॥ निग्राभ्य एकधनान् पात्रेंजनानि चतुर्गृहीतं गृह्णीतेऽध्वर्युः ॥१०४॥ प्रचरण्यां तज्जुहोति ॥१०५॥ [३]

अर्थेतः स्थ, राष्ट्रदाः स्थ राष्ट्रं दत्त स्वाहा इति वहन्तीषु ॥१॥ राष्ट्रदाः स्थ राष्ट्रममुष्मै दत्त इत्युन्नयते नौमन्थेन[1] ॥२॥ अपां पतिरसि, राष्ट्रदा असि राष्ट्रं देहि स्वाहा इत्यपां पतिषु परियजन्तीषु ॥३॥ राष्ट्रदा असि राष्ट्रममुष्मै देहि इत्युन्नयते यत्तत्र दारु गृह्णाति तस्य पात्रेण[2] ॥४॥ वृषास्यूर्मी राष्ट्रदा असि राष्ट्रं देहि स्वाहा इति जुहोत्यूर्म्यासु ॥५॥ राष्ट्रदा असि राष्ट्रममुष्मै देहि इत्युन्नयते यदेव तत्र दारु गृह्णन्ति तस्य पात्रेण ॥६॥ वृषसेनोऽसि, राष्ट्रदा असि राष्ट्रं देहि स्वाहा इति जुहोति वार्षसेनीषु विक्षरन्तीषु ॥७॥ राष्ट्रदा असि राष्ट्रममुष्मै देहि इत्युन्नयते यदेव तत्र दारु गृह्णन्ति तस्य पात्रेण ॥८॥ व्रजक्षितः स्थ, राष्ट्रदाः स्थ राष्ट्रं दत्त स्वाहा इति जुहोति कूप्यासु ॥९॥ राष्ट्रदाः स्थ राष्ट्रममुष्मै दत्त इत्युन्नयते कूपावरणेन ॥१०॥ मरुतामोजः स्थ, राष्ट्रदाः स्थ राष्ट्रं दत्त स्वाहा इति जुहोति ध्रुवक्षितेषु ॥११॥ राष्ट्रदाः स्थ राष्ट्रममुष्मै दत्त इत्युन्नयतेऽशनिहतस्य वृक्षस्य पात्रेण ॥१२॥ सूर्यवर्चसः स्थ, राष्ट्रदाः स्थ राष्ट्रं दत्त स्वाहा इति जुहोति परिदृश्नियासु ॥१३॥ राष्ट्रदाः स्थ राष्ट्रममुष्मै दत्त इत्युन्नयते शुक्रपात्रेण ॥१४॥ सूर्यत्वचसः स्थ, राष्ट्रदाः स्थ राष्ट्रं दत्त स्वाहा इति जुहोत्यातपति[3] वर्षन्तीषु ॥१५॥ राष्ट्रदाः स्थ राष्ट्रममुष्मै दत्त इत्युन्नयते [4]कंसस्थालेन ॥१६॥ मान्द्राः[5] स्थ, राष्ट्रदाः स्थ राष्ट्रं दत्त स्वाहा इति जुहोति ह्रादिनीषु ॥१७॥ राष्ट्रदाः स्थ राष्ट्रममुष्मै दत्त इत्युन्नयते वरुणस्य[6] पात्रेण ॥१८॥ वाशाः स्थ (राष्ट्रदाः स्थ)[7] राष्ट्रं दत्त स्वाहा इति जुहोति स्थावरासु॥१९॥ राष्ट्रदाः स्थ राष्ट्रममुष्मै दत्त इत्युन्नयते नैयग्रोधेन[8] पात्रेण ॥२०॥ शक्वरीः स्थ राष्ट्रदाः स्थ राष्ट्रं दत्त स्वाहा इति जुहोति (गोरुल-)[9]ब्यासु ॥२१॥ राष्ट्रदाः स्थ राष्ट्र(-ममुष्मै दत्त इत्युन्नय-)ते[10]

१. Cf BaudhŚS XVIII. 46:402·9; ŚB II. 3.3.15; JB. I 175; Aọ IV. 170:65 24-25: नौमण्डेन. २. P पात्र. ३. MHP °त्वति. ४. MHP तं सस्थालेन thus Ao IV. 171:65.2. ५. MHP मना ६. MH वरणस्य. ७. MHP om. ८. MP नय्यग्रो°. ९. Cf BaudhŚS XII. 8:97.12. १०. MHP wrongly give the text चमसेन = जुहोति before गृष्टिबन्धनेन, which has been given below as S 26-29.

गृष्टिबन्धनेन ॥ २२ ॥ विश्वभृतः[1] स्थ, राष्ट्रदाः स्थ राष्ट्रं दत्त स्वाहा इति जुहोति पयसि[2] ॥२३॥ राष्ट्रदाः स्थ (राष्ट्रममुष्मै दत्त इत्युन्नय-)ते गोदोहनेन ॥२४॥ जनभृतः[3] स्थ, राष्ट्रदाः स्थ राष्ट्रं दत्त स्वाहा इति जुहोति दधनि ॥२५॥ राष्ट्रदाः स्थ राष्ट्रममुष्मै दत्त इत्युन्नयते चमसेन ॥२६॥ अग्नेस्तेजस्याः स्थ, राष्ट्रदाः स्थ राष्ट्रं दत्त स्वाहा इति जुहोत्याज्ये ॥२७॥ राष्ट्रदाः स्थ राष्ट्रममुष्मै दत्त इत्युन्नयत आज्यस्थाल्या ॥२८॥ अपामोषधीनाꣳ रसः स्थ, राष्ट्रदाः स्थ राष्ट्रं दत्त स्वाहा इति जुहोति[4] मधुनि[5] ॥२९॥ राष्ट्रदाः स्थ राष्ट्रममुष्मै दत्त इत्युन्नयते यस्मिन् वृक्षे मधु विन्दन्ति तस्य पात्रेण ॥३०॥ आपो देवी मधुमती=अराती राष्ट्रदाः स्थ राष्ट्रं दत्त स्वाहा इति जुहोति सारस्वतीषु ॥३१॥ राष्ट्रदाः स्थ राष्ट्रममुष्मै दत्त इत्युन्नयते ॥३२॥ [४]

औदुम्बरेण चतुःस्रक्तिना पात्रेण ॥१॥ आयन्ति ॥२॥ स यत्रापोऽध्वर्युर्वसतीवरीष्ववनयति[6] चात्वालस्यान्ते तदेता अपः देवीरापः सं मधुमतीर्मधुमतीभिः सृजध्वम् इति समाने सते करोति प्रतिप्रस्थाता । "महि वर्चः क्षत्रियाय वन्वाना इति ॥३॥ पूर्वेण निग्राभ्याः[7] प्रपद्यायन्त्यपरेण वसतीवरीश्चैकधनाश्च[8] ॥४॥ तिष्ठन्त्येवैता आपः ॥५॥ प्रसिद्धमेवाध्वर्युः सꣳस्रावꣳ हुत्वोक्थ्यं कृतं कृत्वा प्रपद्यते ॥६॥ प्राजापत्यं दधिग्रहं जुहोति ॥७॥ तदेता अपः अनाधृष्टा सीदतोर्जस्वतीः[9] इत्यन्तरा होतुश्च धिष्णिय ब्राह्मणाच्छꣳसिनश्च सादयति । "महि वर्चः क्षत्रियाय दधतीः इति ॥८॥ तदाभ्यश्चत्वारि[10] च वायव्यान्युपनिधायाद्रवति हिरण्मयं सन्दꣳशꣳ शतमानं च ॥९॥ अग्निः[11] प्रातःसवने पात्वस्मान् इति वसतीवरीणां[12] तृतीयमवनयतः ॥१०॥ अपरस्मिन् कलशे तदन्वेकधनमानयन्ति ॥११॥ ऋजुभिरभिषवः[13] ॥१२॥ प्रसिद्धं ग्रहा गृह्यन्ते आऽऽग्रयणात् ॥१३॥ आग्रयणं गृहीत्वाऽप उपस्पृश्य पूर्वेण परिद्रवति ॥१४॥ अनि-

---

१. MHP भृत्त. २. P repeats राष्ट्रदा स्थ राष्ट्रं दत्त स्वाहेति जुहो° after पयसि and thereafter the text is broken. ३. P जनभृद. ४. H oms. ५. MHP twice. ६. MHP यत्रादो°तीवरीष्वंव°. ७. MHP निग्राभ्यां. ८. P वसन्तो°. ९. MHP °र्ज्जस्यती. १०. H ताभ्य°. ११. MHP अग्नि. १२. MHP वरीणास्तृ°. १३. MHP °षवं.

भृष्टमसि वाचो बन्धुः इति हिरण्येन सन्दंꣳशेन शत(-मान-)[1]मादत्ते। °तपोजाः सोमस्य दात्रमसि इति ॥१५॥ शुक्रा वः शुक्रेणोत्पुनामि इत्येनेनैता अप उत्पुनाति। °चन्द्राश्चन्द्रेणामृता=चितानाः इति ॥१६॥ सधमादो द्युम्निनीरूर्ज एताः इति वारुण्यर्चा गृह्णाति। °अनिभृष्टा अपस्युवो=वृतमास्वन्तः[2]। उपयामगृहीतोऽसि सरस्वत्यै त्वा जुष्टं गृह्णामि इति ॥१७॥ पलाशेन गृहीत्वा पुरस्तात् सतस्य सादयति [3]अयं ते[3] योनिः सरस्वत्यै त्वा इति ॥१८॥ एवमेव नैयग्रोधेन गृहीत्वा दक्षिणतः सादयति ॥१९॥ एवमेवाश्वत्थेन गृहीत्वा पश्चात् सादयति ॥२०॥ एवमेवौदुम्बरेण गृहीत्वोत्तरतः सादयति ॥२१॥ अप उपस्पृश्य पूर्वेण परिद्रवति ॥२२॥ उक्थ्यं गृह्णाति ॥२३॥ ध्रुवं गृह्णाति ॥२४॥ प्रसिध्यति कर्म ॥२५॥ प्रातःसवनीयैः पुरोडाशैः सह मारुतमेकविꣳशतिकपालमासादयति ॥२६॥ प्रातःसवनीयानां पुरोडाशानामिष्ट्वा मरुद्भ्योऽनुब्रूहि इत्याहोपस्तीर्णाभिघारितं मारुतस्यावदानः ॥२७॥ होतैव तस्या अन्वाह ॥२८॥ होता यजति ॥२९॥ ओ श्रावय इत्याह ॥३०॥ मरुत्ता[4] यज इति ॥३१॥ वषट्कृते जुहोति ॥३२॥ अनिष्ट-स्विष्टकृतमेतं मारुतं प्रति पराहरन्त्याग्नीध्रम्[5] ॥३३॥ प्रसिध्यति प्रातः-सवनम् ॥३४॥ प्रसिध्यति माध्यन्दिनꣳ सवनम् ॥३५॥ आयन्ति[6] ॥३६॥ सीदन्ति नाराशꣳसाः ॥३७॥ सन्नेषु नाराशꣳसेषु क्षत्रस्योल्बमसि इति तार्प्यं यजमानः[7] परिधत्ते ॥३८॥ क्षत्रस्य योनि(-रसि)[8] इत्युष्णोषं पर्यस्यते ॥३९॥ एतस्मिन् काले पत्नीं परिधापयन्ति ॥४०॥ इन्द्रस्य वज्रोऽसि वार्त्रघ्नः इति रथमुपावहरति। °त्वयाऽयं वृत्रं वध्याद् इति ॥४१॥ तं मित्रावरुणयोस्त्वा प्रशास्त्रोः[9] प्रशिषा युनज्मि इत्युत्तरेणाग्नीध्रं °प्रष्टि-वाहिनं युनक्ति ॥४२॥ उत्तरेणाग्नीध्रं[10] परीत्य जुहोति दाक्षिणानि ॥४३॥ दक्षिणा नयति ॥४४॥ दक्षिणा नीत्वाऽऽग्नीध्रं प्रपद्यन्ते ॥४५॥ तदेनं चित्पतिस्त्वा पुनातु; वाक्पतिस्त्वा पुनातु इत्येकशतेन दर्भपुञ्जीलैः पवयति ॥४६॥ दध्याशयति ॥४७॥ उदुम्बरमाशयति ॥४८॥ शष्पाण्याशयति ॥४९॥ आविन्नो अग्निर्गृहपतिः इत्येनमाविदो वाचयन्नानयति। °आविन्न इन्द्रो वृद्ध=ब्राह्मणानाꣳ राजा इति ॥५०॥ सोमस्य त्विषिरसि इति पूर्वेण

---

१. MHP om. २. MHP भृत°. ३–३. MHP एते. ४. MHP मारुतो. ५. MH वराहरन्त्या°, P वराहृत्या. ६. MHP आयत्. ७. MHP °मानं. ८. MHP om. ९. MP प्रशास्त्रो. १०–१०. H oms.

हविर्धाने (अपरेणा-)हवनीयं प्राचीनग्रीवमुत्तरलोम शार्दूलचर्मोपस्तृणाति। °तवेव मे त्विषिर्भूयाद (इति)[१] ॥५१॥ अमृतमसि इति रुक्ममभिमृश्य मृत्योर्मा पाहि इत्युपस्थं कृत्वा प्राङुपविशति ॥५२॥ दिद्योन्मा[२] पाहि इति सुवर्णꣳ रुक्ममुपरिष्टादध्यूहति ॥५३॥ अवेष्टा दन्दशूकाः इति मुखेन क्लीबꣳ सीसेन विध्यति ॥५४॥ निरस्तं नमुचेः शिरः इति द(-न्दशूकान्) निरस्यति॥५५॥ (समिधमा तिष्ठ, ग्राममा तिष्ठ, विराजमा तिष्ठ, उदीचीमा तिष्ठ), ऊर्ध्वामा)[३]तिष्ठ इत्येनं दि(-शः)[४] स्थापयति ॥५६॥ अनूज्जिहीते ॥५७॥ मनसानुप्रक्रामति ॥५८॥ षट् पार्थानि जुहोति, षड् भूतानामवेष्टीः[५] ॥५९॥ सोमो राजा इत्येनं पुरस्तात् प्राणाभिषेकान् वाचयति ॥६०॥ [५]

°वरुणो देवा घर्मसुवश्च ये। तेते वाचꣳ सुवन्ताम् इत्येन(-माह; ते ते प्राणꣳ सुवन्ताम् इ-)त्येनमा(-ह; ते ते मनः) सुवन्ताम इत्येनमाह[६]; ते ते चक्षुः सुवन्ताम् इत्येनमाह; ते ते श्रोत्रꣳ सुवन्ताम् इत्येनमाह ॥१॥ सोमस्य त्वा द्युम्नेनाभिषिञ्चामि इत्येनं पालाशेन पुरस्तादध्वर्युरभिषिञ्चति। एव(-मेव नैयग्रोधेन दक्षिणतो ब्राह्मणः; एव-)मेवाश्वत्थेन (पश्चाद्वै-)श्यः। एवमेवौदुम्बरेणोत्तरतो राजन्य इतीतरे ॥२॥ अध्वर्युरेवैनमेतेनैव पुरस्तादभिषिञ्चति। एवमेव नैयग्रोधेन दक्षिणतो ब्रह्मा; एवमेवाश्वत्थेन पश्चाद्धोता; एवमेवौदुम्बरेणोत्तरत[७] उद्गाता। (°अग्नेस्तेजसा=दि-)वस्पाहि[८] इति ॥३॥ समाववृत्रन्नधरागुदीचीः[९] इति प्रसलैः केशान् परिमृष्टे। °अहिं बुध्नियमनु सञ्चरन्तीस्ताः=स्वसिच इयानाः इति ॥४॥ षडेव पार्थानि जुहोति, षड् भूतानामवेष्टीः[१०] ॥५॥ समाने पात्रे सꣳस्रावान् कृत्वा रुद्र यत्ते क्रयी परं नाम इत्युदङ् परेत्याग्नीध्रे जुहोति। °तस्मै हुतमसि (यमेष्टमसि स्वाहा इ-)ति ॥६॥ अत्रैव यत्सतेऽतिशिष्यते तत् स्रुचि कृत्वा चमसे वा प्रजापते न त्वदेतान्यन्यः इति प्रत्यङ् परेत्य गार्हपत्ये जुहोति। °विश्वा जातानि=रयीणाꣳ स्वाहा इति ॥७॥ स यां कामयेत पत्नीꣳ राष्ट्रमस्यै प्रजाः स्यादिति साऽन्वारभेत, राष्ट्रमेवास्यै प्रजा भवति ॥८॥ विष्णोः क्रमोऽसि

---

१. MHP om. २. P दिद्योर्मा. ३. Cf BaudhŚS XII.10:100.7-8. ४. MHP om. ५. MHP °वेष्टिः. ६. MHP इत्याह. ७. MHP °रेणान्तरत. ८. MHP वेषाहीति. ९. MP °वृत्तन्नध°, H वृत्तं न धरा°. १०. MHP °वेष्टिः.

इति विष्णुक्रमै रथमभ्येतः । °विष्णोःक्रान्त=क्रान्तमसि इति ॥९॥ आगत्य पशूनां मन्युरसि इति वाराही उपानहावुपमुञ्चते । °तवेव मे मन्युभूंयात् इति ॥१०॥ इन्द्रस्य वज्रोऽसि वार्त्रघ्नः इत्यस्मा अध्वर्युर्धनुः प्रयच्छति । °त्वयाऽयं वृत्रं वध्यात् इति ॥११॥ शत्रुबाधनाः स्थ [1]इतीषून् । °शत्रून्मे दम्ब्वम् इति ॥१२॥ पात[1] मा प्रत्यञ्चम् इति दिशोऽनुविदे दिश्यन्ते[2] । °पात मा तिर्यञ्च=नाष्ट्राभ्यः पात इति ॥१३॥ हिरण्यवर्णावुषसां[3] विरोके[4] इति त्रिष्टुभा बाहू उद्गृह्णीते ॥१४॥ अयःस्थूणावुदितौ सूर्यस्याऽऽरोहतं[5] वरुण मित्र गर्तम् इति नमस्कृत्य रथमातिष्ठति । °ततश्चक्षाथामदितिं दितिं च इति ॥१५॥ [6]जगृभ्मा ते[6] दक्षिणमिन्द्र हस्तम् इत्यैन्द्रिया त्रिष्टुभा प्रतिहितो[7]ऽन्वारोहति । °वसूयवो वसुपते व=रयिं दाः इति ॥१६॥ [8]अत्र शतगुः[8] सᳫशिष्टो राजन्यः पूर्वेणावसितो भवति ॥१७॥ मरुतां प्रसवे जेषम् इति प्रयाति ॥१८॥ अधिगत्य पृच्छति कस्य गावः इति ॥१९॥ अमुष्य इति आप्तं मनः इति जिनाति । २०॥ समहमिन्द्रियेण वीर्येण इति पुनरायाति ॥२१॥ आगच्छति चात्वालस्यान्ते पत्नीं तिष्ठन्तीम् ॥२२॥ तामनवस्थायैव यजमानः रन्तिरसि रमतिरसि इति तिरश्चक्रं [9]धनुरार्त्न्या कर्षयति[9] । °सूनर्यसि इति ॥२३॥ नमो मात्रे पृथिव्यै इत्यवतिष्ठति । °माऽहं मातरं[10]=हिᳫसीत् इति ॥२४॥ अथाऽहरन्त्यस्मै मणीन् ॥२५॥ तान् प्रतिमुञ्चते ॥२६॥ इयदस्यायुरस्यायुर्मे धेहि इति हिरण्मयम् ॥२७॥ ऊर्गस्यूर्जं मे धेहि इत्यौदुम्बरम् ॥२८॥ युङ्ङसि वर्चोऽसि वर्चो मयि धेहि इति हिरण्मयमेव ॥२९॥ अग्नये गृहपतये स्वाहा इति रथविमोचनीया जुहोति । °सोमाय वनस्पतये स्वाहा=जसे स्वाहा इति ॥३०॥ विमुञ्चन्त्येतासु हुतासु रथम् ॥३१॥ तस्मान्नावतिष्ठति संग्रहीता ॥३२॥ हᳫसः शुचिषद् इति सह संग्रहीत्रा रथवाहने रथमादधाति ॥३३॥ पूर्वेण रथकूबरमन्तरेण रथवाहनस्येषे संग्रहीताऽवसर्पति ॥३४॥ एताᳫश्च मणीᳫश्च[11] रथं च ब्रह्मणे ददाति ॥३५॥ आगच्छन्ति मैत्रावरुणीमामिक्षामासन्नां मारुतं

---

१–१. MH तीषूञ्छन्दुन्मेदब्वमिवात [ M °ञ्छन्द्र° ], P इषुञ्छत्रूंन्मे-दब्वमिवात. २. MH दिश्यते, P दिब्यते. ३. MP °वृषसां. ४. H गिरोक. ५. MHP सूर्यस्येत्यारो°. ६–६. MHP च गृभ्णाते. ७. MHP प्रतिहृतो°. ८–८. MHP त्रिशताग:. ९–९. MHP °राध्यांत्यर्षं [ M °राव्यां° ]. १०. MHP मारुतं. ११. MHP मणीस्व.

  

चैकविᳳशतिकपालम् ॥३६॥ तस्यां[1] मित्रोऽसि इति दक्षिणᳳ हस्तं मार्जयित्वा यजमानोऽपिदधाति[2] ॥३७॥ वरुणोऽसि इत्युत्तरम् ॥३८॥ समहं विश्वैर्देवैः इत्येनाᳳ[3] संयौति ॥३९॥ सं[4] मया विश्वेदेवाः इति तया प्रचरति ॥४०॥ तस्यै स्विष्टकृता सह मारुतस्य स्विष्टकृतं जुहोति ॥४१॥ समानीडा ॥४२॥ इडान्तयैतया प्रचर्य क्षत्रस्य नाभिरसि इति दक्षिणेनाहवनीयमौदुम्बरीमासन्दीं निदधाति ॥४३॥ क्षत्रस्य योनिरसि इत्यस्यामधिवासमास्तृणाति ॥४४॥ तामारोहति यजमानः ॥४५॥ तस्यामुपविशति प्रागावृत्त उपस्थं कृत्वा ॥४६॥ [६]

स्योनामा सीद इत्येनमाह ॥१॥ स्योनामासदम् इत्याह ॥२॥ सुषदामा सीद इत्येनमाह ॥३॥ सुषदामासदम् इत्याह ॥४॥ मा त्वा हिᳳसीत्[5] इत्येनमाह ॥५॥ मा मा हिᳳसीत्[5] इत्याह ॥६॥ नि षसाद धृतव्रतः इति सन्नमुपतिष्ठते । [6]वरुणः पस्त्यास्वा[6] साम्राज्याय सुक्रतुः इति ॥७॥ ब्रह्मा३न् इति ब्रह्माणमामन्त्रयते ॥८॥ त्वᳳ राजन् ब्रह्मासि इत्येनमाह । [7]सविताऽसि सत्यसवः इति ॥९॥ ब्रह्मा३न् इत्यध्वर्युम् ॥१०॥ त्वᳳ राजन् [9]ब्रह्माऽसि इत्येनमाह[9] । [7]इन्द्रोऽसि सत्यौजाः इति ॥११॥ ब्रह्मा३न् इति होतारम् ॥१२॥ त्वᳳ राजन् ब्रह्माऽसि इत्येनमाह । [7]मित्रोऽसि सुशेवः इति ॥१३॥ ब्रह्मा३न् इत्युद्गातारम् ॥१४॥ त्वᳳ राजन् ब्रह्माऽसि इत्येनमाह । [7]वरुणोऽसि सत्यधर्मा इति ॥१५॥ (इत्याहर्त्विजः)[8] ॥१६॥ [9]सुश्लोका३न् इति क्षत्तारमामन्त्रयते ॥१७॥ त्वᳳ राजन् सुश्लोकोऽसि इत्येनमाह ॥१८॥ सुमङ्गला३न् इति संग्रहीतारम् ॥१९॥ त्वᳳ राजन् सुमङ्गलोऽसि इत्येनमाह ॥२०॥ सत्यराजा३न् इति भागदुघम् ॥२१॥ त्वᳳ राजन् सत्यराजाऽसि इत्येनमाह ॥२२॥ सत्यधर्मा३न् इत्यक्षावापम् ॥२३॥ त्वᳳ राजन् सत्यधर्मोऽसि इत्येनमाह[9] ॥२४॥ इत्याह रत्निनः ॥२५॥ इन्द्रस्य(वज्रोऽसि वार्त्रघ्नः

---

१. MHP तस्या. २. MHP °नोपद°. ३. P इत्येनान्. ४. MHP तं. ५. MHP हिंसीर्. ६–६. MHP वरुणं पत्यास्वा. ७–७. MHP ब्रह्मणा सीदेत्ये°. ८. MHP om. ९–९. MHP om here and give after यजमानाय प्रयच्छति ( S 41 ). MHP सुश्लोकं for सुश्लोका३न्, सुमङ्गलं for सुमङ्गला३न्, H oms S 21–22. M सत्यो धर्मेसी, H सत्ये धर्मेसी, P सत्यो धर्मोऽसी for सत्यधर्मोऽसि.

इत्यस्मै स्फ्यं)[१] प्रयच्छति ॥२६॥ तमु स क्षत्रे 'तेन मे रध्य'[२] इति, क्षत्ता संग्रहीत्रे, संग्रहीता (भा-)[३]गदुघाय, भागदुघोऽक्षावापाय ॥२७॥ तेन मे रध्य इत्यभिमन्त्रयते ॥२८॥ तेनोप(-ग-)त्याक्षावापोऽधस्ताद्रथवाहनस्याधिदेवनमुद्धन्ति[४] ॥२९॥ लवणोदकेनावोक्षति ॥३०॥ पाकसेन पर्यूहति ॥३१॥ तदेतान् पञ्चशतमक्षान्निवपति[५] हिरण्मयान् ॥३२॥ क्रुसरः सर्पिषा[६] पच्यते ॥३३॥ ओदनमुद्ब्रुवते[७] ॥३४॥ रत्निनोऽधिदेवनं पर्युपविशन्ते ॥३५॥ तदोदनस्य दरोदरं भवति ॥३६॥ पञ्चाक्षानादायाध्वर्युः (सू-)त्रं[८] प्रोहति ॥३७॥ इदꣳ रात्र उद्भिन्नमपराजितम्[९] इति गृह्णते[१०] ॥३८॥ यजन्तः परियजन्ति ॥३९॥ अक्षावापः[११] परमक्षं[१२] भञ्ज्यति[१३] ॥४०॥ [१४]दिशोऽभ्ययꣳ राजाऽभूत् इति पञ्चाक्षानध्वर्युर्यजमानाय प्रयच्छति[१५] ॥४१॥ तमेत एवाददते कृष्यै त्वा इति ॥४२॥ क्षेमाय त्वा इति पूर्वेण सदो बिलं निदधाति ॥४३॥ शौनःशेपमाख्यापयते ॥४४॥ हिरण्यकशिपुमाख्यापयते ॥४५॥ परःशतं भवति ॥४६॥ हिरण्यकशिपावासीनो होता शꣳसति ॥४७॥ हिरण्यकूर्चेऽत्रोत्तिष्ठन्नध्वर्युः प्रत्यागृणाति[१६] ॥४८॥ तस्यैष एव प्रतिगरः ओꣳ होतस्तथा होतः (सत्यꣳ होतररात्स्म होतः)[१७] इति ॥४९॥ एतच्च हिरण्यकशिपु पञ्चाशतं[१८] च गा होत्रे ददाति ॥५०॥ एतौ च हिरण्यकूर्चौ पञ्चाशतं[१८] च गा अध्वर्यवे यास्ता राजन्यो जिनाति ॥५१॥ आनयन्त्येतं क्रुमरꣳ[१९] सर्पिषम् ॥५२॥ तं तमेत एवाददते कृष्यै त्वा इति ॥५३॥ क्षेमाय त्वा इति पूर्वेण सदो बिलं निदधाति ॥५४॥ इन्द्राय मरुत्वतेऽनुब्रूहि इति ॥५५॥ प्रसिद्धं त्रिभिर्मरुत्वतीयैः प्रचरति ॥५६॥ भक्षः सम्राड् इति मरुत्वतोयस्य भक्षं

---

१. Cf BaudhŚS XII.15 : 108-13. २-२. P तेन मेध्य twice. ३. MHP om. ४. MHP °मुद्धति. ५. MHP °मक्षावपति. ६. MHP सर्पिषान्. ७. MHP °मुद्ब्रह्मण इत्यान्द्र. Cf BaudhŚS XII.15 : 109.3. ८. MHP give the sign of abridged text between °ध्वर्युः and सूत्रं ( MSS तं ). ९. MH °न्नमपार°, P उद्भिन्न अपार°. १०. H गृह्णते. ११. MHP °वापं. १२. MHP °मक्ष्ल. १३. MHP °यन्ति. १४. P दिशेभ्य.° १५. MHP Cf fn. 1-1 on P. 278. १६. MHP प्रपत्यागृ°. १७. MHP om. १८. MHP पञ्चाशच्छतं; thus Ao IV. 171:66:17. १९. MHP क्रुसमुं.

प्रत्यवरोहति ॥५७॥ प्रसिध्यति माध्यन्दिनꣳ सवनम् ॥५८॥ प्रसिध्यति तृतीयसवनम् ॥५९॥ परिधिषु वाजिनं तस्य भक्षः ॥६०॥ यद्वाꣳ रेतः प्रसिच्यते[1] = भक्षयामि इति ॥६१॥ प्रसिध्यति कर्माऽवभृथात् ॥६२॥ अपां नप्त्रे स्वाहा इत्यवभृथादुदादायाप्सु[2] स्रुवाहुतिं जुहोति ॥६३॥ ऊर्जो नप्त्रे स्वाहा इत्युदेत्य दर्भस्तम्बे[3] जुहोति ॥६४॥ अग्नये गृहपतये स्वाहा इति पुनरेत्य गार्हपत्ये जुहोति ॥६५॥ प्रसिध्यति कर्म ॥६६॥ सन्तिष्ठत एष एकविꣳश उक्थ्योऽभिषेचनीयश्चतुर्विꣳशः पवमानः ॥६७॥ द्यावापृथिव्या वशा ॥६८॥ वशाया उपालम्भ्य[4] द्यावापृथिव्य एककपालः पशुपुरोडाशः ॥६९॥ वपाभ्यां प्रचर्य निवर्तयते ॥७०॥ [७]

[इति द्वितीयोऽनुवाकः]

तिस्रो वा एताः शाला मिता भवन्ति ॥१॥ मध्यमायै शालायै दक्षिणतः षडुद्धतानि भवन्ति ॥२॥ अन्तरेव शालायाꣳ सप्तममन्तम उद्धत उदवस्यन्ति ॥३॥ प्रातः सरस्वत्यै चरुं निर्वपति ॥४॥ वत्सतरीं ददाति ॥५॥ उदकुम्भे पुण्डरीकमवदधाति ॥६॥ सन्तिष्ठत एषेष्टिः ॥७॥ संपृच्य[5] वसन्ति ॥८॥ प्रातः सावित्रं द्वादशकपालं निर्वपति ।९॥ उपध्वस्तं ददाति ॥१०॥ उदकुम्भे पुण्डरीकमवदधाति ॥११॥ सन्तिष्ठत एषेष्टिः ॥१२॥ संपृच्य[5] वसन्ति ॥१३॥ प्रातः[6] पौष्णं चरुं निर्वपति ॥१४॥ श्यामं ददाति ॥१५॥ उदकुम्भे[7] = प्रातर्बार्हस्पत्यं चरुं निर्वपति ॥१६॥ (शिति-)[8] पृष्ठं ददाति ॥१७॥ उदकुम्भे[7] = प्रातरैन्द्रमेकादशकपालं निर्वपति ॥१८॥ ऋषभं ददाति ॥१९॥ उदकुम्भे[7] = प्रातर्वारुणं द्वादशकपालं निर्वपति ॥२०॥ महानिरष्टं ददाति ॥२१॥ उदकुम्भे पुण्डरीकमेवावदधाति ॥२२॥ सन्तिष्ठत एषेष्टिः ॥२३॥ अन्तरेव शालायाꣳ सप्तमीं वसन्ति ॥२४॥ प्रातस्त्वाष्ट्रमष्टाकपालं निर्वपति ॥२५॥ शुण्ठं ददाति ॥२६॥ सन्तिष्ठत एषेष्टिः ॥२७॥ एतस्यै सꣳस्थामनु सप्तपुष्कराꣳ स्रजमध्वर्युः सꣳसृजति ॥२८॥ तां यजमानाय प्रतिमुञ्चते ॥२९॥ सैव दीक्षायाम्[9] ॥३०॥ यज्ञायुधानि सꣳसाद्यापः प्रणीय प्रायणीयं निर्वपति ॥३१॥ तस्य जूरसि इति समिष्टयजुर्हुत्वा आण्डीबलान्[10] वत्सतरान्

१. MHP abr; २. MH °दुदायत्स्वप्सु, H °दुदाययस्वप्स्सु. ३. P °स्तंभे. ४. MHP उपालं. ५. MHP संसृच्य. ६. MHP प्रातस्सा. ७. MHP abr; see above S 6–8. ८. MHP om. ९. MHP दीक्षां. १०. MHP शाण्डी°.

सोमविक्रयिणेऽपाकरोति ॥३२॥ आहरन्त्येतꣳ शार्दूलचर्मणा नद्धं ब्रह्मणो गृहाद्राजानम् ॥३३॥ । [८]

तस्मै[1] प्रसिद्धमातिथ्यं[2] ॥१॥ प्रसिध्यति कर्म ॥२॥ प्रथमस्या उपसदः प्रातः प्रचरण आग्नेयोऽष्टाकपालः श्रप्यते ॥३॥ आग्नेये भाजन उपस्तीर्णाभिघारितमाग्नेयमादत्ते ॥४॥ तेनैनꣳ सञ्जुहोति ॥५॥ हिरण्यमेतस्य दक्षिणा ॥६॥ प्रातः प्रचरणेषु[3] हूयन्ते ॥७॥ मध्यमाया (उपसदः प्रातः प्रचरणे सौम्यश्चरुः श्रप्यते) ॥८॥ [4]सौम्ये भाजन उपस्तीर्णाभिघारितꣳ सौम्यमादत्ते ॥९॥ तेनैनꣳ सञ्जुहोति ॥१०॥ बभ्रुरेतस्य दक्षिणा ॥११॥ उत्तमाया उपसदः प्रातः प्रचरणे वैष्णवस्त्रिकपालः श्रप्यते ॥१२॥ आग्नेयं च सौम्यं च भाजनꣳ हुत्वा वैष्णवे भाजन (उपस्तीर्णाभिधारितं वैष्णवमादत्ते ॥१३॥ ते)-नैनꣳ सञ्जुहोति ॥१४॥ (वामन ए-)[5] तस्य दक्षिणा ॥१५॥ तायत एषोऽग्निष्टोमः[6] सप्त(-दशो)[7] दशपेयः ॥१६॥ स यस्य दश पितामह्यो ब्रह्मबन्ध्व्यो दश मातामह्यस्त ऋत्विजः ॥१७॥ यस्य एवान्यः पञ्च पितामह्यो ब्रह्मबन्ध्व्यः पञ्च मातामह्यस्त[8] उपन्यत्तादृशाः शतं ब्राह्म(-णाः पिबन्ति ॥१८॥ (सप्तदशस्तोत्रं भवति ॥१९॥ प्राका-)[9]शावध्वर्यवे(ददाति स्रजमुद्गात्रे रुक्मꣳ होत्रेऽश्वं प्रस्तोतृप्रतिहर्तृभ्यां द्वादश पष्ठौहोर्ब्रह्मणे वशां मैत्रावरुणायर्षभं ब्राह्मणाच्छꣳसिने वाससी नेष्टापोतृभ्याꣳ स्थूरि यवाचितमच्छा-)[10]वाकायायुक्तमनड्वाहमग्नीधे ॥२०॥ भार्गवो होता भवति ॥२१॥ श्रायन्तीयेन माध्यन्दिने सवने ब्राह्मणाच्छꣳसिनः स्तुवते ॥२२॥ वारवन्तीयमग्निष्टोमसाम यज्ञायज्ञियं कुर्वन्ति ॥२३॥ सारस्वतीरपो गृह्णाति ॥२४॥ यद् वसतीवर्यो यन्निग्राभ्या य(-दुद्ग्राभ्या) जलानि[11] तत्सर्वꣳ सारस्वतं भवति ॥२५॥ सन्तिष्ठत एषोऽग्निष्टोमः सप्तदशो दशपेयः ॥२६॥ कायी वशा ॥२७॥ वशाया उपालम्भ्य

---

१. P तस्यै. २. MHP °मातिष्ठन्नि°. ३. H चरेणासु. ४. H ins भोजनं before सौम्ये. M and P, however, give the sign of broken text between भोजनं and सौम्ये. ५. see TS I. 8. 17.1. ६. P °ष्टोमस्य. ७. MHP om. ८. MHP °मह्यस्तवु; thus Ao IV. 171:68.33. ९. Cf TS I. 8.18.5–7. १०. Cf TS I.8.18.7–15. ११. MHP °जनानि.

काय एककपालः[१] पशुपुरोडाशः ॥२८॥ वपाभ्यां प्रचर्य निवर्तयते ॥२९॥ [९]

वसन्ति ॥१॥ प्रातर्दिशामवेष्टिभिर्यजते ॥२॥ आग्नेयमष्टाकपालं निर्वपत्यैन्द्रमेकादशकपालं वैश्वदेवं चरुं मैत्रावरुणीमामिक्षां[२] बार्हस्पत्यं चरुम् ॥३॥ तस्यै दक्षिणा हिरण्यमृषभः[३] पिशङ्गी पष्ठौही वशा शितिपृष्ठः ॥४॥ सन्ततिमनु होतुराहुतिं जुहोति ॥५॥ प्रसिध्यति कर्म ॥६॥ सन्तिष्ठत एषेष्टिः ॥७॥ वसन्ति ॥८॥ प्रातरादित्यां मल्हां गर्भिणीमालभते मारुतीं[४] पृश्निं पष्ठौहीम् ॥९॥ गर्भिण्यादित्या भवत्यगर्भा मारुती ॥१०॥ आदित्यया पूर्वया प्रचरति मारुत्योत्तरया ॥११॥ उच्चैरादित्याया आश्रावयत्युपांशु मारुत्यै ॥१२॥ सन्तिष्ठेते[५] एतौ पशू ॥१३॥ वसन्ति ॥१४॥ प्रातः सीसेन क्लीबाच्छष्पाणि क्रीणात्यूर्णापक्षैः कौलालाद् व्रीहीन् ॥१५॥ अश्विभ्यां पूष्णे पुरोडाशं द्वादशकपालं निर्वपति ॥१६॥ तस्य हविष्कृता वाचं विसृज्यान्वाहार्यपचन एतेषां व्रीहीणामोदनं पचन्ति ॥१७॥ तं शीतमवहृतैः शष्पैः स्वाद्वीं त्वा स्वादुना इति संयौति । [६]तीव्रां तीव्रेणामृताममृतेन सृजामि सं सोमेन इति ॥१८॥ अत्रैवापरेणान्वाहार्यपचनमुदकुम्भं परिश्रयन्ति ॥१९॥ त्रीन् पिण्डान् कृत्वाऽवदधाति ॥२०॥ सोमोऽसि[६] इति समुदायुत्याभिदधाति ॥२१॥ तस्य परिहिते प्राशित्रेऽपावृत्यावेक्षते अश्विभ्यां पच्यस्व इति ॥२२॥ सन्ततिमनु होतुराहुतिं जुहोति ॥२३॥ प्रसिध्यति कर्म ॥२४॥ सन्तिष्ठत एषेष्टिः ॥२५॥ वसन्ति ॥२६॥ प्रातः सरस्वते सत्यवाचे चरुं निर्वपति सवित्रे च सत्यप्रसवाय पुरोडाशं द्वादशकपालम् ॥२७॥ तस्य हविष्कृता वाचं विसृज्य सत्यदूतान् [७]प्रहिणुयाज्जनसादनम् असावयमामुष्यायणः[७] इति ॥२८॥ स यो हास्य दूतेन प्रत्यवरोहेत्[८] मूर्धा हास्य विपतेत्[९] ॥२९॥ यो हास्यालमभ्युत्थानाय स्यादभि हैनमुपतिष्ठेत् ॥३०॥ तस्य परिहिते प्राशित्रेऽपावृत्यावेक्षते[१०] सरस्वते सत्यवाचे पच्यस्व इति ॥३१॥ सन्ततिमनु[११]=एषेष्टिः ॥३२॥

---

१. MHP °कपालं. २. M मैत्रं चरुं. ३. MHP °मृषभं.
४. M दारुतिं, H P मारुतिं. ५. MHP सन्तिष्ठते. ६. MHP twice.
७–७. MHP °दनन्वसाप्ययमसावामुष्या°. ८. MHP °रोहे. ९. H वपतेद्.
१०. MHP प्राशित्रावेक्ष°. ११. MHP abr; see above S 23–25.

वसन्ति ॥३३॥ प्रातरिन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं प्रति निर्वपति ॥३४॥ तस्य परिहिते प्राशित्रेऽपावृत्यावेक्षते इन्द्राय सुत्राम्णे पच्यस्व इति ॥३५॥ सन्ततिमनु[१] =षेष्टिः ॥३६॥ वसन्ति ॥३७॥ प्रातः ॥३८॥ [१०] [इति तृतीयोऽनुवाकः]

## [ सौत्रामणी ]

सौत्रामण्येवातः ॥१॥ तस्यै संभाराः—सिꣳहलोमानि च क्वलसक्तवश्च[२] व्याघ्रलोमानि च बदरसक्तवश्च वृकलोमानि च कर्कन्धुसक्तवश्च त्रयश्चोपयामाश्चत्वारि च वायव्यानि वारं च सतं च शतातृण्णा[३] च शतमानं च बन्धवा च यूपश्चाश्विनश्च धूम्रः सारस्वतश्च मेष ऐन्द्र ऋषभो बार्हस्पत्य[४] उक्षा ॥२॥ यशोव्यृद्धस्यातिपवितस्य[४] वा सोमवामिनो वैतमालभेत ॥३॥ प्रथममतिपवितस्यालभेतोत्तमꣳ सोमवामिनो[५] वा ॥४॥ नाद्रियेत ॥५॥ एतमप्यृद्धस्य ॥६॥ स यद्येतं कुर्यादष्टाकपालमस्य पशुपुरोडाशं कुर्यात् ॥७॥ तेनायतने प्रचरेत् ॥८॥ स यद्यत्रैव[६] यजते यत्रास्याग्नयो भवन्ति ॥९॥ अन्वाहार्यपचने पितृभ्यो दत्त्वा पूर्वेणाहवनीयं वेदिं कल्पयति रथावकाशाम् ॥१०॥ यद्युदवस्यन्त्युत्परायन्त्यग्निभिः ॥११॥ अन्वाहार्यपचन एव पितृभ्यो दत्त्वा पूर्वेणाहवनीयं वेदिं कल्पयति रथावकाशाम् ॥१२॥ यस्मिन् कालेऽध्वर्युर्वेदिं कल्पयति तस्मिन् काले प्रतिप्रस्थाता दक्षिणेनान्वाहार्यपचनमाखरमुद्धन्ति[७] ॥१३॥ यस्मिन् कालेऽध्वर्युरुत्तरवेदिं कल्पयति तस्मिन् काले प्रतिप्रस्थाताऽऽखरे सिकता निवपति ॥१४॥ तस्मिन्नग्निꣳ सादयिष्यन् भवति ॥१५॥ यस्मिन् कालेऽध्वर्युराहवनीयादिध्मं प्रहरति तस्मिन् काले प्रतिप्रस्थाताऽन्वाहार्यपचनादग्नि(-माहृत्य दक्षिणेनोत्तरवेदिमाखरे न्युप्योपसमा-)दधाति ॥१६॥ यस्मिन् कालेऽध्वर्युराज्यानि गृह्णीते पृषदाज्यवन्ति तस्मिन् काले प्रतिप्रस्थाता पुनातु ते[८] परिस्रुतम् इति वारेण सते सुरां परिपुनाति । 'सोमꣳ सूर्यस्य=शश्वता तना इति ॥१७॥ 'वायुः पूतः[९] पवित्रेण इति नैतया पुनीयाद् व्यृद्धा[१०] ह्येषा ॥१८॥ अतिपवितस्यैतया[११] सोमवामिनो वा

---

१. MHP abr; see aboves 23–25. २. MHP कालस°. ३. MHP शकतृण्णा. ४–४. MHP उक्षवशोप्यृद्ध°. ५. MHP सोमं वा°. ६. P यन्त्रैव. ७. MHP °मुद्धरन्ति. ८. MHP om. ९–९. MP वायुं पूतं. १०. MHP वृद्धा. ११. MHP °पवितस्यै या.

॥१९॥ प्रत्यङ् सोमो अतिद्रुतः इत्यतिप्रवितस्याधिवदेत् प्राङ् इति सोमवामिनः ॥२०॥ नाद्रियेत ॥२१॥ एतयाऽप्यूद्धस्य ॥२२॥ [११]

इध्माबर्हिः प्रोक्षति ॥१॥ वेदिं प्रोक्षति ॥२॥ आसन्नं प्रोक्षति ॥३॥ अपो निनीय प्रस्तरं गृह्णाति ॥४॥ स्तृणाति बर्हिः ॥५॥ प्राङ्त्सृष्य परिधीन् परिदधाति कार्ष्मर्यमयान् ॥६॥ समिधावादधाति ॥७॥ परिधिषु वाचयित्वाऽग्नि युनक्ति ॥८॥ आगत्य तिरश्चो सादयति ॥९॥ तिरश्च्योः प्रस्तरम् ॥१०॥ प्रस्तरे जुहूम् ॥११॥ बर्हिषीतरे ॥१२॥ समासाद्य ध्रुवा असदन्, यन्मे अग्ने इति समभिमृश्य दशहोतारं व्याचष्टे ॥१३॥ अप उपस्पृश्यैतेषां वायव्यानामेकमादाय त्वे क्रतुमपि वृञ्जन्ति विश्वे इति प्राजापत्यं दधिग्रहं गृह्णाति । °द्वियंदेते=भि योधि । उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामि इति ॥१४॥ पूर्वेण स्रुचोऽनास्पृष्टᳩ सादयति एष ते योनिः प्रजापये त्वा इति ॥१५॥ अप उपस्पृश्य पूर्वेण परिद्रवति ॥१६॥ अथैतान् ग्रहान् गृह्णात्युपयामेषु कुविदङ्ग=न जग्मुः । उपयामगृहीतोऽस्यश्विभ्यां त्वा सरस्वत्या इन्द्राय सुत्राम्णे जुष्टं गृह्णामि (इति)[1] ॥१७॥ एष ते योनिरश्विभ्यां त्वा सरस्वत्या इन्द्राय सुत्राम्णे इति सादयति ॥१८॥ सक्तुलोमैः श्रीणाति ॥१९॥ कुविदङ्ग इत्येतयैव गृह्णाति । °उपयामगृहीतोऽसि सरस्वत्या इन्द्राय सुत्राम्णेऽश्विभ्यां जुष्टं गृह्णामि (इति)[1] ॥२०॥ एष ते योनिः सरस्वत्यै त्वेन्द्राय सुत्राम्णेऽश्विभ्याम् इति सादयति ॥२१॥ सक्तुलोमैरेव श्रीणाति ॥२२॥ कुविदङ्ग इत्येतयैव गृह्णाति । °उपयामग्रहीतोऽ(-सीन्द्राय)[1] सुत्राम्णे ऽश्विभ्याᳩ (सरस्वत्यै)[2] जुष्टं गृह्णामि (इति)[1] ॥२३॥ एष ते योनिरिन्द्राय सुत्राम्णेऽश्विभ्याᳩ सरस्वत्यै इति सादयति ॥२४॥ सक्तुलोमैरेव श्रीणाति ॥२५॥ यूपं प्रोक्ष्योच्छ्रित्य परिधीय तस्मिन्नेतान् पशूनालभन्ते—आश्विनं च धूम्रᳩ सारस्वतं च मेषमैन्द्रमृषभम् ॥२६॥ तेषां वपा हुत्वा मार्जयित्वाऽऽदायैतं प्राजापत्यं दधिग्रहं जुहोति प्रजापतये स्वाहा इति ॥२७॥ वरमस्मै ददाति ॥२८॥ यथायतनं पात्रᳩ सादयित्वाऽप उपस्पृश्य पूर्वेण परिद्रवति ॥२९॥ दक्षिणतो ब्रह्मा च यजमानश्चोपविशतः ॥३०॥ सᳩसर्पति होता ॥३१॥ [१२]

द्वे वायव्ये अध्वर्युरादत्त एकं प्रतिप्रस्थाता ॥१॥ अश्विभ्याᳩ सरस्वत्या

---

१. MHP om. २. MHP om.

इन्द्राय सुत्राम्णेऽनुब्रूहि इत्याह ॥२॥ एतान् ग्रहान् वायव्येषु समवनयमानः[१] युवं सुरामश्विना इत्यन्वाह ॥३॥ अत्रापि अश्विनौ सरस्वतीमिन्द्र[२]ँ सुत्रामाणं यजे इति ॥४॥ पुत्रमिव पितरावश्विनोभा इति यजति ॥५॥ अग्नयेऽनुब्रूहि इत्याह ॥६॥ समाने पात्रे सँस्रावान् समवनयमानः अहाव्यग्ने इत्यन्वाह ॥७॥ आश्राव्याह अग्निं यज इति ॥८॥ यस्मिन्नश्वास ऋषभास उक्षणः इति यजति ॥९॥ वषट्कृते जुहोति ॥१०॥ आहरन्त्यस्मा एतौ सँस्रावौ दधिग्रहस्य च ॥११॥ तौ प्रतीक्षते नाना हि वां देवहितँ सदो मितं [३]मा सँसृक्षाथां[३] परमे व्योमन् इति ॥१२॥ सुरा त्वमसि शुष्मिणी इति सुराग्रहं ब्राह्मणः[४] प्रतिमीवति ॥१३॥ सोम एषः इति दधिग्रहं प्रतिगृह्णाति ॥१४॥ सुरा त्वमसि शुष्मिणी इति सुराग्रहँ राजन्यः[५] प्रतिगृह्णाति ॥१५॥ सोम एषः इति दधिग्रहं प्रतिमीवति ॥१६॥ मा मा हिँसीः स्वां योनिमाविशन् इति दधिग्रहस्य ब्राह्मणो भक्षयति, मा मा हिँसीः स्वां योनिमाविशन् इति राजन्यः ॥१७॥ स यदि राजन्यो यजेर्त्विज एतद्दधिग्रहँ समुपहावं भक्षयेयुः यदत्र शिष्टँ रसिनः सुतस्य इति ॥१८॥ अथ यदि ब्राह्मणो यजेत ब्राह्मणं[६] परिक्रोणीयात् सुराया आहुत्या उच्छेषणस्य पातारम् ॥१९॥ यदि ब्राह्मणं न विन्देद् वल्मीकवपायामवनयेदिति ॥२०॥ वल्मीकवपायां त्वेवावनयति ॥२१॥ दीर्घे वँशे शिक्यं प्रबध्नाति ॥२२॥ दक्षिणमग्निमभितः स्थूणे निघ्नन्ति ॥२३॥ तिर्यञ्चमेतया वँशमुद्दधाति धारयति वा ॥२४॥ तदेताँ शतातृण्णामुद्दधाति ॥२५॥ अधस्तादस्यै शतमानं प्रबध्नाति ॥२६॥ अवमाय शतमानं यत्रैव शतातृण्णां धारयन्ति तन्निदधाति[७] ॥२७॥ अथ त्रिभिर्वायिव्यैरवभृथँ समवयन्ति द्वे स्रुती अश्रृणवं=केतुम् इति ॥२८॥ यस्ते देव वरुण गायत्रछन्दाः[८] पाशः इति प्रथमं वायव्य(-म् । [९]तं त एतेना-)वयजे इति ॥२९॥ (यस्ते देव वरु-)ण त्रिष्टुप्[९]छन्दाः पाशः इति[९] द्वितीयम् । °तं त एतेनावयजे इति ॥३०॥ यस्ते देव वरुण जगतीछन्दाः[१०] पाशः इति तृतीयम् । °तं त एतेनावयजे इति ॥३१॥ आगत्य पितृणां याज्यानुवाक्याभि-

---

१. MHP समानय॑. २. MHP °स्वतीन्द्र॑ ३–३. MHP मांससृक्षणाथां. ४. MH ब्रह्माणं, P ब्रह्माणां. ५. MHP राजन्य. ६. P ब्रह्माणं. ७. P तमुद्दधति. ८. MP °छन्दां. ९–९. MHP छन्दान्दधाति. १०. MHP छन्दां.

रुपतिष्ठते शतातृण्णां तिसृभिरध्वर्युर्होता ब्रह्मा ॥३२॥ व्यृद्धस्याति-पवितस्य वा सोम(-वामिनो वा नानादेवत्यान्) पुरोडाशा(-न् निर्वपति ऐ-)न्द्रमेकादशकपालꣳ सावित्रं द्वादशकपालं वारुणं दशकपालम् ॥३३॥ तस्य हविष्कृता वाचं विसृज्येडान्तैः पशुभिः प्रचरति ॥३४॥ इडान्तैरेव पुरोडाशैः प्रचरति ॥३५॥ पुरस्तादनूयाजानां पुरोडाशैः प्रचरति ॥३६॥ सन्तिष्ठत (एषेष्टिः ॥३७॥ वसन्ति ॥३८॥ प्रातः प्रयुजाꣳ हवीꣳषि निर्वपति) आग्नेयमष्टाकपालꣳ सौम्यं चरुꣳ सावित्रं द्वादशकपालꣳ सारस्वतं चरुं बार्हस्पत्यं चरुं त्वाष्ट्रमष्टाकपालं (वैश्वानरं द्वादशकपालम्)[१] ॥३९॥ दक्षिणꣳ रथवाहनवाहं ददाति ॥४०॥ सन्तिष्ठत एषेष्टिः ॥४१॥ वसन्ति ॥४२॥ प्रातरतियुजाꣳ हवीꣳषि निर्वपति सारस्वतं चरुं पौष्णं चरुं मैत्रं चरुं[२] = उत्तरꣳ रथवाहनवाहं (ददाति ॥४३॥ रथ-)वाहनꣳ हैवातियुजां[३] दद्यात् ॥४४॥ वसन्ति ॥४५॥ प्रातर्देविकाहविर्भिर्यजते[४] ॥४६॥ वसन्ति ॥४७॥ प्रातर्देवसुवाꣳ हविर्भिर्यजते[५] ॥४८॥ [१३]

[ इति चतुर्थोऽनुवाकः ]

## [ अतिरात्रः ]

अथैतꣳ सर्वपृष्ठमतिरात्रं[६] तनुते ॥१॥ तस्य षड्भिर्दीक्षास्तिस्र उपसदो दशमीं प्रसुताः ॥२॥ प्रसिध्यति कर्माऽऽ[७] राज्ञो मानाद् ॥३॥ राजानं मित्वा पञ्चधा करोति ॥४॥ तस्मिन् प्राणग्रहाꣳश्च पूर्वाꣳश्च[८] पृश्नीन् व्याचष्टे ॥५॥ अथास्य माध्यन्दिने सवने मित्वैव राजानमपानग्रहाꣳश्चोत्तराꣳश्च पृश्नीन् व्याचष्टे ॥६॥ ऋजुरभिषवः[९] ॥७॥ प्रसिद्धं ग्रहा गृह्यन्त आऽऽग्रयणात् ॥८॥ आग्रयणं गृहीत्वाऽतिग्राह्यान् गृह्णाति ॥९॥ अग्न आयूꣳषि पवसे इत्याग्नेयम् ॥१०॥ उत्तिष्ठन्नोजसा सह इत्यैन्द्रम् ॥११॥ तरणिर्विश्वदर्शतः इति सौर्यम् ॥१२॥ उभय आलभ्यन्तेऽतिरात्राः[१०] पशवश्चातिग्राह्याः[११] पशवश्च ॥१३॥ एकादशिन्येते पशवः पशोरुपालम्भ्या

१. MHP om. २. MHP abr; see TS I.8.20. ३. MHP हैवेत्युक्तं. ४ MHP यजेत. ५. P यजेते. MSS do not give the sign of Paṭala-ending. ६. MP °मातिरात्रं. ७. MHP कर्म. ८. P oms. ९. MHP °षवं. १०. M °तिरात्रः, HP लभन्ते° रात्रः. ११. MHP ग्राह्यः.

भवन्ति ॥१४॥ माध्यन्दिने पवमाने रथन्तरं कुर्वन्ति, वैराजꣳ होतुः पृष्ठम् ॥१५॥ तस्मिन् महाँ इन्द्रः=(मूव);[1] त्वमिन्द्र ब्रह्मणा महान् इत्येताभ्यामस्य माहेन्द्रं गृह्णाति, उभयसामा[2] हि भवति ॥१६॥ अरणिभ्यां च प्रस्तरेण च माहेन्द्रस्य स्तोत्रमुपाकरोति ॥१७॥ तमेतमुद्गातारो[3] मथ्नन्ति ॥१८॥ प्रतिवेष्य वासः शकलमन्तर्धाय तं जातं त्रिरभिहितं करोत्युद्गाता ॥१९॥ तं प्रस्तोत्रे प्रयच्छति ॥२०॥ तमु स उत्तरेण धिष्णियान् पर्याहृत्य पूर्वेण होतुर्धिष्णियमासीनायाध्वर्यवे प्रयच्छति ॥२१॥ तमु स उत्तरेण हविर्धाने दक्षिणेनाग्नीध्रमुत्तरेणाग्नीध्रीयमग्निꣳ[4] हृत्वोत्तरत आहवनीयस्योत्सृजन्नित्युपसृजति मात्रे धरुणं मातरं धरुणो धयन्रायस्पोषमूर्जमस्माँ सुदीधरन् मयि पुष्टिं पुष्टिपतिर्नियच्छतु इति ॥२२॥ भवतं[5] नः समनसौ इति प्रहरति ॥२३॥ अग्नावग्निश्चरति प्रविष्टः इति प्रहृत्याभिजुहोति ॥२४॥ अवतं मा इत्युपतिष्ठते । [6]समनसौ समोकसौ = मद्य नः इति ॥२५॥ स्तुवानानुपास्ते ॥२६॥ गृणात्येतस्मिन् निष्केवल्यमुक्थम् ॥२७॥ उक्थं वाचि इत्युक्त्वा द्रवति ॥२८॥ माहेन्द्रमन्वतिग्राह्या जुहोति ॥२९॥ । [१४]

अग्ने तेजस्विन् इत्याग्नेयम् । °तेजस्वी=तेजसे जुहोमि स्वाहा इति ॥१॥ तेजोविदसि इत्यनुमन्त्रयते । °तेजो[7]=तेजो[8] हासीत् इति ॥२॥ इन्द्रौजस्विन् इत्यैन्द्रम् । °ओजस्वी त्वं=क्षत्रस्य चौजसे जुहोमि स्वाहा इति ॥३॥ ओजोविदसि इत्यनुमन्त्रयते । °ओजो मा मा हासी=ओजो हासीत् इति ॥४॥ सूर्य भ्राजस्विन् इति सौर्यम् । °भ्राजस्वी त्वं=भ्राजसे जुहोमि स्वाहा इति ॥५॥ सुवर्विदसि इत्यनुमन्त्रयते । °सुवः=सुवर्हासीत् इति ॥६॥ अथैतान् सर्वान् सह संगृह्यानुवषट्कृते जुहोति अग्नये स्विष्टकृते स्वाहा इति ॥७॥ आयन्ति ॥८॥ भक्षयन्ति ॥९॥ मयि मेधाम् इत्याग्नेयम् । °मयि=अग्निस्तेजो दधातु इति ॥१०॥ मयि मेधाम् इत्यैन्द्रम् । °मयि=इन्द्रियं दधातु इति ॥११॥ मयि मेधाम् इति सौर्यम् । °मयि=भ्राजो दधातु इति ॥१२॥ यजमान एवैतान् भक्षयेत् ॥१३॥ शाक्वरं मैत्रावरुणस्यावकाभिः स्तोत्र-

१. MHP भुवः. २. MHP °मश्च सा°. ३. MHP °गातरुरो. ४. MHP °त्तरेणाग्नीध्रमुत्तरेणाग्नीध्रीय°. ५. MHP भवत. ६. HP om. ७. M तेजा. ८. MHP wrongly give the sign of abridged text (=) between इति and मयि.

मुपाकरोति ॥१४॥ ताः प्रपीड्य तृतीयसवनीयान् पुरोडाशान् संयौति ॥१५॥ तन्नादृत्यम् १६॥ ता अत्रैवान्तः सदसः शयीरन् ॥१७॥ वैरूपं ब्राह्मणाच्छꣳसिन उपवाजिनेन स्तोत्रमुपाकरोति ॥१८॥ रैवतमच्छावाकस्य सांवाशिनेन स्तोत्रमुपाकरोति ॥१९॥ गाश्च वत्साꣳश्च संवाशयन्ते ॥२०॥ दक्षिणतो गावो भवन्त्युत्तरतो वत्साः[1] ॥२१॥ ता अत्रैवान्तरेण सदो हविर्धानानि संपद्य दुहन्ति ॥२२॥ तासां दुग्धकाले अग्निभिः[2] कुर्वन्ति ॥२३॥ आर्भवे[3] पवमाने बृहत् कुर्वन्ति ॥२४॥ आयतने पशुभिः प्रचरति ॥२५॥ तेषां नाना मनोता नाना हवीꣳषि नाना प्रत्यभिमर्शा नानादेवत्यानाम् ॥२६॥ सर्वꣳ[4] समानमेषां वनस्पतिः स्विष्टकृद्दिश इडेति ॥२७॥ उक्थानि प्रणयन्ति ॥२८॥ प्रसिध्यन्त्युक्थानि ॥ ९॥ षोडशिनं प्रणयति ॥३०॥ प्रसिध्यति षोडशी ॥३१॥ रात्रिं प्रणयति ॥३२॥ प्रसिध्यति रात्रिः ॥३३॥ सन्तिष्ठत एष विश्वजित् सर्वपृष्ठोऽतिरात्रः ॥३४॥ वैश्वकर्मणी च सौरी च वशे ॥३५॥ वशाया उपालम्भ्य वैश्वकर्मणश्च सौर्यश्चैककपालौ पशुपुरोडाशौ ॥३६॥ वपाभ्यां प्रचर्य निवर्तयते ॥३७॥ अथ व्युर्ष्टिद्विरात्रः[5] ॥३८॥ अग्निष्टोमः पूर्वमहरतिरात्र[6] उत्तरम् ॥३९॥ अथ क्षत्रस्य धृतिना चतुष्टोमेनाग्निष्टोमेन य(-जते ॥४०॥ स-)न्तिष्ठते रा(-जसूयः सन्तिष्ठते राजसूयः ॥४१॥ [१५] [ इति पञ्चमोऽनुवाकः ]

[ इति राजसूयः समाप्तः ]

[इति दशमः प्रपाठकः]



१. MHP वन्तत्साः २. MHP आग्निरि. ३. MH P आभवे. ४. MHP सवं. ५. MHP व्युष्ट्रिरात्रो; Cf BaudhŚS XII. 20:118.1-2 : व्युष्टिद्विरात्रो. Caland thinks it to be व्युष्टिद्विरात्रो on the basis of व्युष्टये द्विरात्राय ( BaudhŚS XII. 20 : 117.14 ). ६. MHP पुवं हरत रात्र.

# [अथैकादशः प्रपाठकः]

## [ अथाश्वमेधः ]

अश्वमेधेन यक्ष्यमाणो राजा विजिती यदास्य न कुतश्चनोपाबाधो भवति ॥१॥ स संवत्सरे पुरस्तात् फाल्गुन्यै पौर्णमास्यै चतुरोऽश्वतरी (रथा-)[१]न् प्रहिणोति [२]षोडश जनपदान् धावयत, एकैकं चतुरः ॥२॥ स यं प्राञ्चं प्रहिणोति[२] यः पुरस्तात् प्रतिराजा भवति, तं सोऽस्य गत्वाऽऽह—असावामुष्यायणोऽश्वमेधेन यक्ष्यते तमनुजानीहि इति ॥३॥ स यदि सोऽनुजानाति स एव परं[३] प्रहिणोति स परꣳ[३] स परम् ॥४॥ एवं यं दक्षिणैवं यं प्रत्यञ्चमेवं यमुदञ्चम् ॥५॥ अथ ततश्चतुर्षु[४] मासेषु प्रहिणोत्याश्वत्थे प्रावृषीणे ॥६॥ त एतदेव वदन्ति ॥७॥ तद्वं द्विः प्रहितं भवति चत्वत्रो मासाः ॥८॥ अथ ततश्चतुर्षु[४] मासेषु प्रहिणाति कार्त्तिक्यां पौर्णमास्याम् ॥९॥ त एतदेव वदन्ति ॥१०॥ [५]तद्वै त्रिः[५] प्रहितं भवत्यष्टौ मासाः ॥११॥ अथ ततो द्वयोर्मासयोः प्रहिणोति तैष्यां पौर्णमास्याम् ॥१२॥ त एतदेव वदन्ति ॥१३॥ तद्वै चतुः प्रहितं भवति दश मासाः ॥१४॥ तेषां योऽनुजानात्यन्वहः स जानाति ॥१५॥ अथो[६] यो नानुजानाति यमभ्याशꣳ सते यं प्रासहा[७] जेष्यन् मन्यत [८]उप तं यतते ॥१६॥ अथ यं नाभ्याशꣳमते[८] यं न प्रासहा जेष्यन् मन्यत उपदां[९] तस्मा आहरन्ति[१०] ॥१७॥ स्वमारं वा दुहिनरं वा दधानेन वैनं ज्ञीप्सति ॥१८॥ अथोत्तराभ्यां मासाभ्यामेतां विशꣳ सं वहति यावदस्येषुजितं भवति ॥१९॥ [११]यावती शामिता विट्[११] ममन्नं देवयजनं पर्यवस्यति

---

१. MHP °श्वतरीन्; thus Ao IV.172:69.3. २–२. P oms. ३. MHP वरं. ४ MHP चतृषु. ५–५. MHP तदद्वेद्विः. ६. MHP अथ; thus Ao IV. 172:69.14. ७. MHP प्रासाहा; thus Ao IV. 172 : 69 15. ८–८. P oms. ९. Ao IV. 172:69.16. १०. MHP हरन्ति, thus Ao IV. 172.69.17. ११–११. MHP यावतीशासीषाविद; Caland suggests various probable readings : यावतीशासीषा or यावती शासीषा or यावतीशासा सा विट्. He quotes the Vyākhyā : यावतीशासीषेति स्वमण्डलमभिप्रेत्य ( Ao IV. 175:27–31 ).

योजनमिति चेति च देवयजनात् ॥२०॥ तदन्तरेण समं कुर्वन्ति ॥२१॥ यः स्थाणुर्भवति नि तं वृश्चन्ति॥२२॥ तदाहुः—ह्रदौ स्यातां सꣳस्राविणौ पुण्यनामानौ चानुपदासिनौ चेति ॥२३॥ तदु वा आहुः—कथं तौ विन्देयुर्यौ सꣳस्राविणौ भवतः पुण्यनामानौ चानुपदासिनौ चेति ॥२४॥ एष एवैनावधिखानयेत् ॥२५॥ कर्मैव तत् कुरुते यथैवाप्यन्यत् ॥२६॥ एवं तौ संभिन्दन्ति ॥२७॥ तयोः पुण्ये नामनी[1] विदधाति[2] ॥२८॥ तावेव सꣳस्राविणौ भवतः पुण्यनामानौ चानुपदासिनौ च ॥२९॥ तौ जघनेन देवयजनं भवति ॥३०॥ तदेते शाले मिन्वन्ति दक्षिणां[3] देवयजन उत्तरामन्याम्[3] ॥३१॥ तयोर्दक्षिणयोर्द्वारोरष्टावस्रावे[4] विमिते प्रतिमिन्वन्त्युदीचीनवꣳशे दक्षिणादन्यद्दक्षिणम् ॥३२॥ अधिगच्छत्येषा फाल्गुनी पौर्णमासी ॥३३॥ तामिष्ट्वोत्तरमर्धमासं यज्ञियमेव कर्म संभरमाण आस्ते योऽस्याश्वानाꣳ सत्तमो येन संगीतो[5] भवति ॥३४॥ स यदि संगीतो द्विरूपः स्याच्छुक्लकृष्णे एते रूपे स्यातामित्याहुस्तदहोरात्रयो रूपमिति ॥३५॥ एष उ वावैष[6] प्रत्यक्षमित्याहुर्य एवैष तपतीति ॥३६॥ एष ह्येवैष आलभ्यते[7] ॥३७॥ कुशोर्णानामुष्णीषो द्वादशारत्निः प्राङ् तिर्यङ् त्रयोदशः ॥३८॥ स मौञ्ज्यामश्वाभिधान्यामनुवेष्टितो भवति ॥३९॥ एष एवाश्वाभिधानीभाजनꣳ[8] स्थेम्न इतराः ॥४०॥ जरदश्वो[9] निरमणोऽनुजाये च पुत्रोऽन्वाधेयायै च 'कृष्णः श्वा[10] चतुरक्षो विष्वग्बद्धश्च गर्दूलः पौꣳश्चलेयश्च कद्दच्च मुसलं जरत्पूर्वा चैषोकश्चोदूहः[11] ॥४१॥ स एष उदूहो भवति यावान् महानवस्रावस्तावान् ॥४२॥ तस्मिन् वेतसशाखोपसंनद्धा

---

१. MHP नामनि. २. MHP °दधति. ३–३. P °यजनमुत्त°. ४. MHP °रष्टा च स्रावे. ५. MHP संमीतो; thus Ao IV. 173 : 69.32. ६. MHP पावेष; thus Ao IV.173:69.33. ७. MHP लभ्यते;thus Ao IV 173 : 69.34. ८. Ao IV.173 : 69.36 : एवाभिधानीभा°. ९. MHP जरदश्वो. १०–१० MHP कृष्णाग् श्च [ M कृष्णगं् ° ]; thus Ao IV.173 : 69.37–38. ११. MHP °श्चोद्दहस् thus Ao IV. 173 :69.39. Cf BaudhŚS XV. 1:205 2 : चैषोकश्चाम्यूहः Caland gives the MS reading as चैषीकश्चोद्दहस्य in fn 1 ( Ao ibid ).

भवति ॥४३॥ आनायरज्जू अन्वस्ते उभयतोऽग्रन्ते[1] दीर्घे चत्वारि च[2] पुरुषशतानि ॥४४॥ [१]

शतं तल्प्या[3] राजपुत्राः शतमराजानः शतꣳ सूतग्रामण्यः[4] शतं क्षत्तृसंग्रहीतारो ब्राह्मणश्च राजन्यश्च वीणागाथिनौ यौ वक्रकपिशीर्ष्णियोर्गायतः, चतुष्टय्य आपः सारस्वत्यश्च वहन्त्यश्च वृष्ट्यश्च[5] ह्रादन्यश्च[6] ऋषभचर्म शार्दूलचर्म च द्वौ रुक्मौ रजतसुवर्णौ, द्वे अन्ये हिरण्यरजतं[7] च सुवर्णं[8] च, चत्वारो वा साहस्रा एको वा शतपलः शतकृष्णलायै कृष्णलानि ये चाध्वरदीक्षायै संभारा ये चाग्निदीक्षायै तस्योभय उपक्लृप्ता भवन्ति ॥१॥ अधिगच्छत्येषाऽमावास्या ॥२॥ तामिष्ट्वा सांग्रहण्येष्ट्या यजते इमां जनताम् संगृह्णानि इति ॥३। तयेष्ट्वोदवसाय पशुबन्धवत् कृत्वा प्रणीय[9] वा प्राजापत्यमृषभं तूपरं बहुरूपमालभते[10] सर्वेभ्यः कामेभ्यः ॥४॥ तस्य चर्म प्रक्षाल्य विहृत्य निदधाति[11] ॥५॥ एतदेव शार्दूलचर्मस्य द्वितोयम् ॥६॥ अथ पुरा षष्ठ्यं प्राजापत्यं (सं-)भरते ॥७॥ षड्(-भिररण्योर-,ग्नीन् समा(-रोह्य विमिताभ्याꣳ शा-)ले[12] प्रपद्येते दक्षिणꣳ राजोत्तरं पुरोहितः॥८॥ त्रेधोल्लिख्यावोक्ष्य मथित्वा गार्हपत्यमुदाहवनीयꣳ हरन्ति[13] ॥९॥ अन्वाहार्यपचनꣳ हरन्ति ॥१०॥ विहृत्य पुरोहितोऽग्रेणाग्नीन्परेत्य दक्षिणतो राज्ञोऽग्नीनामुपविश्यौ(-षधोः सꣳ-)स्तीर्य (परिस्तीर्याग्नीन् गार्हपत्य आज्यं विलाप्योत्-)पूय स्रुवꣳ संमृज्य पुरस्तात्पाप्मनोऽवयजते ॥११॥ अधस्तादु हैकेऽवयजन्ते ॥१२॥ उभयतस्त्वेवावयजेत ॥१३॥ स्रुवेणोपपातं जुहोति मृत्यवे स्वाहा मृत्यवे स्वाहा इति नवतिमाहुतीः[14], प्रयासाय[15] स्वाहा इत्येकादश, ता एकशनम् ॥१४॥ (तदाहुः) स वै पुरा (……) युक्ता अश्वमेधस्यर्त्विज आवहन्तीति ॥१५॥ तदु वा आहुः --कथं ता योक्तुं शक्नुयुः, यद्यु वै योक्तुं (न)[16] शक्नुयुरावोढुमु वै न

१. Caland gives the MS reading aऽ स्त्यन्ते or ऽव्यन्ते ( Ao ibid fn. 2 ). २. P oms. ३. MHP तत्व्या. ४. MHP °ग्रामणयः ५. MHP वृषाश्च. ६. MHP प्रादुनयश्च. ७ H oms रजनं. ८. P हिरण्यं for सुवर्णं. ९. MP ins भति before प्रणीय. १०. MP लभेते. ११. MP निदधति, H विदधति. १२ Cf infra XI. 4.1. १३. M हरति. १४. MHP °माहुतीं. १५. H प्रयासाम्यः, P प्रयासाश्य. १६. MHP om.

शक्नुयुरिति॥१६॥ स या एव विविक्तगर्भा[1] मासादूर्ध्वं[2] वै षुवतात्। ऊर्ध्वꣳह वैव षुवतात्। प्रत्यञ्चो गर्भा आवर्त्तं (......) भवन्ति ॥१७॥ प्र(त्य-) ञ्चो गर्भा (......?) ॥१८॥ तदेवाष्टानां विषूचीनाꣳ रूपम् ॥१९॥ एताः सुखतमं वहन्ति इत्याहुः ॥२०॥ (विक्लि-)धान् गर्भान् विभृत्यान्याभिर्दूरा-दोह्याथैताभिरन्तिकत आवहन्ति, अपचितिमेवैषु तद्दधाति ॥२१॥ केश-श्मश्रु वपते ॥२२॥ नखानि निकृन्तते ॥२३॥ दतो धावते ॥२४॥ स्नाति ॥२५॥ अहतं वासः परि(-धत्ते) ॥२६॥ अथाधिवृक्षसूर्ये सꣳशास्ति— क्षत्तर्ब्रह्मौदनं ते पक्वमुद्धृतमासिक्तसर्पिष्कमादित्योऽभ्युदयत् इति ॥२७॥ सꣳशासनमेवैतदध्वर्योस्त्वा वैतेनान्तेवासिनश्चरन्ति ॥२८॥ [3]अथास्तं-यत्यादित्ये सुवर्णरजते हिरण्ये मुखयोः प्रत्यस्य वाचं यच्छतः, सुवर्णमेव राजा रजतं महिषी ॥२९॥ वाचंयमस्यैताꣳ रात्रिमग्निहोत्रं जुहोति[4] ॥३०॥ तदाहुर् नग्नो नग्नया सह शयीतानन्तर्हितोऽमिथुनीभवन्, कामसन्तरूर्वोः सर्पेन् नेत्तु मिथुनी संभवेद् इति ॥३१॥ तदु वा आहुर् अस्त्येवात्र कारीव यन्नग्नो नग्नया सह शयीतानन्तर्हितोऽमिथुनीभवन्, जागरायै वा एतद्रूपं, जागरयन्त एवोपासीरन् इति ॥३२॥ जागरयन्त एवोपासते ॥३३॥ स यत्रास्मै प्रातरग्निहोत्रꣳ होष्यतेऽपः परिहरति ॥३४॥ तदेते हिरण्ये सहाद्भिः प्रप्रोथतः सुवर्णमेवाध्वर्यू रजतं प्रतिप्रस्थाता[5] ॥३५॥ अथैतं ब्रह्मौदनं चतुष्टयीष्वप्सु समासिच्यान्वाहार्यपचने श्रपयन्ति ॥३६॥ एतासामेवाञ्जलि-मात्रीरप उदच्य[6] प्रोक्षणाय निदधाति ॥३७॥ श्रपयित्वोदञ्चं निवर्तयति[7] ॥३८॥ अथादत्त ऋषभचर्म ॥३९॥ तज्जघनेनाग्निं प्राचीनग्रीवमुत्तरलोमो-पस्तृणाति ॥४०॥ ऋषभचर्मे शार्दूलचर्म शार्दूलचर्मे पात्रीं पात्रियामुप-स्तृणीते रजतꣳ रुक्ममुपास्य ॥४१॥ तस्यामेतमोदनमसंघ्नन्निवोद्धरत्या-सेचनं[8] कृत्वा ॥४२॥ सुवर्णꣳ रुक्ममवधाय प्रभु[9] सर्पिरुपसिञ्चन्ति ॥४३॥

[२]

अथादित्यमुपष्ठिते द्रष्ट्रे नम उपद्रष्ट्रे नमोऽनुद्रष्ट्रे नम ख्यात्रे नम

१. MHP विचित्तगर्भा. २. MHP यासामूर्ध्वं. ३. MHP अथाप्तं°. ४. MHP जुह्वति; thus Ao IV. 176:70.5. ५. MHP °प्रस्थातुः. ६. MHP °रपोदच्य. ७. MHP निर्वर्तं°. ८. MHP °दनमनिगृह्णुद्धरति. Cf BaudhŚS XIV. 3:207.6–7 : तस्यामेनमसंघ्नन्निवोद्धरति सर्पि-रासेचनं कृत्वा. ९. MHP प्रभुः.

उपख्यात्रे नमोऽनुख्यात्रे नमः सते नमोऽसते नमः पश्यते नमोऽपश्यते नमः शृण्वते नम उपशृण्वते नमो भूताय नमो भविष्यते नमश्चक्षुषे नमः श्रोत्राय नमो मनसे नमो वाचे[1] नमो ब्रह्मणे नमस्तपसे नमः श्रान्ताय[2] नमः इति ॥१॥ वाचंयमा[3] एवर्त्विजः समन्तादुपविशन्ति[4] ॥२॥ पुरस्तात् प्रत्यङ्ङध्वर्युरुपविशति, दक्षिणत उदङ् ब्रह्मा, पश्चात् प्राङ् होतोत्तरतो दक्षिणोद्गाता ॥३॥ तैः[5] पिण्डा अप्राशिता भवन्ति ॥४॥ अथैतामश्वाभिधानीमासेचने सन्तर्प्य[6] प्रतिवेशं निदधाति ॥५॥ त्रिः प्राश्य प्रशꣳसन्ति राद्धस्ते ब्रह्मौदनः इति ॥६॥ वरं ददामि इति वाचं विसृजते ॥७॥ तदेभ्यश्चतुरो वा साहस्रं ददात्येकैकं वा शतपलम्[7] ॥८॥ अथर्त्विजो वृणीते ॥९॥ त्वं मेऽध्वर्युरसि इत्यध्वर्युम् ॥१०॥ त्वं मे ब्रह्माऽसि इति ब्रह्माणम्[8] ॥११॥ त्वं मे होताऽसि इति होतारम् ॥१२॥ त्वं म उद्गाताऽसि इत्युद्गातारम् ॥१३॥ स आह—ब्राह्मणाश्च राजानश्चानेन माऽश्वेन[9] मेध्येन स्वस्ति समापयताब्रह्मज्यतायै[10] इति ॥१४॥ तेन त्वा स्वस्ति[11] समापयाम इत्याहुरब्रह्मज्यतायै[12] ॥१५॥ अब्रह्मज्यतायै[13] इति संजानते ॥१६॥ अथाध्वर्युꣳ राजानं करोति ॥१७॥ स आह—ब्राह्मणाश्च राजानश्चायं वो ऽध्वर्युरेतꣳ संवत्सरं राजा, या ममापचितिः साऽस्य, या ममेशा साऽस्य, यथा मम शुश्रूषध्वमेवमस्य शुश्रूषध्वम्, यां व एष धृतिं ध्रियातै सा वो धृतिः इति ॥१८॥ अध्वर्युꣳ राजानं कृत्वा शतकृष्णलयाऽऽयुष्ययेष्टया यजते—अनेनायुष्यमिदं[14] कर्म स्वस्ति समश्नवता३ इति ॥१९॥ [३]

शतकृष्णलयाऽऽयुष्ययेष्ट्वा[15] विमिताभ्याꣳ शाले प्रपद्येते दक्षिणꣳ[16]

१. MHP वाक्व. २. MHP शान्ताय; thus KāṭhS. 26.12. ३. MHP °यम. ४. MHP समविमति. ५. MHP ताः. ६. MP सन्तृप्य, H सन्तप्य. ७. MHP शकलम्. ८. MHP ब्राह्मणं. ९. MHP °श्चानेनाश्वेन; Cf BaudhŚS XV. 4:207.11. १०. MHP °यताब्रह्मताया; thus Ao IV. 177:71.2. ११. H सक्ति. १२. H °ह्मन्यता°, P °ण्ह्मण्यता°. १३. Caland thinks this अब्रह्मज्यताया as superfluous, hence gives it in bracket. But he is obviously wrong as this अब्रह्मज्यताया is to be construed with इति संजानते, while the first अब्रह्मज्यताया is the object of तेन = इत्याहुः. Cf BaudhŚS XV. 4:207.13; 208.1. १४. MHP °युषायमि. १५. P °येष्टया. १६. MHP. दक्षिणां.

राजोत्तरं पुरोहितः ॥१॥ राजैव यजुषा तूष्णीं पुरोहितः ये ते पन्थानः सवितः=देव ब्रूहि इति ॥२॥ त्रेधाऽऽलिख्यावोक्ष्य मथित्वा गार्हपत्यमुदाहवनीयꣳ हरन्ति[1] ॥३॥ अन्वाहार्यपचनꣳ हरन्ति ॥४॥ विहृत्य पुरोहितोऽग्रेणाग्नीन् परीत्य दक्षिणतो राज्ञोऽग्नीनामुपविशति ॥५॥ उपस्थापयत्यध्वर्यू राजानम् ॥६॥ नमोऽग्नये पृथिवीक्षिते=देहि इति गार्हपत्यम् ॥७॥ नमो वायवेऽन्तरिक्षक्षिते इत्यन्वाहार्यपचनम् ॥८॥ नमः सूर्याय दिविक्षिते इत्याहवनीयम् ॥९॥ अथैतमश्वमानोयाग्रेण शालामन्तर्वेदि प्राञ्चꣳ स्थापयन्ति ॥१०॥ तमेतानि चत्वारि पुरुषशतान्युपतिष्ठन्ते[2], [3]शतं तल्प्या[3] राज-(पुत्राः पुरस्तात्, शतमराजा-)नो दक्षिणतः, शतꣳ सूतग्रामण्यः[4] पश्चात् शतं क्षत्तृसंग्रहीतार[5] उत्तरतः ॥११॥ अथ तं कृष्णꣳ श्वानं[6] चतुरक्षं विश्वग्बद्धेन गदूलेनाश्वस्याभिच्छायां धारयतोऽनुजायै च पुत्रोऽन्वाधेयायै च, पूर्वोऽनुजायै पुत्रोऽपरोऽन्वाधेयायै[7] ॥१२॥ तं [8]पौꣳश्चलेयो जरत्पूर्वया[8] सव्यं जानु वेष्टयित्वा सैध्रकं[9] मुसलं दक्षिणेंऽसे प्रत्यस्य पश्चादनूपतिष्ठते ॥१३॥ आहरन्त्येतमैषीकमुदूहम् ॥१४॥ तमग्रेण धारयन्ति ॥१५॥ अथाश्वस्य रशनामाहृत्योत्तरत आहवनीयस्य निदधाति[10] ॥१६॥ तामादास्यमानो ब्रह्माणमामन्त्रयते ब्रह्मन्नश्वं मेध्यं भंत्स्यामि[11] देवेभ्यः प्रजापतये तेन राध्यासम् इति ॥१७॥ तं बधान इत्याह ब्रह्मा । [12]देवेभ्यः प्रजापतये [12]तेन राध्नुहि इति[12] ॥१८॥ अभितः पुण्या वाचः समुद्वदन्ति[13] ॥१९॥ अथ देवस्य त्वा सवितुः प्रसवे इत्यश्वस्य रशनामादत्ते । अश्विनोर्बा=मा ददे इति ॥२०॥ अधिवदते इमामगृभ्णन् रशनामृतस्य=मारपन्ती इति ॥२१॥ अभिधा असि इत्यश्वमभिदधाति । भुवनमसि=पृथिव्याꣳ, स्वगा त्वा देवेभ्यः स्वाहा त्वा प्रजापतये इति ॥२२॥ ह्रदमभि काष्ठां यन्ति यन्ता [14]राड् य[14]=विश्वेभ्यस्त्वा भूतेभ्यः इति॥२३॥ तमेतानि यत्तानि पुरुषशतान्यनु संयन्ति ॥२४॥ [15]निःश्लोकः पौꣳश्चलेयः[15] श्वानं पश्चादन्वेति ॥२५॥ तमध्वर्युः सꣳशास्ति यदाऽऽ प्राणे-

---

१. MHP हरत्य°. २. MHP पुर्षश°तिष्ठते. ३–३. MH शतन्तस्या, H वातं तस्या. ४. MHP सुत्रग्रामणयः ५. MHP °ग्रहीता [ P °गृ° ]. ६. MHP कृष्णगं श्चानं. ७. MHP °रोन्माधेयायै. ८–८. MHP वोङ्श्चलेयोजान्पूर्वया. ९. MHP सैध्रक. १०. MP दधति. ११. MHP मत्स्या°. १२–१२. MHP तेनाराध्नुहि ते राध्नुहीति. १३. MHP समुद्द, P समुद्दन्ति. १४–१४. MHP राध्य. १५–१५. MHP निःश्लोकं पोणंश्च.

ण्योऽश्वमभिगाहृत अप्रतिष्ठाᳪश्चागच्छताद् । यदा त्वाऽहं प्रसुवान्यथास्य प्रहरताद् इति ॥२६॥ अभि गाहन्त आ प्राणेभ्योऽश्वस्य ॥२७॥ अभिगाहन्त्यप्रतिष्ठाᳪश्चागच्छति ॥२८॥ तमध्वर्युः[1] प्रसुवाति यो अर्वन्तं जिघाᳪसति तमभ्यमीति[2] वरुणः इति ॥२९॥ तस्यैष सैध्रकेण मुसलेन प्रहरन्ति ॥३०॥ प्रहण्यमाने वाचयति परो मर्तः परः श्वा इति ॥३१॥ तमश्वस्याधस्पदमुपास्य दक्षिणापप्लाव्य[3] मुसलमनुस्यति ॥३२॥ अथाश्वं प्रोक्षति ॥३३॥ शतेन राजपुत्रैः सह पुरस्तादध्वर्युः ॥३४॥ [४]

शतन राजपुत्रैः सह पुरस्तादध्वर्युः अनेनायमश्वेन मेध्येनेष्ट्वा राजा वृत्रं वध्याद् इति ॥१॥ शतेन राजभिरुग्रैः सह दक्षिणतो ब्रह्मा अनेनायमश्वेन मेध्येनेष्ट्वा राजाऽप्रतिधृष्योऽस्तु इति ॥२॥ शतेन[4] सूतग्रामणोभिः सह पश्चाद्धोता अनेनायमश्वेन मेध्येनेष्ट्वा राजाऽस्यै विशो बहुग्वै[5] = तिलायै बह्वहस्तिहिरण्यायै बहुदासपुरुषायै रयिमत्यै पुष्टिमत्यै बहुरायस्पोषायै राजाऽस्तु इति ॥३॥ [6]शतेन क्षत्तृसंग्रहतृभिः[6] सहोत्तरत उद्गाता अनेनायमश्वेन मेध्येनेष्ट्वा राजा सर्वमायुरेतु इति ॥४॥ प्रोक्षन्त प्रोक्षन्त एव यजमानमभि संपद्यन्ते ॥५॥ अथैनᳪ समुक्षन्ति आ ब्रह्मन् ब्राह्मणो[7] ब्रह्मवर्चसी जायताम् इत्यान्तमेतेनानुवाकेन ॥६॥ तं दक्षिणाऽऽवर्तयन्ति ॥७॥ आवर्त्यमाने वाचयति अहं च त्वं च वृत्रहन् इति ॥८। तदेतानि पुरुषशतानि[8] द्वेधा व्युद्यन्ति॥९॥ पञ्चाशदेव[9] राजपुत्राणामराज्ञो[10]ऽभिसंपद्यन्ते, पञ्चाशत् क्षत्तृसंग्रहीतॄन् ॥१०॥ पञ्चाशदेव सूतग्रामणीनामराज्ञोऽभि संपद्यन्ते, पञ्चाशत् क्षत्तृसंग्रहीतॄन्[11] ॥११॥ द्वे इत्याच्छते संपद्येते द्वे इत्यात् ॥१२॥ अथाराज्ञ[12] एवाध्वर्युश्च यजमानश्चाभिपद्येते क्षत्तृसंग्रहीतॄन्[11] होता ॥१३॥ अथैतमैषीकमुदूहमाहृत्य[13] पूर्वार्धे ह्रदस्यावदधाति ॥१४॥ तमेकाᳪ रज्जुं लभन्ते ॥१५॥ [14]शतमेकाममिमाङ्यैवाम्यूहाथ इत्याह यथा सशीर्षकमश्व-[14]

---

१. MHP °ध्वयु°. २. MHP मध्वम्यमीति. ३. MHP दक्षिणावप्ला°. ४. MH शनैः. ५. MHP बहुवं. Text abr; Cf BaudhŚS XV.5:209.11–15. ६–६. MH शतेनैक्षत्त°,P शतेनैक्षत्र° ७. MP ब्रह्मन्. ८. MHP पुर्षश°. ९. MP पञ्चशद्देव, H °शद्देव. १०. MHP °पुत्राणां राज्ञो; thus Ao IV. 179:73.2. ११. P°संगृही°. १२. MHP अथ राज; thus Ao IV. 179:73.4 १३. M मुद्दहम्, H मुद्दहम्, P मुद्दहम्. १४–१४. H oms.

मूर्मिरभिहनदिति[1] ॥१६॥ अभिमाडर्य्येवाभ्यूहन्ति[2] ॥१७॥ अभ्यूह्यमाने [3]वाचयति अभि क्रत्वेन्द्र भूरध ज्मन् इति[3] ॥१८॥ सशीर्षकमेवाश्वमूर्मिरभिहन्ति ॥१९॥ अत्रैवैतमैषीकमुदूहं[4] प्रप्लाव्याश्वमुदानयति ॥२०॥ तस्य यदा विशफा[5] भवन्त्यथास्य [6]धृतोः पत्सु[6] जुहोति ॥ २१ ॥ इह धृतिः स्वाहा इति दक्षिणे पूर्वपादे ॥२२॥ इह विधृतिः स्वाहा इति दक्षिणेऽपरपादे ॥२३॥ इह रन्तिः स्वाहा इत्युत्तरेऽपरपादे ॥२४॥ इह रमतिः स्वाहा इत्युत्तरे पूर्वपादे ॥२५॥ अथ स्तोकीया अन्वाह ॥२६॥ तदाहुरे(-कशतꣳ स्तो-)कीया[7] अनुब्रूयादिति ॥२७॥ तदु वा आहुर्न वै तथा ॥२८॥ सद्यः सन्तिष्ठेत ॥२९॥ सहस्रमेवानुब्रूयादिति ॥३०॥ सहस्रमेवान्वाह ॥३१॥ स एतं पूर्वꣳ स्तोकीयानामनुवाकꣳ शतकृत्वो[8] निगदति अग्नये स्वाहा; सोमाय स्वाहा इति ॥ ३२ ॥ ताः सहस्रꣳ स्तोकीयाः ॥ ३३ ॥ अथैतमश्वमानीयाग्रेण[9] शालामन्तर्वेदि प्राञ्चꣳ स्थापयन्ति ॥ ३४ ॥ ( प्रपद्याश्वस्य सावित्राणि जुहोति अग्नये स्वाहा, वायवे स्वाहा इति सप्त ॥३५॥ अथ त्रयोऽशीतिमश्वचरिता-)[10] न्युप(-जुहोति ईङ्काराय स्वाहा; ईङ्कृताय स्वाहा इ-)[11]ति ॥३६॥ पूर्वाहुति[12] (जुहोति) पिबतो वाऽपिबतो वा ॥३७॥ अथोत्तरेण शालामास्नानं परिश्रयन्ति ॥३८॥ तत्प्रपाद्य स्नपयित्वाऽभ्यज्याञ्ज्य पवयित्वाऽऽनीयौषधीः सꣳस्तीर्य परिस्तीर्याग्नीन् गार्हपत्य आज्यं विलाप्योत्पूय स्रुवं च स्रुचं च संमृज्य प्राङेत्य चतुर्गृहीतमा(-ज्यं पदे-)ष्वत्र जुहोति ॥३९॥ अनुपवनं वाजपेये जुहोत्यन्वहमत्र ॥४०॥ अथाग्निदीक्षां निवर्तयति ॥४१॥ सर्वमग्निकर्म करोति ॥४२॥ तस्याहुता दीक्षाहुतयो भवन्ति ॥४३॥ अथैतमश्वमानीयाग्रेण शालामन्तर्वेदि प्राञ्चꣳ (स्थापय-)न्ति ॥४४॥ स आ(-ह

---

१. H oms. MP °मूर्मिभिरह°. २. MP °माड्यैवा°. Caland conjectures the correct reading as अभिमाज्यं for अभिमाड्यं ( Ao IV. 179:23). ३–३. M वाचयत्वमिक्रत्वेन्द्र भ्ररधन्धन्निति; H वाचयित्वा°भ्ररधन्धून्निति, P °भ्ररधन्धून्निति. Corrected as भ्रूरज्व° in red ink in P. ४. °मुमूहं ५. MHP विश्शफा. ६–६. MHP धृतींवत्सु. ७. MHP काद् for कीया. ८. MHP शतं कृत्वो. ९. MHP °श्वमाग्नीया°. १०. Cf BaudhŚS XV. 6:211.4–5,7. ११. Cf BaudhŚS XV. 6:211.7–8. १२. MHP पूर्णाहुतिं.

ब्राह्म-)[१]णाश्च राजानश्च यदिदमाहुः[२] पदेपदेऽश्वस्य मेध्यस्य होतव्यमितीहैव (व-)[३]यं तत् करिष्यामह इत्याह, यथास्य पदेपदे हुतं भविष्यति [४]बहु नः[४] कर्मेति ॥४५॥ तस्यैवमेव धृतीः पत्सु जुहोति ॥४६॥ स यदेवाभिहुतैः षड्भिश्च-रति तेनैवास्य (वा-)जि प्रोक्षति या अमूर्निहिता भवन्ति अग्नये त्वा इति पुरस्तात्; वायवे त्वा इति दक्षिणतः; इन्द्राग्निभ्यां त्वा इति पश्चात्; प्रजापतये त्वा इत्युत्तरतः; देवेभ्यस्त्वा इत्युपरिष्टात्; अधस्ताद् विश्वेभ्यस्त्वा भूतेभ्यः इति ॥४७॥ अथाहुतीर्निकामं[५] जुहोति अग्नये स्वाहा; सोमाय स्वाहा इति ताः सहस्रमुत्तरा स्तोकीयाः[६] ॥४८॥ आयनाय स्वाहा; प्रायणाय स्वाहा इति द्वादश प्रद्रावान् ॥४९॥ इंकाराय स्वाहा; इंकृताय स्वाहा इति त्रयोऽशीतिमश्वचरितानि[७] ॥५०॥ चतस्रो धृतीः ॥५१॥ अथोत्थाय दक्षिणं कर्णमाजपति विभूर्मात्रा इति ॥५२॥ [५]

विभूर्मात्रा प्रभूः पित्रा=नमणा असि इति ॥१॥ ययुर्नामासि[८] इति रशनामुपायच्छति ॥२॥ उपनिष्क्रम्य प्रमुञ्चति आदित्यानां पत्वान्विहि इति ॥३॥ अथैनं परिददाति भूरसि भुवे त्वा=प्रोक्षितं [९]गोपायत इति[९] ॥ ४ ॥ तस्मै जरदश्वं निरमणमन्वाकरोति, चत्वारि च पुरुषशतानि गोप्तॄन् ॥५॥ तान् संशास्ति एतं [१०]षण्मासोऽपर्यावर्तयन्तोऽन्वित यां[१०] काञ्चैष दिश-मियात् तां, याम् काश्चाति न्येयात् प्र मे तां ब्रूवथ[११], यत्किञ्च पक्वाशनमहं वः [१२]सुस्वदयामि यदु किञ्(-च तिरश्-)[१३]चीनसंनद्धं मया तत् प्रसूता आदध्वं, न यदनुचीनसंनद्धम्[१४] इति ॥६॥ एतदनुकृतिर्ह वा इदमप्येतर्हि कुरूणाम-श्वपालास्तिरश्चीनसंनद्धमाददते धार्म्यं न एतत् इति वदन्तः ॥७॥ ये ह त्वा वैतमश्वं ररक्षुस्तेषामेवैनद्धार्म्यम् ॥८॥ स आह ब्राह्मणाश्च राजानश्च

---

१. MHP broken; thus Ao IV. 179 : 74.1. २. MHP यदिमाहुः, thus Ao ibid. P ins च after आहुः. ३. MHP om. ४–४. Caland also conjectures बहुनः as one word as given in the MS (Ao IV. 179 : 74.5–6). ५. MHP °हुतिनिकायाञ्जु°. ६. MHP स्तोम्या. ७. H त्रयोदशी°. ८. MHP यजुन्नामा°. ९–९. MHP °पायत्वेति. १०–१०. °यन्तान्वितायां. ११. Ao IV. 180:75.4–5. १२. MHP वसु; Cf Ao ibid. १३. MHP om; thus Ao IV. 180:75.6. १४. MHP °चीने सन्न°.

व्युदेतु[१] वो वाहनम् । यस्यैष वाहनमभिपत्स्यते सर्वज्यानिꣳ 'स ज्यासते[२] इति ॥९॥ तेषां प्रतिवेशानि[३] राष्ट्राण्यभि वाहनं व्युदेति ॥१०॥ तमनु युञ्जते [४]हस्तिभिस्त्वद् गोरथैस्त्वदारोहणैस्त्वदन्येनैवैकशफाः[४] ॥११॥ तदन्वेतौ वीणागाथिनौ प्रगायतः ॥१२॥ इत्यददा इत्ययजथा इत्यदः साध्वकरोदिति ब्राह्मणः ॥१३॥ इत्यजिना इत्ययुध्यथा इत्यमुꣳ संग्राममहन्[५] इत्यहो[६] वीर्यमकरोदिति राजन्यः ॥१४॥ इष्टं ब्राह्मणो गायति युद्धꣳ राजन्यः ॥१५॥ दत्तं ब्राह्मणो गायति वीर्यꣳ राजन्यः ॥१६॥ नाम ब्राह्मणो गृह्णाति सखिनाम राजन्यः ॥१७॥ तिस्रोऽन्यतरो गायति तिस्रोऽन्यतरः ॥१८॥ तावेतत्प्रगीतावेव संवत्सरं गायतः काले काल आगते ॥१९॥ [६]

[ इति द्वितीयोऽनुवाकः ]

अथ सावित्रꣳ हुत्वोखां प्रवृणक्ति ॥१॥ सर्वमग्निकर्म करोति ॥२॥ नाग्निकर्मान्तरेति ॥३॥ प्रथमाभिर्दीक्षाहुतिभिः प्रतिपद्यते स्वाहाऽऽधिमाधीताय स्वाहा स्वाहाऽऽधीतं=प्रजापतये स्वाहा इति ॥४॥ एतस्यामेकविꣳशिनीं[७] दीक्षामनुवर्तयत्येकामध्वरदीक्षा(-मेकां)[८] प्राणदीक्षामेकामग्निदीक्षामेकामृतुदीक्षां, पूर्णाहुतिः सप्तमी ॥५॥ अथ मेखलां कृष्णविषाणामौदुम्बरदण्डं चमसं व्रतप्रदानमिति सन्निधाय प्रथमेन दीक्षायोगेनाभिमृशति भुवो देवानां कर्मणा = वसन्तेन त्वर्तुना हविषा दीक्षयामि इति ॥६॥ समानी कृष्णाजिनदीक्षा ॥७॥ मुष्टी करोति ॥८॥ वाचं यच्छति ॥९॥ दीक्षां प्राह ॥१०॥ अथाह दीक्षित वाचं यच्छ दीक्षित वाचं विसृजस्व इति ॥११॥ विसृष्टायां वाच्युदङ् परेत्य पुरोहितस्याग्निषु सावित्रमष्टाकपालं निर्वपति ॥१२॥ श्रपयित्वाऽऽसाद्य पुरस्ताद्भागा[९] जुहोति अग्नये स्वाहा; स्वाहेन्द्राग्निभ्याम्; स्वाहा प्रजापतये; स्वाहा विश्वेभ्यो देवेभ्यः; स्वाहा सर्वाभ्यो देवताभ्यः[१०] इति ॥१३॥ अवत्ते स्विष्टकृतेऽवहोमीया[११] जुहोति द्वादश

---

१. MHP प्यदेतु; thus Ao IV.180:75.10. २–२. MHP सञ्जास्यत; thus Ao IV. 180:75.11. ३. MHP °वेशनि; thus Ao IV. 180:75.12. ४–४. MHP हस्तिभिस्तद्गेरथैस्त्वादारोहणैस्तदन्ये; thus Ao IV. 180:75.12–13. ५. MHP °महना. ६. MHP इत्यादो. ७. MHP °विंशनी. ८. MHP om. ९. Cf BaudhŚS °भागाञ्जु°. १०. MHP also add स्वाहा after देवताभ्यः. ११. MHP कृतवहोमीया.

प्रद्रावाꣳस्त्रयोऽशीतिमश्वचरितानि चतस्रो धृतीस्ताश्चतुःशतम् ॥१४॥ तस्याꣳ सꣳस्थितायां तदानीमेव सवित्रे [1]प्रसवित्र एकादशकपालम् ॥१५॥ तस्यै ता[2] एवोपहोमीयाः ॥१६॥ तस्याꣳ सꣳस्थितायां तदानीमेव सवित्र आ सवित्रे द्वादशकपालम् ॥१७॥ तस्यैता एवोपहोमीयाः ॥१८॥ आगते व्रतं प्रदाय वाचमुपाकरोति ॥१९॥ प्रातरुदित आदित्ये सावित्रꣳ हुत्वोखां प्रवृणक्ति ॥२०॥ सर्वमग्निकर्म करोति ॥२१॥ नाग्निकर्मान्तिरेति[3] ॥२२॥ द्वितीया(-भि-)र्दीक्षाहुतिभिः[4] प्रतिपद्यते काय स्वाहा; कस्मै स्वाहा; कतमस्मै स्वाहा (इति ॥२३॥ एतस्यामेकविꣳशिनीं)[5] दीक्षामनुवर्तयति ॥२४॥ उदस्यत्यग्निदीक्षाम् ॥२५॥ उदस्यत्यृतुदीक्षाम् ॥२६॥ पूर्णाहुतिश्चतुर्थी ॥२७॥ अथ मेखलां कृष्णविषाणामौदुम्बरदण्डं चमसं व्रतप्रदानमिति सन्निधाय द्वितीयेन दीक्षायोगेनाभिमृशति भुवो देवानाꣳ रुद्रेभिः इति ॥२८॥ समानी कृष्णाजिनदीक्षा ॥२९॥ मुष्टी करोति ॥३०॥ वाचं यच्छति ॥३१॥ दीक्षां प्राह ॥३२॥ अथाह दीक्षित वाचं यच्छ, दीक्षित वाचं विसृजस्व इति ॥३३॥ विसृष्टायां वाच्युदङ् परेत्य पुरोहितस्याग्निषु सावित्रमष्टाकपालम्[6]=तस्यैता एवोपहोमीयाः ॥३४॥ तस्याꣳ सꣳस्थितायां मध्यन्दिने सवित्रे प्रसवित्र एकादशकपालम् ॥३५॥ तस्यैता एवोपहोमीयाः ॥३६॥ तस्याꣳ सꣳस्थितायामपराह्णे सवित्र आसवित्रे द्वादशकपालम् ॥३७॥ तस्यैता एवोपहोमीयाः ॥३८॥ आगते व्रतं प्रदाय वाचमुपाकरोति ॥३९॥ प्रत्ते व्रते ब्राह्मणो गायति, वाचि विसृष्टायाꣳ राजन्यः ॥४०॥ स एवमेव सप्ताहानि दीक्षते[7] ॥४१॥ उत्तरा उत्तरा आहुतीर्जुह्वदुत्तरेणोत्तरेण दीक्षायोगेनाभिमृशन् सप्तमेऽहन्नुत्तमाभिर्दीक्षाहुतिभिः प्रतिपद्यते विष्णवे स्वाहा, विष्णवे निखु = मूयपाय स्वाहा इति ॥४२॥ पूर्णाहुतिरेव चतुर्थी ॥४३॥ अथ मेखलां[8]=सन्निधायोत्तमेन दीक्षायोगेनाभिमृशति भुवो देवानां; महीमू षु; सुत्रामाणम् इति ॥४४॥ समानी कृष्णाजिनदीक्षा[9]=विसृजस्व इति ॥४५॥ [७]

[10]अष्टमेऽहन् वात्सप्रविष्णुक्रमा[10] व्यावर्तन्ते ॥१॥ वात्सप्रविष्णुक्रमा

---

१. MHP om. प्र. २. MH तस्यैका, P oms. ३. MHP °कर्मन्त°. ४. MHP द्वितीया दीक्षा°. Cf XI.7.4. ५. Cf XI.7.5. ६. MHP abr; see XI.7.12–16. ७. P oms. ८. MHP abr; see above S 28. ९. MHP abr; see above S 29–33. १०–१०. MHP अष्टमेऽन्वात्स° [ H °मेत्वा° ].

एवास्य स्वेष्वग्निषु भवन्ति ॥२॥ पुरोहितस्याग्निष्वेताभिरिष्टिभिर्यजते ॥३॥ स एवमेव द्वादश च मास एति यजमानः सप्त चाहानि ॥४॥ स यत्रैवादः[1] पुरस्ताद्विशं संवहति तदेतान्[2] सार्धꣳ सार्धꣳ समवसाय यन्ति ॥५॥ सार्धं तक्ष्णः सार्धं मानस्कृतः सार्धꣳ रथकारान् सार्धं कुम्भकारान् सार्धं कर्मारान् ॥६॥ तेषामेतानि पृथक् कर्माणि भवन्ति ॥७॥ एतत्तु[3] तक्ष्णां कर्म, ऊर्ध्वमूलानामश्वत्थानां व्रजं मिन्वन्ति मुखदघ्नं यथोरुस्थानायैवम्[4] ॥८॥ चत्वारि वाऽष्टौ वेन्द्राणसान्यभ्यारोहाश्च श्रितीश्च शतं [5]वैल्वान्येधाचितान्येकविꣳशतिर्यूपा राज्जुदालश्च[5] पौतुदारवौ [6]च षड्[6] बैल्वाः षट् खादिराः[7] षट् पालाशाः[8] पालाश उपशयः ॥९॥ सर्वं एकविꣳशत्यरत्नयो भवन्ति ॥१०॥ षट्तयान्यनाꣳस्यारोहणं च महानसं च मानिनं च प्रवाहणं च रथवाहनं च दुन्दुभिवाहनं च ॥११॥ एवꣳरूपाणि बहुतयानि भवन्ति ॥१२॥ बहुतयीः स्रुचः[9] कुर्वन्ति बहुतयाꣳश्चमसान् बहुतयीः पात्रीः[10] ॥१३॥ [11]तत्रापि ताः पात्रीः[11] कुर्वन्ति यः परमो वृक्षस्तस्य ॥१४॥ षट्[12]त्रिꣳशतं दीर्घत्सरून् स्रुवान्[12] षट्त्रिꣳशतमलाबुदर्वान्[13] षट्त्रिꣳशतमष्टमानि ॥१५॥ एतद्वेणुकाराणां[14] कर्म, [15]तदत्रोपसंख्यायते ॥१६॥ एतन्मानस्कृतां, बहुतयं कवचवरूथं कुर्वन्ति ॥१७॥ एतद्रथकाराणां, बहून् रथान् नवान् नवपरिरथ्यान्[16] कुर्वन्ति ॥१८॥ एतत्कुम्भकाराणां, बहुतयं कुम्भमात्रं कुर्वन्ति, बहुतयान् कुम्भान् बहुतयीः कुम्भीः ॥१९॥ तत्रापि तास्तिस्रः कुम्भीः कुर्वन्ति याः केवलं केवलं गामङ्गशः संकृत्ता[17]ꣳ संभवेयुः ॥२०॥ यथैक-

---

१. MHP यत्रैवोदः; thus Ao IV. 181:76.1. २. M तदेन्, H तदेतत्, P तदेत्; thus Ao ibid. ३. MHP °तन्तु, ४. Caland gives the reading of the MS as रथोरुस्थोरुस्था ( Ao IV. 181:76. fn 1 ). But this reading is not found in M which is supposed to be the base of Caland's text. ५–५. MHP वैल्वान्येतान्येकविंशति यूपा राज°. ६–६. MHP वषट्. ७. MHP खादिरो. ८. MHP पालाशान्पालाशा. ९. MHP स्रुचा. १०. MHP पोत्री. ११–११. MH तत्रापितां पात्रीं [ H तत्रपि° ]. १२–१२. MHP त्रिशद्दीर्घत्सरुन्ध्रुवान्. १३. MHP त्रिशदला°. १४. MHP वेणुदारा°. १५. Ao 181:76.15 : तत्रोप°. १६. MHP परितथ्यान्. १७. MP संकृत्तः, H संस्कृतः.

विꣳशतिविधायैवमिष्टकाः[१] ॥२१॥ एतत् कर्मारणाꣳ सुवर्णरजते महिम्नोः पात्रे कुर्वन्ति, सुवर्णꣳ रुक्मꣳ सुवर्णं कशिपु सप्त वाऽष्टौ वा शतपलाꣳश्चत्वारि विधवनानि सुवर्णानि रजतनिर्बाधानि रजतानि वा सुवर्णनिर्बाधानि षट् कमण्डलून् सुवर्णान् रजतरास्नान् रजतान् वा सुवर्णरास्नान्; औपशयः सुवर्णो रजतशम्यो रजतो वा सुवर्णशम्यः; कुरीरं सुवर्णꣳ रजतग्रन्थि, रजतं वा सुवर्णग्रन्थि,[२] त्रिवृद् दाम, त्रिवृत् पड्बीशम् ॥२२॥ यत्किञ्चाश्वमभितः तत्सर्वं त्रिवृत् सुवर्णं भवति[३] ॥२३॥ ( शतꣳ)[४] सुवर्णा असयो[५] रजतत्सरवः, शतꣳ रजताः सुवर्णत्सरवः, षट्त्रिꣳशल्लोहायसाः कृष्णायसत्सरवश्चत्वारश्च कृष्णायसा लोहायसत्सरवः सायकः सिक्त्रिमः[६] कृष्णः कृष्णत्सरुः,[७] सुवर्णः सुवर्णत्सरुः ॥२४॥ तस्य द्वे द्वाचत्वारिꣳशे शते असीनामुपक्लृप्ते भवतः ॥२५॥ सहस्रꣳ सुवर्णाः काचाः, सहस्रꣳ रजताः, सहस्रꣳ सामुद्रास्त्रीणि च शतानि त्रयस्त्रिꣳशच्च सुवर्णाः सूच्यस्त्रीणि च शतानि, त्रयस्त्रिꣳशच्च रजतास्त्रीणि च शतानि 'त्रयस्त्रिꣳशच्चायस्मय्योऽयस्मयः'[८] कमण्डलुर्वैतसः[९] कटस्ताप्यं च कृत्यधीवासं च दशतयमन्नम्॥२६॥ यदस्य राष्ट्रे मधु भवति[१०] तत्सर्वꣳ समा(-नयन्ति–शतं पयश्च-)र्माणि[११] (शतं) घृत(-चर्माणि) शतं मधुचर्मा(-णि शतं)[१२] तण्डुलचर्माणि (शतं पृथुकचर्माणि)[१३] शतं लाजाचर्माणि शतं करम्भचर्माणि शनं धानाचर्माणि शतं सक्तुचर्माणि शतं मसूस्य[१४]-चर्माण्येकं प्रियङ्गुतण्डुलानां चर्म ॥२७॥ अथास्मा एतान् पशून् समानयन्ति, ग्राम्याꣳश्चारण्याꣳश्च वशाश्च ( गैरेयाꣳश्च नादेयाꣳश्च वयाꣳसि च सरीसृपाꣳश्च ॥२८॥ याननाः-)[१५]लम्भ्यान् मन्यते रक्षन्ति तान् ॥२९॥ यान्वध्यान्[१६] पचन्ते तान् ॥ ३० ॥ यान् प्रस्रष्टव्यान्[१७] प्राजंयन्ति तान् ॥३१॥ [८] ।

१. MH °त्रिविधायै°, Cf BaudhŚS XV. 14:219.3. २. MHP °ग्रन्थि. ३. MHP भवन्ति. ४. MHP om; thus Ao IV.182:76.28. ५. MHP असतयो. ६. MHP सिक्तिमः, thus Ao IV. 182:76.30. ७. M कृष्णत्स°, HP कष्णं स°. ८–८. MHP चतुस्त्रिशच्चायस्मै यायस्मयः, Ao IV.182:76.35 : त्रयस्त्रिशच्चायस्मै योहस्मयः, ९. MHP वैतसं. १०. MHP भवन्ति. ११. MHP ष्ट्राणि. १२. Cf BaudhŚS XV. 16:220.7–8. १३. MHP om; Cf BaudhŚS ibid. १४. H मसूच्य. १५. Cf BaudhŚS XV. 16 : 220.13-14. १६. MHP यान्वाक्यान्. १७. MHP यान्प्रस्रष्ट° [ P यान्घ°].

षष्ठे मासि व्रजेऽश्वमा निरुन्धन्त्यस्मिन्नेवैतस्मादाश्वत्थात् ॥१॥ तस्मै तत्र तिष्ठन्त एतानि पुरुषशतानि[1] षण्मासो घासमा(-हरन्ति ॥२॥ एत एनं परिचरन्ति ॥३॥ अ-)श्वागमनीयामिष्टिं[2] निर्वपति यद्यश्वोऽनागतः स्यात् ॥४॥ यदि च त्वेवागतः[3] स्याद्यदि चानागत उभयेनैव निर्वपति ॥५॥ यद्यनागतः स्या(-दश्वशकान्) शालाग्निषूपकिरेद्[4] गार्हपत्येऽन्वाहार्यपचन आहवनीये ॥६॥ अथ वैश्वानरं द्वादशकपालं (पुरोडाशं निर्वप-)ति ॥७॥ श्रपयित्वा सादयति ॥८॥ पञ्चदश सामिधेन्यः ॥९॥ वार्त्रघ्नावाज्यभागौ ॥१०॥ वैश्वानरः[5] प्रत्नथा नाकमारुहद्; अपामुपस्थे महिषा अगृभ्णत विशो [6]राजानमुप तस्थुर्ऋग्मियम् । आ दूतो अग्निमभरद्विवस्वतो[6] वैश्वानरं मातरिश्वा (परावतः इति) ॥११॥ तद्धैत(-च्छु-)त-[7]सेनः पारि(-क्षितो य-)[8]त्राश्वमेधेनेजे,[9] तस्य हाश्वं प्रपतितꣳ शार्दूलो जघान । स हैतामश्वागमनीयामिष्टिं[10] निरुवाप । तस्याहꣳ सुवर्णं [11]पशुमाहृत्यावासैतावदश्वागमनीया यदजीविष्यदेवागमिष्यदिति ॥१२॥ सैषा विज्ञाताश्वागमनीयात्रैतां निर्वपन्त्या हैव तत्र गच्छति ॥१३॥ तस्याꣳ सꣳस्थितायां तदानीमेवाश्वत्थे व्रजेऽश्वमानिरुन्धन्ति[12] ॥१४॥ तस्यै तत्र तिष्ठत एतानि [16]पुरुषशतानि सप्ताहानि घासमाहरन्ति ॥१५॥ एत एनं परिचरन्ति ॥१६॥ पुरोहितस्याग्निष्वेताभिरिष्टिभिर्यजते ॥१७॥ तत्रैताननुवाकानुपप्रयुञ्जते, आधीतयजुषां चाङ्गहोमं[13] च द्वावश्वरूपाणामोषधिहोमं च वनस्पतिहोमं च सन्तनीनां चाभिधानानां च संप्लवानां च खारीहोमं[14] च ॥१८॥ धृतोहुं त्वैतान् जुह्वति ॥१९॥ नवकृत्व उत्तमेऽहन् यजते ॥२०॥ सर्वाः प्रथमाः करोति सर्वा मध्यमाः सर्वा उत्तमाः ॥२१॥ पुनरेत्य द्विस्तावां वेदिं मिमीत एकविꣳशतिविध्मर्माग्निम्[15] ॥२२॥ अथास्यैतानि [16]पुरुषशतान्युपक्लृप्तानि भवन्ति ॥२३॥ [९]

---

१. MHP पुर्ष॰. २. MHP श्वागम॰. ३. MP त्वेवावगत. ४. MHP श्वशलाग्नि॰. ५. MHP ॰नरं. ६–६. MHP नमवदस्थूरुग्मियामादतो अग्निरभ॰. ७. Thus Ao IV. 185:77.1: ८ Thus Ao ibid. ९. MHP मेधेन यजेत. १०. MHP ॰मिषुं. ११. परशुमा॰. १२. MHP ॰श्वमनि॰. १३. MHP त्वाङ्ग॰. १४. MHP वारिहोमं. १५. P ॰शतिमग्निम्. १६. MHP पुर्ष॰.

त्रीणि शतानि राजपुत्राणामुभयालोहकवचानाꣳ सन्नद्धानाꣳ सन्नद्धसारथीनां विततवरूथानां [1]चतुर्युजां; त्रीणि शतान्यराज्ञाꣳ सन्नद्धानामसन्नद्धसारथीनां विततवरूथानां[1] त्रियोगाणां; त्रीणि शतानि सूतग्रामणीनामसन्नद्धानामसन्नद्धसारथीनां विततवरूथानां द्वियोगानां; त्रीणि शतानि क्षत्तृसंग्रहीतॄणां विपथपत्तीनां[2]; त्रीणि शतानि तिसृधन्विनां; त्रीणि शतानि निषङ्गिणां; त्रीणि शतान्युपवीतिनां; त्रीणि शतानि दण्डहस्तानां च शाखाहस्तानां च। तान्यस्य चतुर्विꣳशतिपुरुषशतान्युपक्लृप्तानि भवन्ति ॥१॥ अथास्तंयत्यादित्य एते राजपुत्राश्चतुर्धा व्युद्यन्ति पञ्चसप्ततिः पञ्चसप्ततिः प्रतिदिशम् ॥२॥ [3]तानन्वेता जनता व्युद्यन्ति[3] ॥३॥ तानि त्रीणि त्रीणि च रथशतानि प्रतिदिशं संपद्यन्ते[4] त्रीणि त्रीणि च पत्तीनाꣳ शतानि ॥४॥ त एताꣳ रात्रिं तत्र[5] गोपायमाना वसन्ति ॥५॥ प्रातर्यदहः क्रयः संपद्यते तत्कृत्वा गार्हपत्यचितीः संचित्य संन्युप्य नैरृतीभिश्चरित्वा प्रायणीयं निर्वपति ॥६॥ तस्य हविष्कृता वाचं विसृज्याहाश्वस्यावविदितॄन् इच्छत किमश्वस्य क्रियते किं न क्रियते इति ॥७॥ त्रयोदशाहानि जिनीयुरित्याहुरा दक्षिणाकालादिति ॥८॥ तदु वा आहुर्न वै तथा किञ्चनोच्छिष्येतैकमेवाहर्जिनीयुरिति[6] ॥९॥ एकमेवाहर्जिनन्ति[7] ॥१०॥ सा या विडभिवेदयते न सा जीयते ॥११॥ अथ या नाभिवेदयते सर्वंज्यानिꣳ [8]सा ज्यास्यते[8] ॥१२॥ अथ यानध्वर्युः परितित्रासते पुरस्तादेव तेभ्योऽववदितॄन् प्रहिणोति ॥१३॥ राज्जुदालमग्निष्ठं[9] मिनुतादिति[10] मेऽध्वर्यु ब्रूताद्, उत्तरतोऽश्वस्यावद्यतादिति मेऽध्वर्युं ब्रूताद्, वैतसे कटेऽश्वस्यावद्यतादिति मेऽध्वर्युं ब्रूतात्, सुवर्णेन सुवर्णत्सरुणाऽश्वस्यावद्यतादिति मेऽध्वर्युं ब्रूतादिति ॥१४॥ राज्जुदालोऽग्निष्ठइति [11] न्वाव ह[11] जनमेजयराज्ये तक्षा वैश्यव्रजस् ॥१५॥ [12]तत्र शंय्वन्तः[12] प्रायणीयः सन्तिष्ठते ॥१६॥ [१०] [इति तृतीयोऽनुवाकः]

---

१–१. H oms. २. MHP विपथ°. ३–३. MHP एता जनता व्युदेति. Caland thinks तानन्वेषा जनता व्युदेति as a probable text ( Ao IV. 186:79.11 ). ४. MHP °द्यते. ५. MHP यत्ता; thus Ao IV.186:79.13. ६. MHP जिनियु°. ७. MHP जिन्वन्ति ८–८. MHP सञ्जास्यते, thus Ao IV. 186:79.20. ९. MHP °मग्निषु. १०. Ao IV. 186:79.21 : मिनुयादिति. ११–११. MHP न्वाववह; thus Ao IV. 186 : 79.25. Caland gives the MS reading as न्वावहह ( Ao ibid fn 2 ). १२–१२. MHP तत्रे शंय्यन्त.

पदाच्छायनीयामाहुतिं जुहोति ॥१॥ पदमच्छैति[1] ॥२॥ राजानं क्रीणाति ॥३॥ राजानं क्रीत्वोदूह्यातिथ्यमस्मै[2] निर्वपति ॥४॥ इडान्त आतिथ्यः सन्तिष्ठते ॥५॥ द्वादशोपसदः ॥६॥ अनूपसदमेकविꣳशतिविधोऽग्निश्चीयते ॥७॥ तस्योपवसथेऽभिषेकम् ॥८॥ नान्तरियन्ति ॥९॥ श्वोभूते[3] [3]समस्यति ॥१०॥ उत्तमे[3] प्रवर्ग्योपसदौ[4] ॥११॥ अग्नेरावृताग्निं प्रहरति ॥१२॥ समिन्वन्ति सदोहविर्धानानि ॥१३॥ पृष्ठ्याꣳश्च हविर्धाने समभ्यावर्तयन्ति[5] ॥१४॥ रथवाहने हविर्धाने प्रणीयौदुम्बर्या अवटं परिलिखन्ति ॥१५॥ उपरवं यूपावटꣳ सदः संमिनोति ॥१६॥ आग्नीध्र मिनोति ॥१७॥ उपरवैश्चरित्वा धिष्णियान् निवपति ॥१८॥ अनुदिशत्यनूदेश्यान् ॥१९॥ स्तृणन्ति बर्हिः ॥२०॥ राजानं प्रणयति ॥२१॥ अग्नीषोमौ प्रणीय ता(-न् परिधीन् परि-)धाय योगेन युनक्ति कस्त्वा[6] युनक्ति स त्वा युनक्तु इति षड्भिर्मध्यमं परिधिं पञ्चभिर्दक्षिणार्ध्यं पञ्चभिरुत्तरार्ध्यम् ॥२२॥ अवान्तरदीक्षा विसृजते ॥२३॥ [7]राज्जुदालमग्निष्ठमुच्छ्रित्याग्नीषोमीयं पशुमुपाकरोति ॥२४॥ तस्य वपाꣳ हुत्वा मार्जयित्वा पशुपुरोडाशं निर्वपति ॥२५॥ तमनुवर्तन्ते(-ऽष्टौ दे-)[8]वसुवाꣳ हवीꣳषि दशहविश्चेष्टिः ॥२६॥ प्रैषवान् पशुपुरोडाशः ॥२७॥ अनुब्रूहि ॥२८॥ यज इति, इतरेषाꣳ हविषामुपाꣳशु ॥२९॥ समानः प्रैषवान् स्विष्टकृत् ॥३०॥ समानीडा ॥३१॥ ऋजु पशुना प्रचर्य वसतीवरीः परिहृत्य पयाꣳसि परिशिष्योपवसन्ति ॥३२॥ प्रातर्हस्तावनिज्याज्येन सावित्रं जुहोति ॥३३॥ अथाज्यानि गृहीत्वोपावहृत्य राजानं प्रातरनुवाकमुपाकरोति ॥३४॥ परिहिते प्रातरनुवाकेऽपोऽच्छैति ॥३५॥ अपो व्यपनीयाहवनीये सꣳस्रावꣳ हुत्वाऽग्निष्टोमं क्रतुं कृत्वा प्रपद्यते ॥३६॥ प्राजापत्यं दधिग्रहं जुहोति ॥३७॥ ऋजुभिरभिषवः ॥३८॥ प्रसिद्धा ग्रहा आग्निष्टोमिकाः ॥३९॥ स यावदेवाध्वर्युर्ग्रहान् गृह्णाति तावदेतमश्वं दक्षिणे ह्रदे पल्पूलयित्वोदानयन्ति ॥४०॥ तमुत्तरां वेद्यै श्रोणिं जघनेन पुच्छस्योदञ्चꣳ स्थापयन्ति ॥४१॥ उत्तरेणास्तावं पूर्ववहीं परिश्रयन्ति ॥४२॥ तस्यै[9] परास्तिस्रः ॥४३॥ गृहीतेष्वेव ग्रहेषु ॥४४॥ [११]

१. MHP °मच्छेति. २. MP क्रीत्वो दोह्या° [ H क्रीत्वा ]; Cf BaudhŚS XV. 17:22.1 : क्रीत्वोह्याति°. ३--३. H समस्युत्तमे. ४. HP प्रवर्ग्यौप°. ५. MHP समभ्यवर्त°. ६. MP तन्त्वां, H तं त्वा. ७. MHP °मग्निम्°. ८. MHP om. ९. HP तस्य.

अध्वर्युः पञ्च च बर्हींऽष्यादत्ते त्रीऽश्च शतपलान् ॥१॥ अश्वस्य वालधिमन्वारभ्य बहिष्पवमानऽसर्पन्ति ॥२॥ आस्तावेऽश्व उद्द्रवति ॥३॥ तस्मै बर्हिश्चोपास्यति शतपलं च, बर्हिरुद्गात्रे, शतपलमात्मने ॥४॥ अथाह—उद्गातर्धेनुशतं च ते ददाति शतपलं च। अथ मेऽयमश्व उद्गायतु इति ॥५॥ तं तथेत्याहोद्गाता ॥६॥ अवोद्धरन्ति पूर्ववद्ध्यै परिश्रयणम् ॥७॥ उपेतराः प्रार्जन्ति[1] ॥८॥ स यथा चिरमदृष्ट्वाऽभिक्रन्देदेवमभिक्रन्दति ॥९॥ उपेतराः प्रस्क्रन्दन्ति ॥१०॥ इदमुद्गीथं मन्यन्ते ॥११॥ इदमुपगीतमुदगासीदश्वो मेध्य इत्याहुः। आयुरागासीत् सुप्रजास्त्वमागासीत् सजातवनस्यामागासीद्[2] विश्वं भद्रमागासीदस्मै सुन्वते यजमानाय इति ॥१२॥ अर्धाय पूर्ववहीरन्यां दिशं नयति ॥१३॥ अथैतमश्वमानीय[3] यथायतनऽ स्थापयित्वा त्रिवृता दाम्ना सन्दाय त्रिवृता पड्बीशेन बद्ध्वा कुष्टीकमन्नेनोपकिरन्ति[4] ॥१४॥ अथाह—उद्गातर्धेनुशतं[5] च ते ददाति शतपलं चाथ मे त्वमेवोद्गाय इति ॥१५॥ तं तथेत्याहोद्गाता ॥१६॥ तं पुरा बहिष्पवमानात् त्रीणि च गवाऽ शतान्यागच्छन्ति त्रयश्च शतपलाः ॥१७॥ स्तुत उद्गातार[6] बहिष्पवमानेन स्तुवते ॥१८॥ स्तुत उत्तिष्ठन् संप्रेष्यति अग्नीदग्नीन्विहर = पशूनन्तिकं कुरु इति ॥१९॥ आश्विनं गृहीत्वोपनिष्क्रम्य परिवीयमाणायानुवाच आह ॥२०॥ एकादशाग्निष्ठे रशनां परिव्ययति ॥२१॥ एकादशैकादशिनान् पशूनुपाकरोति ॥२२॥ प्रथमानाश्वमेधिकानाग्नेयः कृष्णग्रीवः सारस्वती मेषीत्येतान् ॥२३॥ तेषां वपा हुत्वा मार्जयित्वा संप्रसर्पन्ति ॥२४॥ प्रतायत एष चतुष्टोमोऽग्निष्टोमो रथन्तरपृष्ठ्यः ॥२५॥ तस्य चतसृषु बहिष्पवमानमष्टास्वाज्यानि द्वादशसु माध्यन्दिनः पवमानः षोडशसु[7] पृष्ठानि विंऽशत्यामार्भवः पवमानः चतुर्विंऽशत्यां यज्ञायज्ञियम् ॥२६॥ ऋजु[8] प्रातःसवनऽ सन्तिष्ठते ॥२७॥ ऋजु माध्यन्दिनऽ सवनमायात् ॥२८॥ सीदन्ति नाराशऽसाः ॥२९॥ सन्नेषु नाराशऽसेषु दक्षिणेभ्यो दाक्षिणानि होष्यन्नासीराहवनीये जुहोति अर्वाङ् यज्ञः संक्रामतु इत्येता अष्टौ स्रुवाहुतीः ॥३०॥ अथ दाक्षिणानि हुत्वा तृतीयं जितस्य ददाति ॥३१॥

---

१. H प्राजंयन्ति. २. MHP सुजात°; thus Ao IV.188:80.2. ३. MHP °माग्नीय. ४. Cf BaudhŚS XV. 18:222.11 : आमुकुष्मिकम् for कुष्टीकम्. ५. MHP °गातारनयुक्छतं. ६. MHP उदगाता. ७. MHP षोडश. ८. MH ऋजुः.

यथाश्रद्धꣳ स्वस्य दत्त्वा समनुदिश्य वैश्वकर्मणानि हुत्वा पर्याप्तीराहवनीये जुहोति भूतं भव्यं भविष्यद् इत्येता नव स्रुवाहुतीः ॥३२॥ पृष्ठे वसतीवरीर्गृह्णाति ॥३३॥ ऋजु माध्यन्दिनꣳ सवनꣳ सन्तिष्ठते[1] ॥३४॥ ऋजु तृतीयसवनम् ॥३५॥ सन्तिष्ठत एष चतुष्टोमोऽग्निष्टोमः ॥३६॥ त एवाहुर् ब्रह्मन् प्रस्थास्यामः इति ॥३७॥ अनूयाजानिष्ट्वा स्वरून्[2] जुहोति ॥३८॥ अथ हार्योजनैश्चरित्वाऽप्सुषोमैश्चरन्ति ॥३९॥ अथ प्रत्यञ्चः परेत्य जाघनीभिः पत्नीः संयाजयन्ति ॥४०॥ पत्नीः संयाज्य प्राङुदायन् तराꣳसि जुहोति ॥४१॥ तराꣳसि हुत्वा ध्रुवामाप्याय्याज्यस्थाल्यामवनयति ॥४२॥ [१२]
[ इति चतुर्थोऽनुवाकः ]

अ(-थास्यैतानि शतमौक्षाणि चर्माण्युपस्तीर्णानि भवन्त्युत्तराꣳ श्रोणिमुत्तरेण पक्षसꣳहितानि ॥१॥ अ-)[3]थैतेषां घृतचर्म(-णां) यावन्ति रात्रिचरणायालं मन्यन्ते तावन्ति परिशिꣳषन्ति ॥२॥ अथैतरत्सर्वमन्नꣳ संप्रयुवन्ति[4] ॥३॥ उच्छ्रयन्त्येतां [5]पुरꣳ समाꣳ[5] राज्जुदालेनाग्निष्ठेन ॥४॥ तस्या एकमेव पश्चात् प्रपदनं कुर्वन्ति ॥५॥ उच्छ्रयन्ति श्रितीः ॥६॥ अतिहरन्ति[6] प्राकारान् ॥७॥ आवर्तयन्तीन्द्राण(-सानि ॥८॥ राज्जुदाल-)[7]मग्निष्ठꣳ रज्जुभिर्वा वकलैर्वा वेष्टयित्वा सचषालं मृदा प्रलिम्पन्ति ॥९॥ अथैतेषां बैल्वानामेधाचितानाꣳ षोडश वा विꣳशतिं वा चतुर्विꣳशतिं वा रचाय चिन्वन्ति ॥१०॥ राजपुत्राश्चिनुयुरित्याहुः ॥११॥ अथेतराणि संप्र(-किरन्ति ॥१२॥ अध्वर्युश्च प्रतिप्रस्थाता च द्वा-)[8]वुपशयावध्वर्योश्च प्रतिप्रस्थातुश्च, विꣳशतिरन्ये प्रतिप्रस्थातुः प्रतिप्रस्थातारो, दशान्येऽश्वमेधविद, एतेऽस्य चतुस्त्रिꣳशदश्वमेधविद उपक्लृप्ता भवन्ति ॥ १३ ॥ अथास्तंयत्यादित्य एतेऽश्वमेधविदोऽभ्यारोहन्तीन्द्राणसानि यदि चत्वार्य(-नुदिशमवान्तरदिशास्वितराणि यद्यष्टौ भवन्ति ॥ १४ ॥ सर्वे-)[9]भ्यो दीर्घत्सरून्[10] स्रुवान् सर्वेभ्योऽलाबुदर्वान्[11] सर्वेभ्योऽष्टमानि ॥१५॥ तत्रैतान-

१. MHP तिष्ठन्त. २. P स्वरुं. ३. Cf BaudhŚS XV. 18:223.16–17. ४. P संप्रवत्त्यु°. ५–५. MHP वुरं समा; thus Ao IV. 189:81.1. ६. Ao IV. 189:81.3 : अबिहरन्ति. ७. Caland supplies only °सानि ( Ao IV. 189:81.4 ). ८. Cf BaudhŚS XV. 19:223.19; MHP न्युप for °वुप. ९. Cf BaudhŚS XV. 19:224.4–5. १०. MHP दीर्घंस°. ११. MHP °लायुद°.

नुवाकान् प्रयुञ्जते पूर्वं च स्तोक्यानां प्रद्रवाणां च दिश्याश्चोत्तराश्च स्तोक्या एकविᳬशिनीं दीक्षां दीक्षायोगं च त्रयोऽशीतिमश्वचरितानि दशामूनीष्टिषूप[1] प्रयुञ्ज(-ते ......) ये ते त (एतस्यै) ॥१६॥ एकस्मै (स्वाहा इति त्रिᳬ-)शतिरध्वर्युरेव (य-)जुषा जुहोति, तूष्णीं प्रतिप्रस्थातारः ॥१७॥ यस्य यस्यैवाध्वर्युर्जुहोति तस्य तस्येतरे जुह्वति ॥१८॥ आज्यस्यैव दीर्घत्सरुभिः[2] स्रुवैर्जुह्वत्यलाबुदवैंश्चवाष्टमैश्चान्नस्य ॥ १९ ॥ स [3]एतं पूर्वᳬ[3] स्तोक्यानामनुवाकमाज्यस्यैव पराञ्चᳬ सᳬस्थापयन्ति[4] अग्नये स्वाहा, सोमाय स्वाहा इति ॥ २० ॥ अथ खारीहोमं जुहोति दत्वते स्वाहा [5]इत्यन्नस्य, अदन्तकाय स्वाहा[5] इत्याज्यस्य ॥२१॥ अथानुवाकम् ॥२२॥ अथ खारीहोमम् ॥२३॥ आज्येनैव खारोहोमं व्यतिषजति, खारीहोमेनानुवाकान् ॥ २४ ॥ एतेषामनुवाकानां पुरा समापनाद्वसतीवरीः[6] परिहरेयुः ॥२५॥ वसतीवरोणां काले प्रभ्वन्नᳬ संप्रकीर्योपाधिरोहन्ति यथा न कनीयानर्चिः स्यात् ॥२६॥ प्रत्यवरुह्य वसतीवरीः[7] परिहृत्य पयाᳬसि विशिष्याशित्वा [8]पीत्वोपाधिरोहन्ति[8] ॥ २७ ॥ खारीहोमं पूर्वेषामनुवाकानामुपादाय समाप्तिभिः प्रतिपद्यन्ते ॥२८॥ स एतं प्रथमᳬ समाप्तीनामनुवाकमाज्यस्यैव पराञ्चᳬ सᳬस्थापयन्ति एकस्मै स्वाहा, द्वाभ्याᳬ स्वाहा इति ॥२९॥ अथ खारीहोमं जुहोति दत्वते स्वाहा इत्यन्नस्य, अदन्तकाय स्वाहा इत्याज्यस्य ॥३०॥ अथानुवाकम् ॥३१॥ अथ खारीहोमम् ॥३२॥ आज्येनैव खारीहोमं व्यतिषजति खारीहोमेनानुवाकान्[9] ॥३३॥ ते यत्रागच्छन्ति अन्ताय स्वाहा परार्धाय स्वाहा इति, तत्प्रभृतिमेवोपनिवर्तन्ते ॥३४॥ त एवमेवासतᳬहारᳬ रात्रिं जुह्वतो जुह्वतस्तिष्ठन्ति ॥३५॥ [१३]

आ प्रातरनुवाकात् ॥१॥ प्रातरनुवाकस्य काले उपाधिरोहत उपशयौ ॥२॥ एषोऽन्तमोऽनुवाक इत्युक्त्वोपावरोहतोऽध्वर्यू ॥३॥ तत उपशयौ

---

१. MHP °मून्यानमूनिष्टि°. २. MHP दीर्घंत्स°. ३–३. MH एतं पूर्वागं [ H एतां ]; thus Ao IV. 190 : 83.5. ४. Ao IV. 190 : 83.6 : °यति. ५–५. Ao IV. 190 : 83.7 oms. ६. MHP °वरीं. ७. MHP °वरीं. ८–८. M पीत्वापोवाधि°, H P पीत्वापोधि°; thus Ao IV. 190 : 83.12. ९. Ao IV. 190 : 83.17 : खीरीहोमानुवा°.

प्रतिपद्येते ॥४॥ अध्वर्योरेवोपशयो यजुषा जुहोति तूष्णीं प्रतिप्रस्थातुः ॥५॥ प्रत्यवरुह्य हस्ताववनिज्याह्ले सावित्रं जुहोति ॥६॥ अथाज्यानि गृहीत्वोपावहृत्य राजानं प्रातरनुवाकमुपाकरोति ॥७॥ उपाकृते प्रातरनुवाक उपाधिरोहतोऽध्वर्यू ॥८॥ एषोऽन्तमोऽनुवाक इत्युक्त्वोपावरोहत उपशयौ ॥९॥ ततोऽध्वर्यू प्रतिपद्येते ॥१०॥ त एवमेव जुह्वतो जुह्व(-तस्तिष्ठन्-)[1]त्या परिधानीयायै ॥११॥ परिधानीयायै काल उपाधिरोहत उपशयौ ॥१२॥ एषोऽन्तमोऽनुवाक इत्युक्त्वोपावरोहतोऽध्वर्यू ॥१३॥ तत[2] उपशयौ प्रतिपद्येते ॥१४॥ प्रत्यवरुह्य परिधानीयायै जुहोति उषसे स्वाहा, व्युष्टचै स्वाहा, उदेष्यते स्वाहा इति ॥१५॥ परिधानीयैव चतुर्थी ॥१६॥ परिहिते प्रातरनुवाकेऽपोऽच्छैति[3] ॥१७॥ अपो व्यवनीयाहवनीये[4] सꣳस्रावꣳ हुत्वोक्थ्यं क्रतुं कृत्वा प्रपद्यते ॥१८॥ प्राजापत्यं दधिग्रहं जुहोति ॥१९॥ वाचितानां निग्राभ्याणाꣳ शुक्रपात्रेणादाभ्यां यजुषा गृहीत्वाऽन्यस्मै प्रयच्छति ॥२०॥ अथोपाꣳशुसवनमादाय राजानं मिमीते ॥२१॥ प्राणग्रहान् गृह्णाति ॥२२॥ पूर्वान् पृश्नोननुवर्तयति तूष्णीमुत्तरान्[5] ॥२३॥ मार्जयित्वा[6]ऽपानग्रहान् गृह्णाति ॥२४॥ उत्तरान् पृश्नीननुवर्तयति ॥२५॥ अꣳशुं गृहीत्वा जुहोति ॥२६॥ अथादाभ्यां[7] जुहोति ॥२७॥ तयोर्ददाति यास्तयोर्दक्षिणाः ॥ २८ ॥ उपाꣳशोः कर्म कृत्वोपाꣳशुं जुहोति ॥२९॥ अभिष्टुतो राजा भवति, ऊढो द्रोणकलशः ॥३०॥ अथादित्यमुद्यन्तं प्रतीक्षते ॥३१॥ संप्रत्युद्यत्यादित्ये जुहोति उद्यते स्वाहा उदिताय[8]=सर्वस्मै स्वाहा इति ॥ ३२ ॥ स यत्र जुहोति सर्वस्मै स्वाहा इति [9]तदेतेऽश्वमेधविद उपोद्यच्छन्ति ॥३३॥ अथातो मोमाꣳसैव ॥३४॥ तदाहुः प्राणापानौ वा एतौ यदुपाꣳश्वन्तर्यामौ, वज्र आज्यम् । स यदन्तरेणोपाꣳश्वन्तर्यामावाज्याहुतिं जुहुयादाज्यवज्रेणास्य प्राणापानौ विच्छिन्द्यादिति ॥३५॥ तदुवा आहुः प्राणापानौ वा एतौ यदुपाꣳश्वन्तर्यामावन्नमाज्यम् । नो वा अन्नं प्राणꣳ हिनस्ति जुहुयादेवेति ॥३६॥ अथो खल्वाहुः प्राणपानौ वा एतौ यदुपाꣳश्वन्तर्यामौ प्राण आज्यम् । नो वै प्राणः प्राणꣳ हिनस्ति भूयानेवैनेन[10]

---

१. MHP om. २. MHP ते. ३. MHP °पोच्छति. ४. MHP °नीयै. ५. MHP उत्तरं. ६. MHP मानयित्वा. ७. MP °दाभ्यं. ८. Cf TS VII. 2.20 : उदितये; also Ao IV. 192 : 84:2. ९. P तदेऽस्तेऽश्वः १०. Ao IV. 192 : 84.8 : भूयानेवास्मै.

भवति । जुहुयादेवेति ॥३७॥ जुहोत्येवैषा स्थितिः ॥३८॥ व्यावर्तयन्ति ॥३९॥ [१४]

इन्द्रा-(ण-)मानि ॥१॥ विचरन्ति पुरं यदन्नम् (····, ॥२॥ चत्वार्यन्न-शूर्पाण्यपोदच्याथेत रत्सर्वमध्वर्यो रावसथꣳ हरन्ति ॥३॥ उदित आदित्ये-ऽन्तर्यामं जुहोति॥४॥ रश्मि जुहोति ॥५॥ प्रसिद्धं ग्रहा गृह्यन्त आऽऽग्रयणात् ॥६॥ आग्रयणं गृहीत्वा सुवर्णरजताभ्यां महिमानौ गृह्णाति यः प्राणतो, य आत्मदा, इति ॥७॥ उपयामवन्तावयोनिमन्तौ सादयति ॥८॥ अथैतं प्राजापत्यꣳ सोमग्रहमतिग्राह्यं गृह्णाति पालाशेन पात्रेण हिरण्यगर्भः समवर्ततात्रे इति ॥९॥ उपयामवन्तं योनिमन्तꣳ सादयति ॥१०॥ अथ त्रीन् पृष्ठ्यान् गृह्णाति ॥११॥ तन्नु हैतदेकेऽन्वहं विभज्य गृह्णन्ति ॥१२॥ अत्र त्वेवैनान् गृह्णीयादिति ॥ १३ ॥ अत्र त्वेवैनान् गृह्णात्येषा स्थितिः ॥१४॥ अथोक्थ्यं गृह्णाति ॥१५॥ ध्रुवकलशान्[१] संमृश्य विप्रुषाꣳ होमं जुहोति ॥ १६ ॥ सन्तर्ति जुहोति ॥ १७ ॥ पवमानेन स्तुवते ॥ १८ ॥ स्तुत उत्तिष्ठन् [२]संप्रेष्यति अग्नीदग्नीन्विहर[२] = पशून्तिकं कुरु इति ॥ १९ ॥ आश्विनं गृहीत्वोपनिष्क्रम्य परिवीयमाणा-यानुवाच आह ॥२०॥ चतुर्विꣳशमग्निष्ठे रशना परिव्ययति नाना-प्रसवाः ॥ २१ ॥ तासु नाना[३] स्वरूनवगूहति ॥ २२ ॥ अथ दक्षिणं पौतुदारवमुच्छ्रित्य चतस्रो रशनाः परिव्ययति नानाप्रसवाः ॥ २३ ॥ तासु नानैव स्वरूनवगूहति ॥२४॥ एवमेवोत्तरं[४] पौतुदारवमुच्छ्रित्य चतस्रो रशनाः परिव्ययति[५] नानाप्रसवाः ॥२५॥ तासु नानैव स्वरूनवगूहति, त्रीन् दक्षिणतो [६]वैल्वाꣳस्त्रीनुत्तरतस्त्रीन् दक्षिणतः [७]खादिराꣳ-स्त्रीनुत्तरतस्त्रीनु[७] दक्षिणतः पालाशाꣳस्त्रीनुत्तरतः ॥ २६ ॥ तेषु चतस्रश्चतस्र एव रशनाः[८] परिव्ययति नानाप्रसवाः ॥ २७ ॥ तासु नानैव[९] स्वरूनवगूहति[१०] ॥२८॥ दक्षिणार्ध्ये पालाशे दीर्घाꣳ रसनां[११] प्रबध्नाति ॥ २९ ॥ योत्तरार्ध्याद्यूपादनु भवेत् तामत्रैवोपसꣳहृत्य निदधाति ॥३०॥

---

१. MHP ध्रुवं क°. २–२. MHP °ष्यदग्नी°; ३. MHP नास्व°. ४. MHP °त्थवमवान्तरं [ H °त्येव. ]. ५. add तासु after परिव्ययति. ६. MHP वैलागं स्त्री°. ७–७. H साद्दिरागं स्त्रीनुत्तरात्त्रीन्. ८. MHP रशनां. ९. MHP नानेव १०. MHP स्वरूनेव°. ११ P राशनं,

दक्षिणेन दक्षिणार्ध्यं पालाशं प्राञ्चमुपशयं निधाय तूष्णीमेव रशना अध्यस्यति ।। ३१ ।। उपनिदधात्यस्मै बर्हिर्मुष्टिं यूपशकलꣳ स्वरुमिति ।।३२।। अथ इषे त्वा इति बर्हिषी आदायोपाकरणीये हुत्वा पशूनुपाकरोति, आग्नेयं पौष्णमश्वं तूपरं गोमृगमैन्द्रापौष्णमिति षट् ।। ३३ ।। अष्टावेतस्यानुवाकस्य परिशिष्यन्ते ।। ३४ ।। ते चतुर्दश ।। ३५ ।। अग्नयेऽनीकवते रोहिताञ्जिरनड्वान् इत्येकादश ।। ३६ ।। ते पञ्चविꣳशतिः ।। ३७ ।। सोमाय स्वराज्ञेऽनोवाहावनड्वाहौ इत्यष्टादश ।। ३८ ।। उरणौ शिशुकुमारौ ।। ३९ ।। त एकस्मान्न पञ्चाशदग्निष्ठ[१] आलभ्यन्ते ।। ४० ।। दक्षिणे पौतुदारव ऐन्द्राग्नमुपाकरोत्याग्नेन्द्रमुत्तरे ।। ४१ ।। रोहितो धूम्ररोहितः इत्यष्टादश ।।४२।। तेषां नवनव[२] पूर्वान् दक्षिणत ऐन्द्राग्नानुपाकरोति[३] नवनवोत्तरानुत्तरत[४] आग्नेन्द्रेभ्यः ।। ४३ ।। ऐन्द्राग्नदशमा दक्षिणतः संपद्यन्त आग्नेन्द्रदशमा उत्तरतः ।।४४।। वशाश्च [५]तूपराश्चोत्तरार्ध्यान् सचन्ते ।।४५।। अथारण्यान् पशूनुपाकरोति इन्द्राय राज्ञे सूकरः इति ।।४६।। तेषाꣳ षट् पूर्वान् दक्षिणेनाग्निष्ठमाकाशेषु धारयन्ति पञ्चोत्तरानुत्तरेषु ।।४७।। अथैतं प्राजापत्यꣳ सूकरं दृश्यमानमनिरुक्तमुपाकरोति ।।४८।। तस्योपाकरणेनेत्याहुः सर्वमिदमुपाकृतं भवति यदिदं किञ्चेति[६] ।।४९।। तमुपाकृत्य जुहोति उपाकृताय स्वाहा इति ।।५०।। अथावर्तयन्ति स्वरथमुत्तरेण हविर्धाने दक्षिणेनाग्नीध्रम् ।।५१।। चमसपथे प्राञ्चꣳ स्थापयित्वा ऽभि वितन्वन्ति यस्तस्यालंकारस्तेन ।।५२।। अथैतमश्वमुपाकृतमानीय दक्षिणायां धुरि युनक्ति युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः इति ।।५३।। तस्मै प्रतिहित उत्तरां धुरमुपोह्यच्छति ।।५४।। केतुं कृण्वन्नकेतवे इति ध्वजं प्रतिमुञ्चति ।।५५।। वर्मसन्नहनीयेनानुवाकेन यजमानꣳ सन्नह्यति ।।५६।। [१५]

[इति पञ्चमोऽनुवाकः]

जीमूतस्येव भवति प्रतीकम् इति ।।१।। एकया धनुरादत्ते ।।२।। एकयोज्यं कृत्वा ज्यामनुमार्ष्टि ।।३।। एक (-याऽऽर्त्नी) संमृशते ।।४।।

---

१. MHP °ग्निषु. २. MHP नव once; thus Ao IV.193:86.7–8. ३. Ao ibid : °ग्नायानूपा°. ४. MHP °त्तरोनु°; thus Ao ibid. ५. MHP रूपरा°. ६. Ao IV. 193:86.15: किञ्चनेति.

एकयेषुधिमवनह्यते ॥५॥ एकयाऽभीशूनुद्यते ॥६॥ [1]एकयाऽनोऽभिमन्त्रयते ॥[1]७॥ एकया रथवाहनं परेक्षते[2] ॥८॥ द्वाभ्यां दक्षिणापितृभ्यो नमस्करोति ॥ ९ ॥ द्वाभ्यामिषुयमनं कुरुते ॥ १० ॥ एकया काशं प्रवृहते ॥ ११ ॥ एकया हस्तघ्नं पर्यस्यति[3] ॥ १२ ॥ तिसृभिरातिष्ठति ॥ १३ ॥ तिसृभिर्योग्यं दुन्दुभिमाहन्ति ॥१४॥ दोह-(………) मनुष्या आस्थातुमर्हन्ति[4] ॥ १५ ॥ (तदाहुः—) मूर्धा ह्यस्य विप(-तते यो र-)थोपस्थमेताभिर्हस्तमधिनिधाय धारयेदिति ॥१६॥ रथोपस्थ एवैताभिर्हस्तमधिनिधाय धारयति ॥१७॥ तमन्तरा चात्वालोत्करौ निष्क्रमय्य दक्षिणꣳ ह्रदमभिकाष्ठां यन्ति क्रमैरत्यक्रमीद्वाजी; आऽक्राग्वाजी पृथिवीम्; ये ते पन्थानः[5] सवितः (पूर्व्यासः); य(द्वातो अ-)पो अगमद् इति ॥ १८ ॥ अत्रैवाश्वस्य तिष्ठतः शकुनिपादमभिमृशति द्यौस्ते पृष्ठं पृथिवी सधस्थम् इति ॥१९॥ महिम्ना दक्षिणमीर्ममवमार्ष्टर्या कुष्ठिकाभ्यः ॥२०॥ तं दक्षिणावर्तं यन्ति ॥ २१ ॥ आवर्त्यमाने वाचयति एतꣳ स्तोतरेतेन पथा पुनरश्वमावर्तयासि नः (इति ॥२२॥ त-)मध्वर्यवे ददाति प्रतिहिताय वा ॥२३॥ [6]अध्वर्योस्त्वेवैष धर्मः[6] ॥२४॥ अत्रैवाश्वं धारयन्ति ॥२५॥ अथ पत्नीरुदानयन्ति ॥२६॥ महिषी प्रथमैति शतेन राजपुत्रीभिः सह[7] सहस्रꣳ सुवर्णान् काचानाहरन्ती कासाम्बीवमभ्यञ्जनम् ॥२७॥ शतेनाराज्ञां (जायाभिः सह वावाता सहस्रꣳ सामुद्रान् काचानाहरन्ती गौल्गुलवमभ्यञ्जनम् ॥२८॥ शतेन) क्षत्तृसंग्रहीतॄणां च कारिमागधानां च जायाभिः सह परिवृक्ती सहस्रꣳ सामुद्रान् काचानाहरन्ती मौस्तमभ्यञ्जनम्[8] ॥२९॥ यत्प्राचीनं पूर्ववहास्तन्महिषी शतेन राजपुत्रीभिः सह सहस्रꣳ सुवर्णान् काचानावयन्ति[9] भूः इति [10]दशदशैकैका ॥३०॥ यत्प्रतीचीनं[10] पूर्वकास्तद् वावाता[11] सहे(-तराभिः सहस्रꣳ सामुद्रान् काचानावयन्ति भुवः इति दशदशैकैका ॥३१॥ वालेषु परिवृक्ती सहेतराभिः सहस्रꣳ सामुद्रान्[12] काचानावयन्ति सुवः इति दशदशैकैका ॥ ३२ ॥ अथैनमभ्यञ्जन्ति ॥३३॥

---

१. MHP °यानभि°, २. MH परेक्षेते. ३. MHP पर्यंतिस्यति. ४. MHP आस्थात महंति. ५. MHP स्थानः. ६–६. MHP °ध्वर्योस्त्वावैष धार्म्यो (H °धर्म्या). ७. P oms. ८. MH मौङ्स्तम°, P मोङ्स्तम°. ९. P वयन्ती. १०–१०. MHP दशदशंते किञ्चित् प्रतीचीनं. ११. MHP तद्वाता. १२. MHP समुदान्.

यत्प्राचीनं क्रोडात्तन्महिषी शतेन राजपुत्रीभि· सह वसवस्त्वाऽञ्जन्तु गायत्रेण छन्दसा इति कासाम्बीवेन ॥३४॥ यत्प्रतीचीनं क्रोडात् [1]प्राचीनं नाभेस्तद्[1] वावाता सहेतराभिः रुद्रास्त्वाऽञ्जन्तु त्रैष्टुभेन छन्दसा इति गौलगुलवेन[2] ॥३५॥ यत्प्रतीचीनं नाभेस्तत् परिवृक्ती सर्वमपरार्धं॑ सहेतराभिः आदित्यास्त्वाऽञ्जन्तु जागतेन छन्दसा इति मौस्तेन[3] ॥३६॥ अथास्मा[4] अत्रैव तिष्ठत एतान्यन्नशूर्पाण्युपकिरन्ति[5] महिषी वावाता परिवृक्ती माहानसी[6] ॥३७॥ तान्यस्य पुरोमुखं धारयन्ति ॥ ३८ ॥ अवघ्रापयन्ति लाजीँ३-ञ्छाची = प्रजापते इति ॥३९॥ स[7] प्रथमस्या [8]अवजिघ्रेदित्याहुस्तस्यै प्रजा सत्तमा स्यात् ॥४०॥ यदि माहानस्या अवजिघ्रेत् तां यजमानः कामयेत, तस्यै प्रजा सत्तमा स्याद् यजमानमेषा प्रत्येति[9] ॥४१॥ अथैतमश्वमानीय[9] यथायतनं॑ स्थापयित्वा तदस्मा एतान्यन्नशूर्पाण्युपकिरन्ति ॥ ४४ ॥ [१६]

अथ प्रसिद्धं निर्मन्थ्येन चरित्वा प्रहृत्याभिजुहोति ॥१॥ अथ देवस्य त्वा सवितुः प्रसवे इति रशना आदाय पशून् नियुञ्जन्ति ॥२॥ येऽग्निष्ठे तानध्वर्युश्च प्रतिप्रस्थाता च ॥३॥ प्रतिप्रस्थातुः प्रतिप्रस्थातार इतरान् मुख्यान्[10] समानदेवत्यानां यूपे नियुज्य तस्मिन्नितराननुबध्नन्ति ॥४॥ पशौ पशुं प्रसजन्ति ॥५॥ अष्टौ ग्राम्याणां पशूनां न (नि-)[11]युनक्ति सर्वां॑-श्चारण्यान् ॥६॥ अथैकां[12] दीर्घां॑ रशनां प्रवेष्ट्योत्तरार्ध्ये यूपे बध्नाति ॥७॥ तयाऽस्य सर्वे पशवो नियुक्ता भवन्ति, यां॑श्च ग्राम्याणां पशूनां न नियुनक्ति, सर्वे चारण्याः ॥ ८ ॥ तान् बध्वा जुहोति [13]आलब्धाय स्वाहा इति[13] ॥९॥ ताञ्छतसाहस्रानुपतिष्ठन्ते[14] ॥१०॥ ये शतं॑ सुवर्णा असयो रजतत्सरवस्तैर्ये[15] दक्षिणेनाग्निष्ठं तान्[16] ॥११॥ ये शतं॑

---

१–१. MHP प्राचीन स्कन्नाभेस्तद्. २. H गौंद्गुल, P गोद्गुल. ३. MHP मौनागं स्ते. ४. MHP अथास्मै अत्रैव. ५ MHP °तान्य-ग्नशू॰. ६. MHP °नासी. ७. MP यं, H सं. ८. MHP °जिघ्रेद्यां. ९–९. MHP प्रत्यथैत°. १०. MHP मुख्यं. ११. MHP om नि; Cf below S. 8. १२. Ao IV. 192:85.6 : अथैतां. १३–१३. MHP twice. १४. MHP ताञ्छासहस्ता अनूप. १५. MP रजत स, H. रजत ससस्ते. १६. P तानि.

रजताः सुवर्णत्सरवस्तैर्य[1] उत्तरेण(-ग्निष्ठं)[2] तान् ॥ १२ ॥ ये षट्त्रिंशल्लोहायसाः कृष्णायसत्सरवश्चत्वारश्च कृष्णायसा [3]लोहायसत्सरवस्तैर्येऽग्निष्ठे तान्[3] ॥१३॥ सायकेन सिक्त्रिमेणाश्वम्[4] ॥१४॥ अथ प्रोक्षणीरादाय पशून् प्रोक्षन्ति॥१५॥ येऽग्निष्ठे तानध्वर्युश्च प्रतिप्रस्थाता च॥१६॥ प्रतिप्रस्थातुः प्रतिप्रस्थातार इतरान् ॥१७॥ प्रसिद्धमेवाग्नेयं च पौष्णं च प्रोक्षति ॥१८॥ अथाश्वं प्रोक्षति ॥१९॥ स यत्राश्वं प्रोक्षति तदनुवर्तयति जज्ञि बीजं वष्टी[5], पर्जन्यः इति ॥२०॥ अथ यत्रैनमध्वर्युरपोऽवघ्रापयति[6] तदभिमन्त्रयते अग्निः पशुरासीत्तेनायजन्त[7]=तं जेष्यसि। अथावजिघ्र। वायुरादित्यः इति ॥२१॥ [8]तद्धैतच्छ्रुनसेनः पारिक्षितो[8] यत्राश्वमेधेनेजे, तस्य ह क्रत्वास्थिरः काव्योऽध्वर्युरास। स हैतस्मिन् कालेऽनवघ्राणेनाभिमन्त्रयाञ्चक्रे अग्निः पशुरासी=सि अथावजिघ्र। वायुरादित्यः इति॥२२॥ अथ वृषमन्त्रः शांयुव[9] आगत्य दक्षिणत उपविवेश। स हैतस्मिन् कालेऽनवघ्राणेनाभिमन्त्रयाञ्चक्रे[10] अग्निः पशुरासीत् तेनायजन्त। स एतं[11] लोकमजयद् यस्मिन्नग्निः[12]। स ते लोकः। तस्मात् त्वाऽन्तरेष्यामि यदि नावजिघ्रसि। वायुरादित्यः इति ॥ २३ ॥ स ह नावजघ्रौ ॥ २४ ॥ अथ ह वृषमन्त्र उवाच कथा न्ववजिघ्रेद्यत्रैनमध्वर्युर्मृत्युमेव दर्शयति न लोकमिति ॥ २५ ॥ तमु ह राजोवाच वृषमन्त्र यत्त्वमध्वर्युः स्या अवजिघ्रेदिति ॥२६॥ अव हेति उवाच ॥२७॥ अपि बहुभिरपायम्यमानस्तान् संखिद्यावजिघ्रेदिति ॥२८॥ त्वं मेऽध्वर्युरसीति हैनमुवाच। अपनुनोद ह काव्यम्। २९॥ तमु ह काव्योऽनुव्याजहार—

---

१. MHP सुवर्णवत्स°. २. MHP om. ३. MHP लोहायसत्सस्तैर्यग्निष्ठेनता. ४. HP सिक्तिमेनाश्वम्. ५. MHP वष्टा. ६. MHP °मध्वरपोवघ्रायात्तद°; thus Ao IV. 194:88.1. ७. MHP abr; Cf TS V.7.26.1. Caland gives the full text in small bracket (Ao IV. 194:88.2–3). ८–८. MHP तद्धैत्रच्छ्रुतसेनं परि° (H द्धैतच्छ्रु°). ९. MHP शंयुव; thus Ao IV. 194:88.7. १०. MHP Ao IV. 194:88.7–8 : काले नवलेनवघ्रा°. [°नव°]. ११. MHP एकं १२. MHP वायुः for अग्निः; thus Ao IV. 194:88.

अन्तरिमस्त्वा दक्षिणाभ्यो यो नाव(-घ्राप)येः[१] ॥३०॥ अहं नयानीत्येव मन्यमानो न किञ्चन निनाय ॥३१॥ अथ ह राजा शमितॄन् सꣳशशास यत्रैनमध्वर्युरपोऽवघ्रापयात्[२] तदपायच्छाथेति ॥३२॥ स हैतस्मिन् कालेऽवघ्राणेनाभिमन्त्रयाञ्चक्रे अग्निः पशुरासी=द् यस्मिन्नग्निः[३] । स ते लोकस्तं जेष्यसि यद्यवजिघ्रसि । वायुरादित्यः इति[४] ॥३३॥ स ह[५] बहुभिरपायम्यमानस्तान् संखिद्यैवावजघ्रौ[६] ॥३४॥ तदेतदवघ्राणं[७] चानवघ्राणं च ॥३५॥ स यदि कामयेत नावजिघ्रेदित्यनवघ्राणेनाभिमन्त्रयेत, न हैवावजिघ्रति ॥३६॥ अथ यदि कामयेतावजिघ्रेदित्यवघ्राणेनाभिमन्त्रयेतापि बहुभिरपायम्यमानस्तान् संखिद्यैवावजिघ्रति ॥३७॥ [१७]

प्रसिद्धमितरान् प्रोक्षन्ति ॥१॥ न पुनः पुनः[८] प्रोक्षणीरभ्यानयन्ति ॥२॥ निपाय्यावोक्ष्य निधाय पात्रमग्नये समिध्यमानायानुवाच आह ॥३॥ अनूकासु[९]=न्नत्याक्रम्य पशून् समञ्जन्ति ॥४॥ येऽग्निष्ठे तानध्वर्युश्च प्रतिप्रस्थाता[१०] च ॥५॥ प्रतिप्रस्थातुः प्रतिप्रस्थातार "इतरान् मुख्यान्" समानदेवत्यानाम्[११] ॥६॥ सꣳ स्रुग्भ्याꣳ[१३] समज्य यथोपपादमितरान् समञ्जन्ति ॥७॥ ध्रुवाꣳ समज्य (स्रुचौ)[१४] सादयित्वा प्रवरं प्रवृणीते ॥८॥ सीदति[१५] होता ॥९॥ प्रसूतः स्रुचावादत्ते ॥१०॥ प्रयाजान् यजति ॥११॥ समिद्धो अञ्जन् कृदरं मतीनाम्[१६] इत्येता होताऽऽप्रीः करोति ॥१२॥ एताभिर्यजति ॥१३॥ तदाहुः—ऊर्ध्वा अस्य समिधो भवन्ति इत्येताभिराप्रीणीयात् । एता वा ऊनातिरिक्ताः प्राजापत्या अश्वमनु विभजन्तीति ॥१४॥ तदु वा आहुः—न तदवकल्पेत[१७] । यदश्वस्याप्रीषु सतीष्वन्याभिराप्रीणीयादित्यश्वस्यैवाप्रीभिराप्रीणीयादिति॥१५॥ अश्वस्यैवाप्रीभिराप्रीणाति ॥१६॥ प्रेष्य[१८] प्रेष्य इति ॥१७॥ एकादश प्रयाजान् यजति ॥१८॥ चतुर्थाष्टमयोः सर्वꣳ समानयते ॥१९॥ उपभृतोऽधि स्रुच्येकादशं परिशिष्य दशेष्ट्वा-

१. MHP broken; Ao IV. 195:88.16 : न आ.....यहं. २. MP °पयान्तदपा°. ३. MHP आदित्यः for अग्निः; thus Ao IV. 195:88.20 ४. P oms. ५. P oms. ६. MHP संखिद्यवैवज°. ७. MHP °दघ्राणं. 8. P पुनः once. ९. MHP abr; see V.4. २1–23. १०. MHP °प्रस्थातुश्. ११–११. MHP इतरां मुख्यं [P मुख्यां]. १२. MHP देवत्या. १३. MHP सगं स्रुभ्यां. १४. MHP om. १५. MHP सीदेति. १६. M मृती°, P पृती°. १७. MHP °कल्वेते. १८. MHP प्रेष्यः.

ऽत्याक्रामति ॥२०॥ [1]स्वरुः स्वधिति[1]हस्तान् इति यथास्वरु यथास्वधिति पशून् समञ्जन्ति ॥२१॥ येऽग्निष्ठे[2]=इतरान् मुख्यान् समानदेवत्यानाम् ॥२२॥ स्वरुणा समज्य यथोपपादमितरान् समञ्जन्ति ॥२३॥ अवगूह्य स्वरुं यथायतनꣳ स्रुचौ सादयित्वा पर्यग्नयेऽनुब्रूहि इत्याह ॥२४॥ उल्मुकपाणिः[3] परिद्रवति ॥२५॥ पञ्चापाव्यानि[4] जुहोति ॥२६॥ उत्तमेऽपाव्येऽश्वस्यापाव्यमनुवर्तयति मेषस्त्वा पचतैरवतु लोहितग्रीवश्छागैः इति ॥२७॥ निधायोल्मुकमा[5]=मुकमादायोदङ् प्रतिपद्यतेऽन्वञ्चो ग्राम्यैः पशुभिः ॥२८॥ अत्रैवारण्यान् धारयन्ति ॥२९॥ अथाददते तार्प्यं च कृत्यधीवासं च सुवर्णꣳ रुक्मꣳ सुवर्णं कशिपु बर्हिर्भारमिति ॥३०॥ आग्नेयमेवाध्वर्युश्च प्रतिप्रस्थाता च ॥३१॥ वपाश्रपणीभ्यामन्वारभन्ते प्रतिप्रस्थातुः प्रतिप्रस्थातार इतरान् ॥३२॥ तानेतेनान्तरा चात्वालोत्करौ निष्क्रम्य प्रज्ञातान् नयन्ति ॥३३॥ ऐन्द्राग्नानेव दक्षिणार्ध्यानाग्नेन्द्रानुत्तरार्ध्यान् ॥३४॥ आग्नेयायै वैतयोर्बर्हिषोरन्यतरद्वा वाऽस्यति ॥३५॥ एतेनैव यजुषा बर्हिर्भारमितरेभ्यः [6]स्तृणन्नेत्योत्तरार्ध्यात् ॥३६॥ अथाश्वायोपस्तृणन्नेत्युत्तरार्ध्यात्[6] ॥३७॥ अथाश्वायोपस्तृणीते तार्प्यं च कृत्यग्रीवासं च सुवर्णꣳ रुक्मꣳ[7] सुवर्णं कशिपु ॥३८॥ यत्तार्प्यस्योच्छिष्यते तेनाश्वसंज्ञपनीꣳ रज्जुं वेष्टयित्वाऽश्वꣳ संज्ञपयन्ति ॥३९॥ तꣳ संज्ञप्यमानं यामेन साम्नोत्तरतः प्रस्तोतोपतिष्ठते ॥४०॥ मायून् [8]कृण्वतः संज्ञपयन्त[8] संज्ञप्तान् प्रब्रुवथ इत्युक्त्वा पुनरेत्य प्राणाय स्वाहा, व्यानाय स्वाहा इति संज्ञप्यमान आहुतीर्जुहोति ॥४१॥ पृषदाज्यमवेक्ष्याग्रेण राज्जुदालमग्निष्ठमुपविश्य ब्रह्मोद्यं वदतो ब्रह्मा च होता च ॥४२॥ दक्षिणतो ब्रह्मा भवत्युत्तरतो होता ॥४३॥ अथैनꣳ होता पूर्वं पृच्छति ब्रह्मन् पृच्छामि त्वा, किꣳस्विदासीत्पूर्वचित्तिः इति ॥४४॥ प्रतिमनुते ब्रह्मा द्यौरासीत्[9] पूर्वचित्तिः इति ॥४५॥ जितं ते ब्रह्मन् इत्याह (होता ॥४६॥ जितं ते होतर् इत्याह ब्रह्मा ॥४७॥ अथैनं ब्रह्मा पृच्छति होतः पृच्छामि त्वा [10]कः स्विदेकाकी[10]

---

१–१. MHP Ao IV.207:17: कस्वधिति. २. MHP abr; see above S 5–6. ३. MHP °ल्मुकपाणौ. ४. MHP °पाविनि. ५. MHP abr; see V. 5.19–23. ६–६, P oms. त्योत्तरार्ध्यात् । अथाश्वायोपस्तृणन्ने°. ७. MHP कुरुक्मं. ८–८. MHP मायून्वतः संज्ञ आपयन्त. ९. MHP द्येनरासीत्. १०–१०. MHP तस्यिदे°.

चरति इति ॥४८॥ प्रतिमनुते होता सूर्यं एकाकी चरति इति ॥४९॥ जितं ते होतर् इत्याह ब्रह्मा ॥५०॥ जितं ते ब्रह्मन् इत्याह होता ॥५१॥ अथैनꣳ होता पृच्छति ब्रह्मन् पृच्छामि त्वा, पृ(-च्छामि त्वा परमन्तं पृथिव्याः इति ॥५२॥ प्रतिमनुते ब्रह्मा वेदिमाहुः परमन्तं पृथिव्याः इ-)ति ॥५३॥ जितं ते ब्रह्मन् इत्याह होता ॥५४॥ जितं ते होतर् इत्याह ब्रह्मा ॥५५॥ अथ ह्यास्योदीचीनसꣳस्थो जयः संपद्यते ॥५६॥ अथ संव्याहरन्ति जितमस्य राज्ञ उद्भिन्नमपराजितम् इति ॥५७॥ [१८] [ इति षष्ठोऽनुवाकः ]

अथ संज्ञप्तेषु पशुषु संज्ञप्तहोमꣳ हुत्वाऽऽयन्ति (शमितार उपेतन इति ॥१॥ अथ पत्नीरुदा-)[1]नयन्ति ॥२॥ महिषी प्रथमैति शतेन राजपुत्रीभिः सह त्रीणि च[3] शतानि त्रयस्त्रिꣳशच्च सुवर्णाः सूचीर्हरन्तीर्मालाश्चूर्णानि ॥३॥ शतेनाराज्ञां[4] जायाभिः सह वावाता त्रीणि च शतानि त्रयस्त्रिꣳशच्च रजताः [5]सूचीर्हरन्तीर्मालाश्चूर्णानि ॥४॥ (शतेन क्षत्तृसंग्रहीतॄणां च कारिमागधानां च जायाभिः सह परिवृक्ती त्रीणि)[6] च शतानि त्र(-यस्त्रिꣳशच्चा-)यस्मयीः सूचीर्हरन्तीर्मालाश्चूर्णानि ॥५॥ एतत् प्रसिद्धमेव ॥६॥ पशूनाप्यायन्ति ॥७॥ पशूनाप्याय्याश्वमलंकुर्वन्ति ॥८॥ यत्प्राचीनं क्रोडात् तन्महिषी शतेन राजपुत्रीभिः सह चूर्णैराधूय मालाभिः प्रच्छादयन्ति ॥९॥ यत्प्रतीचीनं क्रोडात् प्राचीनं नाभेस्तद् वावाता सहेतराभिश्चूर्णैराधूय मालाभिः (प्रच्छादयन्ति) ॥१०॥ यत्प्रतीचीनं नाभेस्तत् परिवृक्ती सर्वमपरार्धꣳ सहेतराभिश्चूर्णैराधूय मालाभिः प्रच्छादयन्ति ॥११॥ अश्वमलंकृत्य यमं धुन्वन्ति[7] ॥१२॥ महिषी प्रथमा पर्येति शतेन राजपुत्रीभिः सह दक्षिणान्[8] नाडीन् प्रत्यस्य दक्षिणानूरून्[9] नग्नान् कृत्वा ॥१३॥ तानाघ्नानास्त्रिरभि[10] सव्यं परियन्ति गणानां त्वा, [11]प्रियं त्वा

१. Cf. BaudhŚS XV. 29:233.2–6. २. Cf supra XI. 16.26. MHP त्रायन्ति for नयन्ति. ३. P oms, ४. MHP शतेन राज्ञां; see supra XI. 16.28; infra XI. 19.16; Cf BaudhŚS XV. 29:234.2. ५. MHP सूहंर°. ६. Cf supra XI. 16.29; BaudhŚS XV. 29:234.3 : सूतग्रामणीनां च क्षत्त°. ७. MHP धूपन्ति. ८. MHP दक्षिणा; thus Ao IV. 197:90.2. ९. MHP दक्षिणामूरून्. १०. MHP त्रीरभि° ११. Caland gives the texts in small brackets, which seem to have been broken in the Ms available to him. For प्रियं he gives प्रियाणां (Ao IV. 197:90.7 fn 1).

निधीनां त्वा इति ॥१४॥ त्रिः परीत्येतरथा त्रिः पुनः प्रति परीत्योपविशन्ति ॥ १५ ॥ शतेनाराज्ञां जायाभिः सह् वावाता[1] [2]सव्यान् नाडीन्[2] प्रत्यस्य सव्यानूरून् नग्नान् कृत्वा ॥१६॥ तानेवाघ्नानास्त्रिरभि सव्यं परियन्ति गणानां त्वा[3]=परीत्योपविशन्ति ॥१७॥ शतेन क्षत्तृसंग्रहीतॄणां च कारिमागधानां च जायाभिः सह् परिवृक्त्युभयान् नाडीन् प्रत्यस्योभयानूरून् नग्नान् कृत्वा ॥१८॥ तानेवाघ्नानास्त्रिरभि सव्यं परियन्ति गणानां त्वा[3]=पविशन्ति ॥१९॥ एतस्मिन् काल इत्याहुः, [4]एवंविच्छ्रोत्रियो यमं धुन्वीत यमस्य सभागेयमवजयानि[4] यमस्य सभाविजयमिति ॥२०॥ सुकृतकलानाꣳ ह वा अमुष्मिन् लोके यमस्य सभायां विदीव्यन्ति ॥२१॥ तदु वा आहुर् विद्यया वैवंविच्छ्रोत्रियो [5]यमं धुन्वीत[5] यमस्य सभागेयमवजयानि यमस्य सभाविजयमिति ॥२२॥ स यदि पर्ययणाय ध्रियेत प्राचीनावीतं कृत्वाऽप आचम्यैतासामेवैकाभिः[6] सहः परीयाद् गणानां त्वा, प्रियं त्वा, निधीनां त्वा इति ॥२३॥ त्रिः परीत्येतरथा त्रिः पुनः प्रतिपरीत्योपविशन्ति[7] ॥२४॥ अथातः शम्यापासानामेव ॥ २५ ॥ स्त्रिय इत्याहुः शम्यापासो[8] ब्राह्मणः[9]। त्र्यहं युष्माभिर्न प्रत्याख्येयो यः कश्च सावित्रीमनूच इति ॥२६॥ तन्नु ह स्मैतत् पूर्वेषाꣳ स्त्रियः [10]प्रातिष्णात्रीरुपासते न पतीꣳश्चन काम्यमानाः[10] ॥२७॥ स[11] यानेतान् पूर्वान् प्रणाय्यानाचक्षते राज्ञो राजपुत्रानराज्ञः सूतग्रामणीन् क्षत्तृसंग्रहीतॄनित्येतेभ्यो [12]हि ताः[12] शम्यापासेभ्यो जज्ञिरे ॥ २८ ॥

१. MH वावावाता, P वावावता. २–२. MHP सव्यानाधीन्, ३. MHP abr; see above S 14–15. ४–४. MHP °विच्छेत्रियो यमन्धु पीतयमस्य सामागे यम च जयानि [H °यम्मधु° यमश्च]; thus Ao IV. 188 : 91. 1--2. ५–५. MHP यमन्धुवीत [H यन्म°]; Ao IV. 198:91.4 : यमं धुवीत. ६. MHP give the sign of abridged text between मे वै and कामि:. Caland, however, does not give this sign. ७. MHP Ao IV. 198:91.8 om प्रति. Ao ibid °विशति. ८. P शम्या सो. ९. MHP Ao IV. 198:92.2 ब्रह्मणा, Caland however, gives ब्राह्मणः as lcorrect ext in the foot note ( Ao ibid fn 3). १०–१०. MHP °त्रीरुश्वा सतेन पतीगं श्चन कामयमानाः [HP °प्रतीचीगं श्चन]. ११. Ao IV. 198:12.4 : सा. १२–१२. MHP Ao IV. 199:12.6 : हि तेभ्यो हिते.

अथ[1] यामध्वर्युः कामयेत प्राणाय्योऽस्यै जायेतेति ता౮ स౮शिष्यात् [2]प्रातिष्णात्रीं मां पतिं चन[2] चीकमथाः, शम्यापासममु౮[3] ह्वयासै इति ॥२९॥ स यं प्रणाय्यं[4] मन्यते स यथा राज्ञामश्वमेध्यश्वमेधो[5] यज्ञ-क्रतूनामेव౮ ह वा एष समानेष्वधिभवति, होतो जायते ॥ ३० ॥ अथातोऽभिमेथिकानामेव ॥ ३१ ॥ अश्वं परिश्रित्य महिषीमुदानयन्ति ॥३२॥ [१९]

अम्बे अम्बा=नयति=श्वकः इति ॥१॥ तामश्वस्योत्तरत उपनिपातयति ॥२॥ सुभगे काम्पीलवासिनि इति प्रोर्णोति ॥३॥ सुवर्गे लोके सं प्रोर्ण्वाथाम् इत्युपोहति ॥४॥ सव्यमूरुमध्यूहति दक्षिणम् आऽहजानि गर्भधमा त्व=प्रसारयावहै इति ॥५॥ अधिवदते [6]वृषा वा౮[6] रेतोधा रेतो [7]दधातु इति ॥६॥ उपस्थे[7] शिश्नं प्रतिनिधत्ते उत् सक्थ्यो=र्दिगृहि परावधीत् इति ॥७॥ अथ गर्हयते अम्बे अम्बाल्यम्बिके इति ॥८॥ तां यजमानोऽभिमेथति[8] ऊर्ध्वामिनामुच्छ्रयताद्वेणुभारं गि=पुनन्निवामरे न त एषो लाम् इति ॥९॥ अथ गर्हयत एव अम्बे अम्बाल्यम्बिके इति ॥१०॥ तां वावाताऽभिमेथति[8] यद्धरिणी यवमत्ति=पोषाय धनायति आमभगे नत एषो लाम् इति ॥११॥ अथ गर्हयत एव अम्बे अम्बाल्यम्बिके इति ॥१२॥ तां परिवृक्त्यभिमेथति[8] इयं यका[9] शकु-न्तिका=धाणिका[10] । अंशमे न त एषो लाम् इति ॥१३॥ अथ गर्हयत एव अम्बे अम्बाल्यम्बिके इति ॥१४॥ तां कारिमागधा अभिमेथन्ति[11] माता च ते पिता च ते=मुष्टिमत౮ सयत् । अ౮शमायं दुहितर्नत एषा[12] लाम् इति ॥१५ अ(-त्र न)[13] गर्हयते ॥१६॥ अथास्या उभयतः परिच्छिन्नं तृणं प्रयच्छति ॥१७॥ तेनैतदवमृष्टे यत्रैतदश्वस्य शिश्नं प्रतिनिहितं भवति ॥१८॥ आनयन्त्येतां कुमारीमार्यवर्णामसिक्तरेतसं[14] वैश्यां[15] वा

---

१ H oms. २–२. HMP प्रातिक्ष्णात्रीमावतिश्वन; thus Ao IV. 199:92. 7–8. ३. MHP Ao ibid शम्यापासेऽमु°. ४. MHP प्रणाय्य; thus Ao IV. 199:92.9. ५. MHP °मेधा. ६–६. MHP वृषापां. ७–७. HP दधोत्युप°. ८. MHP °मेथति. ९. MHP येका. १०. MHP धान्निका. ११. MHP °मेहन्ति. १२. P एष. १३. MHP om. १४. MHP Ao IV. 199:93.4 : °मायं वर्णमसि°. १५. MHP वेश्यां; thus Ao ibid.

राजन्यबन्धुं वा ॥१९॥ तामेतेन तृणेनाध्यस्येत् मिथुनस्य त्वा शुचा विध्यामि इति ॥२०॥ सा हेत्याहुरीश्वरा तत एव सभां[1] प्रस्कन्दोरिति[2] ॥२१॥ स यां द्विष्यात्[3] तामभि [4]वृधैव पल्यप्यैतेनै त्र[4] तृणेनाध्यस्येत् मिथुनस्य त्वा शुचा [5]विध्यामि इति[5] ॥२२॥ सा हेत्याहुरीश्वरा तत एव सभां प्रस्कन्दोरिति ॥२३॥ अथैनामुत्थापयति आपो हि ष्ठा मयोभुवः, यो वः शिवतमो रसः, तस्मा अरं गमाम वः, दधिक्राव्णो[6] अकारिषम्, आ दधिक्राः इति ॥२४॥ तदाहुः पवित्राणि वा एताः सर्वतो जयेयुरध्वर्युः प्रतिप्रस्थातारो यजमानः पत्नय इति ॥२५॥ सर्वं एवैता जपन्ति ॥२६॥ अवस्रंꣳसयन्ति[7] काचान् ॥२७॥ अवालुम्पन्ति मालाः ॥२८॥ सुवर्णा एवाध्वर्यो रजता प्रतिप्रस्थातुः सामुद्रा आग्नीध्रस्य ॥२९॥ अथातोऽसि(-पथान् कुर्वन्ति)[8] ॥३०॥ यत्प्रतीचीनं क्रोडात् तन्महिषी शतेन राजपुत्रीभिः सह गायत्री त्रिष्टुब् जगती इत्येतस्यानुवाकस्य[9] प्रथमाभ्यामृग्भ्याꣳ सुवर्णाभिः सूचीभिर्लोमानि वियावꣳ श्लेष्मणा व्यवलिम्पन्ति ॥३१॥ यत्प्रतीचीनं क्रोडात्[10] प्राचीनं नाभेस्तद् वावाता सहेतराभिश्चतुर्थीभ्यामृग्भ्याꣳ रजता सूचीभिर्लोमानि वियाव (ꣳ श्लेष्मणा) व्यवलिम्पन्ति ॥३२॥ यत्प्रतीचीनं नाभेस्तत् परिवृक्ती सर्वमपरार्धꣳ सहेतराभिः षष्ठीभ्यामृग्भ्यामयस्मयीभिः सूचीभिर्लोमानि वियावꣳ श्लेष्मणा व्यवलिम्पन्ति ॥३३॥ असिपथान् कृत्वा सूचीरुत्प्रयच्छन्ति ॥३४॥ सुवर्णा एवाध्वर्यो रजता प्रतिप्रस्थातुरयस्मय आग्नीध्रस्य ॥३५॥ एता न्वेव तद्धिरण्यं व्युदेति यत्किञ्चाश्वमभितः ॥३६॥ सुवर्णमेवाध्वर्यो रजतं [11]प्रतिप्रस्थातुरयस्मयमाग्नीध्रस्य[11] ॥३७॥ [२०] [ इति सप्तमोऽनुवाकः ]

अथातो विशसनस्यैव ॥१॥ आनयन्त्येतꣳ सूतश्रेष्ठस्य पुत्रं कुमारमसिक्तरेतसमश्वस्य विशसितारमलंकृत्य रुदन्तो यथा मरिष्यन्तमेवम् ॥२॥

---

१. MHP समा; thus Ao IV.200:93.6. २. Caland also gives प्रस्कन्दितोरिति with question mark.. ३.MHP द्विष्यत्. ४-४. MP वृधैववल्य°, H वृधैव वल्यंय्यैते°; thus Ao IV. 200: 93.7. Caland gives वृथैव for वृधैव as probable text :with question mark in small bracket. ५-५. P विध्यामिति. ६. MHP दधिक्राविष्णो. ७. MHP °स्रंप°. ८. Cf BaudhŚS XV. 30:235.7–8. ९. MHP °नुवातस्य. १०. MHP कोलात्. ११-११. MH °स्मयाग्नी°, P °स्मयमग्नी°.

यो ह स्मेत्याहुरेतस्य पुरा प्रथम आछ्यति[1] मूर्धा ह स्मास्य[2] विपतिष्यतीति[3] ॥३॥ तद्धैतत्केशी मैत्रेयो यत्राश्व[4]मेधेनेजे तद्धैकयाव्न:[4] कान्दमस्य पितामहं वा प्रपितामहं वोदानिन्युः[5] कुमारमसिक्तरेतसमश्वस्य विशसितारमलंकृत्य रुदन्तो यथा मरिष्यन्तमेदम्[6] ॥४॥ तदु ह [7]दीर्घतमो मामतेय[7] उपशुश्राव। स होवाच किमेतद् रुदन्ति, क एष घोष इति ॥५॥ तꣳ होचुर्भगवो न पश्यसीत्थमित्थꣳ[8] सूतश्रेष्ठस्य पुत्रमुदानयन्ति कुमारमसिक्तरेतसमश्वस्य विशसितारमलंकृत्य रुदन्तो यथा मरिष्यन्तमेवम् तस्य ह[9] मूर्धा विपतिष्यति। तदेतद्रुदन्ति। स एष घोष इति ॥६॥ स होवाच कुमारेहि ते [10]ऽहं तद् वक्ष्यामि यथा त्वमेवाश्वं विशसिष्यसि, नो ते मूर्धा विपतिष्यतीति ॥७॥ तथा[11] भगव इति ॥८॥ स[12] एतत् षड्ऋच[13]ꣳ सूक्तं प्रोवाचोत्तरतोऽश्वस्योपविश्यासिफलकेनासिपथान् आपिꣳशन्नास्सै कस्त्वा छ्यति कस्त्वा विशास्ति इति ॥९॥ तमु त्वान्य [14]उपपरिक्रम्य कुमार किमिदमश्वं क्लिशन्नास्स इत्थं वा अश्वं विशसिष्यतीत्यसिमादायाच्छास्यसीति[14], तस्य ह मूर्धा विपतिष्यतीति ॥१०॥ स हैवं चकार। तमु हान्य उपपरिक्रम्योवाच कुमार किमिदमश्वं क्लिशन्नास्स इत्थं वा अश्वं विशसिष्यतीत्यसिमादायाचच्छौ। तस्य ह मूर्धा [15]विपपात॥११॥ तन्तु[15] हैतदेवमेव

---

१. MHP आछ्यति. thus Ao IV. 200.94.3. २. MP स्मा अस्य. ३. Caland corrects विपतिष्यतीति as विपततीति ( Ao IV. 200:94.4 ). ४–४. MH मेधेनजे तद्धैकयावन्न:. ५. MH बोदोनि°, P वोदेनि; thus Ao IV. 200:94 6. ६. MHP °मेव. ७–७. MHP °तमामतेय. ८. MHP मतावानसीत्थमित्थं; thus Ao IV. 200:94.9 fn 1. ९. Ao IV. 200:94.11 om. १०. The reading हितो given by Caland for ते in the fn 2 ( Ao IV. 200:94.12 ) is not found in M. ११. P यथो. १२. MHP om; thus Ao IV. 200:94.13. १३. MHP षड्तं. १४–१४. H उपरिक्रम्य; Ao IV.200:94.16 : निक्रम्य. Caland thinks the text कुमार:. निक्रम्य ( S 10-11 ) as repetition and hence gives in bracket. ( Ao IV. 200:94. 16-18 ) MHP क्लशन्नास [ P क्लुश° ] for क्लिशन्ना°. MH विशासि° P विशसिष्यसी°. for विशसि°. १५–१५. MHP विपपातन्नु.

कुर्यात् ॥१२॥ प्रसिद्धमेवाग्नेयस्य च पौष्णस्य च वपे उत्खिद्याश्वस्य वपोद्धरणे[1] प्रतिनिदधाति ॥१३॥ तत एने जुषोत्खिदति ॥१४॥ नाश्वस्य वपा भवतीत्याहुः ॥१५॥ यदेवात्राश्वस्य लोहितं वा[2] श्लेष्मा वा मेदस्तरसो वा श्लिष्यति[3] तदेवाश्वस्य वपाभाजनं भवतीति ॥१६॥ प्रसिद्धमितरेषां वपा उत्खिदन्ति ॥१७॥ समाहरन्त्यस्मा[4] उत्तर्बर्हिषि ॥१८॥ ता एतेनान्तरा यूपाꣳश्चाहवनीयं चातिहृत्य दक्षिणत उपसादयति ॥१९॥ जघनेनाहवनीयमश्वस्य[5] तूपरस्य गोमृगस्येति वपाः[6] पर्याहृत्योत्तरत उपसादयति, दक्षिणत इतरान्[7] ॥२०॥ प्रगृहीतामेवाग्नेयस्य वपामभिजुहोति, सꣳस्रावेणेतराः ॥२१॥ स यावदेव वपाः श्रप्यन्ते तावत् प्रियङ्गुतुण्डुलैश्चरन्ति ॥२२॥ अश्वस्थपलाशेन चतुस्त्रिꣳशतमश्वस्तोमीयाभिः[8] प्रियङ्गुतण्डुलान् जुहोति यदक्रन्दः प्रथमं जायमानः इत्येतैस्त्रिभिरनुवाकैः ॥२३॥ द्विरुत्तमया जुहोति ॥२४॥ तथा षट्त्रिꣳशत्संपद्यन्ते ॥२५॥ उत्तमां जुह्वत् स है(-तेन)[9] चर्मणानुप्रहरति ॥२६॥ श्रृतासु वपासूत्तमं प्रयाजं यजति ॥२७॥ गृहीतामेवाग्नेयस्य वपामभिघारयति, सꣳस्रोवेणेतराः ॥२८॥ [२१]

आज्यं च हिरण्यशल्कं च वपाया उपस्तृणीते ॥१॥ प्रसिद्धमेवाग्नेयस्य च पौष्णस्य च वपाभ्यां प्रचरति ॥२॥ अथोपस्तीर्यं हिरण्यशल्कमवधायाश्वस्य तूपरस्य गोमृगस्येति वपाः संप्रलुम्पन्नाह, प्रजापतये इत्युपाꣳशु, अश्वस्य तूपरस्य गोमृगस्य[10] वपानां मेदसोऽवदीयमानस्यानुब्रूहि इत्युच्चैः ॥३॥ अथोपरिष्टाद्धिरण्यशल्कमवधायाज्येनाभिघार्याश्राव्याह, (प्रजापतये इत्युपाꣳशु)[11] अश्वस्य तूपरस्य गोमृगस्य वपां मेदः प्रस्थितं प्रेष्य इत्युच्चैः ॥४॥ पुरस्ताद्वपानां पूर्वं महिमानं[12] जुहोति तस्य ते द्यौर्महिमा इति ॥५॥ "हुतासु वपासूत्तमं महिमानं जुहोति तस्य ते पृथिवी महिमा इति[13] ॥६॥ प्रसिद्धमितरेषां वपाभिः प्रचरति ॥७॥ ये ये समानदेवत्या(: पशव-)[14]स्तेषामवीनां

---

१. MHP वपोर्धं° [ P °र्धा° ]. २. MHP वो. ३. Ao IV. 200: 95.2 : श्लिष्यते. ४. M समहार°, P °हरन्तस्मा. ५. P अश्वस्तू°. ६. MH वपा. ७. MHP इतरां. ८. MHP °श्वन्तोमी°, ९. MHP om. १०. MHP twice. ११. MHP om. १२. MP महिनां, H महिना. १३–१३. P oms. १४. MHP त्तेषा° for स्तेषा°.

(वपा-)भिः प्रचर्य ग्राम्याणां पशूनां निष्क्रीतीजुंहोति दिग्भ्यो भूत्यै स्वाहा, विराजो भूम्यै स्वाहा इति ॥८॥ ऐन्द्राःसूराणां वपाभिः प्रचर्यारण्यानां पशूनां निष्क्रीतीजुंहोति इन्द्राय राज्ञे स्वाहा, वरुणाय राज्ञे स्वाहा इति ॥९॥ ये (ये समानदेवत्यास्तेषाऽऽ स्वाहाकृतिꣳ) हुत्वा (आहवनीये स्रुवाहुतिं जुहोति) हुताय स्वाहा, देवेभ्यः स्वाहा, ऽजापतये स्वाहा, सर्वस्मै स्वाहा इति ॥१०॥ स यत्र जुहोति हुताय स्वाहा इति पूर्वयोरेवैषा तृतीया ॥११॥ अथ यत्र जुहोति देवेभ्यः स्वाहा इति वपा एतत्परिजुहोति ॥१२॥ अथ यत्र जुहोति प्रजा(-पतये स्वाहा इत्यस्य एषा निष्क्री-)तिः ॥१३॥ अथ यत्र जु(-होति) सर्वस्मै[1] स्वाहा इत्यस्यो एवैषा सर्वस्य निष्क्रीतिः[2] ॥१४॥ ता एतेनान्तरा यूपाꣳश्चाहवनीयं चातिहृत्य वपाश्रपणोरत्यस्य वाऽतिप्रदाय वा विषूचीरनु प्रहरति ॥१५॥ यथोदञ्चं परेत्य चात्वाले मार्जयित्वा पशून् विशसन्ति ॥१६॥ प्रसिद्धमेवाग्ने(-यस्य च पौष्णस्य च पशू-)न् वशाय्य (वि-)शास्ति ॥१७॥ स यो (विशास-)ति तꣳ सꣳशास्ति शमितर्[3] इत्याह, माऽश्वस्य [4]तिर्यंग्लोम छैत्सोर्माऽश्वस्य[4] तिर्यंगस्थ्यभिशारीरङ्कश[5] एनꣳ सचर्मकं [6]विशस, त्रेधाऽश्वतेजनीं[6] [7]कुरुताद्, गोमृगकण्ठे[7] तृतीयमश्वशफे तृतीयमयस्मये कमण्डलौ तृतीयमिति ॥१८॥ ताꣳ श्रपयित्वा त्रेधा व्यासिञ्चति॥१९॥शमितारौ इत्याह मा तूपरस्य च गोमृगस्य च तिर्यंगस्थ्यभिशारिष्टमङ्कश[8] एनौ सचर्मकौ विशसतमिति ॥२०॥ तानङ्कशः सचर्मकान् विशस्यैतासु महतीषु कुम्भीषु समवदधति ॥२१॥ पृथगेवैषा मान्द्रास्थं[9] च शीर्षापदं च श्रपयन्ति ॥२२॥ प्रसिद्धमितरान् विशसन्ति ॥२३॥ अथाह आनयतारण्यान् पशून् प्रार्जत ग्रामं ग्राम्या अभ्यवयन्त्वरण्यमारण्या[10] अभ्यवयन्तु नदीं नादेयाः सचन्तां मैनान् हिꣳसीष्ट इति ॥२४॥ तानेतानन्तरा चात्वालोत्करौ निष्क्रमय्य प्रार्जन्ति ग्राममेव ग्राम्या अपियन्त्यरण्यमारण्या

---

१. MHP सष्ठस्मै. २. P °क्रीती°. ३. MHP शयत°.
४–४. MHP तिर्यश्लोमच्छेत्सीर्मास्य. ५. MHP °शरीरमङ्कश, Ao IV. 201:16:अभिशरीर्; Cf BaudhŚS XV. 31:237.12 : सꣳ शारीः
६-६. MHP विशसते घास्यतेऽ जनिं. ७-७. MP कुरु दगोमृग°, H कुरु दगोमृग°
८. M °शरीष्ट°, H °शरीषम°, P °शरिष्ठमंग°. ९. M मान्त्रा°.
१०. MHP अभ्यवियन्त्यर°.

अभ्यवयन्ति, नदीं नादेयाः सचन्ते, नैनान्[1] हिꣳसन्ति ॥२५॥ प्रतायत एष एकविꣳश उक्थ्यः ॥२६॥ तस्य शाक्वयं[2] पृष्ठमन्यदन्यच्छन्दः पार्थुरश्मं ब्रह्मसाम[3] संक्रुत्यच्छावाकम् ॥२७॥ ऋजु प्रातःसवनꣳ सन्तिष्ठते ॥२८॥ [२२] [ इत्यष्टमोऽनुवाकः ]

सृप्त्वा[4] मार्जयित्वा माध्यन्दिनाय सवनाय संप्रसर्पन्ति ॥१॥ निग्राभ्यासु वाचयित्वा घोषिणोऽभिषुण्वन्ति ॥२॥ शुक्रामन्थिनौ गृह्णाति ॥३॥ आग्रयणं द्वौ मरुत्वतीयौ ॥ ४ ॥ अभिगृह्णाति पृष्ठ्यान्[5] ॥५॥ अथोक्थ्यम् ॥६॥ कलशान् संमृश्य विप्रुषाꣳ होमं जुहोति ॥७॥ सन्तनीं जुहोति॥८॥ पवमानेन स्तुवते ॥९॥ स्तुत उत्तिष्ठन् संप्रेष्यति अग्नीदग्नी= यत्ते वाद्यमिति ॥१०॥ दधिघर्मेण प्रचर्य माध्यन्दिनीयैः पुरोडाशैः प्रचरति ॥११॥ शुक्रामन्थिभ्यां चरति ॥१२॥ शुक्रामन्थिनोर्होममन्वेतस्य[6] सोमचमसस्याप्तोहुं त्वा[7]ऽभिषेकाय निदधति[8] ॥१३॥ ऋजु होत्राः संपादयन्ति ॥१४॥ सीदन्ति नाराशꣳसाः ॥१५॥ दाक्षिणेभ्यो[9] दाक्षिणानि होष्यन्नाप्तीराहवनीये जुहोति ॥१६॥ अथ दाक्षिणानि हुत्वाऽर्धं जितस्य ददाति ॥१७॥ यथाश्रद्धꣳ स्वस्य दत्त्वा समनुदिश्य वैश्वकर्मणानि हुत्वा पर्याप्तीराहवनीये जुहोति ॥१८॥ अथाप उपस्पृश्य सद आलभ्य प्राङाद्रवन्नाह इन्द्राय मरुत्वतेऽनुब्रूहि इति ॥१९॥ प्रगिद्धं त्रिभिर्मरुत्वतीयैश्चरति ॥२०॥ सीदन्ति नाराशꣳसाः ॥२१॥ महेन्द्राय[10] गृहीतो माहेन्द्रो भवति ॥२२॥ अथादत्ते शार्दूलचर्म ॥२३॥ तज्जघनेनाग्निं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति ॥२४॥ श्लक्ष्णकꣳ रजतꣳ रुक्ममुपास्य षट् पार्थानि, षट् प्राजापत्याः हिरण्यगर्भः समवर्तताग्रे इति, पञ्च प्राणभृतः अयं पुरो हरिकेशः इति, षड् ऋतव्याः वसन्ताय स्वाहा, ग्रीष्माय स्वाहा इति; द्वादश मासाहुतीः मधवे स्वाहा, माधवाय स्वाहा इति, द्वादश भूतानामवेष्टीः अमृतमसि इति ॥२५॥ रुक्ममभिमृश्य मृत्योर्मा पाहि इत्युपस्थं कृत्वा प्राङुपविशति ॥२६॥ दिद्योर्मा[11] पाहि इति शतातृण्णाꣳ सुवर्णꣳ रुक्ममुपरिष्टाद् ऋषभचर्म धारयन्ति ॥२७॥ अथाधिदेवते ॥२८॥ [२३]

१. MP मैनान्, H मैना. २. MHP शक्वरयः [H शाक्व°]. ३. MHP °सामं. ४. MH मृप्त्वा. ५. MH पृष्ठचन्, P पृष्टचन्. ६. MHP °र्होमन्वे°. ७. MHP °स्याप्तुं हुत्वा. ८. H दधाति. ९. MHP दक्षि°. १०. MHP माहे°. ११. MHP दिद्योन्मा°.

सहस्रशीर्षा पुरुषः स = दशाङ्गुलम् इति ॥१॥ अथैतꣳ सोमचमसं द्वादशसु चमसेषु व्यवनयति ॥२॥ एष एवैषां त्रयोदशः ॥३॥ तमेत एव विपरियन्ति ॥४॥ अध्वर्युरेवैनमेतेनैव पुरस्तादभिषिञ्चति प्रजापतेस्त्वा प्रसवे पृथिव्यै बाहुभ्यामन्तरिक्षस्य हस्ताभ्यां दिवो वृष्ट्यै सरस्वत्यै वाचो यन्तुर्यन्त्रेण प्रजापतेस्त्वा परमेष्ठिनः स्वाराज्येनाभिषिञ्चामि इति ॥५॥ आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायताम् इति दक्षिणतो ब्रह्मा ॥६॥ आऽस्मिन्राष्ट्रे राजन्य इषव्यः शूरो महारथो जायताम् इति शूरो राजन्यः ॥७॥ दोग्ध्री धेनुः इति सूतः ॥८॥ वोढाऽनड्वान् इति वैश्यः ॥९॥ आशुः सप्तिः इति सचमानः[1] ॥१०॥ पुरन्धिर्योषा इति महिषी ॥११॥ जिष्णू रथेष्ठाः इति शूरो राजपुत्रः ॥१२॥ सभेयो युवा इति युवा ॥१३॥ अस्य यजमानस्य वीरो जायताम् इति यजमानो यजमान्यः प्रति ॥१४॥ निकामे निकामे नः पर्जन्यो वर्षतु इति शतं तल्प्या राजपुत्राः ॥१५॥ फलिन्यो न ओषधयः पच्यन्ताम् इति भागदुघः ॥१६॥ योगक्षेमो नः कल्पताम् इत्यक्षावापः ॥१७॥ गोविकर्तावभिषिच्य षडुत्तराणि पार्थानि; षट् प्राजापत्याः हिरण्यगर्भः समवर्तताग्रे इति; पञ्चापानभृतः प्राची दिशाम् इति; षड् ऋतव्याः वसन्ताय स्वाहा, ग्रीष्माय स्वाहा इति; द्वादश मासाहुतीः मधवे स्वाहा, माधवाय स्वाहा इति; द्वादश भूतानामवेष्टीः[2] (अमृतमसि इति)[3] ॥१८॥ भूर्भुवः सुवः इति त्रीणि यजूꣳषि वाचयति ॥१९॥ वरं दत्त्वा वरं वृणीते ॥२०॥ अन्वारभते ॥२१॥ अन्वारब्धे जुहोति वि न इन्द्र मृधो जहि इति ॥२२॥ एतया चैव मुखं विमृष्टे ॥२३॥ उत्तरया[4] च वि शत्रून् वि मृधो नुद इति ॥२४॥ अथास्य प्राजापत्याभिराप्रीभिर्दक्षिणꣳ हस्तं गृह्णाति ऊर्ध्वा अस्य समिधो भवन्ति इत्येताभिः ॥२५॥ पृष्ठे वसतीवरीर्गृह्णाति ॥२६॥ ऋजु माध्यन्दिनꣳ सवनꣳ सन्तिष्ठते ॥२७॥ ऋजु तृतीयसवनमा पवमानात् ॥२८॥ पवमानेन चरित्वा संप्रेष्यति अग्नीदग्नीन्विहर बर्हिः स्तृणाहि पुरोडाशाँ अलं कुरु, प्रतिप्रस्थातरुत्तरबर्हीꣳष्युपकल्पय पशुभिः प्रचरिष्यामः इति ॥२९॥ पृषदाज्यस्योपहत्य त्रिः समुद्य पशून् समनक्ति ॥३०॥ अन्वतिहरन्त्यस्मै दधिकुम्भं पृषदाज्यसन्ततिम् ॥३१॥ न्युष्कान् पशून् कुरुत इत्युक्त्वा मनोतायै हविषोऽवदीयमानस्यानुब्रूहि इति ॥३२॥ जुहूपभृतोर्वसाहोमीयायां पात्रियामसम-

---

१. MHP °मानं. २. MHP °वेष्टिर्. ३. MHP om. ४. MHP उत्तरा.

वत्तधान्यां यैषा महती तस्यां न्युष्कान् पशून् कृत्वा हरन्ति ॥३३॥ तानेतेनान्तरा यूपा॑ँश्चाहवनीयं चातिहृत्य दक्षिणत उपसादयन्ति ॥३४॥ जघनेनाहवनीयमश्वं तूपरं गोमृगमिति पराहृत्योत्तर उपसादयन्ति, दक्षिणत इतरान् ॥३५॥ उत्तरतोऽश्वस्य तूपरस्य गोमृगस्यावद्यन्ति, दक्षिणत इतरेषाम् ।३६॥ वैतसे कटेऽश्वस्य तूपरस्य गोमृगस्यावद्यन्ति, प्लक्षशाखास्वितरेषाम् ॥३७॥ सुवर्णेन सुवर्णत्सरुणा[1]ऽश्वस्य तूपरस्य गोमृगस्येत्यवद्यन्ति, (रजतै रजतत्सरुभिरि-)[2]तरेषाम् ॥३८॥ तदाहुः सर्वेषामेव मनोता अनुब्रूयाद् इति ॥३९॥ तदु वा आहुः न वै तथा, सद्यः सन्तिष्ठेत । तिसृणामेवैकादशिनीनामनुब्रूयात् । त्रयस्त्रि॑ँशद्वै देवतास्तद् देवता आप्नोति इति ॥४०॥ तदु वा आहुर् एकादशिनीनामेवानुब्रूयाद्[3] एकादशिनीं वा मनोता नाति[4] प्रच्यवन्ते[5] ॥४१॥ [२४]

सान्ततः सावित्रयोरेव सन्तिष्ठते ॥१॥ इदं[6] यदु ह वै किञ्च सवितृप्रसूतं कर्म क्रियते सर्वं तत् समृद्धम् । ते सवितृप्रसूता एव प्रचरन्ति समृद्धयो इति ॥२॥ स यत्राश्वस्य तूपरस्य गोमृगस्येत्यग्नये स्विष्टकृते समवद्यन्ति तद् गोमृग एव गोमृगकण्ठमप्यर्जति[7] ॥३॥ यदोपभृत॑ँ[8] सौविष्टकृतमतिरिच्यते त्वत् पात्रीषु त्वच्चमसेषु त्वत् कुर्वन्ति ॥४॥ नाश्वस्येडाया अवद्यति ॥५॥ क्रोडमेव[9] पिशितमनस्थिकमुत्पिश्य[10] काष्ठेनोपतृद्य प्रतिवेशं निदधाति ॥६॥ अथ यत्र जा(-घ-)नीभिः पत्नीः संयाजेभ्यः प्रहिणोति तदश्वस्य तूपरस्य गोमृगस्येत्यनस्थिकानि पिशितान्यु प्रतिवेशनि[11] हिरण्यशफे च तेजनीम् ॥७॥ स यदेतैर्मनोतावद्भिः प्रचरत्यथैनमितरैरवत्तैः ॥८॥ अवत्तैरेव प्रत्यभिघारितैरुपासते[12] ॥९॥ अथैषानुब्रूहि, प्रैष्यानुब्रूहि ॥१०॥ प्रेष्येत्येव चरति ॥११॥ ऐन्द्रासूरैः प्रचर्य वनस्पतिं जुहोति ॥१२॥ स्विष्टकृतो होममन्वेतानि प्रतिप्रस्थातारस्त्वत्पात्रीभिस्त्वच्चमसैस्त्वत्कुर्वन्ति[13] ॥१३॥ नाश्वस्येडाया अवद्यति ॥१४॥

---

१. MHP सुवर्णं सरु° [ M °सुरु° ]. २. MHP om. ३. MHP °दशनानामे°. ४. MHP नति. ५. P च्यवते. ६. M ऽयं, H यं. ७. MP °ब्यर्जति. ८. P यथोप°. ९. MP क्रोड°. १०. MHP विशित°. ११. P बेशानि, १२. P °पासिते. १३. MHP° स्तत्पात्रीभिस्तच्चं.

क्रोडमेव[1] पिशितमनस्थिकमुत्पिश्य काष्ठेनोपतृद्य[2] पात्रीं बिल्व उपसंगृह्णाति ॥१५॥ अथ यत्र होत्रेऽवान्तरेडामादधाति[3] तदेतत् काष्ठं तेजन्यालिप्तमधस्तात्पाणेरुपलिम्पन्ति ॥१६॥ अथ तथैव[4] राष्ट्राय पुरस्तादेवाभिवेदितं भवति ॥१७॥ योऽस्याश्वस्य मेध्यस्य [5]नावशिष्यत्यशिवय एनं पाप्म(-ा गृह्णाति) ॥१८॥ तस्य क्रोडस्य पिशितस्यावच्छेदमादधाति ॥१९॥ यावन्तो ह्यस्याश्नन्ति तेषाꣳ सर्वेषामिन्द्रियं वीर्यं [6]वृङ्क्ते; ते ह्यस्य सर्वे नैधवना भवन्ति ॥२०॥ तानि [7]हैतान्यप्येतर्हि कुरुषु कूलानि नैधवनानि सन्ति ॥२१॥ अथ यानध्वर्युः परित्त्रिासते तूपरस्य च तेभ्यो गो(-मृगस्य च) पुच्छे निधाय तमश्वमङ्गशः प्राञ्चं चिनोति, पुरस्तात्प्रत्यञ्चं तूपरं पश्चात्प्रतीचीनं गोमृगम् ॥२२॥ तान् सहैतेन कटेनानु प्रहरति क्रमैरत्यक्रमीद्वाजी;[8] आक्रान् वाजी; ये ते पन्थानः सवितः पूर्व्यासः इत्येतैस्त्रिभिरनुवाकैः ॥२३॥ प्रहृत्य सन्त(-र्ति जुहोति स्तेगान्दꣳष्ट्राभ्याम् इति पञ्चभिः पूर्वैरन-)न्तर्हि(-तैः; इन्द्रस्य) क्रोडः इति पञ्चभिरेवोत्तरैरनन्तर्हितैः[9]; अग्नेः[10] पक्षतिः इति षष्ठः; वायोः पक्षतिः इति सप्तमः; अरण्येऽनुवाक्योऽष्टमः; पन्थामनूवृग्भ्याम् इति॥२४॥ अश्वमेवैतेनाभि[11] जुहोति ॥२५॥ इलुवर्दाय स्वाहा, बलीवर्दाय स्वाहा (इति, षट्त्रिꣳशत-)मश्वस्तोम्याः[12], तिस्रो द्विपदाः ॥२६॥ ऋजु तृतीयसवनम् ॥२७॥ सन्तिष्ठत एकविꣳश उक्थ्यः ॥२८॥ त एवाह ब्रह्मन् प्रस्थास्यामः इति ॥२९॥ अनूयाजानिष्ट्वा स्वरुं जुहोति ॥३०॥ अथ हारियोजनेन चरित्वाऽप्सुषोमैश्चरन्ति ॥३१॥ अथ प्रत्यञ्चः परेत्य जाघनीभिः पत्नीः संयाजयन्ति ॥३२॥ स यत्र जाघनीनाम-)ग्नये गृहपतये समवद्यति [13]तदेतस्मा(-त्कमण्डलोरयस्म-)यात्तेजनीमानीय[14] काष्ठं तेजन्यालिप्तं [15] प्रतिवेशं निदधाति ॥३३॥ अथैतमश्वशफमजिनवासिने वा घृष्वचमसाय वोत्प्रयच्छन्नाह इमं प्राश्वꣳ हृत्वा

---

१. MP क्रौड°. २. H कोष्ठेनो°. ३. MH होत्रेंवा°. ४. MHP तयै. ५. MHP नाशिष्य°. ६–६. MP वृञ्जेते, H वृञ्जते; thus Ao IV. 202:97.2. ७. MHP होताग्य°. ८. MHP °रत्यतिक्रमीलाज्या ( P corrected as °क्रमीद्वाजी in red ink ). ९. MHP °नन्तर्हीतरैः. १०. MHP om. ११. MHP °तेनाग्निमंन्ध्यादभि. १२. MHP स्तोमया; Cf BaudhŚS XV. 35:240.5 : स्तोमीयाꣳस्तिस्रो. १३. MHP तदेतमा. १४. MHP °हात्तेज. १५. MHP तेजस्यालि°.

होतुर्वषट्कारमनु संप्रत्यश्वमनु [1]प्रहरतादिति ॥३४॥ तमु स पाश्चꣳ हुत्वा होतुर्वषट्कारमनु संप्रत्यश्वमनु[1] प्रहरति ॥३५॥ अथ यत्र होत्र इडामादधाति तदेतत्काष्ठं तेजन्यालिप्तमधस्तात्पाणेरुपलिम्पन्ति ॥३६॥ पत्नीः संयाज्य प्राङुदायन् तराꣳसि जुहोति ॥३७॥ तराꣳसि हुत्वा ध्रुवामाप्याय्याज्यस्थाल्यामवनीय वसतीवरीः परिहृत्य पयाꣳसि विशिष्योपवसन्ति ॥३८॥ [२५]

प्रातर्हस्तावविनिज्याह्ले सावित्रं जुहोति ॥ १ ॥ अथाज्यानि गृहीत्वोपावहृत्य राजानं प्रातरनुवाकमुपाकरोति ॥ २ ॥ परिहिते प्रातरनुवाकेऽपोऽच्छैति[2] ॥३॥ अपो व्यवनीयाहवनीये सꣳस्रावꣳ हुत्वाऽतिरात्रं क्रतुं कृत्वा प्रपद्यते ॥४॥ प्राजापत्यं दधिग्रहं जुहोति ॥५॥ ऋजुरभिषवः[3] ॥६॥ प्रसिद्धा ग्रहा आऽऽश्विनात्[4] ॥७॥ आश्विनं गृहीत्वोपनिष्क्रम्य परिवीयमाणायानुवाच आह ॥८॥ एकादशाग्निष्ठे रशनां परिव्ययति ॥९॥ एकादश गव्यान् पशूनुपाकरोति प्राजापत्यानुत्तमानाश्वमेधिकान् ॥१०॥ तेषां वपा हुत्वा मार्जयित्वा सं प्रसर्पन्ति ॥११॥ प्रतायत एष सर्वस्तोमोऽतिरात्रः ॥१२॥ ऋजु प्रातःसवनꣳ सन्तिष्ठते ॥१३॥ ऋजु तृतीयसवनम् ॥१४॥ सन्तिष्ठत एष सर्वस्तोमोऽतिरात्रः ॥१५॥ ऋजु प्रातःसवनꣳ सन्तिष्ठते ॥१६॥ ऋजु माध्यन्दिनꣳ सवनमा दाक्षिणेभ्यः ॥१७॥ दाक्षिणानि होष्यन्नाप्तीराहवनीये जुहोति ॥१८॥ अथ दाक्षिणानि हुत्वाऽतिशिष्टं जितस्य ददाति ॥१९॥ यथाश्रद्धꣳ स्वस्य दत्त्वा समनुदिश्य वैश्वकर्मणानि हुत्वा पर्याप्तीराहवनीये[5] जुहोति ॥२०॥ न पृष्ठे वसतीवरीगृंह्णाति ॥२१॥ ऋजु माध्यन्दिनꣳ सवनꣳ सन्तिष्ठते ॥२२॥ ऋजु तृतीयसवनम् ॥२३॥ सन्तिष्ठत एष सर्वस्तोमोऽतिरात्रः ॥२४॥ त[6] एवाह ब्रह्मन् प्रस्थास्यामः इति ॥२५॥ अनूयाजानिष्ट्वा स्वरुं जुहोति ॥२६॥ अथ हार्योजनैश्चरित्वाऽप्सुषोमैश्चरन्ति ॥२७॥ अथ प्रत्यञ्चः परेत्य जाघनीभिः पत्नीः संयाजयन्ति ॥२८॥ स यत्र जाघनीनामग्नये गृहपतय समवद्यति तदेतस्मादयस्मयात्कमण्डलोस्तेजनीमानीय[7] काष्ठं तेजन्यालिप्त=मधस्ता-

---

१–१. H wrongly repeated. २. MP °वोच्छैति, H °वोच्छ°. ३. MHP ऋजुभिरभिषवं. ४. MHP आततिरात्रिका. ५. MHP पर्यास्तीश°. ६. MHP om. Cf supra XI. 25.29. ७. MHP कमण्डुलस्ते° ( H °मण्डल° ).

त्पाणेरुपलिम्पन्ति ॥२९॥ पत्नीः संयाज्य प्राङेत्य षड् ऋग्मियाण्यहौषीत् ॥३०॥ त्रीणि यजूꣳषि जुहोति ॥३१॥ आयुर्दा (इति) दशमीꣳ सꣳसृजन्ते ॥३२॥ अवभृथमाददते[1] स्रुवꣳ स्रुचमाज्यस्थाल्याज्यं वारुणं दशकपालं प्रतिपुरुषं वासाꣳस्ययस्मयं कमण्डलुम् ॥३३॥ आनयन्त्येतꣳ शुक्लं विक्लिधं खलतिं पिङ्गाक्षम् ॥३४॥ अथ दक्षिणे ह्रदे नावं वोपस्थापयन्ति हस्तिनं वा ॥३५॥ अथ चात्वालमुपस्थाय दक्षिणꣳ ह्रदमभ्यवभृथं यन्ति ॥३६॥ क्रमैरत्यक्रमीद्वाजी, आक्राच् वाजी पृथिवीम्, ये ते पन्थानः सवितः[2] पूर्व्यासः इत्येतैस्त्रिभिरनुवाकैरेत्याध्वरस्यावभृथं जुहोति अग्नेरनीकमप आ विवेश इति ॥३७॥ अथाग्नेरवभृथं जुहोति समुद्राय वयुनाय इति ॥३८॥ अथाश्वमेधस्यावभृथं जुहोति नमो राज्ञे नमो वरुणाय इति ॥३९॥ स्नानं परिशिष्टं भवति ॥४०॥ तदेतस्मादयस्मयात्कमण्डलोस्तेजनीमानीयोपरिष्टात्पाप्मनोऽवयजते ॥४१॥ अधस्तादु हैकेऽव[3] यजन्ते॥४२॥ उभयतस्त्वेवावयजेत ॥४३॥ काष्ठेनोपघातं जुहोति मृत्यवे स्वाहा मृत्यवे स्वाहा इति नवतिमाहुतीः; प्रयासाय स्वाहा इत्येकादश; ता एकशतम्[4] ॥४४॥ अथ नावं वाऽधिरोहन्ति हस्तिनं वा ॥४५॥ तदेष शुक्लो विक्लिधः पूर्वः प्रतिपद्यते ॥४६॥ ते यत्र स्नात्वमागच्छन्ति तदेष य[5] उपमज्जितस्य[6] [7]य उपमज्जतः[7] शीर्षन्नावर्तो भवति तदेतां तेजनीं जुहोति जुम्बकाय स्वाहा इति ॥४७॥ अनुन्यस्यति कमण्डलुम् ॥४८॥ तमेष एव प्रतिपद्य दक्षिणावप्लवते यथा[8] सꣳशिष्टो भवति ॥४९॥ तस्मा अनोयुक्तं च शतं च दत्त्वाऽऽह[9] क्षत्तरेतदेतस्मा[10] उपकुरु, अथैनं[10] निर्वह, मा मे विजिते वात्सीः इति ॥५०॥ प्रतिगाधे स्नान्ति ॥५१॥ स्नात्वोदेत्य ॥५२॥ [२६]

उदयनीयेन चरित्वोत्तरतो [11](मैत्रा-)वरुणीं वशामालभते ॥१॥ तस्यै [12]सौरीर्नव (श्वेता वशा इत्युपालम्भ्या भव-)न्ति॥२॥ उच्चैर्मैत्रावरुण्या

---

१. H °माददत्ते° २. MHP सवितुः. ३. MHP हैकेव°. ४. MHP एकादशतम्. ५. MHP om; thus Ao IV. 202:99.4. ६. M उपमतिज्जितस्य, HP °मंति जितस्य. ७–७. Ao IV. 202 : 99.5 oms, ८. M तथा. ९. MHP °त्वाह. १०–१०. MHP °तस्मादुपकुर्वैथ न; thus Ao IV. 202 : 99. ११. MHP om. १२. MHP सौरिन्नपा.

आश्रावयत्युपांशु सौरिणाम् ॥३॥ अथैकस्या एवं तासां वपां हुत्वा मार्जयित्वा प्रत्यङ् परेत्य पात्नीवतस्यावृता पात्नीवतमुच्छ्रित्य तस्मिन्नेतान् पशूनालभन्ते छगलं कल्माषं किकिदीविं विदीगयमिति ॥४॥ तान् पर्यग्निकृतानुत्सृज्य पशुपुरोडाशावुपयन्ति मैत्रावरुणमेककपालं नवैकं वा सौर्यान् ॥५॥ताननुवर्तन्ते[1] देविकानां च देवीनां च हवींषि ॥६॥ उच्चैर्मैत्रावरुणस्याश्रावयत्युपांशु[2] सौर्याणाम् ॥७॥ यथैकस्यैवं प्रैषवन्तः पशुपुरोडाशाः ॥ ८ ॥ अनुब्रूहि ॥ ९ ॥ यज इति; इतरेषां हविषामुपांशु ॥१०॥ पुरस्तात् पुरोडाशस्विष्टकृतो गव्यानि जुहोति मयोभूर्वातो अभिवातूस्राः इति ॥११॥ समानः प्रैषवान् स्विष्टकृत्, समानीडा ॥१२॥ पुरस्तात् पशुस्विष्टकृतः सन्नतीर्जुहोति अग्नये समनमत् इति ॥१३॥ अनूयाजानिष्ट्वा पत्नीः संयाज्य पुरस्तात् समिष्टयजुषो आभुवो[3] जुहोति ॥१४॥ अथोपरिष्टात् समिष्टयजुषां चतुर्विंशतिमनुभुत्रो जुहोति अग्निना तपोऽन्वभवत् इति ॥१५॥ ऋजु पशुभिः प्रचर्य यज्ञवास्तु कृत्वोदवस्यति ॥१६॥ अथैतद्वै वाऽहः[4] श्वोभूते (वा)[5] विशालयूपमुच्छ्रित्य तस्मिन्नेतान् पशूनालभन्ते आग्नेयमैन्द्राग्नमाश्विनम् इति[6] ॥१७॥ तेषां वपा हुत्वा मार्जयित्वा पशुपुरोडाशान्निर्वपन्ति ॥१८॥ तान्मृगारेष्टिमनुवर्तयते[7], अग्नयेंऽहोमुचेऽष्टकपाल इत्येषा ॥१९॥ तेषामेता याज्यानुवाक्या अग्नेर्मन्वे प्रथमस्य प्रचेतसः, यत्ते वयं पुरुषत्रा यविष्ठ, यथा ह तद्वसवो गौर्यं चित् इति ॥२०॥ संयाज्ये प्रैषवन्तः पशुपुरोडाशाः ॥२१॥ अनुब्रूहि ॥२२॥ यज इति, इतरेषां हविषामुपांशु ॥ २३ ॥ पुरस्ताद् पुरोडाशस्विष्टकृतो ब्रह्मवर्चसानि जुहोति आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायताम् इति ॥२४॥ समानः प्रैषवान् स्विष्टकृत्, समानीडा ॥२५॥ वीणागाथिभ्यामनोयुक्ते च शते च ददाति ॥२६॥ ऋजु पशुभिः प्रचर्य यज्ञवास्तु कृत्वोदवस्यति ॥२७॥ अथैतद्वै वाऽहः श्वोभूते वा[8] ब्रह्मौदनान्निर्वपन्ति ॥२८॥ तेषामेव रुक्मा उपस्तरणाभिघारणानि भवन्ति ॥२९॥ तानेत एव चत्वारो महर्त्विजः प्राश्नन्ति ॥३०॥ तदेभ्यश्चतुरो वा साहस्रं

---

१. H वर्तयन्ते. २. MHP °श्रावयेत्यु°. ३. MHP मा भुवो, ४. MHP °थैद्वैवाह. ५. MHP om. ६. MHP om. ७, MHP तावृगारेष्टिरनु°. ८. MHP add भूते after वा.

ददात्येकैकं वा शतपलम् ॥३१॥ अधिगच्छत्येषा वैशाखी पौणमासी ॥३२॥ तस्यां पिशङ्गाँस्त्रीन् वासन्तानालभते ॥३३॥ ग्रीष्मे सारङ्गाँस्त्रीन् ग्रैष्मान् ॥३४॥ वर्षासु पृषतस्त्रीन् वार्षिकान् ॥३५॥ शरदि पृश्नीँस्त्रीञ्छारदान् ॥३६॥ हेमन् पृश्निसक्थाँस्त्रीन् हैमन्तिकान् ॥३७॥ शिशिरेऽवलिप्ताँस्त्रीञ्छैशिरान् ॥ ३८ ॥ संवत्सरे पर्यागते संवत्सराय निवक्षसः[1] इति ॥३९॥ सन्तिष्ठतेऽश्वमेधः सन्तिष्ठतेऽश्वमेधः ॥४०॥ [२७] इति नवमोऽनुवाकः ।

[ इति अश्वमेधाख्यः प्रपाठकः समाप्तः ]

[ इत्येकादशः प्रपाठकः ]

१. MHP निवक्षः.

# [अथ द्वादशः प्रपाठकः]

## [ अप्तोर्यामः ]

द्वादशाहाय दीक्षिष्यमाणाः समवस्यन्ति[1] ॥१॥ अप्तोर्यामेण यक्ष्यमाणो भवति ॥२॥ सहस्रमयुतमष्टौ च पशून् ॥३॥ स दीक्षते ॥४॥ द्वादशोपसदः ॥५॥ प्रसिद्धेन कर्मणोपवसथाद्यन्ति ॥६॥ अग्नीषोमीयेन पशुना प्रचरति ॥७॥ पत्नीसंयाजान्ते निशाहुतीर्हुत्वा वसतीवरीः[2] परिहृत्य पयाꣳसि विशिष्योपवसन्ति ॥८॥ प्रातराज्यानि गृहीत्वा राजानमुपावहृत्य प्रातरनुवाकमुपाकरोति ॥९॥ परिहिते प्रातरनुवाकेऽपोऽच्छैति ॥१०॥ अपो व्यवनीयाहवनीये सꣳस्रावꣳ हुत्वाऽतिरात्रं कृत्वा प्रपद्यते ॥११॥ प्राजापत्यं दधिग्रहं जुहोति ॥१२॥ निग्राभ्यासु वाचयित्वोपनद्धस्यैवादाभ्यं[3] गृहीत्वा जुहोति ॥१३॥ अथोपाꣳशुसवनमादाय राजानं मिमीते ॥१४॥ अप आनीय सꣳसृप्य[4] प्राणग्रहाꣳश्च पूर्वाꣳश्च पृश्नीन् व्याचष्टे ॥१५॥ अपानग्रहाꣳश्चोत्तराꣳश्च पृश्नीन्[5] ॥१६॥ सकृदभिषुतस्या[6]ꣳशुं गृहीत्वा जुहोति ॥ १७ ॥ एवमेनौ गृह्णाति ॥१८॥ यत्र गृह्णात्युपाꣳशोः कर्म कृत्वोपाꣳशु जुहोति ॥१९॥ अभिषुत्य प्रसिद्धमाऽऽग्रयणाद् ॥२०॥ गृह्णात्या(-ग्रयणम्) ॥२१॥ पुरोडाशं गृह्णाति आ तिष्ठ वृत्रह(-न् रथ-)म् इति ॥२२॥ त्रीन् पृष्ठ्यान्[7] गृह्णाति ॥२३॥ उक्थ्यं गृह्णाति ॥२४॥ ध्रुवं गृह्णाति ॥२५॥ शुक्रमतिपवयति ॥२६॥ यत्रैवादः संप्रेष्यति अग्नीदग्नीन्वि हर=वर्तय इति तदाहुः ॥२७॥ प्रतिप्रस्थाता पशुमुपावर्तयति ॥२८॥ राजानमुपस्थाप्य यथादेवतं यज्ञमुपचर्याश्विनं गृहीत्वा ग्रहावका(-शैरुपतिष्ठते नाना प्र-)सवा नाना स्वरूनेकं वा तदुभयम् ॥२९॥ अथ इषे त्वा इति षोडश बर्हीꣳष्यादायोपाकरणीये हुत्वा पशूनुपाकरोत्याग्नेय्ं छागꣳ सवनीयपशुमैन्द्राग्नमुक्थपशुमैन्द्रꣳ षोडशिने

---

१. MHP give the sign of abridged text (=, after समवस्यन्ति.
२. MHP °वरीं. ३. MHP °स्यैवोदाभ्यं (°Hम्यां). ४. MH सम्शृप्य, P सश्रप्य. ५. MHP add च. ६. MP °मिष्टुत°. ७. MHP पृष्ठ्या.

सारस्वतीं मेषीमतिरात्रियै ॥३०॥ षट् पृष्ठ्याना(-गृह्णाति....) ॥३१॥ वपाभिः[1] प्रचर्य संप्रसर्पन्ति ॥३२॥ तायतेऽप्तोर्यामोऽतिरात्रः ॥३३॥ [१]

तायतेऽप्तोर्यामोऽतिरात्रः[2] ॥१॥ प्रसिध्यति प्रातःसवनम् ॥२॥ [3]प्रसिध्यति माध्यन्दिनꣳ सवनम्[3] ॥३॥ प्रसिध्यति तृतीयसवनम् ॥३॥ आ(-ग्रयणं गृहीत्वा स्तोत्रमुपाक-)रोति ॥४॥ (प्रसिध्यति प्रातःसवनम्[4]) ॥५॥ प्रसिध्यति माध्यन्दिनꣳ सवनम् ॥६॥ प्रसिध्यति तृतीयसवनम् ॥७॥ स्वे धामन् पशुभिः प्रचरति ॥८॥ ध्रुवान्ताऽग्निष्टोमः सान्तिष्ठते ॥९॥ उक्थानि प्रणयन्ति[5] तेषां पुरस्तात् ॥१०॥ अतो[6] स्रुवाहुतीर्जुहोति इन्द्रावरुणयोरहम्, अस्मे इन्द्राबृहस्पती, सं वां[7] कर्मणा इतीन्द्रावरुणाभ्यामिन्द्रा(-बृहस्पतिभ्या-)मिन्द्राविष्णुभ्यामिति ॥११॥ उक्थानि प्रणयन्ति ॥१२॥ प्रसिध्यन्त्युक्थानि ॥१३॥ षोडशिनं प्रणयिष्यन् उदु त्यम्, चित्रम् इति हुत्वा प्रपद्य षोडशिनमभिमृशति यस्मान्न जातः परो अन्यो अस्ति = हरिवर्पसं गिरः इति ॥१४॥ सुवर्णꣳ हिरण्यं प्रस्तरमुप संगृह्य स्तोत्रेण द्रवति ॥१५॥ स्तोत्रमुपाकरोति ॥१६॥ समयाध्युषिते[8] सूर्ये षोडशिनꣳ स्तोत्रमुपाकरोति ॥१७॥ पश्चात् प्राङरुणपिशङ्गोऽश्वस्तिष्ठति ॥१८॥ संप्रदाय हिरण्यꣳ स्तुवते ॥१९॥ स्तुवानानुपास्ते[9] ॥२०॥ एषोत्तमेति ज्ञात्वा [10]पराङावर्तते(-ऽध्वर्युः)[11] पुरस्ताद्धातुः ॥२१॥ इडा देवहूः इति यावदतस्य यजुषाऽभ्याप्नोत्यभ्याह्वयत एनम् ॥२२॥ हरिवता प्रत्याह्वयतेऽध्वर्युः ॥२३॥ प्रत्यागृणाति[12] ॥२४॥ एतदुक्थम् उक्थं वाचीन्द्राय इत्युक्त्वा द्रवति ॥२५॥ आदत्त एतं ग्रहम् ॥२६॥ अनूद्यच्छन्ते चमसान् ॥२७॥ ओ श्रावय इत्याह ॥२८॥ उक्थशा यज सोमानाम् इति ॥२९॥ वषट्कृते जुहोति ॥३०॥ इन्द्राधिपते इति स जुहोति । °अधिपतिस्त्वं देवानामस्यधिपतिर्मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुरु स्वाहा इति ॥३१॥ वषट्कृते जुहोति ॥३२॥ अनुवषट्कृते जुह्वति ॥३३॥ आहरन्ति ॥३४॥ आयन्ति ॥३५॥ भक्षयन्ति तस्य भक्ष इन्द्रश्च सम्रा = सोमस्य तृप्यतु इति ॥३६॥ सर्वभक्षा अग्नीत्प्रसूता

---

१. MH वपामि. २. MHP °रात्रं. ३–३. MHP twice. ४. MHP om. ५. MH प्रजणयन्ति. ६. MP एतो. ७. MHP वा. ८. MHP °याविषिते. ९. MHP स्तुवानापास्त. १०. P प्राङ्. ११. MHP om. १२. MH गृणेत्ये°, P गृणत्ये°.

मार्जयन्ते ।।३७।। ब्रह्मन् सर्पं इति समानम् ।।३८।। चतुरो धिष्णियानुपस्थाय ।।३९।। [२]

चतुरो धिष्णियानुपस्थाय रात्रियै संप्रसर्पन्ति ।।१।। इन्द्रं वो विश्वतस्परि, इन्द्रं नरः इति स जुहोति ।।२।। अथ संप्रेष्यति गोप्तुर्यज्ञं गोपाय प्रतिप्रस्थातः पृषदाज्यमाज्यं गुदं पिष्कलिं राजानं गोपाया(-ग्नी-)दाश्विनो[1] द्विकपालः श्रृत आसन्नो(ऽस्त्वृ-)त्विजः ससाहिता भवत, रात्रिं प्रणेष्यामि होतुश्चमसमनून्नयध्वमुन्नेतः[2] सोमं प्रभावय इति ।।३।। उन्नीतꣳ होतृचमसमभिमन्त्रयते इन्द्राय त्वा इति ।।४।। प्रस्तरमादाय स्तोत्रेण द्रवति ।।५।। वायुर्हिङ्कर्ता इत्युपाकरणं जपति । °मयि प्राणा उपावर्तध्वं, यजमानाभिसर्प इति ।।६।। स्तुवानानुपास्ते ।।७।। एषोत्तमेति ज्ञात्वा पराङावर्तते(-ऽध्वर्युः)[3] पुरस्ताद्धोतुः ।।८।। इडा देवहूः इति यावदेतस्य यजुषोऽभ्याप्नोत्यभ्याह्वयत एनम् ।।९।। (प्रत्याह्वयतेऽध्वर्युः)[4] ।।१०।। प्रत्यागृणाति ।।११।। एतदुक्थम् उक्थं वाचीन्द्राय इत्युक्त्वा द्रवति ।।१२।। आदत्त एतꣳ होतृचमसम् ।।१३।। अनून्नयच्छन्ते चमसान् ।।१४।। ओ श्रावय इत्याह ।।१५।। उक्थशा यज सोमानाम्[5] इति ।।१६।। वषट्कृते जुह्वति ।।१७।। अनुवषट्कृते जुह्वति ।।१८।। आहरन्ति ।।१९।। आयन्ति ।।२०।। भक्षयन्ति तस्य भक्षोऽग्निहुतस्य सोम देव त इन्द्रेण स्वगाकृतस्य मधुमत उपहूतस्योपहूतो भक्षयामि इति ।।२१।। सर्वभक्षा अग्नीत्प्रसूता[6] मार्जयन्ते ।।२२।। मैत्रावरुणस्य चमसमनून्नयध्वम् इत्याहाद्रवन्नध्वर्युः । उन्नेतः सोमं प्रभावय इति ।।२३।। उन्नीतं मैत्रावरुणचमसमभिमन्त्रयते इन्द्राय त्वा इति ।।२४।। प्रस्तरमादाय स्तोत्रेण[7]= पुरस्तान्मैत्रावरुणस्य ।।२५।। इडा दे[8] = आदत्त एतं मैत्रावरुणचमसम् ।।२६।। अनून्नयच्छन्ते [9]चमसान् ।।२७।। ओ[9] श्रावये[10] = प्रसूता मार्जयन्ते ।।२८।। प्रतिप्रस्थातरेते[11] धुरी इत्याहा(-द्रवन्नध्वर्युः)[12] ।।२९।। ब्राह्मणाच्छꣳसिनश्चमसमनून्नयध्वमित्याहाद्रवन् प्रतिप्रस्थाता । °उन्नेतः सोमं प्रभावय

१. MHP °पायादाश्विनो. २. MHP समरून्नय. ३. MHP om. ४. MHP om. Cf supra XII. 2.23. ५. MHP सोमानम्. ६. MHP add इति after प्रसूता. ७. MHP abr; see above S.5–8. ८. MHP abr; see above S.9–13. ९–९. MHP चमसो ऽ श्रा°. १०. MHP abr; see above S.15–22. .११ MHP °प्रस्थाते. १२. MHP om; Cf infra XII.4.34.

इति ॥३०॥ सर्वा ऐन्द्रियो धुरः प्रतिप्रस्थातुरुत्तरतः[१] ॥३१॥ एवं द्वितीयः पर्यायः ॥३२॥ एवं तृतीयः ॥३३॥ मध्यमेन[२] पर्याग्रेण वल्गन्त इव चरन्ति ॥३४॥ ब्रह्मन् सर्पं इति समानम् ॥३५॥ चतुरो धिष्णियानुपस्थाय ॥३६॥ [३]

चतुरो धिष्णियानुपस्थाय राथन्तराय सन्धये संप्रसर्पन्ति ॥१॥ अथ संप्रेष्यति होतुश्चमसमनून्नयध्वमुन्नेतः सोमं प्रभावय इति ॥२॥ उन्नीतꣳ होतृचमसमभिमन्त्रयते अश्विभ्यां त्वा इति ॥३॥ स पुरोडाशꣳ होतृचमसमभिमृश्य प्रस्तरमादाय स्तो[३]=पुरस्ताद्धोतुः ॥४॥ इडा[४]=एनम् ॥५॥ (प्रत्याह्वयतेऽध्वर्युः) ॥६॥ प्रत्यागृणाति ॥७॥ परः सहस्रमाश्विनꣳ होता शꣳसति ॥८॥ एतदुक्थम्[५] उक्थं वाचीन्द्राय[६] इत्युक्त्वा द्रवति ॥९॥ अश्विभ्यां तिरोअह्नियानाꣳ सोमानामनुब्रूहि (इति)[७] ॥१०॥ आदत्त एतं पुरोडाशꣳ होतृचमसम् ॥११॥ अनूद्यच्छन्ते चमसान् ॥१२॥ ओ श्रावय इत्याह ॥१३॥उक्थशा यज सोमानाम्[८] इति ॥१४॥ वषट्कृते जुहोति ॥१५॥ अनुवषट्कृते जुह्वति ॥१६॥ आहरन्ति ॥१७॥ आयन्ति ॥१८॥ भक्षयन्ति तस्य भक्षोऽग्निहुतस्य सोम देव ते मतिविदोऽश्विभ्याꣳ स्वगाकृतस्य मधु[९]=क्षा अग्नोत्प्रसूता मार्जयन्ते ॥१९॥ अप्तोर्यामं प्रणेष्यन् प्रजापते; स वेद इति जुहोति ॥२०॥ अथ संप्रेष्यति होतुश्चमसमनून्नयध्वमुन्नेतः सोमं प्रभावय इति ॥२१॥ उन्नीतꣳ होतृचमसमभिमन्त्रयते अग्नये त्वा इति ॥२२॥ प्रस्तरमादाय स्तोत्रेण प्रतिस्तोत्रमुपाकरोति ॥२३॥ स्तुवते[१०] ॥२४॥ आहरन्ति ॥२५॥ आयन्ति ॥२६॥ भक्षयन्ति तस्य भक्षोऽग्निहुतस्य सोम देव तेऽग्निना स्वगाकृतस्य मधु[११]=मार्जयन्ते ॥२७॥ मैत्रावरुणस्य चमसमनून्नयध्वम् इत्याहाध्वर्युः। °उन्नेतः सोमं प्रभावय इति ॥२८॥ उन्नीतं[१२] मैत्रावरुणचमसमभिमन्त्रयते इन्द्राय त्वा इति ॥२९॥ प्रस्तरमादाय स्तोत्रेण द्रवति ॥३०॥ स्तुवते ॥३१॥ आहरन्ति ॥३२॥ आयन्ति ॥३३॥ भक्षयन्ति

---

१. MHP °प्रस्थातरु°. २. MHP मन्त्यमेनं. ३. MHP abr; see XII. 3.5–8. ४. MHP abr; see XII.3.9. ५. MHP एतमुक्थम्. ६. HP add त्वा after इन्द्राय. ७. MHP om. ८. MHP सोमानम्. ९. MHP abr; see XII. 3.21–22. १०. MHP स्तुत. ११. MHP abr; see XII.3.21–22. १२. MH उन्निनीत, P उन्नीत.

तस्य मक्षोऽग्निहुतस्य सोम देव त इन्द्रेण स्वगाकृतस्य मधु'=माजंयन्ते ॥३४॥ प्रतिप्रस्थातरेते घुरौ इत्याहाद्रवन्नध्वर्यु': ॥३५॥ प्रतिप्रस्थातोत्तराभ्यां प्रचरति ॥३६॥ उभाभ्यामेव वैश्वदेव्या च वैष्णव्या च ॥३७॥ अथ संप्रेष्यति ब्रह्मन् सर्प इति ॥३८॥ निसर्पणयजुरुक्त्वा पुनः संप्रेष्यति अग्नीदौपयजानङ्गारानाहर इति ॥ ३९ ॥ अष्टाभिगु'दैरुपयष्टोपयजति ॥४०॥ प्रसिद्धेनाग्निष्टोमकर्मणाऽप्तोर्मामः सन्तिष्ठते ॥४१॥ [४]
[इति प्रथमोऽनुवाकः]

## [ पवित्रेष्टिः ]

अथ पवित्रं दशहविः स निर्वपति अग्नये पवमानाय पुरोडाशमष्टाकपालम्, अग्नये पावकाय पुरोडाशमष्टाकपालम्, अग्नये शुचये पुरोडाशमष्टाकपालम् अग्नये व्रतपतये पुरोडाशमष्टाकपालं वैश्वानरं द्वादशकपालमिति ॥१॥ आज्यानि गृह्णानो ध्रुवायां गृह्णीते ॥२॥ श्रपयित्वा सादयति ॥३॥ पञ्चदश सामिधेन्यः ॥४॥ सामिधेनीरनूच्याह्वयति[1] देवताः अग्निमग्न आ वह, सोममा वह इत्याज्यभागौ; अग्निं पवमानमा वह, सरस्वतीं प्रियमा वह, अग्निं पावकमा वह, वायुं नियुत्वन्तमा वह, अग्निꣳ शुचिमा वह, देवꣳ सवितारमा वह, अग्निं व्रतपतिमा वह, दधिक्रावाणमा वह, वैश्वानरमा वह, विष्णुमा वह इति ॥५॥ प्रयाजानिष्ट्वानत्याक्रम्य[3] ध्रुवामभिघारयति॥६॥ अथ पुरोडाशम् ॥७॥ अथ ध्रुवाम् ॥८॥ अथ पुरोडाशम् ॥९॥ अथ ध्रुवाम् ॥१०॥ अथ पुरोडाशम् ॥११॥ अथ ध्रुवाम् ॥१२॥ अथ पुरोडाशम् ॥१३॥ अथ ध्रुवाम् ॥१४॥ उपभृतमन्ततः ॥१५॥ आज्यभागौ यजति ॥१६॥ वार्त्रघ्नावाज्यभागौ ॥१७॥ पुरोडाशस्यावद्यन्नाह अग्नये पवमानायानुब्रूहि इति ॥१८॥ अग्न आयूꣳषि पवसे इत्यनूच्य अग्ने पवस्व इति यजति ॥१९॥ आज्यस्य गृह्णान आह सरस्वत्यै प्रियाया अनुब्रूहि इति ॥२०॥ ऋतेन प्रियाप्रियासु इत्यनूच्य इमां जुह्वाना युष्मदा नमोभिः इति यजति ॥२१॥ पुरोडाशस्यैवावद्यन्नाह अग्नये पावकायानुब्रूहि इति ॥२२॥ अग्ने पावक रोचिषा इत्यनूच्य स नः पावक दीदिवः इति यजति ॥२३॥ आज्यस्यैव गृह्णान आह वायवे नियुत्वतेऽनुब्रूहि इति ॥२४॥ वायो शतꣳ हरीणाम् इत्यनूच्य प्रयाभिर्यासि दाश्वाꣳसम् इति यजति ॥२५॥ पुरोडाशस्यैवावद्यन्नाह अग्नये शुचयेऽनुब्रूहि इति ॥२६॥ अग्निः

---

१. MHP abr; see XII 3.21-22. २. MHP °वह्वयति. ३. P °ष्ट्वात्या°.

शुचिव्रततमः[१] इत्यनूच्य उदग्ने शुचयस्तव इति यजति ॥२७॥ आज्यस्यैव गृह्णान आह देवा(-य)[२] सवित्रेऽनुब्रूहि इति ॥२८॥ अद्या नो देव सवितर् इत्यनूच्य विश्वानि देव सवितर् इति यजति ॥२९॥ पुरोडाशस्यैवावद्यन्नाह अग्नये व्रतपतयेऽनुब्रूहि इति ॥३०॥ त्वमग्ने व्रतपा असि इत्यनूच्य यद्वो वयं प्र मिनाम व्रतानि इति यजति ॥३१॥ आज्यस्यैव गृह्णान आह दधिक्राव्णेऽनुब्रूहि इति ॥३२॥ दधिक्राव्णोऽकारिषम् इत्यनूच्य आ दधिक्राः इति यजति ॥३३॥ पुरोडाशस्यैवावद्यन्नाह वैश्वानरायानुब्रूहि इति ॥३४॥ वैश्वानराय पृथुपाजसे इत्यन्वाह । °विपो रत्ना विधन्त धरुणेषु गानवे अग्निर्हि देवाँ अमृतो दुवस्यत्यथा धर्माणि सनता[३] न दूदुषत् इति ॥३५॥ त्वमग्ने इति यजति । °शोचिषा[४] शोशुचान आ रोदसी अपृणा जायमानः । त्वं देवाँ अभिशस्तेरमुञ्चो[५] वैश्वानर[६] जातवेदो (महित्वा इति ॥३६॥ आ-)ज्यस्यैव (गृह्णान आह विष्णवेऽनुब्रूहि इति) ॥३७॥ इदं विष्णुर्वि चक्रमे इत्यनूच्य तदस्य प्रियमभि पाथो अश्याम् इति यजति ॥३८॥ त्रिष्टुभौ संयाज्ये यदीष्ट्यैव[७] यजतेऽनुष्टुभौ यदि सोमेन यक्ष्यमाणः ॥३९॥ सैषा पवित्रं दशहविः ॥४०॥ अङ्गान्येव पुरोडाशैः पुनीते प्राणानाज्यैः ॥४१॥ स यथा ह वा इदं कुमार मे प्लेङ्क्षे (········॥४२॥ देवा अपूतम-)मेध्यं न प्रतिगृह्णन्ति नास्य हविरश्नन्ति ॥४३॥ अथ यदेतयेष्ट्वा सोमेन यजते पूतमेवैनं मेध्यं देवाः प्रतिगृह्णन्त्यश्नन्त्यस्य हविः ॥४४॥ अथो यदि मिश्रमिव चरित्वा[८] मन्येताथैतेन[९] वा यजते ॥४५॥ वैश्वनराय क्षेत्रजिते[१०] पुरोडाशं द्वादशकपालं त्रिभिः (··········)तिश्च सादयति ॥ ४६ ॥ पञ्चदश सामिधेन्यः ॥४७॥ वार्त्रघ्नावाज्यभागौ ॥४८॥ नहि [११]स्पशमविदन्नन्यमस्मान्येषामिमे[११] पूर्वे अर्मास असन्न् इति हविषः[१२] ॥ ४९ ॥ त्रिष्टुभौ संयाज्ये ॥५०॥ प्रसिद्धऌ सन्तिष्ठते ॥५१॥ एतया ह सत्यश्रवसायेष्ट्वा ॥५२॥ [५]

[ इति द्वितीयोनुवाकः ]

---

१. M तमे. २. MHP देवा. ३. MHP सहता. ४. MH शोशु, H oms. ५. M रमन्त्वो. ६. MHP °नरं. ७. MHP यदीष्यैव. ८. MHP परित्वा; Cf Rudradatta on ĀpŚS XIII. 24.16. ९. MHP °तार्थैनर्वा. १०. MHP क्षत्र°. ११–११. MHP °विदन्नन्यमस्मान्येषामिमि. १२. MHP हविषं.

# [ अथ त्रयोदशः प्रपाठकः ]

## [ अथ प्रवर्ग्यः ]

( अथ प्रवर्ग्येण यक्ष्यमाणः संभारान् संभरते ॥ १ ॥ ए-)ते पश्चोत्तरेणाहवनीयꣳ सन्ना भवन्ति—करणीया[1] च मृद् वराहविहतं[2] च वल्मीकवपा चोतीकाश्चाजक्षीरं च ॥ २ ॥ एते पश्चोत्तरवेद्यै कालेऽनुपूर्वमायत्ता भवन्ति, करणीया मृदवमाऽजक्षीरं परमम् ॥ ३ ॥ कृष्णाजिनस्य च लोमान्यजक्षीरेण (मꣳसृ-)जति ॥४॥ एते पश्चोत्तरेण शालां परिश्रिते सिकतोपोप्ते[3] सन्ना भवन्ति ॥५॥ संभरणस्य मीमाꣳसा—दीक्षितस्य संभरेददीक्षितस्येति ॥ ६ ॥ स यद्यदीक्षितस्य संभरेद् गार्हपत्य आज्यं विलाप्योत्पूय स्रुवं च स्रुचश्च संमृज्य प्राङेत्याहवनीयस्यार्धं चतुर्गृहीतं गृह्णीते ॥७॥ तज्जुहोति युञ्जते मन उत युञ्जते धियः (इति) वैकङ्कतीमादायाहवनीये । °विप्रा=ष्टुतिः स्वाहा इति ॥८॥ दीक्षितस्य त्वाव ह[4] तपस्यमानस्य संभरेद् इतीदम् ॥९॥ युञ्जते मन उत युञ्जते धियः इत्येव वैकङ्कतीꣳ समिधमादधाति, न जुहोति ॥१०॥ यजुरेव वदेदित्यपरम् ॥११॥ देवस्य त्वा सवितुः प्रसवे इति वैकङ्कतीमभ्रिमादत्ते । 'अश्विनोर्बा=नारिरस्यध्वरकृद् देवेभ्यः इति ॥१२॥ उत्तिष्ठ ब्रह्मणस्पते इति योक्त्रं च कृष्णाजिनञ्चादायोत्तिष्ठति । °देवयन्तस्त्वे=सचा इति ॥१३॥ प्रैतु ब्रह्मणस्पतिः[5] इत्युत्तरवेद्यं काले संभारानभ्येतः । [6]प्रा देव्येतु सूनृता[6] अच्छा=यजन्तु[7] नः इति ॥१४॥ उत्तरतः सभाराणां प्राचीनग्रीवमुत्तरलोम कृष्णाजिनमास्तृणाति ॥१५॥ देवी द्यावापृथिवी इति ॥१६॥ [१]

देवी द्यावापृथिवी अनु मेऽमꣳसाथाम्[8] इति करणीयायै[9] मृदाऽभ्रियोपहृत्य कृष्णाजिनस्यार्धꣳ हरन्ति । °ऋध्यास=शीर्ष्णे इति त्रिः ॥१॥ इयत्यग्र आसीः इति [10]°वराहविहतस्य । 'ऋध्यासमद्य[10]=(शीर्ष्णे इति)[11] त्रिः

---

१. MHP करुणी°. २. MHP विहितं. ३. MH सिकतोपोऽप्ते [ H °पाप्ते ], P सिकते पोऽप्ते. ४. MHP त्वावहत. ५. MHP °स्पत. ६–६. MP देव्यमतुस्त्वनृत, H देव्यमृतुस्त्वनृत. ७. Cf TĀ 4.2 : नयन्तु. ८. MHP मेमंसक्थाम् [ H °सक्थम् ] ९. MH करुणीयायेमृ°. १०–१०. MHP °विहतस्याध्यायमद्य (H °विहित°). ११. MHP om.

॥२॥ देवीर्वम्री: इति वल्मीकवपाया: । °अस्य भूतस्य प्रथमजा ऋता = शीर्ष्णे इति त्रि: ॥३॥ इन्द्रस्यौजोऽसि[1] इत्यूतीकानाम् । °ऋध्यासमद्य = शीर्ष्णे इति त्रि: ॥४॥ अग्निजा असि प्रजापते रेत: इत्यजक्षीरं त्रिर्विगृह्णाति । °ऋध्यासमद्य = शीर्ष्णे इति ॥५॥ सर्वमजक्षीरं करणीयायां[2] मृद्यानीय कृष्णाजिनस्यान्तान्समुत्पार्य योक्त्रेणोपनह्य उत्तिष्ठ ब्रह्मणस्पते इति संभारानादायोत्तिष्ठति । °देवयन्त = सचा इति ॥६॥ ऐतु ब्रह्मणस्पति: इति पर्णकषायवत: संभारानस्येत: । °आ देव्येतु[3] = यज्ञमा नयन्तु[4] न: इति ॥७॥ बहवो हरन्तीति ब्राह्मणम्[5] ॥८॥ प्रपाद्यैतत्परिश्रितं मधु त्वा मधुला करोतु इति पर्णकषायवद्भि: संभारै: संयौति ॥९॥ प्रम्णाय मृदं मखस्य[6] शिरोऽसि इति पिण्डं करोति ॥१०॥ यज्ञस्य पदे स्थ: इत्यङ्गुष्ठाभ्यामवस्कभ्नाति ॥११॥ एवमेव त्रीन् पिण्डान् कृत्वा गायत्रोऽसि इति प्रथमं पिण्डं प्रयच्छति, यो महावीरं करोति तस्मै । त्रैष्टुभोऽसि इति द्वितीयम्; जागतोऽसि इति तृतीयम् ॥१२॥ गायत्रेण (त्वा)[7] छन्दसा करोमि इति (बुध्नं) करोति । °त्रैष्टु = करोमि, जाग = करोमि इति ॥१३॥ तं प्रादेशमात्रं सुष्ठुं [8]त्र्युद्धिपरिमाणं महावीरं[8] करोति ॥१४॥ मखस्य रास्नाऽसि इत्यस्य काले रास्नां[9] पर्यस्यति ॥१५॥ अदितिस्ते विलं गृह्णातु इति तत ऊर्ध्वं बिलं करोति । °पाङ्क्तेन छन्दसा इति ॥१६॥ वेणुकाण्डेन वाऽङ्गुष्ठेन वा भागं[10] करोति सूर्यस्य हरसा श्राय इति ॥१७॥ मखोऽसि मखाय त्वा इति महावीरं कृत्वा निदधाति ॥१८॥ तूष्णीमितरं महावीरं करोति ॥१९॥ अपाष्ठ्यौ करोति ॥२०॥ रौहिणकपाले करोति ॥२१॥ आज्यस्थालीं करोति ॥२२॥ कुलालकृता वा स्यात् ॥२३॥ उपवातयन्ति[11] ॥२४॥ धावनाभिर्धावन्ति[12] ॥२५॥ [13]क्लृप्तिकैर्वेणुकाण्डै: श्लक्ष्णैरश्मभिर्यदोपवातान् मन्यतेऽथ धूपयिष्यन् संभारान् संभरते ॥२६॥ [२]

अश्वशकानि गोमयानि बृम्बाणि परुतृणानि दारूणि गोश्च क्षीरमजायै च ॥१॥ उत्तरेणं शालां चतुःस्रक्ति कूपं खनन्ति ॥२॥ तत्परिश्रितेऽन्यतोऽग्निमाहृत्य त्रीनश्वशकानादीप्य वृष्णो अश्वस्य निष्पदसि इत्येकैकं महावीरे

---

१. MH °स्यौजसि. २. HP करुणीयामृ°. ३. MHP देव्यतु. ४. Cf Rv I.140 3 : यज्ञं नयन्तु. ५. MHP ब्रह्माणं. ६. MH मुखस्य. ७. MHP om. ८–८. MHP त्यृद्धि परिभ्रवमुहावीरं ९. MHP रास्नं. १०. MHP पानं. ११. M °वापयन्ति. १२. P धावनादिभि°. १३. MHP क्लिृतकै [H क्लि°).

प्रत्यस्यति। °वरुणस्त्वा = [१]धर्मणा इति[१] ॥३॥ अदितिस्त्वा इति पुरेव[२] खातं कूपमभ्रिया खनति। °देवी विश्वदेव्यावती पृथिव्याः सधस्थेऽङ्गिरस्वत् खनत्ववट इति ॥४॥ श्रपणैः[३] कूपमवस्तीर्य परिग्रहणाभ्यां[४] महावीरं परिगृह्यावदधाति अर्चिषे त्वा = तपसे त्वा इति ॥५॥ तूष्णीमितराण्यवधाय श्रपणैरभिच्छाद्य प्रज्वलयोपतिष्ठते अमीमं[५] महिना दिवं = ध्रवस्तमम् इति ॥६॥ नाभिप्राण्यान्नाभिच्छायां कुर्यात् ॥७॥ अमीमं[६] महिना दिवम् इत्येतयैव मैत्रियोपचारमोक्षते यदा धूपितान् मन्यते ॥८॥ अथ सिद्ध्यै त्वा इति वैकङ्कतीमभ्रिमादत्ते ॥९॥ देवस्त्वा सवितोद्वपतु इत्यभ्रियाऽङ्गारानुद्वपति। °सुपाणिः स्वङ्गुरिः। सुबाहुरुत [७]शक्त्या इति ॥१०॥ अपद्यमानः[७] पृथिव्याम् इत्येनमाह्वा(-रय ति)। °आशा दिश (आ)[८] पृ(·ण इति ॥११॥ उत्तिष्ठ बृहन् भव इ-)त्युद्धरति। °ऊर्ध्वस्तिष्ठ ध्रुवस्त्वम् इति॥१२॥ परिग्रहणाभ्यां महावीरं परिगृह्य निर्धूय धूपनमन्वीक्षते सूर्यस्य त्वा = त्यै त्वा इति ॥१३॥ क्षेमाय त्वा इति दक्षिणतः कूपबिले सादयति ॥१४॥ तूष्णीमितराण्युद्धृत्य कूपबिल एव सादयति ॥१५॥ अथैनं प्रसलैरङ्गारैः पर्यूहति इदम(-हममुमामुष्यायणं ब्रह्मवर्चसेन) पर्यूहामीदमहममुमामुष्यायणं[९] प्रजया पशुभिः पर्यूहामीदमहममुमामुष्यायण७ राष्ट्रेण विशा पर्यूहामि इति ॥१६॥ तूष्णीमितराणि पर्यूहति[१०] ॥१७॥ अथास्मादपसलैरङ्गारानपोहति इदमहममुमामुष्यायण७ राष्ट्राद्विशः[११]) प्रजायाः पशुभ्यस्तेजसो ब्रह्मवर्चसादन्तरेमि इति ॥ १८ ॥ कूर्चमितरेभ्यः ॥१९॥ ( अथ परिग्रहणाभ्यां ) महावीरं[१२] परिगृह्य सते वा शरावे वाऽवधायाजक्षीरेणाच्छृणत्ति गायत्रेण त्वा = छृन्धि[१३] हविः इति ॥२०॥ तूष्णीं गोक्षीरेण[१४] विष्यन्दयति ॥२१॥ तूष्णीमितराण्यजक्षीरेणाच्छृद्य[१५] गोक्षीरेणैव विष्यन्दयति ॥२२॥ तानि शीतानि कृत्वोपयमन्या७ समवधाय कृष्णाजिनस्यान्तान् समुच्चार्य योक्त्रेणोपनह्यादायोपतिष्ठति ॥२३॥ पूर्वया द्वारा शालां प्रपद्योत्तरतः पुरस्तादाहवनी-

---

१–१. MHP धर्मेणेति. २. MHP पुरेव. ३. MH श्रवणैः ४. P ग्रहाभ्यां. ५. MHP om इमं. ६. MP अदिमं, H इमं. ७–७. M शक्येत्येवद्य°, HP शक्त्येत्येवद्य°. ८. MHP om. ९. M °मीदं मामहममु°. १०. MHP पयूंहद. ११. MHP °द्विश्व°. १२. MHP मनावीरं. १३. MH शृन्धि, P शुन्धि. १४. MHP add ह after °क्षीरेण. १५. MP क्षीरेणो°.

यस्यान्विटमसकाशे स्त्रीणाꣳ सादयति देव पुरश्चर सघ्यासं त्वा इति ॥२४॥
[३] [ इति प्रथमोऽनुवाकः ]

प्रवर्ग्येण प्रचरिष्यन् संभारान् संभरते ॥१॥ द्वौ महावीरौ द्वे अपाष्ठ्यौ[1] द्वे रौहिणकपाले द्वौ परिघर्म्यौ रजतं च सुवर्णं च द्वावाखरावाज्यस्थाली[2] च प्रतिपावर्यश्च[3] सिकता इत्येते द्वादश पार्थिवाः ॥२॥ मौञ्जौ वेदौ मुञ्जप्रलवा[4] मौञ्ज्यभिधानो मौञ्जे [5]संदाननियोजने इत्येते षडौषधाः ॥३॥ पञ्च धृष्टिधवित्राणि त्रयः शफोपयामा द्वौ परिधर्म्यशङ्कू द्वे रौहिणहवने[6] स्रुक् च वैकङ्कती प्रचरणी स्रुवश्च वैकङ्कतः प्रचरणस्त्रयोदश वैकङ्कताः परिधयो द्वादश पर्यवचयनानि समित्सप्तमाः शकलास्त्रयः कार्ष्मर्यमयाः परिधय औदुम्बरो मेथी छागायै शङ्कुरित्येता उ वानस्पत्याः ॥४॥ यज्ञायुधानि सꣳसाद्यापः प्रणीय प्रायणीयं निर्वपति ॥५॥ प्रायणीयेन प्रचर्य राजानं क्रीणाति ॥६॥ राजानं क्रीत्वोदोह्यातिथ्यमस्मै निर्वपति ॥७॥ आतिथ्येन प्रचर्य संप्रेष्यति अग्नीद्रौहिणावधिश्रय, प्रतिप्रस्थातः प्रवर्ग्यꣳ सꣳसादय इति ।८॥ एतत्कुर्वन्ति ॥९॥ अग्नीद्रौहिणावधिश्रयति ॥१०॥ प्रतिप्रस्थाता प्रवर्ग्यꣳ सꣳसादयति ॥११॥ उत्तरेण गार्हपत्यꣳ सिकता निवपति ॥१२॥ तमाखरं व्यूहति ॥१३॥ उत्तरेणाहवनीयꣳ सिकता निवपति ॥१४॥ तमाखरमेव व्यूहति ॥१५॥ उत्तरतः पुरस्तादाहवनीयस्यान्विटं प्रतिपावरीः सिकता निवपति ॥१६॥ तमाखरमेव व्यूहति ॥१७॥ उपयमन्या महावीरमाहृत्यापरस्याखरस्योपरꣳ सादयति ॥१८॥ परिग्रहणाभ्यां[7] महावीरं परिगृह्यापरेणाखरꣳ सादयति ॥ १९ ॥ मौञ्जमस्मिन् वेदं विच्छादयति ॥२०॥ वैकङ्कत्यां प्रचरण्यां पवित्रवतीः[8] प्रोक्षणीः कुरुते ॥२१॥ ता अत्रैवापरेणाखरꣳ सादयति ॥२२॥ मौञ्जमस्यां वेदं विच्छादयति ॥२३॥ अग्नीद्रौहिणावुपस्तीर्णाभिघारितावुद्वासयति ॥२४॥ तौ पुरस्तात्प्रत्यञ्चावाखरस्योपसादयति ॥२५॥ अव्यतिहारं दक्षिणमुत्तरं करोति ॥२६॥ आहरन्ति सन्दाननियोजने ॥२७॥ ते पूर्वेणाखरꣳ

---

१. HP अवाष्ट्यौ. २. P द्वावास्वरा°; Ao IV. 203:100.3 : द्वौ आघाराव°. ३. MHP °पावर्यञ्च; thus Ao IV. 203:100.3. ४. MHP मुञ्जमुञ्चप्रलपा; thus Ao IV. 203:100.4. ५. MHP सन्दानं°. ६. MHP रोहिण. ७. MHP परिग्रहणापरिग्रहणाभ्यां. ८. MP परित्रवती.

सादयन्ति ॥२८॥ आहरन्त्यपाष्ठ्यो[1] ॥२९॥ ते पूर्वेणैवाखरꣳ सादयन्ति[2] ॥३०॥ आहरन्ति पञ्च धृष्टिधवित्राणि त्रीञ्छफोपयामाꣳस्त्रीन् कार्ष्मर्यमयान् परिधीन् औदुम्बरीं मेथीं छागायै शङ्कुं मुञ्जप्रलवानिति ॥३१॥ सर्वं परिशाल्यमुपसादयन्ति ॥३२॥ एवꣳ संक्लृप्ते संप्रपद्यन्त ऋत्विजः ॥३३॥ संवृण्वन्ति द्वारः मित्रो[3] जनान् यातयति प्रजानन्, प्र स मित्र[4] मर्तो[5] अस्तु प्रयस्वान् इति ॥३४॥ अभिप्रपद्योपतिष्ठन्ते आभिर्गीर्भिः = अध ते स्याम इति ॥३५॥ उपविशन्ते ॥३६॥ दक्षिणतो ब्रह्मा च यजमानश्चोपविशतः, पश्चात् प्रागावृत्तो होता, दक्षिणत उदगावृत्तः प्रतिप्रस्तोता ॥३७॥ अथर्त्विजोऽनुवीक्षते ॥३८॥ घर्मा जठराः ॥३९॥ [४]

घर्मा जठरा अर्काः सधस्थाः कवी मातरिश्वानौ, यशस्विनं मास्मिन् जने कुरुत चारुमन्नादम् इति परिग्रहणाभ्यां महावीरं परिगृह्य मौञ्जेन वेदेन संमार्ष्टि॥१॥ अभिजिदसि सपत्नसाहो नो धृष्टं त्वा सपत्नसाहम् इति[6] सꣳसादयति[7] ॥२॥ आखरꣳ संमार्ष्टि ॥३॥ सर्वं परिशाल्यꣳ[8] संमार्ष्टि ॥४॥ द्रुत्वा[9] प्रतिप्रस्थाता पूर्वमाखरꣳ संमार्ष्टि ॥५॥ रजतं परिघर्म्यमादायापरस्याखरस्य मध्ये परिलिखति ॥६॥ तद्रजतं परिघर्म्यमुपगूहति पृथिव्याः संपृचः पाहि; पृथिव्या अन्तर्धिरसि; पृथिवी त(-पसस्त्रायस्व इति) पुरस्तात्-(प्रातः-)[10] प्रचरणे पश्चात्सायं(-प्रचरणे)[11] ॥७॥ परिग्रहणाभ्यां[12] महावीरं परिगृह्यापरस्याखरस्य मध्ये सादयति ॥८॥ सꣳ सीदस्व महाँ असि इति सन्नमुपतिष्ठते। शोचस्व = दर्शतम् इति ॥९॥ अथ यज्ञस्य शिरः प्रतिदधति वेदानां मुखैरग्निमीडे पुरस्ताद् (देवस्य त्वा सवितुः प्रसवेऽश्वि-)नोर्बाहुभ्यां पूष्णो हस्ताभ्यां यज्ञस्य शिरः प्रतिदधामि इति ॥१०॥ अथ प्रोक्षणीभ्योऽधिमुखं विमृष्टे देवस्य त्वा = हस्ताभ्यां देवाभ्यञ्जनेनाभ्यञ्जे इति ॥११॥ मदन्तीरुपस्पृश्य प्रोक्षणीरादायोत्तिष्ठन् संप्रेष्यति ब्रह्मन् प्रचरिष्यामः (प्रवर्ग्येण, होतर्घर्ममभिष्टुह्यग्नीद्रौहिणौ पुरोडाशावधिश्रय, प्रतिप्रस्थातः प्रवर्ग्यं विहर, प्रस्तोतः

---

१. M °न्त्यवाष्ठ्यौं, P न्त्यवाष्ट्यै, २. MHP सादयति. ३. MHP मित्रा. ४. MHP twice. ५. MHP मर्तें. ६. MHP om. ७. MHP °यन्ति. ८. MHP °शाठल्यं. ९. MHP मूत्वा. १०. MHP om. ११. MHP om. १२. M परिग्रहग्रहणाभ्यां.

सामानि गाय इति ॥१२॥ .देवानां)[१] मागोऽसि तेभ्यस्त्वा; उपास्मै गायता नरः पवमानायेन्दवे ।[२]अभि देवाँ इयक्षते[२] प्र वो देवायाग्नये बर्हिष्ठमर्चास्मै[३] । गमद् देवेभिरा स नो यजिष्ठो बर्हिरा सदत्; आ त्वा रथं यथोतये सुम्नाय वर्तयामसि तुविकूर्मिमृतीषहमिन्द्र शविष्ठ सत्पते; तत्सवितुर्वृणीमहे वयं देव-)स्य भोजनम् । श्रेष्ठꣳ [४]सर्वधातमं तुरं[४] भगस्य धीमहि इत्युक्थप्रीतये[५]ऽध्वर्युर्जपति ॥१३॥ [६]यजुर्युक्तम् इति[६] प्रसवे जपति ब्रह्मा । [७]सामभिराक्तखं[७] त्वा विश्वै=सुवरोमिन्द्रवन्तः[८] प्रचरत इति ॥१४॥ अग्नये त्वा इति महावीरं प्रोक्षति ॥१५॥ वायवे त्वा ॥१६॥ [५]

वायवे त्वा यमाय त्वा मखाय त्वा सुभूताय त्वा ब्रह्मवर्चसाय त्वा प्रोक्षामि इत्याखरं प्रोक्षति ॥१॥ सर्वं परिशाल्यं[९] प्रोक्षति ॥२॥ द्रुत्वा प्रतिप्रस्थाता पूर्वमाखरं प्रोक्षति ॥३॥ यत्प्रोक्षणीनामुच्छिष्यते तदाखरे निनीय तत्प्रचरणीꣳ सादयित्वा दक्षिणमꣳसमभिनिवर्तते ॥४॥ प्रोक्षितान्येतानि लभते प्रतिप्रस्थाताऽग्नीच्च ॥५॥ समित्सप्तमाञ्छाकलान्[१०] प्रतिप्रस्थाता लभते त्रीꣳश्च कार्ष्मर्यमयान् परिधीन् रौहिणावग्नीत् ॥६॥ द्रुत्वा प्रतिप्रस्थाता कार्ष्मर्यमयान् परिधीन् परिदधाति [११]गन्धर्वा स्थ वसुविदो विश्वाभ्यो ओषधीभ्यः[१२] परिदधामि देवानां योगाय युज्यध्वम् इति ॥७॥ तेषाꣳ सन्धी अन्वग्नीद्रौहिणावुपसादयति ॥८॥ अग्नीद्[१३] हरन् दक्षिणमेवोत्तरं करोति ॥९॥ समित्सप्तमाञ्छाकलान्प्रतिप्रस्थातोत्तरत आहवनीयस्य सादयति ॥१०॥ प्रोक्षितामेवैतामौदुम्बरीं मेथीं छागायै[१४] शङ्कुमित्यादायाग्रेण गार्हपत्यमपरेणान्वाहार्यपचनं दक्षिणया द्वारोपनिर्हृत्य दक्षिणतो बहिःशालं[१५] निघ्नन्ति ॥११॥ तामपरेण छागायै शङ्कुम् ॥१२॥ यदाऽऽजानाति अभि त्यं देवꣳ सवितारम् इत्यथ महावीरमाज्येनानक्ति देवस्त्वा सविता मध्वाऽनक्तु इति ॥१३॥ मौञ्जेन वेदेन महावीरं परिगृह्य सव्ये हस्त आधत्ते[१६] देव पुरश्चर सध्यासं त्वा इति ॥१४॥ धारयन्नेव महावीरमुत्तरतोऽ-

---

१. See BaudhŚS IX.6:273.1–3. २–२. MHP स इत्वों इयक्षति. ३. P अर्चिमै. ४–४. MHP सर्वधातु. ५. MH प्रतिदोऽध्व°, P प्रतियेऽध्व°. ६–६. MHP यजुश्च क्रान्त्वेति. ७. MHP सामभिरात्वखं [H सम°]. ८. M सुवर्णमिन्द्र°. ९. MHP °शाठल्यं. १०. MHP काकलान्. ११. H °र्वास्मासु, P गन्धर्वासु. १२. MHP वोधीभ्यः [P °भ्यो]. १३. MH यत्यविति, P °यत्विति. १४. MHP छागामेय. १५. MHP बर्हिश्शालं. १६. MHP आधत्त.

ङ्गारान्निरूह्यानवानं दश प्राणाहुतीर्जुहोति प्राणाय स्वाहा व्यानाय=जसे स्वाहा इति ॥१५॥ अर्चिरसि इति मुञ्जप्र-वान् प्रतिप्रस्थाता दीपयति । °शोचिरसि=पोऽसि इति ॥१६॥ तेजोऽसि इत्येनान् विषूचीनाग्रानाखरे सादयति ॥१७॥ शुक्रोऽसि इत्युपरि तेषु महावीरम् ॥१८॥ अञ्जन्ति[1] यं= विप्राः इति महावीरमाज्येन संपूरयति । °वपावन्तं नाग्निना=न्नसादीत् इति ॥१९॥ अनाधृष्या[2] पुरस्तात् इत्येनमस्पर्शयन् सर्वतः प्रादेशेन विमिमीते । °अग्नेराधिपत्य आयुर्मे दाः इति पुरस्तात् ॥२०॥ पुत्रवती दक्षिणतः इति दक्षिणतः । °इन्द्र=जां मे दाः इति ॥२१॥ सुषदा पश्चात् इति पश्चात् । देवस्य=णं मे दाः इनि ॥२२॥ आश्रुतिरुत्तरतः इत्युत्तरतः । °मित्रा=त्रं मे दाः इति ॥२३॥ विधुतिरुपरिष्टाव इत्युपरिष्टात्[3] । °बृहस्पते=मनो मे धाः इति ॥२४॥ मनोरश्वासि इतीमामभिमृशति[4] । °भूरिपुत्रा=हिंसीः इति ॥२५॥ [६] [ इति द्वितीयोऽनुवाकः ]

धृष्टिरसि ब्रह्म यच्छ इति वैकङ्कतीं धृष्टिमादत्ते[5] ॥१॥ धृष्टिरसि क्षत्रं यच्छ इति वर्षीयसीम् ॥२॥ तां प्रतिप्रस्थात्रे प्रयच्छति ॥३॥ तपो ष्वग्ने अन्तराँ अमित्रान् इति महावीरादङ्गारानपोहतः । °तपा[6] शंस=अयासः इति ॥४॥ चितः स्थ परिचितः इति महावीरमङ्गारैः प्रसलैः पर्यूहति । °स्वाहा मरुद्भिः परिश्रयस्व; परि त्वा गिर्वणो=जुष्टये इति ॥५॥ मा असि इत्येनं वैकङ्कतैः परिधिभिः परिदधाति प्राचीनाग्रैश्चोदीचीनाग्रैश्च[7] तूष्णीमन्तरैः पर्यवचयनैः प्रतिप्रस्थाता । °प्रमा असि प्रतिमा असि विमा असि संमा अस्युन्मा असि इति ॥६॥ अन्तरिक्षस्यान्तर्धिरसि इति दक्षिणतः प्राञ्चं त्रयोदशमुद्दधाति । °अन्तरिक्षं तपसस्त्रायस्व इति ॥७॥ दिवः सम्पृचः पाहि इति सुवर्णं रुक्ममुपरिष्टाद-ध्यूहति । °दिवो अन्तर्धिरसि दिवं तपसस्त्रायस्व इति पुरस्तात् प्रातःप्रचरणे पश्चात् सायंप्रचरणे ॥८॥ अहंन् बिभर्षि इत्युपतिष्ठते । °सायकानि=त्वदस्ति; शुक्रं ते=तिरस्तु इति ॥९॥ गायत्रमसि इति ह्रसिष्ठं धवित्रमादत्ते ॥१०॥ त्रैष्टुभमसि इति वर्षीयः ॥११॥ जागतमसि इति वर्षिष्ठम्[8] ॥१२॥ निज्ञुरिव[9] भूत्वोत्तरैर्लोमभिः सर्वैः सहोपवाजयति मधु मधु मधु इति ॥१३॥ तेषा-मुत्थाय वर्षीयसी प्रतिप्रस्थात्रे प्रयच्छति ॥१४॥ तयोरन्यतरद्वर्षीयोऽग्नीधे

---

१. MHP मजन्ति. २. MHP °धृष्टया. ३. P oms उपरिष्टात्.
४. MHP इति मामभि°. ५. MH वृष्टि°. ६. MH तवा, P तावा.
७. MHP दीनाग्रै°. ८. MHP वश्चिष्ठं. ९. MHP निज्जुरिव.

॥१५॥ त्रिर्धून्वन्तः प्रसलैः परियन्ति ॥१६॥ त्रिः परीतेष्वध्वर्युर्धवित्रे आदत्ते ॥१७॥ ते पूर्वेणात्मानमपरेणाग्निं प्रतिप्रस्थात्रे प्रयच्छति ॥१८॥ तयोरन्यतरद्वर्षीयोऽ[1]ग्नीधे ॥१९॥ व्युपविशन्ते ॥२०॥ प्रश्चात्प्रागावृत्तो[2]ऽ-ध्वर्युरुपविशत्युत्तरतो दक्षिणावृत्तः प्रतिप्रस्थाता पु(-रस्तात्प्रत्यगावृत्त आग्नीध्रः ॥२१॥ प्र-)णवान्तेष्वप्रवर्तयन्तो धून्वति ॥२२॥ यदोज्ज्वलति अथ सुवर्णं परिघर्म्यमादाय मौञ्जे वेद उपगूहति ॥२३॥ यदाऽऽजानाति अप्नस्वतीमश्विना वाचमस्मे इत्यथोद्यच्छन्ति धवित्राणि ॥२४॥ यदाऽऽ-जानाति [3]अरूरुचदुषसः पृश्निरग्रियः[3] इत्यथोत्तिष्ठन्ति रुचितो[4] घर्मः इति ॥२५॥ दश पुरस्ताद्रोचसे[5] इत्यध्वर्युर्यजमानं वाचयति । दश दक्षिणा दश प्रत्यङ् दशोदङ्=घर्मो रुचीय इति प्रातःप्रचरणे; अग्निष्ट्वा वसुभिः=मयि रुक् इति सायंप्रचरणे ॥२६॥ त्रिरधुन्वन्त ॥२७॥ प्रतिपथं परियन्त्युत्सृज्य धवित्राणि ॥२८॥ यथावकाशꣳ स्थित्वोपतिष्ठन्ते ॥२९॥ [७]

अपश्यं[6] गोपा=चरन्तं स सध्रीचीः=सवित्रा । सꣳ सूर्येण=सवित्रा । सꣳ सूर्येणारोचिष्ट धर्ता=पृथिव्या धर्ता=क्षस्य धर्ता धर्ता देवो=वचसस्पते विश्वस्य तपसस्पते[7] विश्वस्य ज्योतिषस्पते विश्वस्य ब्रह्मणस्पते देवश्रू=सन्तु अनु वां द्यावा-पृथिवी मꣳसातां नमो दिवे नमः पृथिव्यै इति ॥१॥ त्वष्टीमती ते सपेय इति तिरोवाससं वेदे नेष्टा पत्नीं निह्लावयति[8] । सुरेता=षम् । मा मया रायस्पोषः इति ॥२॥ उपस्थायैव द्रुत्वा प्रतिप्रस्थाता दक्षिणꣳ रौहिणं जुहोति अहर्ज्योतिः=षाꣳ स्वाहा इति (प्रातःप्रचरणे, रात्रिर्ज्योति=षाꣳ-स्वाहा इति)[9] सायंप्रचरणे ॥३॥ यदाऽऽजानाति उपह्वये सुदुघां धेनुमेताम् इत्यथ सन्दाननियोजने आददाते अध्वर्युश्च यजमानश्च देवस्य त्वा=हस्ता-भ्यामाददेऽदित्यै रास्नासि इति ॥४॥ अदित्या उष्णीषमसि इत्यभिधानी-मपाष्ठ्यौ लभेते प्रतिप्रस्थाता चाग्नीच्च ॥५॥ अग्रेण गार्हपत्यमग्नीद् द्रव-त्यपरेण प्रतिप्रस्थाता ॥६॥ असावेहि इत्युच्चैराह्वयति यथा गौर्नाम [10]भवति इड एहि इत्युपाꣳशु[10] ॥७॥ असावेहि इत्येवोच्चैराह्वयति यथा गौर्नाम भवति, सरस्वत्येहि इत्युपाꣳशु ॥८॥ वायुरस्यैड पूषा त्वोपावसृजतु

१. MHP तयोरुसवर्षी°; Cf BaudhŚS IX.8:276.1. २.P वृत्ते. ३–३ M दुषसं. H °रुचहृष्ट सं पृ°. P °रुचदषभं पश्नि. ४. MH रुचिता. ५. MHP °द्रोचय. ६. MHP अपत्यं. ७. MHP twice तपस्वते. ८. MHP निनाव°. ९. MHP om. १०–१०. M °त्युपागं श्र, H भवती उणंहा त्युपागं श्र.

इति वत्समुपावसृजति । [1]अश्विभ्यां प्रदापय इति ॥९॥ यस्ते स्तनः इत्यभिदधाति । शशयो=धातवे कः इति ॥१०॥ उस्र घर्मं७ शि७षोस्र घर्मम् इति वत्समभिमृशति । [1]पाहि[2] घर्माय शि७ष इति ॥११॥ अश्विभ्यां[3] त्वा नियुनज्मि इति नियुनक्ति ॥१२॥ बृहस्पतिस्त्वोपसीदतु इत्युपसीदति ॥१३॥ दानवः स्थ पेरवः इति स्तनान् संमृशते । [1]विष्वग्वृतो लोहितेन इति ॥१४॥ अश्विभ्यां पिन्वस्व इत्यपाष्ठ्यां[3] पिन्वयति । [1]सरस्वत्यै पिन्वस्व पूष्णे पिन्वस्व बृहस्पतये पिन्वस्वेन्द्राय पिन्वस्व इति ॥१५॥ तूष्णीं गां पात्रे दुहन्ति ॥१६॥ तूष्णीं छागामपाष्ठ्याम् ॥१७॥ यदाऽऽजानाति उत्तिष्ठ ब्रह्मणस्पते इति, यदाऽऽजानाति अधुक्षत् पिप्युषीम् इत्यथ सन्दाननियोजने आदाय प्रपद्येते अध्वर्युश्च यजमानश्च ॥१८॥ प्रतिप्रस्थातः[4] एव पया७सि धारयन्ति ॥१९॥ प्रत्यूहति महावीरादङ्गारान् सुप्रत्यूढान् कृत्वा ॥२०॥ गायत्रोऽसि इति दक्षिण७ शफमभिमृशति, त्रैष्टुभोऽसि इत्युत्तरम्, जागतमसि इत्युपयमनम् ॥२१॥ यदाऽऽजानाति उपद्रव पयसा[5] इत्यथ पया७सि प्रपादयन्ति ॥२२॥ अग्रेण गार्हपत्यमग्नीद् द्रवत्यपरेण प्रतिप्रस्थाता ॥२३॥ सहोर्जो भागेनोप मेहि इत्याहरन्तं प्रतीक्षते । [1]इन्द्राश्विना मधुनः सारघस्य इति ॥२४॥ आनय इत्याह ॥२५॥ आनयत्यग्नीच्छागापयः ॥२६॥ [८]

तं प्राव्यं[6] यथावट्, घर्मं पात[7] वसवो यजता वट्, स्वाहा त्वा सूर्यस्य=जुहोमि इति ॥१॥ धूममुद्यन्तमुदीक्षते मधु हविरसि सूर्यस्य तपस्तप इति ॥२॥ आनय इत्याह ॥३॥ आनयति तूष्णीं गां प्रतिप्रस्थाता ॥४॥ अत्रैवोपयमन्यां पया७सि समवनयन्ति ॥५॥ द्यावापृथिवीभ्यां त्वा परिगृह्णामि इति परिग्रहणाभ्यां महावीरं परिगृह्णाति ॥६॥ अन्तरिक्षेण त्वोपयच्छामि इत्युपयमन्योपयच्छति ॥७॥ देवा(-नां त्वा पि)-तॄ(-णामनु-)मतो भर्तु(७ शकेयम् इत्येनमादायोपोत्तिष्ठति ॥८॥ यदाऽऽजानाति उ-)त्तिष्ठ ब्रह्मणस्पते इति, यदाऽऽजानाति उदु ष्य देवः सविता हिरण्यया इत्यथोद्यच्छन्ति ॥९॥ यदाऽऽजानाति प्रैतु ब्रह्मणस्पतिः इत्यथ प्राङ् प्रक्रामन्ति तेजोऽसि तेजोऽनु प्रेहि; ज्योतिरसि ज्योतिरनु प्रेहि; सुवरसि सुवरनु प्रेहि; दिविस्पृङ्=पाहि इति ॥१०॥ (समुद्राय त्वा वाताय स्वाहा इति वात-)

---

१. MHP om. २. MHP add नियुनक्ति before अश्विभ्यां.
३. MHP °वाष्ट्यां. ४. MH °प्रस्थात्रैव. ५. MHP वयसा.
६. MHP प्राप्यं. ७. MP प्रातवं° [M पा°].

नामानि जपति । सलिलाय त्वा=वाताय स्वाहा इति सप्तानवानम्[1] ॥११॥ अग्नये त्वा वसुमते स्वाहा=रुद्रवते स्वाहा; इन्द्राय त्वा मरुत्वते स्वाहा; वरुणाय=पितृमते स्वाहा इति सप्तानवानम्[2] ॥१२॥ दिवि धाः[3] इति ब्रह्मा यजमानं (वाचयति । °इमं यज्ञं यज्ञमिमं दिवि धाः=घर्मपान्गच्छ; वि-)श्वै= सुमनस्यमानं देवेभ्यो घर्मपेभ्यः; स्वाहाग्नये यज्ञियाय शं यजुर्भिः (इति)[4] ॥१३॥ विश्वा आशा=मश्विना इत्युक्त्वोपविशति ब्रह्मा ॥१४॥ अश्विना घर्मं पातम् इत्यध्वर्युर्यजमानं वाचयति । °हार्दिवान=मꣳसाताम् । नमो दिवे नमः पृथि°[5](=घर्मपान् गच्छ इति ॥१५॥ उपय-)मन्या महावीरे समवनयति ॥१६॥ अत्याक्रम्याश्राव्याह घर्मस्य यज इति । १७॥ वषट्कृते जुहोति अश्विभ्याꣳ स्वाहा; सरस्वत्यै स्वाहा; पूष्णे स्वाहा; बृहस्पतये स्वाहा; स्वाहेन्द्राय इति[5] ॥१८॥ स्वाहेन्द्राय वट् इति अनुवषट्कृते जुहोति ॥१९॥ घर्ममपातमश्विना इत्यध्वर्युर्यजमानं वाचयति । °हार्दिवान=पृथिव्यै(=घर्मपान् गच्छ इति ॥२०॥ एतस्मिन् काले) प्रतिप्रस्थाता (उपयम-)न्या महावीरे (समवनयति) ॥२१॥ यदा पिन्वतेऽथ वाचयति इषे पीपिहि ॥२२॥ [९]

इषे पीपिह्यूर्जे=ज्यैष्ठ्याय पीपिहि इति ॥१॥ त्विष्यै त्वा इति प्रकम्पयति । °द्युम्नाय त्वेन्द्रियाय त्वा भूत्यै त्वा इति ॥२॥ धर्माऽसि सुधर्मा इत्यपरेणं [6]वेदिमत्याक्रामति । °मे न्यस्मे[6] ब्रह्माणि धारय[7] (क्षत्राणि) धारय विशं[8] (धारय) नेत्वा[9] वातः (स्कन्दयाद् इ-)ति ॥३॥ यद्यभिचरेद् अमुष्य त्वा प्राणे सादयामि इत्याखरे महावीरꣳ सादयति । °अमुष्य त्वाऽमुना सह निरर्थं गच्छ योऽस्मान् द्वेष्टि यं च वयं द्विष्मः इति ॥४॥ मदन्तीरुपस्पृश्य षट्छाकलानादत्ते ॥५॥ तेषामेकैकं महावीरेऽक्त्वा प्रास्यन्नाहवनीये जुहोति ॥६॥ पूष्णे शर(-से) स्वाहा इति प्रथमꣳ हुत्वाऽन्तर्वेदि निदधाति ॥७॥ ग्रावभ्यः स्वाहा इति द्वितीयꣳ हुत्वाऽत्रैव निदधाति ॥८॥ (प्रतिरेभ्यः स्वाहा इति तृतीयꣳ हुत्वाऽत्रैव निदधाति)[10] ॥९॥ द्यावापृथिवीभ्याꣳ स्वाहा इति चतुर्थꣳ हुत्वाऽन्तःपरिध्युपगूहति ॥१०॥ पितृभ्यो घर्मपेभ्यः स्वाहा इति पञ्चमꣳ

---

१. MHP सप्तस्वानिति. २. MHP सप्त स्वे वावानिति. ३. MHP सा. ४. MHP om. ५. MHP om. ६–६. MHP °त्यमे ऽ न्यस्मै. ७. MHP धारयति. ८. MHP वश. ९. MHP give ति before नेत्वा. १०. MHP om.

हुत्वा दक्षिणतो बहिर्वेदि निदधाति ॥११॥ रुद्राय त्वा[1] रुद्रहोत्रे स्वाहा इति षष्ठꣳ सर्वेष्वक्त्वा हुत्वोत्तरतो बहिःशालं निरस्यत्यन्यत्रेक्षमाणः ॥१२॥ मदन्तीरुपस्पृश्य परिग्रहणाभ्यां महावीरं प्ररिगृह्योपयमन्याꣳ सꣳस्त्रावमवनीयोपयमनीꣳ समन्वारभमाणो वैकङ्कतीꣳ समिधमादधाति अपीपरो माऽह्नो रात्रियै (मा) पाहि । एषा ते = माऽऽज्ञीः[2] इति प्रातः-प्रचरणे, अपीपरो मा रात्रिया=माऽऽञ्जीः[3] इति सायंप्रचरणे ॥१३॥ भूः स्वाहा इति पूर्वामाहुतिं जुहोति ॥१४॥ अन्तरेणाहुती प्रतिप्रस्थातोत्तरꣳ रौहिणं जुहोति अहर्ज्योतिः के=षाꣳ स्वाहा इति प्रातःप्रचरणे रात्रिर्ज्योतिः= षाꣳ स्वाहा इत्येतमेव सायंप्रचरणे ॥१५॥ अत्र शाकलाननुप्रास्यति ॥१६॥ तूष्णीमुत्तरामाहुतिं जुहोति ॥१७॥ अतिवाल्योपयमनीं निधाय पृण गोष्ठम् इति [4]निमार्ष्टि ॥१८॥ अङ्घि[4] रयिम् इति द्वितीयम् ॥१९॥ प्र हविस्त्वाऽङ्गिरसः प्राश्नातु [5]इत्यध्वर्युर्हस्तात्प्राणेन प्राश्नाति ॥२०॥ मार्जयते ॥२१॥ सत्यहविस्त्वाङ्गिरसः प्राश्नातु[5] इति द्वितीयम् ॥२२॥ प्रत्यङ्ङा(-ग-)त्य होत्रे भक्षमादधाति हुतꣳ हविः=मा मा हिꣳसीः इति ॥२३॥ होता प्रथमो भक्षयत्यथाध्वर्युरथ ब्रह्माऽथ प्रतिप्रस्थाताऽथाग्नीदथ यजमानः ॥२४॥ प्राणैस्ते भक्षयन्ति, प्रत्यक्षाद् भक्षो यजमानस्य ॥२५॥ प्रतिपावरोषूपयमनीꣳ सुनिर्णिक्तां निर्णिक्तां निर्ज्योतिर्वल्यान्तर्वेदि निदधाति ॥२६॥ अपोऽस्या(-मा-)नीय सुवर्ण्यं परिघर्म्यमवधाय तस्याꣳ समवमृशन्ते सुमित्रा न आप=द्विष्मः इति ॥२७॥ सुवर्ण्यं परिघर्म्यमादाय मौञ्जे वेदे उपगूहति ॥२८॥ अत्रैवान्तर्वेद्यपो निनीय मौञ्जेन वेदेन सुनिर्मृष्टां निर्मृज्य मौञ्जावस्यां वेदौ विच्छादयति ॥२९॥ परिग्रहणाभ्यां महावीरं परिगृह्योपयम(-न्याꣳ सꣳस्त्रावमवनीयोपयमनीꣳ समन्वारभमाणो वैकङ्कतीꣳ समिध-)मादधाति ॥३०॥ अपाष्ठ्यावादधाति ॥३१॥ रौहिणहवने आदधाति ॥३२॥ सर्वं [6]परिशाल्यमादधाति ॥३३॥ अत्रैवाज्यस्थाली च रौहिणकपाले च परिशयाते ॥३४॥ सुवर्णमिव नावमिव कृत्वाऽऽदायोत्तिष्ठन्नाह[7] घर्मायोत्साद्यमानायानुब्रूहि इति ॥३५॥ आहवनीयꣳ

---

१. MHP give the sign of broken text between त्वा and रुद्रहोत्रे. Cf. TĀ IV. 10 24. २. MH माहो, P महा. ३. MHP मार्जीः. ४–४. MHP निमार्ष्यङ्घ्थि. ५–५. H oms. ६. M °शाल्ये माद°. ७. MHP °दयोत्ति°.

हृत्वा सम्राज्ञ आसन्द्याꣳ सा(-द-)यति स्वाहा त्वा सूर्यस्य रश्मिभ्यः इति प्रातःप्रचरणे, स्वाहा त्वा नक्षत्रेभ्यः इति सायंप्रचरणे ॥३६॥ अवोक्ष्योत्तरार्ध्यावाखरौ विमुञ्चति ॥३७॥ परिधीन् विमुञ्चति ॥३८॥ शान्तिमुपयन्ति ॥३९॥ [१०] [ इति तृतीयोऽनुवाकः ।

प्रवर्ग्यमुद्वासयिष्यन् संभारान् संभरते—त्रीञ्छालाकानाज्यं दधि मधूदकुम्भमवकामिति ॥१॥ उत्तमे प्रचरणे महावीरे दधिद्रप्सं प्रास्यति[१] ॥२॥ उत्तमयोपसदा प्रचर्य त्रीञ्छालाकानुत्तरत आहवनीयस्य सादयत्याज्यं दधि मधूदकुम्भमवकामिति ॥३॥ उत्तरवेद्यां ब्राह्मण उपास्ते ॥४॥ अग्रेणाहवनीयꣳ सम्राज्ञ आसन्दीमाहृत्योत्तरत आहवनीयस्य सादयति ॥५॥ उपयमन्या महावीरमाहृत्यासन्द्यामादधाति ॥६॥ अपाष्ठ्यावादधाति ॥७॥ रौहिणहवने[२] आदधाति ॥८॥ उपबृꣳहणौदुम्बरीं मेथीं छागायै शङ्कुं [३]मुञ्जप्रलवानिति ॥९॥ सर्वं (परि-)शाल्यमादधाति[४] ॥१०॥ अवोक्ष्योत्तरार्ध्यावराखरौ शूर्पे समुप्यासन्द्यामादधाति ॥११॥ अन्यस्मिन् प्रतिपावरीः[५] सिकताः समुप्य[६] मार्जालीयस्य देशꣳ हरन्ति ॥१२॥ अत्रैवाज्यस्थाली चैवानाहिता स्रुवश्च ॥१३॥ एवꣳ संक्लृप्तेऽध्वर्युः प्रथमꣳ शालाकमादीप्य ग्रीवदघ्ने धारयन्नभिजुहोति नमो रुद्राय दिविषदे यस्य वर्षमिषवस्तेन मा समरꣳ स मा मा हिꣳसीः । घर्मं[७] याते दिविशु = यजे स्वाहा इति ॥१४॥ हुत्वाऽनुप्रास्यति ॥१५॥ द्वितीयꣳ शालाकमादीप्य नाभिदघ्ने धारयन्नभिजुहोति नमो रुद्रायान्तरिक्षषदे यस्य वात इषवस्तेन मा समरꣳ स मा मा हिꣳसीः । घर्मं या तेऽन्तरिक्षे=यजे स्वाहा इति ॥१६॥ हुत्वैवानुप्रास्यति ॥१७॥ तृतीयꣳ शालाकमादीप्य जानुदघ्ने धारयन्नभिजुहोति प्रास्यति[८] वा नमो रुद्राय पृथिविषदे यस्यान्नमिषवस्तेन मा समरꣳ स मा मा हिꣳसीः । घर्मं या ते पृथिव्याꣳ शु=या सदसि तां त एतेनावयजे स्वाहा इति ॥१८॥ सस्रुवामाज्यस्थालीमादाय अनु नोऽद्यानुमतिः, अन्विदमनुमते त्वं [९]मन्यासै इति[९] प्रयन्ति ॥१९॥ वेद्यन्ते स्थित्वाऽऽह साम ब्रूहि इति ॥२०॥ प्रवर्ग्य-

१. MHP give the sign of broken text between प्र and स्यति.
२. MHP give sign of broken text between रौहिण हव and ने.
३. MHP मज्जप्र°. ४. MHP शाठल्यं. ५. MHP °वावरीः.
६. MHP समुच्य. ७. MHP वर्मा. ८. MP प्रास्तं, H प्रास्वं.
९–९. MHP मन्त्रासाविति.

सामाह प्रस्तोता ॥२१॥ त्रिर्निधनमुपयन्ति ॥२२॥ पुरुषः पुरुषो निधनमुपैति ॥ २३ ॥ दिवस्त्वा परस्पायैं इति प्राङ् प्रक्रामन्ति । 'अन्तरिक्षस्य' तनुवः पाहि पृथिव्यास्त्वा धर्मणा वयमनुक्रामाम सुविताय नव्यसे इति ॥२४॥ औदुम्बर्यै काले स्थित्वैवाह साम ब्रूहि इति ॥२५॥ प्रवर्ग्यंसामैवाह प्रस्तोता ॥२६॥ त्रिरेव निधनमुपयन्ति ॥२७॥ पुरुषः पुरुषो निधनमुपैति ॥२८॥ ब्रह्मणस्त्वा[२] परस्पायै इति प्राङ् प्रक्रामन्ति । °क्षत्रस्य तनुवः पाहि विशस्त्वा धर्मणा वयमनुक्रामाम सुविताय नव्यसे इति ॥२९॥ उपरवकाले स्थित्वैवाह साम ब्रूहि इति ॥३०॥ प्रवर्ग्यंसामैवाह[१] प्रस्तोता ॥३१॥ त्रिरेव निधनमुपयन्ति ॥३२॥ पुरुषः पुरुषो निधनमुपैति ॥३३॥ प्राणस्य त्वा परस्पायैं इति प्राङ् प्रक्रामन्ति । °चक्षुषस्तनुवः पाहि श्रोत्रस्य त्वा धर्मणा वयमनुक्रामाम सुविताय नव्यसे इति ॥३४॥ अधिरुह्योत्तरेणोत्तरनाभिꣳ सम्राज्ञ आसन्दीꣳ सादयति ॥३५॥ अवरुह्याह परि षिञ्च इति ॥३६॥ उदकुम्भमादाय परिषेक्ता त्रिः प्रसलैः[४] परिषिञ्चन् पर्यैति वल्गुरसि शंयुधायाः शिशुर्जनधायाः इति ॥३७॥ उच्छिनष्टि पुनः परिषेचनाय ॥३८॥ निधाय कुम्भं प्रतिपथं त्रिः पुनः परिद्रवति ॥३९॥ अधिरुह्य[५] अप द्वेषो अप ह्वरः इति (कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमो-)पस्तृणात्यवहन्ति परि वा समूहति । 'अन्यद्व्रतस्य सश्चिमा इति ॥४०॥ चतुःस्रक्तिर्नाभिः इत्युत्तरनाभिमभिमृशति । °ऋतस्य सदो विश्वायुः शर्म सप्रथाः इति ॥४१॥ अवोक्ष्योत्तरेणोत्तरनाभिमुत्तराध्यावाखरौ निवपति ॥४२॥ तꣳ रौहिणहवनाभ्यां चतुःस्रक्ति प्राञ्चमाखरं कल्पयित्वाऽवकाभिः प्रच्छादयति ॥४३॥ परिग्रहणा(-भ्यां)[६] महावीरं परिगृह्य हिरण्यं निधाय पूर्वार्धं आखरस्य सादयति वल्गुरसि शंयुधायाः शिशुर्जनधायाः इति ॥४४॥ तूष्णीमुपशयं पूर्वम् ॥४५॥ अपरस्मिन् परिग्रहणेऽप्यर्जति ॥४६॥ शीर्षण्‌काले महावीरमभिमृशति शीर्षम् इति वदन् ॥४७॥ शं च वक्षि परि च वक्षि इति परिशाल्यस्य[७] यजुर्जपति ॥४८॥ केशानां काले ॥४९॥ [११]

(केशानां काले) मौञ्जं वेदं विस्रस्य प्राञ्चमायातयत्यास्पृष्टं महावीरं केशा इति वदन् ॥ १ ॥ चक्षुषोः काले विस्रस्य परिघर्म्यौ सूत्रे

---

१. MHP प्रस्तो. २. MHP प्राणस्य त्वा. ३. MHP सामैव.
४. H adds त्रिः after प्रसलैः. ५. P oms. ६. MHP om भ्यां and add चास्तृणाभ्यां after परिग्रहणा. ७. MHP °शाठ्यस्य.

सᳲसृज्यापरस्मिन्[1] महावीरे व्यतिषजति ॥२॥ दक्षिणᳲ रजतं करोति चक्षुषी इति वदन् ॥३॥ जिह्वायै काले प्रतीचीं वैकङ्कतीमभ्रिमायातयत्यास्पृष्टां महावी(-रं जिह्वा इति वदन् ॥४॥ श्मश्रूणां काले मौञ्जं वेदं विस्रस्य प्रत्यञ्चमायातयत्यास्पृष्टं[2] महावीरᳲ श्मश्रूणि इति वदन् ॥५॥ जत्रूणां काले शफावभिमृशति जत्रूणि इदि वदन ॥६॥ अᳲसयोः काले प्रतीच्यावपाष्ठ्यावायातयत्यास्पृष्टे शफौ अᳲसौ इति वदन् ॥७॥ हस्तयोः काले प्रतीच्य(-ावपाष्ठ्यावायातयत्या-)स्पृष्टे अपाष्ठ्यौ हस्तौ इति वदन् ॥८॥ आत्मनः काले प्रतीचीमौदुम्बरीं मेथीमायातयत्यास्पृष्टां[3] महावीरम् आत्मा इति वदन् ॥९॥ धृष्टीनां[4] कालेऽभितो मेथीं प्राचः काष्मर्यमयान् परिधीनायातयत्यास्पृष्टान्[5] मेथीं धृष्टयः[6] इति वदन् ॥१०॥ कीकटानां काले-(-ऽभितो मेथीं वैकङ्कतान् परि-)धीनायातयत्यास्पृष्टान् मेथीं कीकटाः इति वदन्[7] ॥११॥ तेषूपरि धवित्राण्युत्तरलोमान्यायातयति, ऊर्ध्वा वै पुरुषं प्राणा ह्निन्वन्ति, प्राणाः इति वदन् ॥१२॥ हृदयस्य काले प्रतीचीं वैकङ्कतीं प्रचरणीमायातयत्यास्पृष्टां मेथीं हृदयम् इति (वदन् ॥१३॥ मतस्नयोः काले प्रतीचो रौहिणहवने आयात-)यत्यास्पृष्टे मेथीं मतस्ने[8], इति वदन् ॥१४॥ उदरस्य काले प्रतीचीमौदुम्बरीमुपयमनीमायातयत्यास्पृष्टां मेथीम् उदरम् इति वदन् ॥१५॥ (आन्त्रगुदानां काले)[9] तस्यामसᳲसजन् संदाननियोजने आदधाति आन्त्रगुदाः इति वदन् ॥१६॥ निक्रोश्योः काले प्रत्यञ्चौ (शङ्कू आयातयत्यास्पृष्टे निकोशी इ-)ति वदन् ॥१७॥ श्रोण्योः[10] काले तिर्यञ्चमुदञ्चं छागायै शङ्कुमायातयत्यास्पृष्टां शङ्कू श्रोणी इति वदन् ॥१८॥ सक्थ्योः काले प्रतीच्यौ वैकङ्कत्यौ धृष्टी आयातयत्यास्पृष्टे[11] शङ्कुᳲ सक्थिनी इति वदन् ॥१९॥ वस्तेः कालेऽन्यस्यामाज्यमानीयाज्यस्थाली(-मायातयत्यास्पृष्टां धृष्टी) वस्तिः इति वदन् ॥२०॥ (प्रमेहण-)स्य काले प्रत्यञ्चं वैकङ्कतᳲ स्रुवमायातयत्यास्पृष्टᳲ स्थालीं प्रमेहणम् इति वदन् ॥२१॥ मज्जकाले प्राञ्चि रौहिणपिष्टान्यनुविशा(-द्याया-)[12]तयति मज्जा इति वदन् ॥२२॥ त्वचः काले

१. M संसाज्य, P संयाज्य. २. MHP स्पृष्ट्वा. ३. MHP °स्पृष्टा. ४. MHP वृष्टीनां ५. MHP °स्पृष्टां. ६. M वृष्टय, HP वृषय. ७. HP नदन्ते. ८. MHP मुत°. ९. MHP om. १०. MHP छोन्योः. ११. MHP °त्या पृष्ठे [P पृष्टे]. १२. MHP om.

कृष्णाजिनेन प्रोर्णोति प्राचीनग्रीवेणोत्तरलोम्ना त्वग्[१] इति वदन् ॥२३॥ लोम्नां काले प्रतीचो [२]मुञ्जप्रलवाननु(-प्रकीर्यास्पृष्टानाया-)तयति लोमानि इति वदन् ॥२४॥ शं च वक्षि परि च [३]वक्षि इति[३] परिशाल्यस्य[४] यजुर्जपति ॥२५॥ त्रिस्रस्यौदुम्बरीमासन्दीमुत्तरत उपनिपातयति ॥२६॥ मध्ये वाऽऽदित्यमण्डलवत् सर्वाणि करोति कृष्णाजिनेन कुप्रावृतं कृत्वा ॥२७॥ अपो महावीर[५] आनयति ॥२८॥ [१२]

अपो[६] महावीर आनयति ॥१॥ सर्वाणीतराणि सꣳस्पर्शयति ॥२॥ महीनां पयोऽसि विहितं देवत्रा इत्याज्यमानयति तस्मिन्नेव ॥३॥ इतराणि सर्वाणि सꣳस्पर्शयति वाजिनं त्वा वाजिनोऽवनयामः [७]इति ॥४॥ ऊर्ध्वं मनः सुवर्ग्यम् इति दध्यानयति तस्मिन्नेव ॥५॥ इतराणि सर्वाणि सꣳस्पर्शयति ॥६॥ ज्योतिर्भा असि वनस्पतीनामोषधीनाꣳ रसः (इति)[८] मध्वानयति तस्मिन्नेव ॥७॥ इतराणि सर्वाणि सꣳस्पर्शयति ॥८॥ अप एवोपरिष्टादानयति ॥९॥ सर्वाण्येवेतराणि सꣳस्पर्शयति ॥१०॥ अथान्नं करोति घर्मैतत्तेऽन्न=सिषीमहि इति ॥११॥ अन्नं कृत्वा प्राणं करोति समहमायुषा सं प्राणेन सं व्यानेन समपानेन समुदानेन सꣳ समानेन सं चक्षुषा सꣳ श्रोत्रेण सं मनसा सं वाचा सं दक्षक्रतुभ्यां=असौ योऽस्मान् द्वेष्टि यं च वयं द्विष्मः इति ॥१२॥ सप्राणं कृत्वा वैद्युतैरुपतिष्ठते या पुरस्ताद्विद्यु=यजे; या दक्षिणतो विद्यु=यजे; या पश्चा=यजे; योत्तरत=यजे; योपरिष्टा=यजे इति ॥१३॥ वैद्युतैरुपस्थायावरुह्याह सामानि ब्रूहि इति ॥१४॥ वार्षाहारꣳ सामाहप्रस्तोता, इष्टाहोत्रीयं च ॥१५॥ यदाऽऽजानाति उदर्धिर्निधीः इत्यथोदपात्रात्त्रिर्वर्षयति अस्कान्[९] द्यौः पृथिवी=जनिषीमहि इति ॥१६॥ साम्नो[१०] निधनमनुप्रविश्य गन्धर्वयजूꣳषि वाचयति विश्वावसुꣳ सोमगन्धर्वं=जानादहीनम् इति ॥१७॥ अधिरुह्यापरस्मिन् महावीरे षट् पौष्णानि जुहोति पूष्णे स्वाहा, पूष्णे प्रपथ्याय स्वाहा, पूष्णे नरन्धिषाय स्वाहा, पूष्णेऽङ्घृणये स्वाहा, पूष्णे नरुणाय[११] स्वाहा, पूष्णे साकेताय स्वाहा इति ॥१८॥ रन्तिर्नामासि इत्युपतिष्ठते। °दिव्यो गन्धर्वः=मा मा हिꣳसीः इति ॥१९॥ कृष्णाजिनेन सुप्रावृतं

१. MHP त्वद्. २. MHP मुञ्च°. ३–३. MH पक्षिति, P पक्षीति. ४. MHP शाठल्यस्य. ५. MHP °होवीर. ६. MHP आपो. ७–७. MHP इत्यर्धं ८. MHP om. ९. MHP °स्कन्दा. १०. P साम्ने. ११. MHP पावकाय.

कृत्वा प्रत्यवरोहं जपति एतत्त्वं देव घर्म देवो दे=पीथानु मेहि सह प्रजया सह रायस्पोषेण इति ॥२०॥ अवरुह्याह परिषिञ्च इति ॥२१॥ उदकुम्भमादाय परिषेक्ता त्रिः प्रसलैः परिषिञ्चन् पर्येति वल्गुरसि शंयुधायाः शिशुर्जनधायाः इति ॥२२॥ उच्छिनष्टि मार्जनाय ॥२३॥ निधाय कुम्भं प्रतिपथं त्रिः पुनः परिद्रवति ॥२४॥ अथोदञ्चः परेत्य चात्वाले मार्जयन्ते सुमित्रा=स्तस्मै=द्विष्मः इति ॥२५॥ अथादित्यमुपतिष्ठन्ते उद्वयं तमसस्परि=त्तमम्[1] इति ॥२६॥ अथ प्रत्यङ् परेत्य सौरी गार्हपत्ये जुहोति उदु त्यम्; चित्रम् इति ॥२७॥ सन्तिष्ठते प्रवर्ग्यः ॥२८॥ प्रसिध्यति कर्माऽऽग्निष्टोमिकम् ॥२९॥ [१३] [ इति चतुर्थोऽनुवाकः ]

[ इति प्रवर्ग्यः ]

[ इति त्रयोदशः प्रपाठकः ]

॥ इत्याग्निष्टोमिकः समाप्तः ॥

---

१. M त्तममि॰, H त्तमि॰, P काममि॰.

## [ अथ चतुर्दशः प्रपाठकः ]

## [ अथ याजमानाग्निष्टोमिकप्रायश्चित्तम् ]

त्रिस्त्रिर्दुन्दुभिमाघ्नन्ति प्रातरनुवाक उपाकृते[1] यत्रैतत् सवनीयस्य हविष्कृतमुद्वादयन्ति माहेन्द्रस्य स्तोत्रे धानासोमयाज्याया अनुवषट्कृते ॥१॥ एते त्रयः काला येषु नियुक्तमाहननम् ॥२॥ काममतोऽन्येषु ॥३॥ षट्स्वाघातयेदेषु चैव त्रिषु पूर्वयोश्च सवनसꣳस्थयोर्वसतीवरीषु च परिहृतासु ॥४॥ सायंप्रातः समिधोऽभ्यादधति ॥५॥ वपायां च हुतायाꣳ संवेशनीयायाश्चाहवनीये ह यजमाना अभ्यादधति, गार्हपत्य उ पत्न्यः ॥६॥ न दीक्षितं बहिर्वेद्यभ्याश्रावयेत् ॥७॥ तद्वै खल्वाग्नीध्रस्यान्तर्वेद्यर्धं भवति बहिर्वेद्यर्धम् ॥८॥ तं वै यद्याग्नीध्रे वा पत्नीशाला(-या-)मभ्याश्रावयेन्न तेन बहिर्वेद्यभ्याश्रावितो मन्येत, अन्तर्धिष्ण्यꣳ हि स भवति ॥९॥ यदि त्वेनमतोऽन्यत्र सन्तमभ्याश्रावयेदुपहवमिच्छेत ॥१०॥ न दीक्षितं बहिर्वेद्यभ्यस्तमियान्नो अभ्युदियात् ॥११॥ तं यद्यभि वाऽस्तमियादभि[2] वोदियादेवमेवेच्छेत ॥१२॥ न दीक्षितं सन्तमभ्यस्तमियान्नो अभ्युदियात् ॥१३॥ तं यद्यभि वाऽस्तमियादभि वोदियादुपहवमेवेच्छेत ॥१४॥ न दीक्षितं च कृष्णाजिनश्चान्तरेण सञ्चरेरन् ॥१५॥ तस्यैतस्य कृष्णाजिनस्य यः सर्वरूपः शङ्कुष्ठः स्याद् यस्मिꣳस्त्रयाणि लोमानि विद्येरञ्छुक्लानि[3] च कृष्णानि च बभ्रूणि च तं मेखलायां[4] बध्नीत तथा[4] ह्यस्य सम्बन्धः स्याज्जुगुप्सेत् ॥१६॥ नो एवान्तरेण सञ्चरणान्न स कृष्णाजिनश्चंक्रम्येत ॥१७॥ उन्मुच्य कृष्णाजिनमनुगुप्ते सन्धौ[5] वा कस्मिꣳश्चिद्वा निधाय चंक्रम्येत ॥१८॥ अथ(-प)[6] उपस्पृश्य कृष्णाजिनं प्रतिमुञ्चीत ॥१९॥ न शूद्रवर्णेन साक्षात् [7]संवदेत् ॥२०॥ अथ[7] यदि साक्षात् संविविदिषेत्तत्र ब्राह्मणमन्तर उपवेश्य ब्रूयात् इदमित्थं प्रतिविचक्ष इति ॥२१॥ दीक्षोपसत्सु भूय इव ते तनुतरां

---

१. MHP उपकृते. २. MHP वान्त°.
३. MHP °रज्जुकानि. ४–४. MHP बध्नोतेऽया; thus Ao IV. 204:101.4.
५. MHP सन्धे; thus gives Caland in small bracket ( Ao IV.204:101.6. ६. MHP om अपः ७–७. MHP संवेदाथ.

प्रसुतेनापरिमितेनापामर्थं कुर्वीत ॥२२॥ कामण्डलुका एवास्योपात्ताः स्युः ॥२३॥ तासामर्थं कुर्वीत ॥२४॥ तस्य यद्युद्व्रजितस्याप उपक्षीयेरन् नापोऽत्यन्ते स्युः, तत्र ब्राह्मणः स्याद्दीक्षितो वाऽदीक्षितो वा तं ब्रूयात् इतो मे दीदिहि इति ॥२५॥ कमण्डलुकादुपदीक्षितो[1] दद्यादितरतोऽदीक्षितः ॥२६॥ अथ यदि तत्र न कश्चन स्यात् स्वयमेव स्थले तिष्ठन्नपां चाददीत[2] ॥२७॥ तासामर्थं कुर्वीत न त्वेवापरिमितानाम् ॥२८॥ न दीक्षितः स्त्रियमीक्षेत ॥२९॥ तामु चेदीक्षेत नैनां निध्यातमीक्षेत ॥३०॥ यदि निध्यातमीक्षेत नैनां पराहण्यात्[3] ॥३१॥ यदि पराहण्याद् यदूर्ध्वं नाभेस्तत्पराहण्यान्नावाञ्चम्, अमेध्यं तत् ॥३२॥ न परिमर्शनेनावकीर्णं[4] मन्येत ॥३३॥ न स[5]ꣳसर्गमियात् ॥३४॥ स उ चेत्सꣳसर्गमियात् प्रायश्चित्तं कुर्वीत ॥३५॥ आख्यातमेव[6] प्रायश्चित्तम् ॥३६॥ तमु ते यथाकृत्यं मन्येरꣳस्तथा कुर्युः प्र (वा)[7] व्राजयेयुः पुनर्वा दीक्षयेयुः ॥३७॥[8] [१]

अथ यतरत् सस्यं[9] पच्येत यवानां वा व्रीहीणां वा यदैनद्वा गाढं मन्येत ॥१॥ यदा मन्येत नवानामेव ता ऊर्ध्वꣳ हविष्कुर्वन्ति न पुराणानाम् ॥२॥ अथ प्रातःसवनीयानां नवानां ग्राहयेत् सर्वान्वाऽनुसवनम् ॥३॥ तेऽत ऊर्ध्वं यथा कृताग्रयण एवं मन्येरन् ॥४॥ अथ यदि षष्ठिकमिश्रं सस्यं पच्येत यथा पञ्चालेषु षष्ठिकैरेव यजेत महाव्रीहीणां प्राक् तत[10] ऊर्ध्वं महाव्रीहिभिः ॥५॥ यदि तथा न विद्येत षष्ठिकैरपर्यवेतसस्यैर्यजेत ॥६॥ यदि तथा न विद्येत षष्टिकैरपि पर्यवेतसस्यैर्यजेत ॥७॥ यदि तथा न विद्येत महाव्रीहिभिरपर्यवेतसस्यैर्यजेत ॥८॥ यदि तथा न विद्येत महाव्रीहिभिरपि[11] पर्यवेतसस्यैर्यजेत ॥९॥ यदि तथा विद्येत यवैरपर्यवेतसस्यैर्यजेत ॥१०॥ यदि तथा न विद्येत यवैरपि पर्यवेतसस्यैर्यजेत ॥११॥ श्रेयो यज्ञादित्याहुः ॥१२॥ स तु यवानां परिवापेणैवो वाऽप्सुत्रन्मन्येत ॥१३॥ सर्वान्वा यवानां ग्राहयेयुः ॥१४॥ अशुक्लास्तुरयज्ञियाः शु(-क्ला यज्ञिया) भवन्ति ॥१५॥ सर्वान् वर्णानन्यतस्तु

१. MHP °दीक्षतो. २. MHP चोद°. ३. H वराहण्या, P वरापण्या. ४. MHP °नेन्नाव°. ५. P oms. ६. MHP °ख्यानमेव. ७. MHP om. ८. MHP do not give any sign of the ending of patala, ९. P सर्वं. १०. MHP त. ११. M °भिरपर्यं.

दीक्षितोऽभिवदेदाचार्यं पितरं ज्यायाꣳसं भ्रातरꣳ राजानम् ॥१६॥ अथ यदि द्वौ दीक्षितौ स्यातामौपसदो[1] दीक्षितमभिवदेत् सुन्वन्नौपसदः सात्रिकमाहीनकमैकाहिकः ॥१७॥ अथ य(-दि.......) या चेतरे (........) वयसमेनयोः स्यादपि वा यथापुरुषम् ॥१८॥ न धावेत् ॥१९॥ [2]न गायेत्[2] ॥२०॥ न यानमधिरोहेन्न नावम् ॥२१॥ न प्रतिवेशं ग्राममियात् ॥२२॥ नामनोज्ञमनुचरेत् ॥२३॥ स उ चेदमनोज्ञमनुचरेदुदकेन तृणान्यभ्युक्ष्य तेषु पादौ (प्रक्षिपेत ॥२४॥ न नर्माभिजा-)येत दीक्षितः ॥२५॥ स उ चेन्नर्माभिजायेतापिगृह्य स्मयेत यथाऽस्य दन्तान् न पश्येयुः ॥२६॥ न कण्डूयेत दीक्षितः ॥२७॥ स उ चेत्कण्डूयेत कृष्णविषाणया कण्डूयेत यथाऽस्य न रुधिरमुत्पतेत् ॥२८॥ न क्रुध्येद्दीक्षितः ॥२९॥ स उ चेत् क्रु(-ध्येन्न दण्डं ब-)ध्नीयात् ॥३०॥ यदि दण्डं बध्नीयात् प्रायश्चित्तं कुर्वीत ॥३१॥ त्वमग्ने व्रतपा असि इत्याहवनीयमुपतिष्ठेत ॥३२॥ कैशिनीभिरादित्यम् नमस्त आदित्य त्वं दीक्षितोऽसि स दीक्षमाणानां तेज इन्द्रियं वीर्यं यश आदत्ते। सैषा मम दीक्षमाणस्य तेज इन्द्रियं (वीर्यं यश आदत्ते इति ॥३३॥ अन्त-)र्वेदि गृह्यमग्निं च गृह्णीरन्[3] ॥३४॥ यदि ज्वलसंपर्कः स्याद्यत्रैतदग्नीच्छालाकान् विहरति तन्नेष्टुश्च धिष्णियं ब्राह्मणाच्छꣳसिनश्च गृह्णीरन् ॥३५॥ तौ ज्वलयमानावासीरन्मार्जालीयं[4] तृतीयम् ॥३६॥ नादीक्षितोऽन्तर्वेदि ग्राम्यमशनमश्नीयात्[5] ॥३७॥ न दीक्षितो बहिर्वेद्यश्नीयात् ॥३८॥ उग्रमु (हैवा-)स्य शासनस्याशनम् ॥३९॥ न सदोऽध्यश्नीयुरन्यद्राजा[6] च ब्राह्मणश्च ॥४०॥ यदि तेषां कश्चित् पुरोडाशशकलं लभेरन् न तेन सदोऽध्यशितं मन्येरन् ॥४१॥ [२]

अथैषामशनानशनम्—किमश्नीयुः किं नाश्नीयुरिति ॥१॥ उक्तमेषां दीक्षोपसदो यत्त्वशनानशनम्[7] ॥२॥ अथ यत् प्रसूते सर्पिरशनः स्यादित्याहुः। स यत्सर्पिरशनो दीक्षितव्रती स्याद्यथा तथा च व्याहरेद् इत्थं भविष्यतीति, तथा हैव स्यात् ॥३॥ तत्त्विदमनुशरीरं तेजस्तत्तेन दुष्पानम् ॥४॥ उत्तरेणेडाभिः सर्पिर्मिश्रास्तिष्ठेयुः[8] ॥५॥ तिस्रो ह पुरोडाशेडा पश्विडाऽऽज्येडा[9]

१. P स्यातां मौप°. २–२. P oms. ३. MHP लक्ष्मीरन्. ४. MHP °मानाद्वासीरश्मा°. ५. MHP °मशनन्नाश्नी° ६. MHP °रक्षाच्च. ७. MHP सस्त्वश°. ८. P सीर्षंमि°. ९. MHP कोपश्रिडालका.

स्युः ॥६॥ अलंकुर्वाणा यदि तथा नो सहेरन् पुरोडाशभक्तिः पांशवभक्तिरित्येतद्वपात्तं स्यात् ॥७॥ अभिमृदितमत ऊर्ध्वम् ॥८॥ अनोदनमश्नीयाद्दीक्षितः ॥९॥ स उ चेदोदनमश्नीयादशिशिषेदुख्यमभ्यसौ पाचयेत् ॥१०॥ कामं वा शततिभ्यां कृत्वा तया सर्पिर्यूषयाऽश्नीयात् ॥११॥ न सक्तूदकं पिबेत् ॥१२॥ उदश्विद्धैव पिबेत् ॥१३॥ सक्तून्वोप्याश्वत्थ(?)शलाकाभ्यामुपमथ्य[1] पिबेत् ॥१४॥ अङ्गुल्याभ्यां वा पर्णसे(-न)[2] वोपमथ्य पिबेत् ॥१५॥ [3]अरणि(?)शकलाभ्यां मन्थमुपमथ्य पिबेत् ॥१६॥ सुवर्णमयीभ्यां वा रजतमयीभ्यां वोपमथ्य पिबेत् ॥१७॥ न क्षीरमश्नीयाद्दीक्षितः ॥१८॥ स उ चेत् क्षीरमशिशिषेन् महता क्षीरपात्रेण मैत्रावरुणं ग्रहं श्रीणीहि इत्यध्वर्युर्यजूरूपात् कामं पयु(-द-)क्तस्य[4] द्रप्समवधाय दधि इति वदन्नश्नीयात् ॥१९॥ अथ [5]येषां केषाञ्चिद् व्याधिर्विद्यादेवं[5] क्षीरं कृत्वा पुरोडाशमयीं यवागूं श्रपयेत् ॥२०॥ तां सर्पिर्मिश्रामश्नीयात् ॥२१॥ [३]

अथैषामशनकालाः ॥१॥ स यानि लघून्यहानि मह्नाह्ने सन्तिष्ठते नारुद्धमशनं च बहिर्वेदिचर्या चापर्यस्तमय एवैतदुभयमारुध्यते ॥२॥ अथ यानि गुरूण्यहान्यस्तमिते सन्तिष्ठन्ते नारुद्धमशनं च बहिर्वेदिचर्या चा[6]ऽऽवसतीवरीणां परिहरणात् ॥३॥ वसतीवरीष्वेतत्परिह्रियमाणासूभयमनुरुध्यत आ प्रातरनुवाकात् ॥४॥ प्रातरनुवाकप्रभृति[8] पुनरारुध्यत आ प्रातःसवनीयायै पुरोडाशेडायै ॥५॥ तत ऊर्ध्वं प्रसूयत आ ब्राह्मणाच्छंसिनः स्तुतशस्त्राभ्याम् ॥६॥ अच्छावाकस्य स्तुतशस्त्रप्रभृति पुनरारुध्यत आ माध्यन्दिनीयायै पुरोडाशेडायै[9] ॥७॥ तत ऊर्ध्वं प्रसूयत आ ब्राह्मणाच्छंसिनः स्तुतशस्त्राभ्याम् ॥८॥ अच्छावाकस्यैव[10] स्तुतशस्त्रप्रभृति पुनरारुध्यत आ तार्तीयसवनीयायै पुरोडाशेडायै ॥९॥ तत ऊर्ध्वं प्रसूयत आ

---

१. MP वाध्वस्यन्नशलाकाभ्यामधमुप, H °स्वन्तशलाकाभ्यामजमुपगम्य. २. MHP पर्णसे. ३. MH₁ अथेति for अरणि. ४. MHP पयुं क्तस्य. ५–५. MHP येषां किञ्चिद्याधिर्वि°. ६. MHP do not give any sign of ending of the paṭala. ७. MH सा. ८. MHP °प्रभृत. ९. P पुरोडाशायै. १०. MHP °वाकान्यैव.

सꣳस्थायै[१] ॥१०॥ अत्र [२]संभिन्नं न दीक्षितमभिवर्षेत्[२] ॥११॥ (अथ यद्येनमभिवर्षेत्)[३] उन्दतीर्बलं धत्त इत्येतद्यजुर्जपेत् । [४]ओजो धत्त बलं धत्तौजा स्थ बलदा मा मे=धिष्ट इति ॥१२॥ अथ यद्येनमभिविवर्षयिषेत् स्वेदपरीतो वा दीर्घसत्रे रजसा वा परिप्लुतः शरणे कृष्णाजिनं कृत्वा यथाꣳसावन्तरेण(?) संचरेरन् ॥१३॥ नाहवनीयस्य भस्म कर्षयन्नासीत् वि वा शकलं भिन्द्यात् ॥१४॥ न सन्धावेत[४] ॥१५॥ काममापयेत ॥१६॥ अथ प्रपद्योपहतकृष्णाजिनं प्रतिमुञ्चीत ॥१७॥ जपत्येवेतद्यजुः ॥१८॥ न सुहितः स्यान्न प्रष्ठीलाꣳ शयीत ॥१९॥ स [५]वदन्धोऽहं न सुहितः स्यान्न[५] प्रष्ठीलाꣳ शयीत, नास्य रेतः स्कन्देदिति ॥२०॥ अस्कन्ददध्यो एवैषा परिवार्हतस्य चेत् स्वप्सु स्कन्देत् यन्मे अस्य पयसः परितर्पिथ[६] । [७]अग्निहोत्रं चैव[७] सोमेन तदपां[८] पुनराददे । यदन्नमद्यते[९] सायं न तत् प्रातः क्षुधोऽत्रति । सर्वं तदस्मान्मा हिꣳसीर्नहि तद् ददृशे दिवा इति ॥२१॥ न ष्ठीव्येद् दीक्षितः ॥२२॥ स उ चेत् ष्ठीव्येद् यदत्रापि[१०] रसस्य मे (निर-) ष्ठविषयमस्तृतम् [११]अग्निष्टत् सोमः[११] पृथिवी पुनरात्मन्[१२] दधातु मे इति जपेत् ॥२३॥ न छर्दयेत ॥२४॥ तमु चेच्छर्दिकः विन्द्याद्यथाशाकं दिधारयिषेत[१३] ॥२५॥ अथ यदि शक्नुयाद्धारयितुं चात्वालं वा जघनेन गार्हपत्यं वा परिधिं कृत्वा छर्दयेत ॥२६॥ तद् गुहा[१४] कुर्यात् ॥२७॥ अथाप आचम्यैतमेव जपं जपेत् ॥२८॥ अथ (यदि न)[१५] शक्नुयाद्धारयितुं त्वरमाण आद्रुत्य चात्वालं वा जघनेन[१६] मार्जालीयं वा परिधिं कृत्वा छर्दयेत ॥२९॥ तद् गुहा कुर्यात् ॥३०॥ अथाप आचम्यैतमेव[१७] जपं जपेत् ॥३१॥

---

१. MH सर्वंगं स्थाय. २–२. MHP संमिन्नं न मक्षित° P संभिन्न म°]. ३. MHP om. ४. MHP संधायेत. ५. MHP Ao (IV.105:103.2) यदन्धोऽहमनसुहिताभ्यां न. ६. Cf Āp ŚS X.13.10 :] परीतोषात्तर्दपिथ; KŚS XXV.11.22 : परीदोषात्तुर्दपिथः; VWC corrected as परीदोषादुर्दपितः. ७–७. Cf ĀpŚS X.13.10 : अग्निहोत्रमिवः ८. Cf ĀpŚS X. 13.10 : तदहं. ९. MHP °द्याते. १०. MHP यत्रापि. ११–११. MHP अग्निष्टोम. १२. MHP °रात्म. १३. M निधा°; thus Ao IV.205:104.2. १४. MHP गुहां; thus Ao IV.205:104.3. १५. MHP wrongly repeat the text यथाशकन्निघारयिषेत after the broken text. १६. M जघने. १७. MHP आचम्य तमेव.

अथ यदि न शक्नुयादाव्रजितुं तदेव छर्दयेत ॥३२॥ परिखाय पर्णसेन[1] उपनह्य चात्वालं वा ज(-घनेन मा-)र्जालीयं [2]वा=तद् गुहा[2] कुर्यात् ॥३३॥ अथाप आचम्यैतमेव जपं जपेत् ॥३४॥ [3]अथ यदि (न) शक्नुयादाहर्तुं तदेव तद् गुहा कुर्यात् ॥३५॥ अथाप आचम्यैतमेव जपं जपेत्[3] ॥३६॥ अथ यद्येषां कश्चिदुपतापो[4] विन्ध्याद्विसंस्थितसञ्चरेणैनं नीत्वाऽऽग्नीध्रे भिषज्येत ॥३७॥ तमभिमृशेत् परीमं परि ते ब्रह्मणे देहि[5] ॥३८॥ [४]

ब्रह्म परिददातु ( दे-)वताभ्यः। वषट्कारस्त्वाभिरक्षतु सह विश्वैर्देवैः; वसव एतद्वः[6] प्रातःसवनं तद्रक्षध्वं=तद्वो माऽभ्यवच्छेत्; [7]रुद्रा एतद्वो माध्यन्दिनं सवनं तद्रक्षध्वं=तद्वो माऽभ्यवच्छेत्;[7] आदित्या एतद्वस्तृतीयसवनं तद्रक्षध्वं=तद्वो माऽभ्यवच्छेत् इति ॥१॥ आशास्य यदगदः स्यादित्येवमे(-व जपे-)त् ॥२॥ स उ चेदणिमानं[8] नीयान् मनुष्यो वै यत्रैतदध्वर्युर्वसतीवरीष्ववनयति चात्वालस्यान्ते तासां विषाविषारमुप[9] संगृह्य पाणिना वा चमसेन[10] वाऽऽहृत्यानुषिच्यात् आपः[11] [12]प्रजापतिर्यज्ञाय[12] प्राणस्य दोषं न मज्जसि इति[12] ॥३॥ [13]स यदि ह वीतासुरिव[13] स्याद्दीक्षितव्रती न गा प्राणस्येत्याहुरा संस्थाया इति ॥४॥ स उ चेत् प्रेयान् मनुष्यो वै रोहित एनं चर्मण्यवधाय [14]मौञ्ज्या रज्ज्वाऽवबध्याभिघार्यान्तरा[14] चात्वालोत्करौ निकृष्योत्तरेणाग्नीध्रमपरेण शालां दक्षिणं वेद्यन्तमुपकर्षयन्ति ॥५॥ अथास्यारणी[15] आदाय सर्वेभ्योऽग्निभ्योऽङ्गारान्निर्वर्त्य तूष्णीं समारोपयेत्[16] ॥६॥ नैतानप्यर्जयेयुः ॥७॥

---

१. MHP पर्णसेवन. २–२. MHP वातगुदां; text between वा and तद् is abridged (Cf above S 29-30), but MHP do not give the sign of abridged text. ३–३. P oms. ४. MHP कश्चिदुपविद्धन्याद्वि°. ५. Cf ĀpŚS XIV.20.7. ६. MHP एतवः. ७–७. MP रुद्राः एतद्वा; H oms. ८. M चेदग्निमानं. ९. MHP विषाविषा°. १०. MHP चमासने; thus Ao IV.205:105.3, ११. MHP अपः. १२–१२. Cf ĀpŚS XIV.21.1 : आपः प्रजापतेः प्राणा यज्ञस्य भेषजमिति; KŚS XXV.13.25 : आपः प्रजापतिर्यज्ञो यज्ञस्य भेषजमसीति. १३–१३. MP हापीतापु°, H मयादिहापीतासु; thus Ao IV.205:105.4. १४–१४. MH मौञ्ज्यारज्वावद्याभिघारयन्तरा [H °भिघा], P मौञ्ज्यरंजावद्यभि°घारन्तरे. १५. MHP अथ ये अस्था° १६. MH सममारो°, P ससमारो°.

नानुगच्छेयुः[1] ॥ ८ ॥ [2]तेऽनुन्यायमरणी मथित्वा[2] विहृत्य वा ॥९॥ विहृत्यैवैनं दहन्ति ॥१०॥ तत्त्रिराद्रवणमवोक्ष्य[3] सञ्चित्य कुम्भ ओप्य दक्षिणे वेद्यन्ते निखनन्ति ॥११॥ स तथा शयत आ महाव्रतीयात् ॥ १२ ॥ [4]अथ महाव्रतीयेऽ[4]हन्नाह उद्धर्तनम् इति ॥ १३ ॥ तमपरेण मार्जालीयं दक्षिणेन सदः परिश्रयन्ति ॥१४॥ स तथा शयत ओदयनीया-दतिरात्रात्[5] ॥१५॥ [6]स यत्रावभृथमवयन्ति[6] तदेनं ब्रह्मबन्धुरादाया-नुन्यायमेति ॥१६॥ सꣳस्थितायामवभृथेष्ट्यामद्भिरभ्युक्ष्य यत्र निधातव्यं मन्यते तन्निदधाति ॥१७॥ इति न्वपचितस्याहिताग्नेः ॥१८॥ अथातोऽनपचितस्यैवाहिताग्नेः ॥१९॥ एवमपचितेनाहिताग्निनाऽप्येति यदैवैनं बहिर्वेदि दहन्ति ॥२०॥ अथान्यत् सर्वꣳ समानम् ॥२१॥ अथातोऽनपचितस्यैवाहिताग्नेः ॥२२॥ [7]एवमेवापचितेनाहिताग्निनाप्येति यदैवैनं ग्राम्येणाग्निना दहन्ति[8] ॥२३॥ अथान्यत् सर्वꣳ समानम्[9] ॥२४॥ अथातो गृहपतेरेव प्रेतस्य ॥२५॥ एवमेवापचितेनाहिताग्नाऽप्येति यदैवैन-मग्रेण[10] मार्जालीयं दक्षिणेन हविर्धाने दहन्ति ॥२६॥ अथान्यत् सर्वꣳ समानम् ॥२७॥ अथातो गृहपतिश्चेतरेषां प्रेयादुत्तिष्ठेयुरेव ॥२८॥ [11]नागृहपतिकाः सुनुयुः[11] ॥२९॥ [12]स योऽस्यात्र[12] ज्ञातिः स्यात् पुत्रो वा पौत्रो वा भ्राता वा [13]तं तमस्मिन्नायतने[13] दीक्षयेयुः ॥३०॥ स यद्यनाहि-ताग्निः स्यादेवोपदीक्षायां[14] [15]तं तं[15] तावत्तेन सञ्ज्ञानीरन् ॥ ३१ ॥ अथ सोऽग्नीनाधाय दर्शपूर्णमासावारभ्य समन्ताभ्यामिष्ट्वा त्रेधाऽनुप्र-किरेत् ॥३२॥ अध्वर्यव एनं पूर्वेषु कर्मसु ह्वयेरन् ॥३३॥ तेन वा तत ऊर्ध्वं गृहपतिका[16] सुनुयुः ॥३४॥ यद्यु [17]न सुनुयुरुत्तिष्ठेयुरेव[17]

---

१. H oms. २–२. MH स्थेनुन्यायमरणी मत्वा [H °मत्वा]. P तेनुव्यायामरणीयत्त्वा. ३. MHP °राद्रण°. ४–४. MHP अत्रा महाव्रतीये ये ह न्नाहोद्ध°. ५. M ओदयीनीया. ६–६. संयत्ताव°. ७. MHP एकमेवा°. ८. MHP दहति. ९. MHP repeat अथातो = समानम् (S 19–21) after समानम्. १०. MHP यवनमग्रेण. ११–११. MH °पति तास्सा सुनुयुः १२–१२. MHP स योस्स्थात्रा [HP °स्स्यात्रा]. १३–१३. MHP तमतमस्मि°. १४. MHP दीक्षाणां. १५–१५. MP तन्त, H दन्त्रा. १६. MHP °पतिना. १७–१७. MH यद्यु न स्युरुति°, P नस्स्युरुपति.

  

॥३५॥ नागृहपतिकाः सुनुयुः ॥३६॥ तेऽत एव यथाप्रसृप्तं[1] विसृप्य[2] चात्वाले कृष्णविषाणां प्रास्य यत्रापस्तद्यन्ति ॥३७॥ अथ कृष्णाजिन[3] शंकुष्ठैरपः प्रयुवन्ति इन्द्रियाज्ज्यैंष्ठ्याच्छ्रैंष्ठ्यान्मा[4] योषम् इति ॥३८॥ कृष्णजिनशंकुष्ठैरपः प्रयुत्यानिमग्नाः[5] स्नात्वोदायन्ति ॥३९॥ तेषां येऽनाहिताग्नयो भवन्ति स्वꣳ स्वं कृष्णाजिनमादाय यथार्थं यन्ति ॥४०॥ अथ य आहिताग्नयो भवन्ति स्वꣳ स्वं कृष्णाजिनमादायाभ्यध्य-[6] समिध आदाया(-ख-)रौ प्रपद्य तत्समिध (उ-)त्थिताहुतीश्च जुह्वति ॥४१॥ आहवनीये ह यजमाना अभ्यादधति गार्हपत्य उ पत्नयः ॥४२॥ अथ गार्हपत्य उत्थिताहुतीर्जुह्वति इन्द्रियं ज्यैंष्ठ्यꣳ श्रैंष्ठ्यं मह्यमग्निर्दधातु इति ॥४३॥ अथात्रैवानूरम्बेण चरित्वा मैत्रावरुणीं वशामालभन्ते ॥४४॥ तया प्रसिद्ध चरित्वा पृथगुदवस्यन्ति ॥४५॥ पृथगुदवस(-या-)ग्निशेषान् समाहृत्य हविर्धान आखरे दहन्तीत्यु वावैतद् ॥४६॥ अथेयꣳ[7] सꣳस्थितिः ॥४७॥ यत्सꣳस्थमेवैतदहः स्यात् तत् सꣳस्थाप्य पत्नीसंयाजान्तं कर्म कृत्वा प्रसिद्धं साम्नाऽवभृथं यन्ति ॥४८॥ अथ कृष्णाजनशंकुष्ठैरपः प्रयुवन्ति ॥४९॥ अनिमग्नाः स्नात्वोदायन्ति ॥५०॥ तेषां ये[8]—होत्राणि जुह्वति ॥५१॥ [५]

[ इति याजमानाग्निष्टोमिकप्रायश्चित्तम् ]

[इति चतुर्दशः प्रपाठकः]

---

१. MP प्रसुप्तं; thus Ao IV. 204 : 101.8. २. MHP निसृप्य; thus Ao IV.204 : 101.9. ३. MHP °जिनं. ४. MP इन्द्रियं ष्याच्छ्रेष्ठ्यान्मा [P °च्छ्रेष्ठा], H इन्द्रियं स्याच्छ्रैष्ठ्यान्मा. ५. MHP प्रयुवत्यनिमग्न; thus Ao IV.204 : 101.11. ६. P °याभ्यध्या. ७. P तथैतत्. ८. MHP abr; see above S.40–41.

# अथ पञ्चदशः प्रपाठकः

## [ अथ परिशेषः ]

### [ स्त्री-शान्तिककर्म ]

(अग्निरेतु प्रथमो देवतानां सोऽस्मै प्रजां मुञ्चतु मृत्युपाशात्।
त-)दयँ राजा वरुणोऽनुमन्यतां यथेयँ स्त्री पौत्रमघं न रोदात् स्वाहा॥१॥
इमामग्निस्त्रायतां गार्हपत्यो वरुण एनाँ राजाऽभिरक्षतु।
अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभि प्रबुध्यतामियँस्वाहा॥२॥
माऽस्यै गृहे ( यातुधाना आविक्षन्मेयं विलूनकेशी रुदत्युरु आ बधिष्ट।
अशून्योपोस-)था = मियँ स्वाहा ॥३॥
माऽस्यै प्रजां यातुधाना आविक्षन्मेयं विलूनकेशी रुदत्युरु आ वधिष्ट।
अशून्योपस्था=मियँ स्वाहा ॥४॥
देवकृतं ब्राह्मणं कल्पमानं तेन हन्मि योनिषदः[1] पिशाचान्।
क्रव्यादो मृत्यूनधरान् पादयामि दीर्घमायुस्तव जीवन्तु पुत्राः स्वाहा ॥५॥
स्तनंधया[2](-न्स्ते पुत्रान् सविताऽभिरक्षतु।
आ वाससः परिधानाद् बृहस्पतिर्विश्वेदेवा) अभिरक्षन्तु सर्वतः स्वाहा ॥६॥

[3]विन्दप्रजस्तां पौत्रमर्त्यं पाप्मानमुत वाऽघम्।
शीर्ष्णः स्रजमिवोन्मुच्य द्विषद्भ्यः प्रतिमुञ्चामसि स्वाहा ॥७॥
अग्ने प्रायश्चित्ते[4] त्वं देवानामसि प्रायश्चित्तिः।
याऽस्यै तनूः[5] पतिघ्नी पशुघ्न्यस्यै[6] तां करोमि स्वाहा ॥८॥
( वायो प्रायश्चित्ते )[7] त्वं देवानामसि प्रायश्चित्तिः।
( याऽस्यै तनूः पति-)घ्नो पशुघ्न्यस्यै[8] तां करोमि स्वाहा ॥९॥
आदित्य प्रायश्चित्ते[4] त्वं देवानां=तां करोमि स्वाहा ॥१०॥
वरुण प्रायश्चित्ते[4] = तां करोमि स्वाहा ॥११॥

[9]या ते शीर्षन्नलक्ष्मीः केशेषु या च पापिका।
अग्निस्तां जातवेदा अलक्ष्मीमपहन्तु स्वाहा ॥१२॥

---

१. MHP योनिष्टदं. २. MH °धयन्तं. ३. MP निन्दप्र°. ४. MHP °श्चिर्त्ति. ५. MHP तनूं. ६. MHP °घ्नन्यस्यै. ७. MHP om. ८. MHP पशुघ्नयन्यस्यै. ९. MHP ins आ before या.

या ते मूर्धन्नलक्ष्मीर्मस्तिष्के या च पापिका ॥१३॥
या ते ( मस्तकेऽलक्ष्मी-)र्ललाटिकायां या च पापिका ॥१४॥
या तेऽक्षियोरलक्ष्मीः पक्ष्मेषु या च पापिका ॥१५॥
या ते नासिकयोरलक्ष्मीः प्राणे या च पापिका ॥१६॥
या ते कर्णयोरलक्ष्मीः श्रोत्रे या च पापिका ॥१७॥
या ते मुखेऽलक्ष्मीरोष्ठयोर्या¹ च पापिका ॥१८॥
या ते दन्तेष्वलक्ष्मीर्जिह्वायां या च पापिका ॥१९॥
या ते (हृ-)न्वोरलक्ष्मीः ²कम्बुवोर्या च पापिका ॥२०॥
(या ते······) योरलक्ष्मी (·······) या च पापिका ॥२१॥
या ते ग्रीवास्वलक्ष्मीः पृष्टिषु³ या च पापिका ॥२२॥
या तेंऽसयोरलक्ष्मीर्बाहुवोर्या च पापिका ॥२३॥
या ते जङ्घयोरलक्ष्मीर्हस्तयोर्या च पापिका ॥२४॥
या तेऽङ्गुलीष्व(-लक्ष्मीर्न-)खेषु या च पापिका ॥२५॥
या ते स्तनयोरलक्ष्मीर्हृदये या च पापिका ॥२६॥
या ते पार्श्वयोरलक्ष्मीरनूके या च पापिका ॥२७॥
या ते उदरेऽलक्ष्मीर्नाभ्यां या च पापिका ॥२८॥
या ते श्रोण्योरलक्ष्मीरुपस्थे या च पापिका ॥२९॥
या ते ⁴सक्थिनोरलक्ष्मीरूरुवोर्या⁵ च पापिका ॥३०॥
या ते जान्वोरलक्ष्मोर्जङ्घयोर्या च पापिका ॥३१॥
या ते ⁶गुल्फेष्वलक्ष्मीः पादयोर्या च पापिका ॥३२॥
या तेऽङ्गुलीष्वलक्ष्मीर्नखेषु या च पापिका ।
अग्निस्तां जातवेदा अलक्ष्मीमपहन्तु स्वाहा ॥३३॥
या ते तनूरपघ्नी⁷ जारघ्नीं तां करोमि ते ।
शिवा नः शन्तमा भव क्षुरपविजरिभ्यः ॥३४॥
असौ त्वमस्यसावहं तावेहि संभवाव स८⁸ रेतो दधावहै ।
पुंसे पुत्राय वेत्तवै रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ॥३५॥

१. MHP ओष्ठे या. २. MHP गंबुवो°. ३. M लक्ष्मींवृंष्टि°. ४. M स्थिजोर°, P °स्थिणोर°, H स्थिनोर°. ५. MHP °लक्ष्मीं कुरुवो°. ६. HP कुल्पे, M कुल्पेऽष्व°. ७. MHP तनूमप°. ८ MH give the sign of broken text between सं and रेतो.

आ तिष्ठेममश्मानमश्मेव त्व थरा भव।
प्रमृणीहि दुरस्यून् [1]सहस्व पृतनायतः[1] ॥३६॥
विश्वा उत त्वया वयं धारा उदन्या इव।
अतिगाहेमहि द्विषः ॥३७॥
इमाँल्लाजानावपामि समृद्धिकरणान् मम।
तुभ्यं च (सँव-)ननं तदग्निरनुमन्यतामयम् ॥३८॥
इयं नार्युपब्रूते ऽग्नौ लाजानावपन्ती।
दीर्घायुरस्तु मे पतिरेधन्तां ज्ञातयो मम स्वाहा ॥३९॥
प्रजापते यदस्य कर्मणोऽत्यरीरिचं = अश्मा भव=शरदः शतम् ॥४०॥
अयमिन्नु पतिः[2] परि मेऽधा अयꣳ सूर्य इवाजनि।
अयं कुमारो जरां धयतु सर्वमायुरेतु।
तस्मैं स्तनौ प्रप्यायस्वायुर्वर्चो यशो बलम् ॥४१॥
अपेहि निर्ऋते = यज्ञस्योपवीतिनोऽपव्ययामि[3]
दीर्घायुत्वाय सुप्रजास्त्वाय सुवीर्याय
सर्वेषां देवानामाधिपत्याय यशसे ब्रह्मवर्चसाय त्वा ॥४२॥
इयं दुरित्राण्यपबाधमाना शर्म वरूथं पुनती न आगात्।
प्राणापानाभ्यां बलमावहन्ती प्रिया देवानाꣳ सुभगा मेखलेयम् ॥४३॥
ऋतस्य गोप्त्री तपसः परस्पी घ्नती रक्षः सहमाना अरातीः।
सा नः [4]समन्तं पर्येहि[4] भद्रे[5] गोप्तारस्ते मेखले मा रिषाम ॥४४॥
मित्रस्य चक्षुर्धरुणं बलीयस्तेजो यशस्वि[6] स्थविरꣳ समिद्धम्।
अनाहनस्यं वसनञ्चरिष्णुः परीदं वाज्यजिनं दधेऽहम्[7] ॥४५॥
अग्निष्ट आयुः प्रतरं[8] दधात्वग्निष्टे पुष्टिं प्रतरां कृणोतु।
इन्द्रो मरुद्भिरिह ते दधात्वादित्यस्ते वसुभिः सन्दधातु ॥४६॥
या अकृन्तन्नवयन् या अतन्वत[9] याश्च देवीरन्तानभितो ददन्थ।
तास्त्वा देवीर्जरसा संव्ययन्त्वायुष्मानिदं परिधत्स्व वासः ॥४७॥

---

१–१. M सहस्वलतना°, P. सहस्व ऋतना°, H सह खलतना°. २. MP पितुः. ३. M °स्योपवीतेनोप°, H °वीतिनो व्यया°, P °वीतिनोपव्य°. ४–४. MH सुमन्तं पर्येहि, P समन्तमनु परीहि. ५. HP add गोप्त्रे after भद्रे. ६. M यशस्वी. ७. MP दधेयं. ८. MHP प्रतरां. ९. M अतन्वा.

परिधत्त धत्त वाससैनं शतायुषं कृणुत दीर्घमायुः ।
बृहस्पतिः प्रायच्छद्वासः एतत्सोमाय राज्ञे परिधातवा उ ॥४८॥
जरां गच्छासि परिधत्स्व वासो भवा कृष्टीनामभिशस्तिपावा ।
शतं च जीव शरदः सुवर्चा रायश्च पोषमनु संव्ययस्व ॥४९॥
परीदं वासो अधि धाः स्वस्तयेऽभूरापीनामभिशस्तिपावा ।
शतं च जीव शरदः पुरूचीर्वसूनि चार्यो विभजासि जीवन् ॥५०॥
बृहस्पतिः प्राहिणोद्वास एतत्सोमाय राज्ञे परिधातवा उ ।
तेन त्वा परिदधामि शतायुषाय ॥५१॥ [१]

[ नामकरणम् ]

मधुषो वाचमग्रभीदश्वस्य[1] ( पुरुषस्य गोः ।
ये ) देवा ये[2] च यज्ञियास्तेषां वाचमग्रभीत् ॥१॥
[3]भूर्ऋचाऽ रसं त्वयि[3] दधामि व्रते दधामि[4] मधुषो घृतस्य ।
वाचꣳ सवित्रा प्रयतां [5]मघोनीमायुष्मान् गुपितो देवताभिः ।
शतं च जीव शरदः पुरूचीः ॥२॥
यया त्वमसि मेधया संभृतं तयेमं कृत्तिकामाविशः ॥३॥
मधुषो वाच = भुवो यजुषाꣳ रसं=विशः[6] ॥४॥
मधुषो=सुवः साम्नाꣳ रसं = विशः[6] ॥५॥
मधुषो वाचमग्रभीदश्वस्य ( पुरुषस्य गोः ।
ये देवा ये च ) यज्ञियास्तेषां वाचमग्रभीत्[7] ॥६॥
भूर्भुवः सुवरितिहासमाथर्वणं[8] वाकोवाक्यं गाथा नाराशꣳसीः ।
ओं पुराणा(-ना)ꣳ रसं त्वयि दधामि व्रते दधामि[9] मधुषो[10] घृतस्य ।
वाचꣳ सवित्रा प्रयतो मघोनीमायुष्मान् गुपितो देवताभिः । शतं च =माविशः ॥७॥ [ २ ]

[ मेधाजननम् ]

उपहूतं मन उप मां मनो [11]ह्वयताम् ।
उप[11] मां मनसस्पतिर्वेद(-मनु ब्रुवे स्वाहा ॥१॥

---

१. MHP ग्रभीत्···त्वस्य. २. MHP के. ३–३. MH भूरृचा असन्त्वयि, P भूरुचा आसन्त्वयि. ४. M ददामि. ५. MHP मघोनीः. ६. M विशं. ७. M °ग्रमीः. ८. MHP °थर्वणः. ९. M ददामि. १०. मधुषोघृ°. ११–११. MP ह्वयतन्तामुम च, H ह्वयन्तं नामुम च, thus Ao.IV.2:32.

मरु-)तो[1] युञ्जन्तु मे मनो यथा विश्वे देवाः युनक्तु मनसस्पतिः ।
इन्द्रो युनक्तु मे मनो यथा वेदमनु ब्रुवै स्वाहा ॥२॥
आ मां मेधा सुरभिर्विश्वरूपा हिरण्यवर्णा जगती जगम्याः ।
ऊर्जं पयः पिन्वमाना घृतं च सा मां मेधा सुप्रतीका जुषताꣳ स्वाहा॥३॥
मेधां म इन्द्रो ददातु = स्रजौ[2] स्वाहा ॥४॥
(मेधां) मह्यमङ्गिरसो मेधां सप्तर्षयो दधुः[3] ।
मेधामिन्द्रश्च विष्णुश्च मेधां धाता ददातु मे स्वाहा ॥५॥
यन्मे मनसश्छिद्रं यद्वोत हृदयस्य मे ।
बृहस्पतिस्तत्संदधात्वनूक्तस्यानिराकरणमनिशान्तस्य
निशामनꣳ स्वाहा ॥६॥
यदग्ने तपसा तपो ब्रह्मचर्यमुपेयिम ।
प्रिया श्रुतस्य भूयास्मायुष्मन्तः सुमेधसः[4] स्वाहा ॥७॥
सदसस्पति = सिषꣳ स्वाहा ॥८॥
इमꣳ स्तोम = वयं तव स्वाहा ॥९॥
वाग्देवी ब्रह्मचोदन्यृक्सामयोर्यंजुषां[5] च मामधिपतिं[6] करोतु
स्वाहा ॥१०॥
प्रजापते यदस्य कर्मणोऽत्यरीरिचम्[7] (= समर्धयित्रे स्वाहा)[8] ॥११॥
[३]

## [ पितृकर्म ]

याः प्राचीः संभवन्त्याप उत्तरतश्च याः ।
अद्भिर्विश्वस्य भुवनस्य धर्त्रीभिरन्तरन्यं पितुर्दधे स्वाहा ॥१॥
अन्तर्दधे पर्वतैरन्तर्मह्या पृथिव्या दिवः ।
दिग्भिरनन्ताभिरन्तरन्यं पितामहाद्दधे स्वाहा ॥२॥
अन्तर्दध ऋतुभिः सर्वैरहोरात्रैः ससन्धिकैः[9] ।
मासैश्चार्धमासैश्चान्तरन्यं प्रपितामहाद्दधे स्वाहा ॥३॥

---

१. MHP ना. २. MHP give the sign of broken text between स्रजौ [MHP स्रजे] and स्वाहा. ३. MHP दध्नुः. ४. M समेधा, H स मेधास्. ५. MHP °न्यृक्त्वामयो°. ६. MH माध्वाधि°, P माञ्जाधि°. ७. P oms अत्यरीरिचम्. ८. MHP om. ९. P ससन्धिभिः कै.

यन्मे माता प्रलुलोभ चरत्यननुव्रता ।
तन्मे रेतः पिता वृङ्क्तामाभुरन्योऽव[1]पद्यताᳬ स्वाहा ॥४॥
यन्मे पितामही प्रलुलोभ चरत्यननुव्रता ।
तन्मे रेतः पितामहो वृङ्क्तामाभुरन्योऽव[1] पद्यताᳬ स्वाहा ॥५॥
यन्मे प्रपितामही प्रलुलोभ चरत्यननुव्रता ।
तन्मे रेतः प्रपितामहो वृङ्क्तामाभुरन्योऽव[1] पद्यताᳬ स्वाहा ॥६॥
वहाज्यं जातवेदः पितृभ्यो यत्रैनान्वेत्थ निहितान्पराके[2] ।
आज्यस्य कूल्या उप तान् क्षरन्तु तीव्रा एषामाशिषः सन्तु कामैः[3] ।
ये[4] स्वधा हव्यᳬ स्वधा नमः स्वाहा ॥७॥
वह वपां = मेदसः कूल्या = नमः स्वाहा ॥८॥
वहान्नं जातवेदः = नमः स्वाहा ॥९॥
ये चेह पितरो ये च नेह याᳬश्च विद्म याᳬश्च[5] न प्र विद्मः ।
अग्ने तान्वेत्थ यदि ते जातवेदस्तया प्रत्तᳬ स्वधया मदन्तु
स्वधा = नमः स्वाहा ॥१०॥
(य-)द्वः क्रव्यादमङ्गमदहल्लोकानयं प्रणयञ्जातवेदाः ।
तद्वोऽहं पुनरावेशयाम्यरिष्टैरङ्गैः संभवथ पितरः स्वाहा ॥११॥
( स्वाहा पितृभ्यः ) पितृभ्यः स्वधा[6] स्वाहा ॥१२॥
स्वाहा पितामहेभ्यः पितामहेभ्यः स्वधा स्वाहा ॥१३॥
स्वाहा प्रपितामहेभ्यः प्रपितामहेभ्यः स्वधा स्वाहा ॥१४॥
अग्नये कव्यवाहनाय स्वधा स्वाहा ॥१५॥ [ ४ ]

## [ उपव्याहरणम् ]

अग्नीनाधास्ये ॥१॥
सर्वकामोऽग्नीनाधास्ये ॥२॥
स्वर्गकामोऽग्निहोत्रᳬ होष्यामि ॥३॥
स्वर्गकामो दर्शपूर्णमासाभ्यां यक्ष्ये ॥४॥
स्वर्गकाम आग्रयणेष्ट्या यक्ष्ये[7] ॥५॥

१. MP °MP °रत्योप°. २. MHP वराके. ३. MHP कामे. ४. MH मे. ५. MHP यां उच. ६. MH give the sign of abridged text between स्वधा and स्वाहा. ७. MHP give the sign of abridged text after यक्ष्ये.

स्वर्गकामश्चातुर्मास्यैर्यक्ष्ये ॥६॥
स्वर्गकामः पशुबन्धेन यक्ष्ये ॥७॥
स्वर्गकाम इष्टिपशुबन्धाभ्यां यक्ष्ये ॥८॥
स्वर्गकामः क्रतुमुखीयꣳ होष्यामि ॥९॥
स्वर्गकामोऽग्निष्टोमेन यक्ष्ये ॥१०॥
स्वर्गकामः साग्निचित्येनाग्निष्टोमेन यक्ष्ये ॥११॥
सर्वकामोऽग्निं चेष्ये ॥१२॥
स्वर्गकामोऽग्निष्टोमेन यक्ष्ये ॥१३॥
स्वर्गकामो(ऽतिरात्रे-)ण यक्ष्ये ॥१४॥
पशुकामोऽप्तोर्यामेण यक्ष्ये ॥१५॥
स्वर्गकामः श्येनचितं चे(-ष्ये ॥१६॥
अहीनेऽहर्गणे वा यथाकामो यत्कामो वा यजे ।
तन्मे प्र ऋध्यतां तन्मे समृध्यतां तन्मे संवर्ततां काम इति ॥१७॥
अथर्त्विजां प्रतिवचनम्—
तत्त ऋ-)[1]ध्यतां, तत्ते समृध्यतां, तत्ते संवर्ततां काम इति ॥१८॥[५]

## [ स्वस्तिवचनम् ]

वपे प्रवपे देवेन सवित्रा प्रसूतो ब्रह्मणा सꣳशितोऽहम् ।
यानि म (इ-)त ऊर्ध्वं लोमानि तानि मे स्वस्तये सन्तु ॥ [६]

## [ पाप्मनो विनिधयः ]

अश्मन्मे क्षुत् ॥१॥ (पर्वणि मे) मतत्ना ॥२॥ विद्युति मे स्मयः[२] ॥३॥ लोपायां[३] मे क्रन्दधिः ॥४॥ कोशे मे गन्धः ॥५॥ कुमा(-र्यां मेऽ-)[४]घा ॥६॥ कन्यायां म आञ्जनाभ्यञ्जने ॥७॥ स्त्रीषु मेऽनृतम् ॥८॥ व्रात्ये म इत्याः ॥९॥ राजन्ये मे पाप्मा[५] ॥१०॥ वैश्ये मे स्तेयम् ॥११॥ शूद्रे मे शीर्षक्तिः ॥१२॥ नैषादे मे हृद्रोगः ॥१३॥ अयोगुषु[६] म उदावर्तः ॥१४॥ तामन्येषु म आन्ध्यम्[७]

---

१. Cf. BaudhŚS II.1:34.16–18. २. Cf. BaudhŚS II.5:40.1:स्मयशः. ३. Ibid II.5:40.1 : लोमायां. ४. Thus Ao. IV:3.11–12. ५. M पामा. ६. MHP अयोगुष्ठ, thus Ao IV: 3.14. ७. MHP आघ्यं; thus Ao IV: 3.15.

॥१५॥ विदेहेषु मे शीपदः[1] ॥१६॥ वह्लिकेषु मे ग्लौः[2] ॥१७॥ [3]बस्ते मे वधय्या[3] ॥१८॥ शय्या(-यां मे) स्वप्नः ॥१९॥ पृडाकौ[4] मे तन्त्रीः ॥२०॥ द्वीपौ मे निष्टपत् ॥२१॥ शार्दूले मेऽन्तरामयः ॥२२॥ उलूके[5] मे बलासः ॥२३॥ कोके[6] मे जृम्भः ॥२४॥ [7]वृके मे क्षुत् ॥२५॥ अश्वे मे घसिः ॥२६॥ सिꣳहे मे दौःष्वप्नियम्[8] ॥२७॥ वराहे मे मन्युः ॥२८॥ हस्तिनि मे कैलास्यम् ॥२९॥ शुनि मे दुरि(-प्रम् ॥३०॥

अ-)घा ते[9] अर्हतो गृहाच्छ्रियमभ्येम विश्वहा ।
अभूमानागसो[10] वयं पथेरिव व्यावर्तने ॥३१॥
प्र पाप्मानं नुदामसि शाश्वतीभ्यः समाभ्यः ।
यतो न पुनरायाति ॥३२॥ [७]

ब्राह्मणान् भोजयत॥१॥अश्वं गोपायत॥२॥ संभारान् संनिवत्त॥३॥[८]

यददश्चन्द्रमसि कृष्णं तदिहा(-ऽस्तु सत्या) मे सन्त्वाशिषः । [९]

आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् । यथेह पुरुषोऽसत्[11] ॥१॥
कुक्कुटोऽसि मधुजिह्व ॥२॥
यज्ञस्याङ्गमङ्गꣳ सञ्चिनोम्यङ्गानि ते यज्ञे[12] प्रतिधीयन्ताम् ॥३॥
देवानां देव्येऽपि यजमानोऽमृतोऽभूत् ॥४॥
सं पर्वाणि पर्वशो द(-ध्मो) अन्योऽन्यस्मै न द्रुह्यामः ॥५॥
सासि सुब्रह्मण्ये तस्यास्ते पृथिव्यामेकः पादोऽन्तरिक्ष एको दिव्येकः समुद्र एकः परो रजसि ते पञ्चमः ॥६॥
[13]अग्नीञ्ज्योतिष्मतः कुरुत ॥७॥ दीक्षित वाचं यच्छ ॥८॥ पत्नि वाचं यच्छ = अग्नी = गृहपते वाचं यच्छ ॥९॥ पत्नि वाचं यच्छ ॥१०॥ स नः पितरं पितामहं प्रपितामहं बिभरत् सुवर्गे लोके पिन्वमानः सुमनस्यमानः ॥११॥ इमꣳ समुद्रं = व्योमन् ॥१२॥ [१०]
कामः सत्यः सत्यः कामः कामे [14]सत्यः सत्ये[14] कामो अस्तु स्वाहा॥१॥

---

१. MHP शिवदः, thus Ao ibid. २. M गौ. ३–३. MHP वस्तमेव वय्या. ४. MHP प्रदाकौ. ५. MHP Ao IV : 3.17 उले. ६. Cf. BaudhSS II. 5 : 39.8: क्लोके. ७. MP. जम्मः. ८. MHP दौष्वप्नियं. ९. MHP घाते. १०. MHP अमूम तमसो, thus Ao IV: 3.20. ११. MHP पितरो सजत्. १२. MHP यज्ञः. १३. MHP अग्नि. १४–१४. MHP सत्योमेयं.

कामः[1] कामः सत्यꣳ सत्यं मनसः समृद्ध ।
समृध्यतां म इदं (मनः स्वाहा) ॥२॥
अश्विनौ सोमपीथाय सोमपीथवती सोमपीथाय ।
दातारौ तौ मे सोमपीथं दत्ताꣳ स्वाहा ॥३॥
अश्विनौ सोमपीथꣳ सोमपीथवती सोम = [2]संप्रदातारौ तौ मे = थꣳ संप्रदत्ता[2](-ꣳ स्वाहा)॥४॥ सोमपीथकामो यक्ष्ये स मे कामः समृध्यतां स ते कामः समृध्यताम् ॥५॥ ब्रह्मन् सोमपीथकामः° ॥६॥ होतः सोमपीथकामः° ॥७॥ [3]अग्नोत्सोम(-पीथ-)कामः° ॥८॥ प्रतिप्रस्थातः सोमपीथकामः° ॥९॥ प्रशास्तः सोमपीथकामः = समृध्यताम् ॥१०॥ [११]

अग्ने गृहपतेऽवसानं मे देहि । तद्दत्तमनु समेष्यामि। गृहपते(-रायतन-)मसि प्रजायै पशूनां प्रतिष्ठानमारोह । मा मेहास्थाः ॥१॥
अग्नेऽन्नादावसानं मे देहि । तद्दत्तमनु समेष्यामि । पितॄणामायतनमसि । अन्नस्य प्रतिष्ठानमारोह । मा मेहास्थाः ॥२॥
अ(-ग्ने) सम्राडवसानं मे देहि । तद्दत्तमनु समेष्यामि । आहुतीनामायतनमसि सुवर्गस्य लोकस्य[4] प्रतिष्ठानमारोह । मा मेहास्थाः ॥३॥
सोमꣳ राजानं देवयजनं याचामि हिरण्मयेन बलिना स मे ददातु॥४॥
यमꣳ राजानं देवयजनं = दातु ॥५॥
वरुणꣳ राजानं देवयजनं = दातु = ददाति ॥६॥
(प्राणे-)न ते प्राणो दीक्षतां वायोः सलोकतायै । आकूत्यै प्रयुजेऽग्नये स्वाहा ॥७॥
मनसा ते मनो दीक्षतां प्रजापतेः सलोकतायै । मेधायै मनसेऽग्नये स्वाहा ॥८॥
चक्षुषा ते चक्षुर्दीक्षतामादित्यस्य सलोकतायै । दीक्षायै = स्वाहा ॥९॥
वाचा (ते वाग्) दीक्षतां वाचः सरस्वत्यै विराजोऽग्नेः सलोकतायै । सरस्वत्यै स्वाहा[5] ॥१०॥
श्रोत्रेण ते श्रोत्रं दीक्षतां दिशां व्युष्ट्यै चन्द्रमसः सलोकतायै । आपो

---

१. MHP मा. २. MHP संप्रदाता, ३. MHP अग्नीन्स. ४. MHP give the sign of broken text between लोकस्य and प्रतिष्ठानमारोह. ५. MHP om.

